श्रीमन्नागेशभट्टविरचितः

# परिभाषेन्दुशेखरः

हैमवतीटीकया संवलितः

सम्पादकः

पण्डितश्रीकालिकाप्रसादशुक्लः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

M. M. ŚIVAKUMĀRAŚĀSTRĪ-GRANTHAMALĀ

[ Vol. 1 ]

# PARIBHĀṢENDUŚEKHARAḤ

OF

ŚRĪ NĀGEŚA BHAṬṬA

With the commentary

'HAIMAVATĪ'

By

ŚRĪ YĀGEŚVARA ŚĀSTRĪ

EDITED BY

ŚRĪ KĀLIKĀPRASĀDA ŚUKLA

Ex. Professor, Department of Vyākaraṇa

Sampurnanand Sanskrit University

Varanasi



VARANASI

1991

M. M. ŚIVAKUMĀRAŚĀSTRĪ-GRANTHAMALĀ
[ Vol. 1 ]

# PARIBHĀṢENDUŚEKHARAḤ

OF

ŚRĪ NĀGEŚA BHAṬṬA

With the commentary

'HAIMAVATĪ'

By

ŚRĪ YĀGEŚVARA ŚĀSTRĪ

EDITED BY
ŚRĪ KĀLIKĀPRASĀDA ŚUKLA
Ex. Professor, Department of Vyākaraṇa
Sampurnanand Sanskrit University
Varanasi



VARANASI
1991

esearch Publication Supervisor—
Director, Research Institute
Sampurnanand Sanskrit University
Varanasi.

•

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi - 221 002.

•

Available at—
Sales Department
Sampurnanand Sanskrit University
Varanasi - 221 002.

•

Second Edition—1000 copies
Price—Rs. 100.00

•

Printed at—
Mahakant Press
B 18/14, Rewari Talab,
Varanasi - 221 010.

म० म० शिवकुमारशास्त्रि-ग्रन्थमाला
[ प्रथमं पुष्पम् ]

श्रीमन्नागेशभट्टविरचितः

# परिभाषेन्दुशेखरः

पण्डितश्रीयागेश्वरशास्त्रिविरचितया
**'हैमवती'टीकया**
संवलितः

सम्पादकः
**पण्डितश्रीकालिकाप्रसादशुक्लः**
आचार्यचरः, व्याकरणविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



**वाराणस्याम्**

२०४८ तमे वैक्रमाब्दे  १९१३ तमे शकाब्दे  १९९१ तमे खृस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी।

●

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१ ००२.

●

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१ ००२.

●

द्वितीयं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्—१००-०० रूप्यकाणि

●

मुद्रकः—
महाकान्त-प्रेस
बी. १८/१४, रेवड़ी तालाब,
वाराणसी - २२१ ०१०।

# प्ररोचना

महतः प्रमोदस्यायं विषयो यत् श्रीमन्नागेशभट्टविरचितस्य **'हैमवती'**-व्याख्यासंवलितस्य **परिभाषेन्दुशेखरग्रन्थस्य** द्वितीयं संस्करणं प्रकाश्यतामुपगच्छति। वैयाकरणनिकाये परिभाषेन्दुशेखरग्रन्थो बहु समादृतः। अस्य ग्रन्थस्य बह्व्यष्टीका विद्वद्भिर्विनिर्मिताः। तासु टोकासु **श्रीयागेश्वरशास्त्रि**-विरचिता **'हैमवती'**व्याख्या अनितरसाधारणं महत्त्वमाबिभर्ति। व्याख्यायामस्यां विदुषा श्रीयागेश्वरशास्त्रिणा परिभाषेन्दुशेखरग्रन्थस्य गूढार्था भृशं स्पष्टीकृताः। अस्याष्टीकाया भाषा सरला, सुबोधा च विद्यते। अस्माद्धेतोः हैमवतीसंवलितस्य परिभाषेन्दुशेखरग्रन्थस्य प्रथमं संस्करणं झटिति मुद्रणातीतं जातम्।

मन्ये, परिभाषेन्दुशेखरस्य हैमवतीव्याख्यासंवलितस्य द्वितीयं संस्करणं विदुषां मोदाय भविष्यतीति।

**वाराणस्याम्**
विजयदशम्याम्,
२०४८ वैक्रमाब्दे
(१८-१०-१९९१ खृस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# आमुखम्

( द्वितीयसंस्करणस्य )

परिभाषेन्दुशेखरस्य श्रीयागेश्वरशास्त्रिकृतहैमवतीटीकाया द्वितीयं संस्करणं सम्प्रति विदुषां दृष्टिगोचरीभवति । टीकेयं तथा प्रसिद्धिं प्रापद् येन स्वल्पेन कालेन द्वितीयस्य संस्करणस्य पाठकानां मनसां मोदाय आवश्यकता समजनि । अस्याः टीकाया यद् यद् वैशिष्ट्यं वर्तते तत् तत् सर्वम् आमुख एव प्रदर्शितम् । अस्याः टीकाया वैशिष्टयम् अल्पेन कालेन द्वितीयेन सस्करणेनैव अवगन्तुं शक्यते । परिभाषेन्दुशेखरस्य यथा गाम्भीर्यम् आसीत्, तद् अनया टीकया सरलतां गतं येन मन्दोऽपि व्याकरणच्छात्रः श्रीमन्नागेशस्य गूढाशयं ज्ञातुं प्रभवति । यद्यपि, अस्य ग्रन्थस्य अनेकाः टीका विदुषां मनांसि प्रसादयन्ति; परन्तु इयं टीका सर्वाः टीका अतिशेते ।

अतो द्वितीयस्य संस्करणस्य आवश्यकता समजनि । सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयस्य अधिकारिणामेव विशिष्टा अनुकम्पा यत् पाठकानां मनो-विनोदाय अस्याः टीकायाः झटिति प्रकाशनं क्रियते । इत्यलं बहुभाषितेन ।

**कालिकाप्रसादशुक्लः**
आचार्यचरः, व्याकरणविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्

# प्रस्ताविकम्

## प्रथम संस्करणस्य

वेदार्थनिश्चये सहायकस्य शब्दसाधुत्वज्ञानविषयस्य व्याकरणस्य वेदाङ्गत्वमुपपद्यते। तत्र सत्यामपि प्राचीनायां व्याकरणपरम्परायां पाणिनीयव्याकरणमेव जागर्ति साम्प्रतं वेदाङ्गतया प्रथितम्। प्रतिपदसाधुत्वज्ञानविषयत्वादैन्द्रादीनि व्याकरणानि तथा प्रथिष्ठानि जातानि यद् दिव्यवर्षाणां सहस्रं देवगुरुर्देवेन्द्रं तदुपदिशन्नपि नोपेतः पर्यवसानम्। शतवर्षायुष्काणां साम्प्रतिकानां जीवने समग्रस्य तदध्ययनस्य तु का कथा। एतदवेक्ष्य दयार्द्रचेतसा महामुनिना पाणिनिना संदृब्धं चतुस्सहस्रसूत्रात्मकं प्रत्याहारशैलीकं संक्षिप्तं व्याकरणम्। सक्षिप्तशैलीकस्य व्याकरणस्येद वैशिष्टयं भवति यत् संबद्धानां बहुसंख्यकानां शब्दानां धातूनां च विसरस्तस्मिन्नेव सूत्रे न निवेश्यते। शब्दगणस्य धातुगणस्य वा पाठः परिशिष्टरूपेण पृथग् रच्यते। पाणिनीयेषु सूत्रेषु संज्ञा-विधि-नियम-अतिदेश-अधिकारसूत्राणाणिइव परिभाषासूत्राण्यपि विद्यन्ते। इतोऽतिरिक्ता अनियमप्रसङ्गे नियमकारिण्यो बह्व्यःपरिभाषास्तत्र व्याकरणनिकाये व्याख्येयतया परिगृहीता दृश्यन्ते। तासु काश्चन भाष्यकृता वचनरूपेण पठिता इति वाचनिक्यः, काश्चिल्लौकिकन्यायमूलाः शास्त्रीयन्यायमूलाश्च नित्यत्वानित्यत्वरूपाः। अन्यास्तु सन्ति ज्ञापकसिद्धाः। ता अपि नियत्वानियत्वस्वरूपा एव। इत्थं प्रत्याहारशैलीके संक्षिप्ते व्याकरणे खलूणादि-धातु-गण-परिभाषा-पाठ-लिङ्गानुशासनादीनां परिशिष्टानामपेक्षा संयोजनीयतया जायत एव, न तु तदितरेषु विस्तृतेष्वैन्द्रादिव्याकरणेषु। तत्र तु परिभाषाः सूत्रवद् विलसन्ति मूलरूपतया वाचनिक्यः। ऐन्द्रपरम्पराकेष्वपि पाणिनितः परवर्त्तिषु जैनेन्द्र-शाकटायनादिव्याकरणेषु समनुवर्तिता सा प्रत्याहारशैलीति तत्र परिभाषा अपि सूत्रातिरिक्ता लभ्यन्ते। यद्यपि कातन्त्रमेव तादृशं व्याकरणं यत्रैन्द्रादि-प्राचीनव्याकरणपरम्परा संरक्षिता प्रतीयते, तथापि तस्यापि पाणिनिपरभवतया पाणिनीयया संक्षिप्तशैल्या प्रभावितस्य परिभाषापाठो वर्तत एव।

पाणिनिसमकालिकेन व्याडिना संगृहीतः पाणिनीयव्याकरणोपयोगी परिभाषापाठः सम्प्रत्यपि समासाद्यते। किन्तु तन्नाम्ना प्रसिद्धात् 'परिभाषा-सूचनम्' इत्याख्यपरिभाषावृत्तिग्रन्थात् तत्परिभाषापाठस्य पर्याप्तं परिभाषा-संख्याभेदो भवति। समुपलभ्यमानेषु पाणिनीयापाणिनीयेषु परिभाषासंग्रह-ग्रन्थेषु प्राचीनतमोऽयं परिभाषापाठ इति निर्विवादं शक्यते वक्तुम्। नूनमयं

परिभाषापाठो महाभाष्यकृतो दृष्टिपथमागतो भवेदुपयोजितश्च तेन स्याद् भगवता पतञ्जलिना। यद्यपि काशिकायां प्रदिपादिषु च यथासूत्रं विवेचिताः परिभाषाः, तथापि व्याडिकृतपरिभाषासूचनानन्तरम् एकादशख्रीस्ताब्दं यावत् पाणिनीयपरिभाषापाठे काचन वृत्तिर्नावाप्यते। द्वादशख्रीस्ताब्दे पुरुषोत्तमदेवेन ललितेत्यपरपर्याया लघुपरिभाषावृत्तो रचिता परिभाषासु। तत्र व्याडिकृतपरिभाषासूचन इवेहापि प्रथमा परिभाषा दृश्यते—'अर्थवद्ग्रहणे नानर्थकस्य' इति, अन्तिमा तु—'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्' इति। लघुपरिभाषावृत्तितो भिन्ने पुरुषोत्तमदेवसंगृहीते परिभाषापाठे तु 'व्याख्यानतः' इति परिभाषा प्रथमा, 'अर्थवद्ग्रहणे नानर्थकस्य' इति च पञ्चदशी। उभयत्र भूयान् परिभाषासंख्याभेदोऽपि दृष्टिपथमायाति। पुरुषोत्तमदेवात् परतः सीरदेवेन परिभाषिता बृहत्परिभाषावृत्तिः। पुरुषोत्तमदेवकृतलघुवृत्त्यन्ते 'इति श्रीपाणिनीयाचार्यविरचितानां परिभाषाणां लघुवृत्तिः संपूर्णा' इति पुष्पिकया पाणिनीयाचार्यविरचितत्वमस्या विज्ञायते, न तु पाणिनिप्रणीतत्वम्। परिभाषाक्रमदर्शनेन च न तस्या अष्टाध्याययीक्रमानुवर्तित्वमुपपद्यते। सीरदेवकृतायां बृहत्परिभाषावृत्तौ त्वष्टाध्यायीवद् अष्टावध्यायाः प्रकल्पिताः। इह श्रीमानशर्मणा कृता टिप्पणी लभ्यते। वैयाकरणसिद्धान्तकौमुद्यादिषु यथास्थानं व्याख्याताः परिभाषा भट्टोजिदीक्षितेन, न तत्र कल्पिता काचन वृत्तिः स्वतन्त्रा। तस्मात् परवर्तिनो नीलकण्ठदीक्षितस्य परिभाषावृत्तिर्नूनं लभ्यते। 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येकादशपरिभाषायां 'कौस्तुभादिषु स्पष्टम्' इति दर्शनेन तस्य भट्टोजिदीक्षितात् परवर्तित्वं गम्यते। ततः काशीक्षेत्राधिवासिनोऽग्निहोत्र्युपाह्वस्य हरिभास्करभट्टस्य 'परिभाषाभास्करः' इत्याख्यो ग्रन्थो विराजते। सीरदेवसरणिरेवेह समादृता।

अष्टादशे ख्रीस्ताब्दे पण्डितप्रकाण्डेन नागेशभट्टेन सर्वपरिभाषावृत्त्यतिशायी विरचितः परिभाषेन्दुशेखरः परिभाषासु-स्ववैदुष्यप्रभाशेखरः। पूर्वपरिभाषावृत्तिभ्यः सर्वथा भिन्नो लक्ष्यसिद्ध्यनुसारी परिभाषाक्रम इह समाश्रितो महाविदुषा तेन। इह ग्रन्थे तद्गुणाकृष्टचित्तैस्त्रिंशत्तोधिकैर्विपश्चिद्भी रचयित्वा टीकाः कृतार्थितः स्वात्मा। महति सा तदीया शिष्यपरम्परा सम्प्रत्यपि जीवति भारते। तत्रादौ पायगुण्डोपाह्वेन नागेशशिष्येण वैद्यनाथेन 'गदा' इत्याख्या व्यरचि व्याख्या। परिभाषेन्दुशेखरे पूर्ववर्त्तिनां परिभाषावृत्तिकृतां मतानि भृशं पर्यालोचितान्यपि नामतो नोल्लिखितानि नागेशभट्टेन। 'केचित्तु' 'यत्तु' इत्यादिभिः स्मृतानां वृत्तिकाराणां नामानि गदायां वैद्यनाथेन स्फोरितानि। पूर्वेषां सर्वेषां परिभाषावृत्तिकृतां मतानामालोचनेन सहैव जयादित्य-हरदत्त-कैयट-न्यासकृद्-मैत्रेयरक्षित-श्रुतपाल-भावप्रकाशकृद्-जयमङ्गल-भट्टोजिदीक्षितादीनामपि मतानि नागेशेनेति गदाटीकया प्रतिपद्यते। तत्र परिभाषावृत्तिकृत्सु सीरदेवस्यैव मतान्याधिक्यतः स्थाने स्थाने समीक्षितानि न्यक्कृतानि च। समुपलब्धानां परिभाषाविषयकाणां

ग्रन्थानां महतीयं सूक्ष्मेक्षिकापेक्षिणी समालोचना महिष्ठं तावद् गवेषणाकौशलमातिविर्भावयति श्रीमन्नागेशभट्टस्य। 'गौणमुख्ययोर्मुख्य कार्यसंप्रत्ययः' (१५) इति परिभाषास्थले गदाकारः स्वगुरूक्तिं व्याकुर्वाण आह—'एतेन प्रसिद्धाप्रसिद्धयोरिति परिभाषान्तरमिति रत्नकृदुक्तमपास्तम्' इति। नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' (५१) इत्यत्र बृहद्विवरणकारमतं प्रत्याचिख्यासुर्नागेशः 'असिद्धपरिभाषाया अनित्यत्वेन' इत्याह। तदेव विवृणोति गदाकारः—'बृहद्विवरणकारोक्तिं खण्डयति—असिद्धेति' इति। नागेशेन परिभाषेन्दुशेखरे कैयट एव समुद्धृतो नामतः। अन्येषामाचार्याणां तत्कृतालोचनाया अवगमस्तु तच्छिष्यटीकयैव जायते।

पूर्वेषां समेषामाचार्याणां मतान्यनधीत्य न प्रवर्तते काचन समीक्षा। पूर्वाचायमतानां गुणदोषविवेचनापूर्वकं निर्णयात्मकः स्वमताविर्भावो नाम गवेषणा। परिभाषेन्दुशेखरे निरीक्षणीयाऽसौ गवेषणाप्रियैर्विचक्षणैः। पूर्वेषामाचार्याणां परिभाषाविषयकमतालोचनया सर्वासां परिभाषाणां शास्त्रत्वसंपादनोद्देश-बाधबीज-शास्त्रशेषेति क्रमेण प्रकरणत्रये विभाजनपूर्वकं युक्तायुक्तत्वविवेचन सुविहिता स्वपक्षस्थापनेति मूर्द्धन्यतामगादयं ग्रन्थस्तदीयः। नागेशानन्तरं शेषाद्रिनाथसुधिया परिभाषेन्दुशेखरप्रतिष्ठाजिहापयिषया परिभाषाभास्करेत्याख्यस्य स्वग्रन्थस्य मूर्द्धाभिषिक्ततामानेतुकामतया च परिभाषेन्दुशेखरस्थलानि बहुत्र निराकृतानि। किन्तु नैतावता प्रतिष्ठापदवीमारोपयितुं प्राभवत् स सुधीः स्वग्रन्थं सुधीजनसंसदि। तन्निरासाय गदाकारशिष्येण श्रीमन्युदेवेन प्रणीतः 'परिभाषेन्दुशेखरदोषोद्धारः' इत्याख्यो ग्रन्थः।

श्रीमन्नागेशभट्टस्यानितरसाधारणपाण्डित्यप्रभावादेव तदीयग्रन्थमणेः परिभाषेन्दुशेखरस्य तस्मिन्नेव कालेऽध्ययनाध्यापनपदवीमुपगतस्य बहुविधा लभ्यन्ते पाठभेदाः। नागेशभट्टशिष्येण गदाकारेण वैद्यनाथेन दर्शिता बहवस्ते गदायाम्। सम्प्रति वाराणसेयपण्डितमण्डलीषु प्रचलितः पाठो गदाधृतात् पाठाद् मनाग् भिन्नः। यदागमपरिभाषायाम् 'इत्यनया च परिभाषाया' इति परिभाषेन्दुशेखरे गदाकारो व्याख्याति—'क्वचिन्निश्चः पाठः' इति, चकाररहिते 'इत्यनया परिभाषया' इति पाठे तदाकूतम्। चकाररहितस्तादृशोऽसावेव पाठो यागेश्वरेण हैमवत्यामङ्गीकृतः। स च भूतितिलककारेण समास्थितः। एकदेशपरिभाषायाम् 'कार्यकालपक्षेऽपि' इति नागशः। तत्र वैद्यनाथो विवृणोति—'अपिना यथोद्देशसमुच्चयः। निरपिपाठे तूपलक्षणमिदं तस्यापि' इति। अयं निरपिपाठो हैमवत्यां तदनुवर्तिन्यां च भूतिटीकायां विद्यते। 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषायां 'मतुबुदात्तत्वं न' इति परिभाषेन्दुशेखरे वैद्यनाथः पाठभेदाभावं द्रढयति—'उदात्तत्वं नेति निश्चः पाठः' इति। चकारविशिष्टः पाठस्तु हैमवत्यां भूतितिलके चोपलभ्यते—'मतुबुदात्तत्वं च नेत्याकारः' इति। 'सन्निपातलक्षणो विधिरनिमित्तं तद्वि-

घातस्य' ( ८६ ) इत्यत्र 'अजन्तसन्निपातेन' इति नागेश इति मनुते गदाकारः- "अजन्तसंनीति पाठः। तयोस्तदाख्यसंबन्धेनेत्यर्थः। 'अजन्तत्वसन्निपातेन' इति पाठे द्वन्द्वोत्तरत्वः" इति। 'अजन्तत्वसंनिपातेन' इति पाठो हैमवत्यां दृश्यते। स एव भूतितिलककारेणावलम्बितः। प्रकृतिग्रहणे' ( १०१ ) इति परिभापायां परिभाषेन्दुशेखरे गदाटीकायुते 'अर्थादपि प्राप्तस्य' इति पाठः। गदाकारेणापरिहितस्यैव पाठस्य युक्तियुक्तत्वमुपपादितम्। अयमेव पाठो हैमवत्यां गृहीतो वर्तते, भूतितिलककारेण चानुकृतः। 'निषेधाश्च बलीयांसः' ( १२१ परि० ) इत्यत्र गदाटीकाविराजिते परिभाषेन्दुशेखरे "स्यन्त्यतीत्यादौ सकारादिविशेषापेक्षत्वाद् आत्मनेपदनिमित्तत्वाभावनिमित्तत्वात् 'न वृद्भ्यश्चतुर्भ्यः" इति पाठः। गदाकारेण 'वस्तुतस्तु तीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वान्न वृद्भ्य इति पाठः' इत्युक्त्वा 'सकारविशेषापेक्षत्वात्' इत्यस्याधिकसन्निवेश उपपादितः। हैमवतीकारेण वास्तविकः पाठ एवोरीकृतः। चानुकृष्टं नोत्तरत्र' (७९) इत्युत्र चेनाप्यनुकृष्टस्य खोऽन्यतरस्याम्' इति परिभाषेन्दुग्रन्थे यथा पायगुण्डेन धृतस्तथैव यागेश्वरेणापि, तथापि तत्र यागेश्वरेणैव पाठभेदो दर्श्यते-'निश्चकारपाठे तु पूर्वोऽपिरत्र योज्यः' इति। 'प्रत्ययाप्रत्ययोः' ( १११ ) इति परिभाषाया उपक्रमग्रन्थे 'अत आह' इत्यस्य पाठान्तरत्वं समाश्रुतं यागेश्वरेण। 'प्रत्येकं वाक्यपरिसमाप्तिः' ( ११६ ) इत्यत्र 'भुञ्जिवत्' इत्यस्य स्थाने 'भोजनवदिति तु समीचीनः पाठ इति केचित्' इत्याह शास्त्रिवर्यो यागेश्वरः। गदाटीकासमलङ्कृते परिभाषेन्दुशेखरे तु 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' ( ५८ ) इति परिभाषा परित्यक्ता। इत्थं तत्र (१३२) संख्यकाः परिभाषा एव दृश्यन्ते। हैमवत्यां भूतितिलके तु ( १३३ ) संख्याका विद्यन्ते ताः।

इत्थं तावद्धैमवतीकारेणाङ्गीकृतानां पाठानां परम्परा गदाकारेण समाश्रुतपाठानां परम्परातो भिन्ना प्रतीयते। मन्ये नागेशेन द्विविध उपदेशः कृतः स्यात्। द्वाभ्यां त्रिभिर्वा तच्छिष्यैर्गृहीतो लिखितो वाऽसौ शिष्यपरम्परायां प्रचारितः। एवं खलु त्रिधासाद्यते पाठपरम्परा। गदाकारसमाश्रुतपाठपरम्परातो हैमवतीपाठपरम्पराया भेदः सुस्पष्ट एव।

महती प्रतिभा खलु यागेश्वरशास्त्रिणो लक्ष्यते युक्तायुक्तत्वविवेचनावसरे परिभाषेन्दुशेखरव्याख्यायां हैमवत्याम्। पञ्चमपरिभाषायां पायगुण्डमहोदयेन परिभाषेन्दुशेखरे 'कादेरित्त्वानापत्तिः' इत्येवाङ्गीकृतः पाठः। हैमवतीकारेणास्य पाठस्यानौचित्ये हेतुं दर्शितवता हैमवत्यां व्याख्यायि— 'कादेरित्यपपाठ एव, णादेरिति शब्देन्दुशेखरोक्तिविरोधापत्तेः' इति। एकादशपरिभाषायां पायगुण्डमहोदयेन परिभाषेन्दुशेखरे 'विधानानुपपत्त्यार्थापत्तिमूलक०' इत्येव पाठः स्वीकृतः, हैमवतीकारेण 'अनुपपत्त्यर्थापत्ति०—इति पाठस्तु सुगमः' इति स्वकीयमभिमतमभिव्यक्तम्।

पूर्ववर्तिभिः परिभाषेन्दुशेखरस्य व्याख्यातृभिरसमीक्षितानि स्थलानि हैमवत्यां स्वनिशितप्रतिभानिकषेण परीक्षितानि। बृहद्विवरणकारसीरदेवादीनां मतालोचनपूर्वकं क्वचित् परिभाषेन्दुशेखरस्थलान्यपि विद्वत्प्रवरेण यागेश्वरेण चिन्त्यत्वेन पर्यालोचितानीत्यहो वैदुष्यप्रतिभातिशयः पण्डितप्रकाण्डस्य। अष्टाविंशपरिभाषायाम्--'पाक्षिकदोषो दुर्वार एवेति' इति परिभाषेन्दौ नागेशः। "चिन्त्यमिदम्, 'निजौ चत्वार एकाचः' इति न्यायेन समुदायादेव प्रत्ययोत्पत्तिसिद्धेः" इति हैमवत्यां यागेश्वरः। 'असिद्धं बहिरङ्गमन्तरङ्गे' ( ५० परि० ) इत्यत्र 'उपसर्गद्योत्यान्तर्भाविण' इति नागेशः। 'इदं चिन्त्यम्' इति यागेश्वरः। 'प्रत्ययग्रहणे चापञ्चम्याः' ( २५ परि० ) इत्यत्र यागेश्वर आह--'वस्तुतस्तु लृलृङुपश्लिष्टादव्यवहितपूर्वाद् धातोः स्यतासी भवत इति स्वसिद्धान्तरीत्या काङ्क्षाया अभावाच्चिन्त्योऽयं ग्रन्थः' इति। 'व्यपदेशिव-देकस्मिन्' ( ३० ) इत्यत्र "अत एव 'हरिषु' इत्यादौ सोः पदत्वं न" इति नागेशः। तत्र यागेश्वर आह--'वस्तुतश्चिन्त्यमिदम्, हरिष्विति विशिष्ट-समुदायस्य सुबन्तत्वे हरीत्यस्य सहायत्वेऽपि सोः सुबन्तत्वे परिभाषायाः प्रवृत्तेरङ्गीकारात्' इति। 'असिद्धं बहिरङ्गमन्तरङ्गे' ( ५० ) इत्यत्र 'व्रश्चा-दिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् इति नागेशः। तत्र यागेश्वरः प्रत्याह--'वस्तुत इदं चिन्त्यम्, पदसंस्कारेऽपि व्रश्चतीत्यवस्थायां विकरणात् प्रागेव वलि लोपप्राप्त्या तात्कालिकप्राप्त्यभावात्' इति ( द्र० १६५ पृ० )। अत्रैव परिभाषायां यागेश्वरः ( १७७ पृष्ठे ) प्रत्यपादयत्-- "साध्यस्य च साधनाकाङ्क्षतया इति वक्ष्यमाणग्रन्थस्तु चिन्त्य एव, भावप्रत्यय-स्थलेऽनुपपत्तेः" इति। ततोऽग्रे 'उपसर्गद्योत्यार्थान्तर्भाविण' इति नागेशोक्ति-मालोचयता व्याख्यायि तेन--'इदं चिन्त्यम्, साधनसम्बन्धात् पूर्वमुपसर्गद्यो-त्यार्थान्तर्भाविण धातोर्वृत्तावुपसर्गसंज्ञकप्रयोगे कारणाभावात् ' इत्यादि। ततोऽग्रे ( १७८ पृष्ठे )--'वस्तुतः भाष्यसंगतेश्चिन्त्यमेवेदम्' इत्युदीरितं हैमवत्याम्। तत्रैव परिभाषायां समासापत्तिरिति प्रतीके हैमवतीकारेण समा-साप्राप्त्या सामान्यापेक्षज्ञापकस्वीकारे फलस्य चिन्त्यत्वमेव प्रत्यपादि। 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' ( ५१ ) इति परिभाषायाम् 'अनित्यत्वा-श्रयणमेव' इति प्रतीके हैमवतीकारोक्तिः परमरमणीया। तत्र नागेशोक्ति-मनिराकुर्वताऽपि भङ्गयन्तरेण हृद्यमुक्तम्--"तथा सति, अन्तरङ्गपरिभाषाया अपवादभूतानाम् 'अन्तरङ्गानपि' इत्यादिपरिभाषाणां वैयर्थ्यापत्तेतत् कथनं ग्रन्थकृतामेव शोभत इति शिवम्" इति। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' ( ५२ ) इत्यत्र परिभाषास्वरूपमेव पर्यालोचयन्नाह--"वस्तु-तस्तु 'अन्तरङ्गानपि' इति 'अपि'-घटितपाठो न कुत्रापि भाष्ये दृश्यते। अत एव 'स्वमोर्नपुंसकात्' इत्यत्र 'अपि' घटितपाठः केषाञ्चिन्मतेनोपन्यस्तः कैयटेन" इति ( १९९ पृष्ठे )। ततोऽग्रे 'इदमेव च तज्ज्ञापकम्' इति नागेशोक्तौ 'वस्तुत इदं ज्ञापकं चिन्त्यम्' इत्युदितं हैमवत्याम् ( २०० पृ० )। 'अकृतव्यूहाः पाणि-

नीया:' (५६) इत्यत्र 'किञ्चानयैव ....भाष्योक्ता भज्येत' इति परिभाषेन्दौ व्याख्यातवान् यागेश्वरः-'वस्तुत इदं चिन्त्यम्, पक्षद्वयेऽपि येनेत्यस्य स्वेतरेणे-त्यर्थकस्यावश्यकत्वात्' इति। ततोऽग्रे 'यद्युदाहरणम्' इत्यत्र 'अचि र ऋतः' इत्युदाहरणस्य सत्त्वात्' तच्चिन्त्यत्वमाह यागेश्वरः। 'निरनुबन्धकग्रहणे नातदनुबन्धकस्य' ( ८३ ) इत्यत्र द्व्यनुबन्धकत्वादि' इति परिभाषेन्दावादि-ग्रहणस्य चिन्त्यत्वमभिहितं यागेश्वरेण। 'नञ्घटितमनित्यम्' ( ९९ ) इत्यत्र 'चक्षिङो ङकारस्यान्तेदित्त्वाभावसम्पादनेन चरितार्थ्याच्च' इति परिभाषेन्दौ व्याचख्यौ यागेश्वरः:-'चक्ष इत्यकारान्तपाठे नुमोऽप्राप्तिरेवेति चिन्त्यमेतत्' इति। 'सामान्यातिदेशे विशेषानतिदेशः' ( ११० ) इत्यत्र 'इयमनित्या, न ल्यपोति लिङ्गात्' इति परिभाषेन्दौ हैमवतीकारेण यागेश्वरेण 'परिभाषाया अनित्यत्वे ज्ञापकं चिन्त्यमेव' इत्युक्तम्। 'क्वचिद् विकृतिः प्रकृतिं गृह्णाति' ( १३० ) इत्यत्र 'भाष्ये सानुबन्धकेत्यादिप्रकृताभिप्रायेण' इति परिभाषेन्दु-व्याख्यावसरे यागेश्वरेण फलान्तराभावेनेत्यादेश्चिन्त्यत्वमेवाख्यातम्।

प्रक्रियापद्धतौ श्रद्दधानस्य शास्त्रिवर्यस्य यागेश्वरस्य कृतेर्हैमवत्या भाषागुम्फो नव्यन्यायशैलीमास्थाय रचितस्य परिष्कारादिग्रन्थग्रन्थिलस्य परिवर्तिनो भूतितिलकस्येव कृतो न लक्ष्यते। नव्यव्याकरणे परिष्कारपद्धति-रियं पर्वतीयात् पण्डितप्रवरश्रीगङ्गारामशास्त्रिवर्यादुपक्रान्ता। तच्छिष्यस्य १७८४ खीस्ताब्दे काशिकराजकीयसंस्कृतमहाविद्यालयेऽध्यापकस्य पण्डित-प्रवरस्य श्रीकाशीनाथशास्त्रिणो बहवः शिष्याः अभूवन्। तेषु १. कार्लेकरोपाह्वः श्रीराजारामशास्त्री, २. श्रीबालशास्त्रिरानाडेः, ३. श्रीयागेश्वरशास्त्री च सुप्रसिद्धा विद्वांसः। श्रीयागेश्वरो हैमवत्या मङ्गलाचरणे काशीनाथगुरुं समस्तविदुषां धुर्यं सुधीनां वरम्' इति स्मरति सादरं काशीनाथशास्त्रिणम्। श्रीकाशिनाथशास्त्रिणामुपरतावन्तिमकक्षायां बालशास्त्री यागेश्वरशास्त्री च गुरुकोटिकस्य सतीर्थ्यस्य कार्लेकरोपाह्वस्य श्रीराजारामशास्त्रिणोऽन्तेवासित्व-मङ्गीकृतवन्तौ। श्रीराजारामशास्त्रिकार्लेकरः काशिकराजकीयसंस्कृतमहा-विद्यालये १८५६-१८७५ खीस्ताब्दं यावदध्यापकपदमलङ्कुर्वाण आस्त। यद्यपि यागेश्वरशास्त्रिसतीर्थ्यस्य बालशास्त्रिणः शिष्याः परिष्कारपद्धतिं विशेषत उपबृंहितवन्तः, तथापि यागेश्वरशास्त्रिकृतायां हैमवत्यां परम्परागतस्तद्-बीजाङ्कुरो दृश्यत एव। 'अन्तरङ्गादप्यवादो बलवान्' (५७) इत्यत्र हैमवत्यां ( २३३ पृष्ठतः २३७ पृष्ठं यावत् ) नव्यपरिष्कारपद्धतिमवलम्बमाना भाषा-छटा विलोकनार्हा। ततश्च २४० तमे पृष्ठे 'पदप्रयोज्यविषयताद्वयवृत्त्यन्यत-मत्वावच्छिन्नव्यापकतानिरूपितव्याप्यतायाः 'अकः सवर्णे' इत्येतच्छास्त्रीयोद्-देश्यतावच्छेदकरूपं सवर्णाजव्यवहितपूर्वत्वसमानाधिकरणत्वमकत्वम्, अगव्यव-हितपरत्वसमानाधिकरणं सवर्णाच्त्वम् तदवच्छिन्नातिरिक्तत्वेनेगात्पदार्थ-योरच्पदार्थे च संकोचे जाते 'आद् गुणः' 'इको यणचि' इत्यनयोरित्थं संकुचितो वाक्यार्थबोधो निष्पन्नः—सवर्णाजव्यहितपूर्वत्वसमानाधिकरणाक्त्वावच्छिन्नाति-

रिक्तो योऽवर्णस्तदागमव्यवहितपरत्वसमानाधिकरणाक्त्वावच्छिन्नातिरिक्तेऽचि पूर्वपरयोर्गुणः" इत्यादिभाषाभङ्गिर्दृश्यते 'येन नाप्राप्ते' इत्यत्र हैमवत्याम्। एवंविधानि पञ्चषाण्येव स्थलानि समधिगम्यन्ते व्याख्यायामस्याम्।

यागेश्वरशास्त्रिणो व्याख्याशैली कामपि स्वोपज्ञतां निर्दिशति। पूर्वेषां प्रमुखाणां वैयाकरणानां मतान्यालोच्य पर्यन्ते 'इदमत्र तत्त्वम्' 'अत्रायं निष्कर्षः' इत्यादिरीत्या स्वकीयमतमाविर्भावयति विद्वत्प्रवरः (द्र० २१९ पृ०)। क्वचित् 'केचित्' इति क्वचिच्च 'अन्ये' इति शब्दस्यारुचिसूचकत्वं प्रत्यपादि हैमवत्याम्–'अत्र केचिदित्यरुचिसूचकम्' ( ९२ परि० ), 'केचिदित्यरुचिसूचकम्' ( ९७ परि० ), 'अत्र अन्ये इत्यनेनारुचिः प्रदर्शिता' ( २७२ पृ० ) इति। परिभाषेन्दुशेखरो व्याकरणवैदुष्यनिकषयतयाऽङ्गीकृतो वैयाकरणैरिति विद्वत्प्रवरैस्तत्र व्याख्याविरचनेन पाविता स्वकीया लेखनी। हैमवतीकारेण स्वगुरोर्मतमप्युद्धृतमित्येतेनानुमीयते परिभाषेन्दौ तत्कृतव्याख्यानम् ( द्र० 'तदेव नेति गुरुचरणाः' २६२ पृ० )। यागेश्वरशास्त्रिणः सतीर्थ्येन 'रानाडे' इत्युपाह्ववालशास्त्रिणाऽपि विरचिता सारसारविवेकनामिका परिभाषेन्दुटिप्पणी।

हैमवत्या मतानि द्विस्त्रिर्वा समुद्धृतानि बालशास्त्रिणोऽन्तेवासिना भूतितिलककारेणेति व्यज्यते तत्त्वप्रकाशिकाव्याख्यानतः। भूतितिलकस्योपजीव्यभूताया अपि हैमवत्या अस्याः प्रकाशनं केनापि कारणेन नैतावच्चिरं क्वापि संजातमिति नातिचित्रम्। बहवो विशिष्टा ग्रन्था अद्यापि वेष्टनपारतन्त्र्यमावहमानाः प्रकाशनवेलां प्रतीक्षन्ते। यागेश्वरशास्त्रिणोऽन्यतमेन शिष्येण वीरेश्वरेण हैमवतीयं प्रतिलिपीकृता स्वयमेव तत्प्रकाशनाय बद्धादरेण। प्रतिलिपिसमये भूतितिलकेन जयदेवकृतव्याख्यादिभिश्च वेष्टनपारतन्त्र्यं नासीदुन्मूलितम्। केनचित् कारणेन वीरेश्वरो न प्राभवद् हैमवत्याः प्रकाशनाय। तत्कृता प्रतिलिपिरवाप्ता पण्डितप्रवरेण श्रीबलदेवोपाध्यायमहाभागेन। श्रीकालिकाप्रसादशुक्लस्य वैयाकरणशिरोमणेरंसयोर्न्यस्तो ग्रन्थरत्नस्यास्य सम्पादनभारस्तदानीन्तनेन संचालकेन तेन।

वीरेश्वरकृतप्रतिलिपेर्वैकल्याद् अविकलाया मातृकाया मद्रपुरीयाद् हस्तलेखपुस्तकालयादवाप्तये प्रयासो विहितो विश्वविद्यालयेन। ततः सम्प्राप्तयाऽऽधारभूतया तया मातृकया सह वीरेश्वरकृतप्रतिलिपेः सरस्वतीभवनग्रन्थालयस्थानां चतसृणां विकलानां च मातृकाणां पाठभेदसंगतये महानायासोऽनुष्ठितः सम्पादकेनेति मन्ये। महदुपकृतं शब्दविद्याविज्जगत्, समृद्धि चानीतः शब्दविद्याशेवधिर्ग्रन्थरत्नस्यास्य संपादनेन संपादकेन। तस्यैतस्य प्रकाशनं चिरात् प्रतीक्षमाणानां शब्दविद्यार्णवावगाहनेप्सूनां जिज्ञासूनां विदुषां च कराब्जयोर्भूमिकापरिशिष्टादिविराजितं हैमवतीसंस्करणमिदमर्पयन्नहं ध्रुवं विश्वसिमि

यदुपयुञ्जानास्ते संपादकपरिश्रमं नूनं सफलयिष्यन्ति, हैमवतीजानिकृपा-भाजश्च भविष्यन्ति ।

यागेश्वरशास्त्रिणो व्याकरणविषयकं हैमवतीग्रन्थमिमं व्याकरण-न्यायाद्यनेकशास्त्रनदीष्णानां पुण्यश्लोकानां साक्षात्सरस्वत्यवताराणां म० म० शिवकुमारशास्त्रिचरणानां भविकाख्यया प्रवर्तिताया म० म० शिवकुमार-शास्त्रिग्रन्थमालायाः प्रथमसुमतया प्रकाशमानीयमानं विलोक्य, व्याकरणन्याय-शास्त्रीयास्तादृशाः सर्वेऽपि ग्रन्था इह प्रकाशमेष्यन्ति, यादृशाः प्राक् सरस्वती-भवनग्रन्थमालायां प्रकाशनार्थमूरीक्रियन्ते स्मेति विज्ञाप्य च नितान्तमानन्दमनु-भवामीति ।

गीताजयन्त्याम् ।
२०३२ वैक्रमाब्दे
१४-१२-१९७५ खैस्ताब्दे

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसंधानसंस्थानस्य

# उपोद्घातः

## प्रथमसंस्करणस्य

वैयाकरणसिंहस्य प्रक्रियापारदृश्वनः ।
यागेशपण्डितार्यस्य वृत्तमत्र वितन्यते ॥

पवित्रचरित्राणां वैयाकरणकेसरिणां श्रीयागेश्वरशास्त्रिणामतिसंक्षिप्तं जीवनवृत्तमिदमत्र प्रस्तूयते । इमे महानुभावाः श्रीराजारामशास्त्रिणामन्तेवासिनस्तथा श्रीबालशास्त्रिणां सतीर्थ्या अभूवन् । १९५५ तमे वैक्रमाब्दे माघमासि सप्ततिवर्षमितमायुरवाप्य वारणस्यामस्यां श्रीविश्वनाथसायुज्यं प्राप्ताः । साम्प्रतं कीर्तिं कामपि कमनीयां कलयति तन्निर्मिता परिभाषेन्दुशेखरस्यैषा मनोरमा व्याख्या 'हैमवती' नाम । विद्वत्सु लब्धप्रसरैषा व्याकरणरहस्यविदां विपश्चितां स्वकीयया प्रौढचा मनोहरलेखनशैल्या पाणिनिमर्मप्रकाशनेन च ध्रुवमेव चेतांसि रञ्जयति । तस्मिन् काले श्रीतात्याशास्त्रिविरचिता 'भूतिः' नैव स्वीयां विभूतिं प्राकटयत्, न चापि काचन चित्तरञ्जिन्यन्यापि व्याख्या नागेशस्य मर्मप्रकाशिकाऽभूत् । विशुद्धप्रक्रियामुखेनास्पृष्टनव्यन्यायधोरणीयं हैमवती विविधानां विषमाणां च परिभाषाणां मनोरमं हार्दं स्वल्पेनैव शब्देन विवृण्वती कामपि प्रख्यातिमभजतेति परिभाषेन्दुशेखरमर्मज्ञा विद्वांसो नूनं विदाङ्कुर्वन्ति ।

### जीवनवृत्तम्

श्रीयागेश्वरशास्त्रिणः 'बलिया'जनपदान्तगतरुद्रपुरनाम्नि विप्रबहुले ग्रामे स्वजनिमलभन्त । तेषां पितृचरणाः श्रीहङ्कार-ओझानामधेया ब्राह्मणवृत्त्या कयापि स्वकुटुम्बस्य पोषणमुदाररीत्याऽभजन्त । तेषामात्मजचतुष्टये कनिष्ठोऽयं बालो निसर्गत एव प्रतिभासम्पन्नः स्वाध्यायशीलश्चासीत्, परन्तु दारिद्रचपङ्कमग्नस्तज्जनकः स्वपुत्राणां संस्कृताध्ययनाय काशीमन्यद्वा किमपि विद्यास्थानं प्रेषयितुं नापारयत् । श्रीयागेश्वरस्य बालकस्यापि बुद्धिरासीन्निर्मला, धारणा चातीव प्रबला । बाल्यत एव तस्याभिरुचिः पाणिनीये शास्त्र एवाभवत् । सामान्यपण्डितानां सकाशात् प्राप्तविद्योऽयं छात्रः स्वाभिलषितपूरणायैकदा विहाय निजं गेहम्, अनापृच्छच स्वबन्धुवर्गम्, अनामन्त्र्य जनकं जननीं च गोरक्षपुरमण्डलवासिनं कञ्चिद् वैयाकरणं पादचारेणानेकैरहोभिः प्राप्तवान् । तत्कीर्तिरेव तस्य तत्र गमने प्रेरकतां प्रपेदे । अनाथोऽयं बालकोऽतीव काठिन्येन

मार्गस्थितगृहस्थानां गृहेभ्यो भिक्षां याचमानो धूमशकटस्य तदानीमभावाद् महता क्लेशेनागतो गोरक्षपुरम्। श्रीवैयाकरणमहोदयानां कृपातः स्वल्पेन कालेन नाल्पीयस्या तपस्यया स्वाभीष्टपूर्तिमकरोत्। सम प्य तत्रत्यं शिक्षणं मूर्धन्य-वैयाकरणसमागमोत्फुल्लमना आगमद् वाराणसीम्। तस्मिन् कालेऽशेषविद्या-वरिष्ठानां श्रीराजारामशास्त्रिणां व्याकरणाध्यापने आसीत् कापि कमनोया कोर्तिः। अनेके विद्वांसस्तदन्तेवासितामभजन्त। तन्मध्ये श्रौतस्मार्तविद्याचणाः श्रीबालशास्त्रिणोऽपि मूर्धन्यतामधारयन्त। श्रीयागेश्वरशास्त्रिणोऽत्रैव विद्यालये श्रीबालशास्त्रिणां सतीर्थ्या अभूवन्। अधीताशेषव्याकरणा इमे पण्डितप्रवराः स्वविनयेन स्वाभिजात्येन स्वपाण्डित्यप्रकर्षेण च स्वगुरुचरणानां नितान्तं स्वान्तमाक्रष्टुं प्राभवन्। तदानीं महाराष्ट्रियाणां विदुषामेव पण्डितसमाजे वैदुषीमूलकं महनीयं सम्मानं सत्कारश्च विपुल आस्ताम्। काशोमण्डलस्थानां सरयूपारीणब्राह्मणानां मध्ये श्रीयागेश्वरपण्डित एव प्रथमं वैयाकरणमूर्धन्यो-ऽभवदिति तत्कीर्तिस्तदानोमपि विदुषां मनांस्यावर्जयत्। कुतश्चिल्लब्धवृत्तेन पित्रा गृहं नीतो विवाहदीक्षां निरवर्तयत, परन्तु काश्यामेव सदैव निवसन् छात्राणामध्यापने च कालं नयन् श्रीविश्वनाथपुरीं कदाचिदपि नात्यजत्।

श्रीयागेश्वरपण्डितस्य श्रीबालशास्त्रिभिः सह स्वाभाविकं स्नेहबन्धन-मेतादृग् द्रढीय आसीद् यद् यदा ते स्वीयशिष्याणां राज्ञां राजधानीं निमन्त्रिता अगच्छन्, तदा ते सर्वदैव यागेश्वरपण्डितं स्वसङ्गतिभाजमकुर्वन्। प्रसिद्धेयं कथा यद् बालशास्त्रिभिः काश्यामतिविशालः श्रौतयागसमारोहो महता द्रव्येण सप्रयत्नं विहितः, तस्मिन् श्रीयागेश्वरपण्डिता एव सर्वाधिकं महनोयमाचार्य-पदमलङ्कृतवन्तः। एतादृगासीत् श्रीबालशास्त्रिणां यागेश्वरपण्डितानां वैदुषी-विषये विशालः पक्षपातः, ज्येष्ठभ्रातृसन्निभः सहजस्नेहश्च। उभावेव विद्वद्वरेण्यौ तदानीं वाराणस्या मण्डनभूतावास्ताम्।

श्रीयागेश्वरशास्त्रिभिर्निर्मिता परिभाषेन्दुशेखरस्य प्रमेयबहुला 'हैमवती'-व्याख्याऽपरासां व्याख्यानां ध्रुवं मूर्ध्नि तिष्ठति। जानन्त्येव व्याकरणविदो विद्वांसो यद् नव्यव्याकरणे 'परिष्कारपद्धति'नाम्ना विश्रुता या खलु व्याख्यान-पद्धतिर्वर्तते, तस्यां नव्यन्यायस्य भूयान् प्रभावो जागर्ति। पदपदार्थानां सम्बन्ध-विवेचनप्रसङ्गे नव्यन्याये सर्वाङ्गशोभनोया सम्बन्धविवेचनरीतिरुररीकृता वर्तते। तस्या एव प्रभावादन्येष्वपि शास्त्रेषु विशेषतो वेदान्ते, व्याकरणे, साहित्यशास्त्रे च तत्तन्मर्मज्ञैर्विद्वद्भिर्नवीनं व्याख्यानकौशलमङ्गीकृत तत्तच्छा-स्त्राणां रहस्यानि समुद्घाटितानि वर्तन्ते। व्याकरणागमे तामेव नव्यां नैयायिकीं व्याख्यानपद्धतिं पुरस्कृत्य नव्या वैयाकरणाः स्वशास्त्रसिद्धान्तान् व्याचख्युः। श्रीयागेश्वरशास्त्रिणां त्वपरैव व्याख्यानरीतिः पाणिनीयपरिभाषाणाम्; अन्य एवोररीकृतो मार्गो व्याख्यानप्रकरेषु। इमामेव प्रक्रियापद्धतिरिति नाम्ना समुद्घोषयन्ति विपश्चितः। पाणिनीयसूत्रमूलकत्वादस्या रोतेर्नूनमियं पद्धति-

विशुद्धवैयाकरणतत्त्वानां रहस्योद्घाटने क्षमेति शास्त्रज्ञानां विदुषामभिमतः सिद्धान्तः । हैमवतीप्रणयन इयमेव पद्धतिरादृता दृश्यते । श्रीयागेश्वरशास्त्रिणां विपुलैरान्ध्रैर्द्रविडैश्च च्छात्रैः स्वोपयोगाय विहितो हैमवत्या हस्तलेखः साम्प्रतमपि द्रविडदेशेषु भूयान् समुपलभ्यते ।

श्रीशास्त्रिचरणानां प्रथमे शिष्याः सर्वशास्त्रस्वतन्त्रा उभयविधमीमांसाप्रगल्भाः श्रौताचारपरायणाः श्रीवीरेश्वरशास्त्रिद्रविडा आसन्, ये बहुषु वर्षेषु जयपुरीयसंस्कृतमहाविद्यालयेऽनेकानि शास्त्राण्यध्यापयन्तः परमेण सदाचारेण स्वजीवनमनैषुः ।

श्रीयागेश्वरपण्डितवर्यस्य पवित्रमाचरणं तद्विद्वत्तानुकूलं समधिकमुन्नतमासीत् । निस्पृहताया मूर्तिः पाण्डित्यस्य च महनीयावतारोऽयं वेतनं विनैव प्राचीनादर्शमनुसृत्य छात्रान् व्याकरणागममध्यापयति स्म । भृतिमूलकमध्यापनं तस्मै कथमपि नारोचत । श्रीराजारामशास्त्रिणां रुग्णावस्थायां श्रीयागेश्वरपण्डितस्तत्कार्यं सम्पादयितुं संस्कृतमहाविद्यालये नियुक्ताः प्राप्तां भृतिं स्वगुरुपुत्रायैव न्यवेदयत्, एकामपि काकिणीं नागृह्णात् । श्रीशास्त्रिचरणेषु स्वःप्रयातेषु विद्यालयस्याध्यक्षेण ग्रिफिथसाहवेन तद्वासस्थानमागत्य बहुशोऽध्यापनकार्याय प्रार्थितोऽपि भृतिमयमध्यापनं निराकरिष्णुस्तत्प्रार्थनास्वीकृतिविषये स्वासामर्थ्यमेव प्राकटयत् । महाविद्यालयीयाध्यापनकार्याद् मध्याह्ने प्राप्तावकाशोऽयं महानुभावः पञ्चगङ्गाघट्टे सचैलं स्नानं विधायैव निजं गेहं प्राविशत् । इयमेव तस्य रीतिः, अयमेव तस्य स्वभावोऽभवद् यद् ब्राह्ममुहूर्तादपि प्राक्तने काले त्रिवादनघटिकायां प्रत्यहं पञ्चगङ्गाघट्टे विहितगङ्गाभिषेकविधिस्तदनन्तरं च संपादिताशेषपूजार्चापद्धतिः श्रीपण्डितवर्यः सूर्योदयकालतः प्रारभ्य यावद् मध्याह्नसमयमनेकानान्ध्रद्रविडादिनानादेशीयान् छात्रान् व्याकरणागमस्य समधिकप्रौढान् ग्रन्थानपाठयत । अध्यापनाद् ऋते न तस्य किञ्चिदन्यत् कार्यं हृदयावर्जकमभवत् । निरन्तरपाठनेन चारित्र्यप्रकर्षेण च तस्य च्छात्रा अतीव प्रौढिमभजन्त सभासु शास्त्रार्थविचारणायाम् । तस्यैको द्राविडश्छात्रो विजयनगरमहाराजस्य कार्याध्यक्ष (मैनेजर) पदे स्वपाण्डित्यबलेन नियुक्तोऽभवत् । गुरुपकारबुद्धया प्रेरितोऽयं छात्रः श्रीयागेश्वरपण्डितेभ्यो बलियास्थगृहसमीप एव महतीं भूमिं दानरूपेण समर्पयितुं विजयनगराधिपतिं प्रैरयत् । उदारोऽयं महाराजः स्वीयोदार्येणोद्युक्तः श्रीपण्डितवर्येभ्यो दातुं भूमिमुत्सुकोऽभूत् । तत्कृते सर्वं कार्यं सन्नद्धमभूत् । राजाधिकरणीयाधिकारिणां समीपे गमनवेलायां लिपिबद्धप्रमाणपत्रोपरि श्रीयागेश्वरशास्त्रिणां हस्ताक्षराण्येवावशिष्टानि । परन्तु श्रीशास्त्रिचरणैर्हस्ताक्षराणि नो विहितानि, राज्ञः समीपे स्वदैन्यस्य प्रकटनाय च भृशं निर्भर्त्सितः स्वीयश्छात्रः । एतावान् निर्लोभः स्वभावः, निःस्पृहा च वर्तनरीतिः श्रीशास्त्रिचरणानां कस्य न स्यात् प्रशंसास्पदं साम्प्रतमपि ।

**परिवारपरिचयः**

श्रीपण्डितवर्याणां भ्रातुष्पुत्रः श्रीठाकुरप्रसादपण्डितो व्याकरणशास्त्रस्य ज्योतिःशास्त्रस्य च प्रौढो विद्वानासीत् । श्रीबालशास्त्रिपादानामपि च नितान्तं स्नेहास्पदमभूत् । कदाचित् संस्कृतविद्यालये परीक्षावसरेऽन्यैरनुत्तरितान् प्रश्नान् साधु विविच्य ठाकुरप्रसादः स्वप्रतिभया श्रीबालशास्त्रिणमेतावच्चमत्कृतं प्रसादोल्लसितमानसं च व्यधाद् यत् स स्वहस्तेन लिखितं सिद्धान्तकौमुदीपुस्तकं तस्मै सद्य एवोपहारीकृतवान्, प्रशंसापत्रं च तस्मै दत्तवान्; यदत्रैव पाठकानां प्रह्लादाय प्रकाश्यते । श्रीबालशास्त्रिणां स्फुटानि विशदानि मौक्तिकवद् विन्यस्तानि च नागराक्षराणि विलोक्य कस्य मानसं नैव प्रमोदभरतुन्दिलं संजायेत । पण्डितानां वर्णविन्यासकौशले ये खलु शिथिलादरा वर्तन्ते छिद्रान्वेषिणः समालोचकाः, ते स्फारीकृत्य निजं विलोचनं पश्यन्त्वत्र विन्यस्तां श्रीशास्त्रिपादानां नागराक्षरसन्निवेशचातुरीम् ।

श्रीयागेश्वरपण्डितस्यैकः पुत्रः श्रीदेवकृष्णपण्डितनामा । प्रथमपत्न्याः सन्तानराहित्येन श्रीदेवकृष्णपण्डितेन द्वितीया पत्नी परिणीता राजवंशीति नामधेया । इयमेव पुत्रवधूः काश्यामेव निवसन्ती शास्त्रिपादानां सन्ततसेवानुध्यानपरा बभूव । शास्त्रिभिः साकं प्रातः त्रिवादनसमये गङ्गायां स्नाति स्म । दीनजनानां सेवायां दत्तचित्ता देवाराधनतत्परा च कालं नयति स्म ।

साम्प्रतं श्रीदेवकृष्णपण्डितानां सन्तानद्वयी वर्तते —एकः पुत्रः, अपरा च कन्यका । पुत्रो रामनाथ ओझानामकोऽत्रैव काश्यां निवसन् सदाचारपरायणः स्वजीवनं यापयति । खेदस्यायमवसरो यत् तस्य कापि सन्ततिर्न वर्तते ।

श्रीयागेश्वरपण्डितस्यैकैव पौत्री पुत्रपौत्रादिभिः सनाथा, अस्य चरितलेखकस्य धर्मपत्नी वर्तते । सा तु स्वीयपितामहवदेवदेवार्चनादिसत्कर्मतत्परा दीनजनानुकम्पनपरायणा सत्यसन्धा च विशिष्टेन स्वचरित्रेण जनान् चमत्करोति ।

आचार्याणामेकैवासीत् पुत्री गौरीति नाम्नी, तस्याः परिणयो गोरक्षपुरमण्डलान्तर्गतप्रख्याततमे रुद्रपुरेति नाम्नि नगरे धनधान्यसम्पन्नेन अनिरुद्धतिवारीति नाम्ना महाभागेन सम्पन्नो बभूव । दैवदुर्विपाकात् तस्या नासीत् कापि सन्ततिः, परन्तु श्रीमत्या दैवार्चनपरायणया निर्मितं देवायतनं साम्प्रतमपि तत्र वरीवर्ति ।

**शास्त्रिपादानां दिनचर्या**

प्रतिदिनं प्रातः त्रिवादनघटिकायामेव श्रीशास्त्रिपादाः स्वकनिष्ठया पुत्रवध्वा सह पञ्चगङ्गाघट्टे गङ्गास्नानमकार्षुः । तदनन्तरं गृहमागत्य भगवतः श्रीविष्णोः पूजनमुपासनाञ्च सावधानेन मनसा परमयैकनिष्ठया भक्त्या

श्रीः

ओझोपाख्यः श्रीयुतठाकुरशर्मपण्डितः काव्यानि रघुवंशमाघनैषधप्रभृतीनि ज्योतिषे प्रश्न-मुहूर्तजातकादिसंबन्धिग्रन्थान् व्याकरणे सिद्धान्त-कौमुदीं मनोरमाशब्दरत्नपरिभाषेन्दुशेखरादीन् व्याख्याग्रन्थांश्च सम्यक् पठितवान् निरुक्तेष्वेषु ग्रन्थेषु वर्णनीयतमाऽस्य व्युत्पत्तिर्यदेतत्पाठनादिकं साध्वयं कर्तुं प्रभवति शक्नोति चासङ्गतानपि योज-यितुं श्रीमद्भागवतादीनि कठिनतराण्यपि पुराणा-न्यनायासेन व्याख्यातुं क्षमते सुशीलः कुलीनो बुद्धिमान् प्रामाणिकोऽयमित्येतस्मिन्सर्वस्मिन्निरूपिते विषये मम दृढो विश्वास इत्यत्यन्तसन्तोषपुरस्सरं लिखति काशीस्थसंस्कृतपाठालये धर्मशास्त्राद्यध्यापको

भाद्रपदसुदि ६ बुधे सं. १९३४ बालशास्त्री

चाकुर्वन्। ब्राह्ममूहूर्तादपि प्राक् शय्यात्यागोऽभिषेकविधिर्देवार्चनविधानं च तेषामैकान्तिको नियम एव बभूव।

पञ्चगङ्गाघट्टान्नातिदूरे दुग्धविनायकेति नाम्ना ख्याते नगरभागे तेषामावासो मूङ्गेरनगराधिपतेर्विशालायामट्टालिकायामासीत्। उपरितने भागे आसीत् शास्त्रिपादानां स्वीया वसतिः। मध्यमे खण्डे च छात्राणां विद्याध्ययनशाला। अधस्तने च भागे तेषां निवासस्थलं च बभूव। मूङ्गेरनगराधिपतिना शास्त्रिचरणानां वसतयेऽध्यापनाय चेयमट्टालिका निर्णीताऽऽसीत्। शास्त्रिमहाभागा नारायणस्योपासकाः परमवैष्णवा अभूवन्। आदित्यस्योदयात् पूर्वमेव स्वार्चनाविधि समाप्य छात्राणामध्यापनकार्यमचीकरन्। यागेश्वरशास्त्रिभिर्यावज्जीवनमर्चनप्रक्रियया समादृतः शालिग्रामविग्रहोऽधुनापि लेखकस्य समीपे वर्तते, यस्तं परमया भक्त्या महनीयं महामूल्यं रिक्थं मत्वा नित्यमेव समर्चयति, तत्समर्चनेन चात्मानं धन्यं मन्यते।

व्याकरणस्याध्यापनमेव, तत्रापि च सिद्धान्तकौमुद्याः परिभाषेन्दुशेखरस्य पातञ्जलमहाभाष्यस्य चाध्यापनमासीत् तेषां मुख्यं कार्यम्। प्रक्रियाविधेर्महनीयाः समर्थकाः, तदनुसारेण चाध्यापनप्रवीणा इमे पण्डितवर्याः परिष्कारविधेः पाणिनीयव्याकरणनये भृशमावश्यकतां नैवामन्यन्त। प्रक्रियाविधिरेव महर्षेः पाणिनेः सिद्धान्तजातं यदा सरलया रीत्या प्रकटयितुं क्षमः, तदा परिष्कारस्याश्रयणं नात्यन्तं रोचकमिति तेषामासीद् दृढा मतिः। अत एव परिष्कारपरायणा अपि व्याकरणविदः स्वशिष्यान् सिद्धान्तकौमुद्या अध्ययनाय नियमेन तत्समीपमेव प्रेषयन्। श्रूयते यद् महामहोपाध्यायाः श्रीगङ्गाधरशास्त्रिवर्याः कस्यचन स्वप्रियशिष्यस्य व्याकरणागमपाण्डित्यपरीक्षायै सिद्धान्तकौमुद्या दृढं परिज्ञानाय यागेश्वरपण्डितानेव प्रमाणभूतान् स्वीचक्रुः। सिद्धान्तकौमुद्याः परिशीलने तत्प्रमाणपत्रमेव व्याकरणपण्डितसमाजे कस्यापि विदुषो वैयाकरणत्वं ध्रुवं परिचिनोति स्म। तेषां पाठशालायामेतद्देशीयैः छात्रैः साकं दाक्षिणात्याः, आन्ध्रदेशीया द्रविडाश्च छात्रा व्याकरणागममपठन्।

छात्राणामनुशासनं च नितान्तं कठोरमासीत्। रात्रौ नववादनात् पूर्वमेव सर्वे छात्रा नियमेन स्वनिवासमाजग्मुः। तत्पश्चाद् न कोऽपि बहिः स्थातुमपारयत्। यदि केनापि विशिष्टेन हेतुना कश्चित् छात्रो नियतसमयाभ्यन्तरे तत्र नागच्छत्, तर्हि तस्य कृते कपाटस्योद्घाटनं नाभूत्; प्रत्युत वातायनमार्गेणैव स रज्जुसाहाय्येनागन्तुमशक्नोत्। एतादृग् बभूव शास्त्रिचरणानां कठोरोऽनुशासनविधिः।

### शास्त्रिणामध्यात्मपरिशीलनम्

शास्त्राणामभ्यासम् अध्यात्मपरिशीलनं च विहाय नासीद् महानुभावस्येतरत् कार्यम्। सरस्वतीप्रसादेन न केवलमासीत् तस्य विमला धिषणा, प्रत्युत अलोकसामान्या वाक्सिद्धिरपि भृशं चमत्कारिणी अभवत्। श्रूयते तस्यानुकम्पया

पुत्रोत्पत्तिर्ब्राह्मणगृहे। श्रीमहामहोपाध्यायनित्यानन्दपर्वतीयस्यानुजो गोपीवल्लभपन्तोऽपत्यराहित्येन नितान्तं खिन्नो यागेश्वरशास्त्रिणं सन्तानस्योदयविधिं प्रार्थयामास। शास्त्रिमहाभागो वाल्मीकीयरामायणस्य त्रिःसप्तकृत्वो नवाहपारायणं तदुपायेनोपदिदेश। तदुपायाश्रयणेन च स पुत्रमवाप्तुमपारयत्, यस्य नामापि सीतारामेति शास्त्रिपादैरेव प्रकल्पितम्। स महाभागः पुत्रपौत्रादिसम्पन्नो पूर्णमायु प्राप्य नो चिरादेव पञ्चत्वं गतः।

गुरुकृपातः शिष्यस्य हृदयेऽनधीतशास्त्राणां सद्यः प्रबोधः सञ्जायते इति विषये संदिहाना जनास्तथ्यमिदं विदाङ्कुर्वन्तु। यागेश्वरशास्त्रिणः पट्टशिष्येण जयपुरीयमहाराजसंस्कृतविद्यालयस्याध्यापकेन वीरेश्वरशास्त्रिणा लेखकस्य पुरत इदं स्वीयं वृत्तमित्थं प्रत्यपादि। स प्रतिवत्सरं गुरुपूर्णिमायां जयपुराद् गुरुचरणानां पूजनाय समागच्छत्। एष तस्य नियम एवासीत्। दिनत्रयं काश्यां स्थित्वा जयपुरप्रत्यावर्तनसमये गुरोरनुज्ञायै समगच्छत्। एकस्मिन् दिवसे यदा प्रत्यावर्तनकाले शास्त्रिचरणान् दिदृक्षुरगमत् तदा स समाप्य पूजाविधानं गुरुचरणोपरि नतमस्तकस्य वीरेश्वरशास्त्रिणः शरीरं स्वकरपद्मेनास्पृशत्। तस्य स्पर्शस्य प्रभावादेव तस्य विचित्रा मानसी स्थितिरभूत्। गृहमागत्य विविधशास्त्रीयं यं यं ग्रन्थमवलोकयति तस्य तस्य तात्पर्यं सद्यः समुन्मीलति तस्य हृदये। इत्थं न्यायमीमांसावेदान्तादिनानाविषयशास्त्राणाम् प्रौढग्रन्थानां तत्त्वानि परिशीलनमात्रेणैव तस्य हृदयेऽस्फुरन्त, येन मूलतो व्याकरणागमस्य ज्ञाता भूत्वापि स सर्वशास्त्राणि ज्ञातुमपारयत्। तस्य चतुरस्रपाण्डित्यं सद्यः समुन्मिमील। इत्थं श्रीयागेश्वरशास्त्रिणामध्यात्मपरिशीलनपरायणानामलौकिकी कापि शक्तिः साम्प्रतमपि विपश्चितां मनांस्यावर्जयति। तन्मते व्याकरणशास्त्रमेव पाण्डित्यस्य निकषग्रावाऽभूत्, इतराणि च शास्त्राणि तदाधारमादृत्यैव स्वीयां स्थितिं भजन्ते, स्वीयं रूपं च निर्वहन्ति। इत्थंभूतानां व्याकरणागमपरायणानां पतञ्जलिकल्पानाम् शास्त्रिपादानाम् प्रौढेयम् पाण्डित्यप्रकर्षमण्डनभूता हैमवती व्याकरणतत्त्वजिज्ञासूनां भृशमुपकरिष्यतीति दृढम् विश्वसिमः।

**श्रीमतां शास्त्रिवर्याणां चारित्र्यप्रकर्षः**

प्राचीनानां पण्डितानां जीवने त्यागस्य तपस्यायाश्च कोऽपि चमत्कारी प्रकर्ष इत्थंभूतः समुन्मिमील यं साम्प्रतं स्मारं स्मारं समालोचकानां हृदये कोऽपि प्रमोदराशिः समुद्रायमाण इवात्मस्वरूपं भजते।

**त्यागः**

श्रीयागेश्वरशास्त्रिमहाभागः सर्वस्वत्यागस्यौदार्यस्य निःस्पृहतायाश्च कमनीयो विग्रह एवाभूदिति ज्ञात्वा कस्य विपश्चितो मानममानन्दभरतुन्दिलं नैव सञ्जायते। वेतनाश्रितमध्यापनं तस्य मतेन नितान्तमनुचितमश्लाघ्य-

करमासीदिति हेतोः संस्कृतकालेजस्य तदानीन्तनेनाध्यक्षमहोदयेन डॉ० ग्रिफिथमहाभागेन (१८६१ ई० २८७८ ई०) अध्यापनकार्याय भृशं प्रार्थितोऽपि शास्त्रिवर्यो नैनां श्ववृत्तिमाद्रियते स्म। स्वीयगुरुवर्यस्य रोगशय्यामारूढस्य श्री राजारामशास्त्रिणः स्थाने यागेश्वरशास्त्री संस्कृतविद्यालये कतिचिन्मासावधिकमध्यापनमवश्यं कृतवान्, परन्तु तदानीं लब्धं सर्वमपि वेतनद्रव्यं स्वगुरुपुत्रसात्कृत्वा स्वाभीष्टनियमात् पदमपि न सञ्चचाल। पूर्वमेवोक्तं यत् शास्त्रिवर्यस्यैकश्छात्रो वाराणसीस्थविजयानगरमहाराजस्यामात्यपदवीमभजत्। तेन गुरुदक्षिणारूपेण प्रदत्ता प्रभूता क्षेत्रसम्पत्तिः तृणाय मत्वा परित्यक्ता पण्डितवर्यैरिति शास्त्रिपादानां त्यागस्य महिमा नियतमेव पारेवाचां वर्तत इत्यादर्शं ध्यायं ध्यायं मोमुद्यतेऽयं जनः। अन्तिमसमये राजामाधोलालेति नाम्ना प्रख्यातस्य धनकुबेरस्य धर्मपरायणा भगिनी शास्त्रिचरणेषु षोडशवीघापरिमितां भूमिं काश्या नातिदूरे 'डिहवाँ'-नाम्नि ग्रामे महत्यां सेवया तं प्रसाद्य समर्पितवती। क्षेत्रस्य मध्ये शात्रिपादैः एको विशालः कूपो निर्मापितोऽधुनापि वर्तते, यः ग्रामीणजनानां जलसम्पत्तये क्षेत्राणां सेचनकर्मणे च ध्रुवं जागर्ति।

**तपस्या**

शास्त्रिवर्यस्य समस्तं जीवनमेव तपस्यामयं बभूव। प्रातःकालादारभ्य रात्रिपर्यन्तं सोऽध्ययनाध्यापनयोरेवानुरक्तिं विदधे। प्रातः त्रिवादनसमये ब्राह्ममुहूर्ते भगवत्यां भागीरथ्याम् पञ्चगङ्गाघट्टे नियमेनाभिषेकविधिः, तदनन्तरं भगवतो नारायणस्य पूजार्चाविधिः, ब्राह्मणबालकानाम् व्याकरणागमस्याध्यापनविधिः, अवकाशसमये धार्मिकग्रन्थानाम् च पर्यालोचनविधिः, पाकावसरे च विष्णुसहस्रनामस्तोत्रस्य निरन्तरं पारायणविधिः—इत्येवमन्याँश्च धर्मप्रवृत्तिमूलकान् विधीन् निर्वहतः शास्त्रिमहाभागस्य समस्तं जीवनमेव तपोवहुलमभूदिति ध्रुवं वक्तुं पारयामः। व्याकरणागमपर्यालोचनमूलकेन यशोराशिना समाकृष्टास्तदानीन्तना वहवो व्याकरमर्मज्ञाः स्वाध्याये जायमानं सन्देहं निराकरिष्णवस्तमेव शरणं भेजिरे। श्रूयते एकदा मनीषानन्दस्वामिवर्याः परमवैयाकरणा व्याकरणशास्त्रीयसन्देहनिरसनाय यागेश्वरशास्त्रिसमीपमागताः। तदानीं सन्ध्याकाले स स्वामिवर्यं परिचेतुं नापारयत्। स्वीयच्छात्रैर्दत्तपरिचयं स्वामिवर्यं साष्टाङ्गप्रणामेन समर्च्य एकान्तभागे निवासस्य समानीय ह्योरात्रयं यावत् सन्देहानुच्चिच्छेद। श्रीमनीषानन्दोऽपि सन्देहनिराकरणोल्लसितमानसस्तमाशीर्वचनैः संयुज्य भृशं सन्तुष्टचेताः स्वाश्रममगच्छत्।

**तपोवनम्**

सुतनिर्विशेषमेकाग्रेन मनसा परमया निष्ठया च छात्रान् अध्यापयतः

शास्त्रिवर्यस्य निवास एव तपोवनमिवाभवत् । तत्र कृतयुगस्यावतार एव लक्ष्यते स्म । छात्रा अपि गुरुवर्यं परमसेवाभावनया समानर्चुः । तस्य धर्मपत्नी पूर्वमेव काशीवासमलभत, कनिष्ठा पुत्रवधूरेव तस्य समर्चापरायणा भूत्वा तमसेवत । छात्रा अपि आश्रमस्था मुनय इव अनुशासितजीवनं विद्याकर्मणि नियुज्य आत्मानं धन्यं मन्यन्ते स्म ।

इत्थं भारतीयसंस्कृतेर्यानि मूलभूतानि तत्त्वाति विलसन्ति—त्यागः, तपस्या, तपोवनमिति, तानि सर्वाण्यपि यागेश्वरशास्त्रिणां जीवने समुपलभ्यन्त इति विचारयतां निखिलानां विदुषां हृदये कोऽप्यलौकिकश्चमत्कारः प्रादुर्भवतीति किमु वक्तव्यम् ।

श्रीयागेश्वरशास्त्रिणामभिनवेयं कृतिः 'हैमवती' वैयाकरणानां दर्शनपथं साम्प्रतं समुपागता व्याकरणागमस्य सूक्ष्माणि तत्त्वानि प्रकाशयन्ती विपश्चितां मनांसि नूनमावर्जयिष्यतीति दृढोऽस्माकं विश्वासः ।

महर्षिकल्पानां श्रीयागेश्वरशास्त्रिमहाभागानाम् संक्षिप्तं जीवनचरितमिदं विदुषां स्फूर्तये भवत्विति कामनाकलितोऽयं जनो बहुशो लेखाद् विरमति ।

वाराणस्याम्,
पौसी पूर्णिमायाम्
वि०सं० २०३१
१७-१-१९७५ ख्रीस्ताब्दे

**बलदेव-उपाध्यायः**
अनुसन्धानसञ्चालकचरः
वाराणसेयसंस्कृतविश्वविद्यालयस्य

# आमुखम्
## प्रथमसंस्करणस्य

**शब्दसाधुत्वनिर्वचनलक्षणशब्दशास्त्रनिरूपणम्**

गीर्वाणगवीमधिकृत्य शास्त्रशैल्या यावान् विपुलो निर्दोषो व्यवस्था-विशिष्टो दृढः प्रौढो हृदयङ्गमो वैज्ञानिकश्च विमर्शोऽस्मिन् भरतभूवलये समजनि, न तावतो विमर्शस्य सौभाग्यमञ्चति देशान्तराणि। सस्कृतसरस्वत्याः श्रेणिविभाजनम्, प्रकृतिप्रत्ययप्रकल्पनम्, धातुप्रत्ययवाच्यनिश्चयनम्; व्यपेक्षै-कार्थीभावपक्षव्यवस्थापनम्, उत्सर्गापवादचिन्तनम्, पदार्थानामन्योन्यं संसर्ग-स्थापनम्, प्रकृत्यर्थप्रत्ययार्थसम्बन्धविवेचनम्, शाब्दबोधसामग्रीनिभालनम्, पदानां वाक्यानां च मूलभूतशब्दस्फोटगवेषणम्; किं बहुनां, निखिलस्यापि चराचरात्मकस्य जगतः शब्दकारणतादर्शनं भारतोयसंस्कृतशाब्दिकशार्दूलानां बुद्धिवैभवस्य परां काष्ठां निर्दिशति।

किन्यतो नामार्थाः, के च ते, कतमस्य च ज्यायस्त्वम्, नञर्थः कः, निपातानां वाचकत्वं द्योतकत्वं वा, लकाराणां क्व शक्तिः, समासे विशिष्टा शक्तिः आहोस्वित् पदशक्त्यैव निर्वाहः, शक्तिश्च बोधजनकतारूपा वाच्यवाच-कभावापरपर्यायरूपा, धातोः फलावच्छिन्नव्यापारे शक्तिः, फले व्यापारे च पृथक् शक्तिः, आख्यातस्थले व्यापारमुख्यविशेष्यकः शाब्धबोधः, तत्रापि कर्तृ-प्रत्ययस्थले व्यापारमुख्यविशेष्यकः, कर्मप्रत्ययस्थले च फलमुख्यविशेष्यकः शाब्दबोधः, कृत्प्रत्ययस्थले आश्रयविशेष्यकः, के विभक्तीनामर्थाः, काश्च कारकविभक्तयः, काश्च तद्भिन्नाः, निखिलस्यापि ब्रह्माण्डस्य कारणीभूतस्य स्फोटस्य भेदप्रभेदा इत्येतेषां शब्दविषयकाणां विचारचातुरी परमरणीया स्वयंवरबधूर्भारतीयानेव संस्कृतशब्दानुशासनविदो वृतवती, नान्यान् देशान्तरी-यानिति नाविदितं विदितवेदितव्यानां तत्रभवतां मेधासमेधितस्वान्तानां सुमनसाम्।

अस्यैव भरतभूभागस्य सौभाग्यमेतद् यश्छताब्दीर्यावत् शरदः शतानि तपांसि तप्त्वा, विधूतविविधकल्मषा अमलमानसा अप्रतिमप्रतिभाः शाब्दिक-शार्दूलाः शब्दविद्यावगमाय विज्ञानसरणीसमन्वितानि तानि तानि शब्द-शास्त्राणि निरमासिषुः, येन भारतस्य गौरवमद्याप्यमरायते, तिरस्कुरुते चान्य-भाषाशास्त्रविदां विदुषां यशांसि। अमीषां शब्दशास्त्राणाम् सामर्थ्येनैव संस्कृतभाषा परामपरतां प्राप्नोति, आत्मनो लोकभाषात्वं सर्वभाषाश्रेष्ठत्वञ्च न विजहाति। व्यवस्थितस्य शब्दानुशासनशास्त्रस्य दारिद्र्यादनेका भाषा

विलयमिता दुरवगमार्थताम् वा प्राप्तुं विवशा अभूवन् । नेमां दशां संस्कृत-सरस्वती समन्वभूत्, प्रत्युत संस्कृतभाषाशाब्दिकानाम् करुणावरुणालयानाम-निर्वचनीययाऽनुकम्पया परप्रहारशतानि सोढ्वापि जीवन्ती सती सुतरां सुगमताम् समैति । किं बहुना, एतच्छब्दशास्त्रमन्तरा आधुनिकभाषाशास्त्रं निकामं विकलमासीदिति वैदेशिकैरपि विद्वद्भिस्तत्रास्यातीवोपयोगः कृतः ।

इदञ्च व्याकरणशास्त्रं ज्योतिषामपि ज्योतिः, यतो हि शब्दो ज्योतिः, तस्य प्रकाशनं=अन्वाख्यानं=प्रकृतिप्रत्ययतदर्थप्रतिपादनं व्याकरणमेव करोति । तथा चोक्तम्—

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।।**

शब्दशास्त्र समधिगम्य स्वाशयं प्रकाशयद्भिर्भर्तृहरिपादैः प्रतिपादितम्—

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।**

( वा. प. ११६ )

पदमञ्जरीकारा हरदत्तमिश्रा अप्यवोचन् शब्दानुशासनप्रस्तावे—

**उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।**
**प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ।।**
**रूपान्तरेण ते देवा विचरन्ति महीतले ।**
**ये व्याकरणसंस्कारपवित्रितमुखा नराः ।।**

( का. वृ., पृ. १४ )

चिकित्साऽध्यात्मादिशास्त्रवद् व्याकरणशास्त्रमपि जनानामत्यन्तायोप-कारकम् । समर्थितमेतद् भर्तृहरिणा—

**कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।**
**चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ।।**

(वा० प० १।१४७)

व्याकरणमभिनन्दन् भगवान् शेषावतारोऽप्याह—

"सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते" (अ० १, पा० १, आ० १, पृ० १२६-१२७) ।

एवंविधस्य शासनतः श्रेष्ठस्य गुणतो गरिष्ठस्य दुर्मेधसो दविष्ठस्य मुख्यवेदाङ्गत्वेन प्राप्तप्रतिष्ठस्य शब्दानुशासनस्य सम्प्रति स्वरूपं श्रीमताम् समक्षं समुपस्थाप्यते । शब्दसाधुत्वप्रतिपादनपरेषु तेषु तेष्वाकरग्रन्थेषु सम्यक् समीक्ष्यमाणेषु शब्दानुशासनस्य स्वरूपद्वयं समुपलभ्यते—एकं लौकिकशब्द-व्युत्पादकम्, अपरं परमार्थवस्तुप्रतिपादकम् । 'पदलक्षणायाम् वाचोऽन्वाख्यानं

व्याकरणमिदम्' इत्यादिनाऽऽद्यम् निर्दिष्टम्, 'इयं सा मोक्षमाणानाम्' इत्यादिनाऽन्त्यञ्च। अन्त्यमग्रे निरूपयिष्यते। सम्प्रति प्रथमं व्युत्पाद्यन्ते= प्रकृतिप्रत्ययविभागकल्पनया प्रदर्श्यन्ते शब्दा येनेति व्युत्पत्तिगम्यं स्वरूपं निरूप्यते।

व्याकरणत्वं च 'अर्थविशिष्टशब्दनिष्ठपुण्यजनकतावच्छेदकसाधुत्व-जातिविशेषव्यञ्जकत्वम्'। अर्थविशिष्टेत्यनेन यस्य यदर्थबोधकत्वं तदर्थ-विशिष्टस्यैव तस्य साधुत्वं सूचितम्। अर्थविशेषनियन्त्रितसाधुत्वस्य स्वीकारेण दन्त्यसकारघटितस्य 'अस्व'शब्दस्य तुरङ्गमार्थेऽसाधुत्वेऽपि निर्धनेऽर्थे साधुत्व-मव्याहतमेव। समवायेन पुण्यविशेषं प्रति स्वाभिव्यञ्जककण्ठाद्यभिघातादि-जनककृतिमत्त्वेन साधुशब्दः कारणम्। तथा च समवायसम्बन्धावच्छिन्नपुण्य-विशेषत्वावच्छिन्नकार्यतानिरूपितस्वाभिव्यञ्जककण्ठाद्यभिघातजनककृतिमत्त्व-संबंधावच्छिन्नव्याकरणबोधितशिष्टप्रयुक्तशब्दनिष्ठकारणतावच्छेदकत्वेन साधु-त्वजातिः सिद्धयति। अत्र शिष्टप्रयुक्तत्वं च साक्षात् परम्परया वा। एवञ्च शिष्टैः साक्षादुच्चारितानां व्याकरणव्युत्पाद्यानामनुकरणानां बाहुलकादिना बोधितानां च संग्रहः। शब्दनिष्ठः पुण्यजनकतावच्छेदको धर्मो जातिविशेषः साधुत्वम्, अपभ्रंशनिष्ठः पापजनकतावच्छेदको धर्मविशेषोऽसाधुत्वम्। कत्वा-दिना साङ्कर्यं तु साधुत्वजातेर्बाधकं न भवति, ययोर्धर्मयोर्लोके वैयधिकरण्यं प्रसिद्धम्, तयोरेव साङ्कर्यस्य जातिबाधकत्वम्, साधुत्वकत्वादिधर्मयोस्तु करोत्यादिशब्दघटकः ककारः साधुः' इति व्यवहारस्यापिदर्शनेन सामानाधि-करण्यस्य सर्वसम्मतत्वात्।

अयं भावः—इतिहासपर्यालोचननेदं पर्याप्तमवगन्तुं शक्यते यज्जनैः कामं प्रयुज्यमाना पुनः पुनर्व्यवह्रियमाणा काचन वाग् यदा जनभाषात्वमाप्नोति, विस्तरञ्चैति, भाषान्तरसम्पर्कात् साङ्कर्यदोषमादधाति, तदा तस्याः स्वरूप-निर्धारणाय सीमानियमनाय च प्रयतमाना विद्वांसः कांश्चन नियमान् निबध्नन्ति। त एव नियमा व्याकरणपदेन व्यपदिश्यन्ते। दृश्यते केदानीं परिपाटीयं भोजपुरीहिन्दीगुजरातीप्रभृतीनां देशीभाषाणाम्। तात्पर्यमिदमस्ति यत् शब्दानां सिद्धानामेव लघुनोपायेन ज्ञानं साध्यते व्याकरणेन, न तु नवीनाः शब्दा निष्पाद्यन्ते।

संस्कृतभाषाया व्याकरणस्याप्ययमेव धर्मः। व्याकरणाध्ययनमन्तरैव जना भाषामवगच्छन्ति, प्रयुञ्जन्ति चेत्यस्य निदर्शनं स्वमातृभाषाप्रयोग एव। व्याकरणशास्त्रस्येतिहासविदो विदन्त्येव यद् यदा व्याकरणशास्त्रं नात्मलाभं लभमानमासीत्, नापि तस्याध्ययनपरिपाटी प्रसृताऽऽसीत्, तदानीमपि जनाः, येषां संस्कृतभाषा व्यवहारभाषाऽऽसीत्, विनापि व्याकरणनियमावगमम्, विनापि भूधातोस्तिप्रत्यये गुणेऽवादेशे च भवतीत्यस्य निष्पत्तिर्भवतीति बोधम् 'भवति' इति प्रयुञ्जाना आसन्। एवं व्याकरणाभावयुगेऽपि 'गच्छति'-'शक्नोति'

इत्यादयः प्रयोगाः प्रयुज्यमाना आसन्, वेदाश्चाधीयमाना आसन्, यदा प्रकृति-प्रत्ययविचार एव न प्रादुर्भूत आसीत्, न च गणभेदेनैकस्य धातो रूपभेदो भवतीति समीक्षैव समुदिताऽऽसीत्।

भाषाज्ञानार्थं व्याकरणमावश्यकं नास्तीति व्याकरणप्रयोजननिरूपणा-वसरे 'वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः। अनर्थकमिदं व्याकरणम्' (महाभा० १।१।१, पृ० ३१) इति भाष्योद्धृतवचनेन स्पष्टं भवति। व्यवहारे लोकाः प्रतिपदं शब्दानुशासनस्य निखिलान् नियमानविकलं नानुसरन्ति, प्रत्युत वैपरीत्यमाचरन्ति। अस्य साक्ष्यं भाष्यं स्वयमेव समुपस्था-पयति—"अजेर्व्यघञपोः" (२, ४, ५६) इति सूत्रे वैयाकरणरथकारसंवाद-प्रसङ्गेन। तथा हि—एवं हि कश्चिद् वैयाकरण आह—'कोऽस्य रथस्य प्रवेता' इति। सूत आह—'अहमायुष्मन्! अस्य रथस्य प्राजिता' इति। वैयाकरण आह—'अपशब्दः' इति! सूत आह—'प्राप्तिज्ञो देवानांप्रियः, न तु इष्टिज्ञः [प्रयोगज्ञाता] इष्यत एतद् रूपम्' इति। वैयाकरण आह—'अहो खल्वेतेन दुरुतेन बाध्यामहे' इति। सूत आह—'न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्'। नियमनिगडितान् शब्दान् कदाचिद् न प्रयुञ्जन्तीत्यस्यापि निदर्शनम्, 'नहि वचिरन्तिपरः प्रयुज्यते, बहुवचनपर इत्यन्ये, झिपर इत्यपरे' इत्यादीनि प्रचुराणि वचनानि तत्र तत्र भाष्ये समुपलभ्यन्ते। लोकानां व्याकरणस्य नियमानामुपेक्षणम्, विपर्यासः, न्यूनता च 'बाहुलकात्, निपातनात्, आकृतिगणत्वात्, आप्तवचनात् सिद्ध्यति' इत्यादिशब्दैः शास्त्रकारैस्तत्र तत्र प्रदर्श्यते।

अत्रेदं तत्त्वम्—भाषासरितायाः प्रवाहः शनैः शनैः पुरो धावति, ते ते नवा नवाः शब्दाः प्रवाहे पतन्ति, येषां सिद्धिप्रकारः शास्त्रकृद्भिर्न प्रदर्शितोऽस्ति, तदर्थं निपातनाद्युपायाः प्रदर्श्यन्ते। त एवोपायाः सूचयन्ति यद् भाषा सर्वथा व्याकरणं नानुसरति, अपि तु व्याकरणमेव भाषामनुसरति। अत एव पाणिनि-सूत्रैः सर्वतोभावेन सर्वेषां संस्कृतशब्दानां सिद्धावसम्पन्नायां कात्यायनवार्त्ति-कानि भाष्येष्टयश्च प्रायः क्रमेण वर्षशतकद्वयमतीत्यात्मलाभमलभन्त। एवं गच्छता कालेन भाषान्तरसम्पर्काद् देशान्तरसम्पर्कात् प्रवाहे प्रपततां 'कालीन-पुङ्क्षु-अक्रामिप्रभृतीनां पदानां सिषाधयिषा 'मुग्धबोध-सारस्वत-हेमशब्दानु-शासनप्रभृतीनां शब्दशास्त्राणामाविर्भावनया देशममुं स्पृहणीयगुरुतायाः परां काष्ठां प्रापितवती।

कवयस्तु—"छन्दसि लिट्" (१, २, १०५), "लिटः कानज्वा" (३, २, १०६), "क्वसुश्च" (३, २, १०७) इति भूतसामान्ये छन्दसि लिट्, तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतमुपेक्ष्य 'तं तस्थिवांसं नगरोपकण्ठे' इति प्रयुञ्जाना आत्मनो निरङ्कुशत्वासह्यकलङ्कपङ्कं क्षालयितु नापारयन्। 'कित्करणसामर्थ्याद् भाषायामपि क्वसुकानचौ भवतः' इति

समादधानाः केचन वैयाकरणाभासाः सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च भाष्यवार्त्तिकयोरपि क्वसुकानचोः 'छन्दस्युभयथा' इति वचनात् सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्त्वादेव 'आजिवान्' इत्यादौ कित्कार्याणां नलोपादीनामन्यथासिद्धिमाशङ्क्य 'तितीर्वान्, तिस्तिराणः' इत्यादौ "ॠच्छत्यॄताम्" (७, ४, ११) इति प्राप्तस्य गुणस्य बाधनार्थं कित्करणमिति सिद्धान्तं प्रदर्शयद्भ्यां हरदत्तमिश्रमाधवाभ्यां भर्त्सिताः।

"जनिकर्तुः प्रकृतिः" (१, ४, १०), "तत्प्रयोजको हेतुश्च" (२, २, ५५) इत्यत्र षष्ठीसमासनिषेधकम् "तृजकाभ्यां कर्तरि" (१, १. १५) इति स्वकृतमपि नियममनिर्वाहयन् भगवान् पाणिनिः, पाणिनीयव्याकरणेऽगाधां श्रद्धामादधत् 'उपलब्धौ यत्नः क्रियताम्' इत्यत्र 'उपलभा' इत्यस्य स्थाने 'उपलब्धि' पदं प्रयुञ्जानः पतञ्जलिरपि स्पष्टीकरोति यल्लोको व्यवहारे व्याकरणस्य दासत्वं नाङ्गीकरोति। किं बहुना, लिङ्गानुशासनस्य प्रत्याख्याने "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति व्याहरता भगवता व्याकरणापेक्षयापि लोकानामधिकं प्रामाण्यं लिङ्गविषयेऽभ्युपगतम्। अन्यत्राप्यनेकत्र शब्दानुशासनसिद्धान्तैरनिष्पत्तिदशायाम्—'सिद्धमेतत्, कथम्? लोकात्' इति लोकानां साक्ष्यमभ्युद्धृतम्।

अत एव शब्दानुशासस्वरूपप्ररूपणप्रस्तावे भाष्ये आशङ्कितम्—शब्दानां तदर्थानां तेषां सम्बन्धानां च सिद्धत्वात् तद्व्युत्पादनपरं व्याकरणमिदं निष्प्रयोजनम् 'सिद्धे शब्दार्थसम्बन्धे' इत्यनेन। अत्र सिद्धशब्दो नित्यपर्याय इत्यपि महताडम्बरेण तत्रैव भाष्ये समर्थितम्।

इदमत्राकूतम्—जातिस्फोटलक्षणस्य व्यक्तिस्फोटलक्षणस्य वा शब्दस्य नित्यत्वेन, कार्यशाब्दिकानां मतेऽपि प्रवाहनित्यत्वेन, जातिलक्षणस्यार्थस्यापि नित्यत्वेन, द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यत्वेन प्रवाहनित्यत्वेन वा [अत्रासत्योपाधिः=जातिरूपः। जातिर्ह्यद्वैतिनां मते आविद्यको धर्मविशेषः। अथवा सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत् सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यम्, विशेष्यमेव च द्रव्यम्]; शब्दार्थयोरनित्यत्वपक्षे च तयोरिव सम्बन्धस्यापि शक्तिरूपस्य तादात्म्यस्य व्यवहारपरम्परयाऽनादित्वान्नित्यत्वेनापूर्वशब्दनिष्पादनद्वाराऽर्थविशेषसम्बन्धनिष्पादकत्वं सिद्धशब्दार्थसम्बन्धबोधकत्वं वा व्याकरणशास्त्रस्य स्वरूपं सम्भवितुं नार्हति।

अग्रे च लोकव्यवहारोपष्टम्भेन शब्दार्थसम्बन्धानां नित्यत्वं साधितं भगवता। अनित्येषु वस्तुषु लोकैरन्यथा व्यवह्रियते, नित्येषु चान्यथा। शब्दश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्पराव्युत्पत्तिपूर्वकः। अतः शब्दादीनां व्याकरणेन निष्पाद्यत्वं न सम्भवति। घटादयश्च जलाहरणादिकार्यार्थिभिः कुलालकुलात् समानीयन्ते, उत्पादविनाशयुक्ताश्चोपलभ्यन्ते। शब्दाश्च घटादय इव नैव

शाब्दिककुलादानीयन्ते, न चोत्पादविनाशयुक्ता वोपलभ्यन्ते। एवञ्च व्याकरणानिष्पाद्यस्वरूपं जन्यभावव्यवहारविजातीयव्यवहारविषयत्वेन जन्य-भाववैजात्यरूपं वा नित्यत्वमनुमीयते शब्दानाम्।

तथा च भाष्यम्—"कथं पुनर्ज्ञायते—सिद्धः शब्दोऽर्थः सम्बन्धश्चेति? 'लोकतः' [ वा० ] यल्लोकेऽर्थमर्थमुपादाय शब्दान् प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावाः, निर्वृत्तौ तावत्तेषाम् यत्नः क्रियते। तद्यथा—घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामिति। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह—कुरु शब्दान् प्रोक्ष्य इति। तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते" ( १, १, १ आ० पृ० ४५ )। 'तावत्येवार्थमित्यस्य बुद्धया वस्तु निरूप्येत्यर्थः' इति कैयटः, 'वैयाकरणकुलमगत्वेत्यर्थः' इति नागेशः।

अन्यत्राप्यन्योन्याश्रयदोषं परिहरता—'परिहृतमेतत्, कथम्? शब्दानां नित्यत्वात्। एतेन सर्वेऽप्यन्योन्याश्रयदोषाः परिहृताः' इति भगवतोक्तम्। 'एतेनेत्यस्य शब्दानां नित्यत्वेनेत्यर्थः' इति कैयटः। अतोऽपि व्याकरणस्य नूतनशब्दानिष्पादकत्वं सुतराम् सिद्धयति।

एवं शब्दानुशासनशास्त्रनिर्माणरीतिनिरूपणाधिकरणे शब्दानुशासन-मिदानीं कर्तव्यम्, तत्कथं कर्तव्यम्, किं शब्दोपदेशः कर्तव्यः, अहोस्विद् अपशब्दोपदेशः, अहोस्विद् उभयोपदेश इति' इत्यत्र शब्दोपदेशशब्देन मन्त्रवत् सिद्धानां शब्दानामुपदेशः सूचितः, न तु निष्पाद्यानामिति। किं बहुना, अप-शब्दोपदेशेन सिद्धानामेवापशब्दानामप्युपदेशः, न त्वसिद्धानाम्; तथा सत्युप-देशपदस्वारस्यभङ्गः स्यात्।

व्याकरणेन शब्दानामन्वाख्यानं क्रियते। अन्वाख्यानं नाम शब्द-संस्कारः। तच्चान्वाख्यानं त्रिविधम्—क्रमिकम्, पदावधिकम्, वाक्यावधि-कञ्चेति। तत्र प्रयोगीयवर्णोच्चारणक्रमानुरोधेन संस्काररूपमाद्यम्। तस्य च स्वाभाविकत्वान्न तत्र किमपि प्रमाणान्तरमपेक्ष्यते। यत्र च पदं वाक्यं वोच्चार्यैककालावच्छेदेन घटकानां वर्णानाम् संस्कारः सम्पाद्यते, तत्र पदा-वधिकं वाक्यावधिकञ्चान्वाख्यानमाख्यायते। अयञ्च द्वितीयः पक्षो विप्रति-षेधसूत्रेऽन्तरङ्गपरिभाषोदाहरणप्रदर्शनप्रसङ्गे 'वैक्ष्यमाणिः, सौत्थितिः, वृद्धिश्च प्राप्नोत्येकादेशश्च, परत्वाद् वृद्धिः स्यात्, एकादेशो भवत्यन्तरङ्गतः' इति भाष्योक्तिपर्यालोचनेन पदावधिकान्वाख्यानं विना वृद्धयेकादेशयोर्युगपत्प्राप्तेर्व-क्तुमशक्यत्वेन ध्वन्यते। वाक्यावधिकेऽन्वाख्याने 'अस्ति पुनः किञ्चिद् भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम् अहोस्विद् दोषान्तर-मेवेति। अस्तीत्याह—इह 'कानि सन्ति', 'यानि सन्ति,' 'कौ स्तः, योऽसौ पदान्तो यकारो वकारो वा श्रूयते' इति "न पदान्त०" ( १, १, ५८ ) सूत्रस्थं

भाष्यमेव प्रमाणम् । अन्यथा वाक्यान्वाख्यानाभावे पूर्वत्वेन दृष्टस्य कार्याभावात् स्थामिवत्त्याप्राप्त्या तदसङ्गतमेव स्यात् ।

अत्र पदं वाक्यं वोच्चार्य व्याकरणेनान्वाख्यानं भवतीत्यत्र भाष्यप्रामाण्यप्रदर्शनेन पदानि वाक्यानि च सर्वाणि सिद्धान्येवेति न किञ्चिद् व्याकरणस्येतिकर्तव्यतां पश्यामः ।

अर्थबोधजनकशक्तिः साधुष्वेव, नासाधुष्ववित्यपि व्याकरणस्य प्रतिपाद्यं नास्ति । यतो हि शक्तिग्राहकेषु व्याकरणादिषु श्रेष्ठस्य व्यवहारस्योभयत्रापि समानत्वम स्त, अर्थबुबोधयिषया शब्दानाम् प्रयोगात्, अर्थश्चोभयतः समानभावेन बुद्धयते । यद्यपि व्यवहारदर्शनस्य शक्तिग्राहकत्वं न सम्भवति, जन्मकाले तद्बोधकशब्दाभावात्, शक्तिग्रहाभावे इष्टजनत्वाभावेन बालानां पयःपाने प्रवृत्तिर्न स्यादिति वक्तु शक्यते; तथापि जन्मान्तरीयव्यवहारदर्शनं स्वसंस्कारद्वारा शक्तिस्मारकं भवति । संस्कारोद्बोधकञ्च जीवनादृष्टमेवेति कल्प्यते । पूर्वजन्मानुभूतशक्तिस्मरणादेव बलानां तिरश्चाम् च बोधो भवति । पश्वादीनामपि स्वजात्यनुसारेणैव प्रतिनियता काचित् प्रतिभा दृश्यते अतस्तेषामप्यनादिवासनयैव तद्ग्रहो लक्ष्यते ।

अत्र व्युत्पन्नानामपभ्रंशेन साधुशब्दस्मरणात्, अव्युत्पन्नानाञ्चापभ्रंशेन शक्तिभ्रमाद् बोधसिद्धेर्नापभ्रंशेषु शक्तिः स्वीकर्तव्येति तार्किकतर्कः समुज्जृम्भते ।

अत्रेदं प्रतिविधानम्—अपभ्रंशशब्दसमकालमेव झटित्यर्थबोधो भवति, नहि तेन साधुशब्दस्मरणमनुभूयत इत्यनुभवप्रामाण्यादपभ्रंशेषु शक्तिरवश्यं स्वीकर्तव्या । अन्या तद्वाचकसाधुशब्दाज्ञानवताम् बोधो नोदयमासादयेत् । 'उच्चार्यमाणः शब्द सम्प्रत्यायको भवति, न सम्प्रतीयमानः' ( म० भा० १।१।६८ ) इति भाष्यादपभ्रंशेन स्मृतात् साधुशब्दाच्च बोधो न स्यात् ।

अव्युत्पन्नानाम् 'असाधुशब्दे शक्तिरस्ति' इति शक्तिभ्रमाद् बोधो भवति । अन्यप्रकारकत्वेन ज्ञातस्यैव तदभाववत्तत्प्रकारकज्ञानरूपभ्रमसम्भवेन पामराणां शक्तिप्रकारकघटादिसाधुपदविशेष्यकज्ञानाभावेन 'घड़ा'इत्याद्यपभ्रंशशब्दे तद्भ्रमो नोपपद्यत इति शङ्का तु यस्य 'घटपदं घटत्वावच्छिन्ननिरूपितशक्तिमत्' इत्याकारको बोधो विद्यते, तस्य यथाकथञ्चित् 'घड़ा' पदम् 'घटत्वावच्छिन्ननिरूपितशक्तिमत्' इति भ्रमो जातः, पश्चाच्च 'घड़ा' पदं घटत्वावच्छिन्ने शक्तमिति पामराणाम् ज्ञानपरम्परा जातेति प्राथमिकज्ञानगतभ्रमत्वमादायैव साजात्यादुत्तरोत्तरस्मिन् भ्रमत्वव्यवहारेणोपासनीया इत्यापातरमणीयमेव प्रतिभाति; यतो हि तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन 'घड़ा' इत्यादिपदे घटत्वरूपानुपूर्व्यभाववत्तानिश्चयस्य सत्त्वेन शक्ततावच्छेदकानुपूर्वीमत्त्वज्ञानस्यैव शक्तिभ्रमत्वनिश्चायकत्वाद् घड़ादिपदे

शक्तिभ्रमस्यानुपपत्तिस्तदवस्थैव स्यात्। शकलदेशशिष्टैः सर्वेऽपभ्रंशा न परिगृह्यन्ते, संस्कृतशब्दास्तु परिगृह्यन्त इति लाघवात् संस्कृतशब्देष्वेव शक्तिरस्ति, अपभ्रंशानां तु शक्तिभ्रमाद् बोध इत्यपि न प्रमाणकोटिमाटीकते, कम्बोजदेशे शवधातुर्गत्यर्थे, विकारे ( मृतके ) अर्थे त्वार्यदेशे प्रयुज्यते। एवमेव 'हम्म' 'रंह' इत्यादिधातवोऽपि सुराष्ट्रादिदेशनियता एवेति सकलदेशशिष्टपरिगृहीतत्वस्य संस्कृतेऽप्यभावात्। तथा च भाष्यम्—"एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते। तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते 'शव' इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते, दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु" ( म० भा० प० आ० )। वाचकस्य व्यञ्जकत्वे आलङ्कारिकाणाम् प्राकृतभाषोदाहरणस्यागत्याप्यपभ्रंशे शक्तिः सिद्ध्यति। अपभ्रंशानां शक्तत्वादेव केनचित् साधुशब्दे समुच्चारिते स्त्रीशूद्रबालानामर्थसंशये शक्तत्वेनोक्तसंस्कृतशब्दाज्ञानात् तदपभ्रंशेन निर्णयो भवति।

आर्यम्लेच्छाधिकरणेनापशब्दानामशक्तत्वं न प्रतिपाद्यते, किन्तु वेदार्थनिर्णये तेषामेव तदधिकारित्वाद् वैदिकशब्दार्थसन्देहे यं शब्दं यत्रार्थे आर्याः प्रयुञ्जते तेन शब्देन तदर्थ एव ग्राह्य इति निर्णीयते। 'तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, तमेव च बुध्यन्ते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, तमेव च बुध्यन्ते; तथाप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपरतैवेति सिद्धान्तितम्। तत्र हि 'शवतिर्गतिकर्मा' इत्याद्युक्तभाष्याद् द्वयोरपि शक्तिग्रहाद् बोधेनोभयत्रापि साधुत्वेन शक्तत्वेन च तृतीयस्य सन्देहे विकल्पबोधे वा आर्यप्रसिद्धेर्बलवत्त्वाद् वेदे तद्बोध एवोचित इति। एवञ्चानार्यैरपि यज्ञे दीर्घशूका एवोपादेयाः, अयज्ञे त्वनार्यैः प्रियङ्गव एवोपादेया इति विशेषः' इति नागेशः ( वै० सि० ल० म०, श० नि० पृ० ६० )।

न्यायभाष्यकारोऽपि "आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा, साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तत इत्याप्त ऋष्यार्यम्लेच्छानां समानलक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते, नातोऽन्यथेति" ( न्या० सू० १,१,७ ) इति प्रतिपादयन्नपभ्रंशे शक्तिं स्वीकृतवान्।

सूत्रकृतापि 'सामयिकः शब्दादर्थप्रत्ययः" ( वै० सू० ७, २, २० ) इति सूत्रेण 'शब्दजन्योऽर्थविषयको बोधः सामयिकः=सङ्केतकृतः' इत्यर्थकेन शब्दशब्देन शब्दापशब्दयोरुभयोरपि ग्रहणादुभयोरपि शक्तत्वं सूचितम्।

यदि वेदार्थस्य सामयिकत्वं न सम्भवति, वेदवाक्यस्य व्यावहारिकवाक्यभिन्नत्वेनार्थेनाज्ञातसम्बन्धत्वात् तत्कल्पने सङ्केतापातात् सापेक्षप्रामाण्यापत्तिरापतेदिति विभाव्यते; तदपि न, लोकवेदयोरर्थभेदाभावाद्

वेदवाक्यस्यापि लौकिकव्युत्पत्तिमूलकतया सङ्केतानन्यानपेक्षतयाऽनपेक्षमेव प्रामाण्यमित्यस्य वक्तव्यत्वात् ।

अथापभ्रंशे शक्तिः स्वीक्रियते, तर्हि च्युतसंस्कृतेर्दोषत्वबीजस्य शाब्द-बोधाजनकत्वरूपस्याभावात् काव्ये च्युतसंस्कृतेर्दोषत्वं न स्यात् । तल्लक्षणं तु काव्यप्रदीपकृता—"यद्भाषासंस्कारकव्याकरणलक्षणाविरुद्धं यत्, तत्तद्भाषायां च्युतसंस्कृतीत्यर्थः" इत्युक्तम् । उदाहरणं तु—"गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ( कि० १७/६३ ) । अत्र 'आङो यमहनः' ( पा० सू० १, ३, २८ ) 'स्वाङ्गकर्मकाच्च०' ( वा० ६२५ ) । इत्यनुशासनवलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्, तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वता च्युतसंस्कारत्वम्" ( सा० द० ७,४ ) इति, तदपि न, काव्ये च्युतसंस्कृतिदोषस्य दूषकताबीजं शाब्दबोधा-जनकत्वं नास्ति, किन्तु साधुपदसमुदायमध्येऽसाधुपद दर्शनेन विप्रसभायां चान्डालदर्शनेनेव सहृदयोद्वेग एवेति ।

अपभ्रंशस्य शक्तत्वादेव "एवमिहापि समानायामर्थावगतौ शब्देन चाप-शब्देन च, तत्र धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति । एवं क्रियमाणमभ्युदयकारि भवतीति' इति भाष्यं सङ्गच्छते ।

एतेन "अर्थाय ह्येते उच्यन्ते शब्दाः, न धर्माय" इति शबरस्वामिनोक्तं पराहतम् । "तदशक्तिश्चानुरूपत्वात्' ( मी० द० १, ३, २८ ) इत्यस्य जैमिनिसूत्रस्याप्ययमर्थो यत्—अपभ्रंशा अपि साधवः, तेऽपि साधयन्त्यर्थमिति पूर्वपक्षे; "अन्यायश्चानेकशब्दत्वम्" ( मी० द० १, ३, २६ ) इति केचिदेव साधवः, न सर्व इति मनसि निधाय, तर्हि साधौ प्रयोक्तव्येऽसाधूच्चारणं कथम् ? इत्याशङ्क्य "शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" (मी० द० १, ३, २५) इति सूत्रेण प्रयत्नसाध्ये कार्ये प्रमादस्य दर्शनात्, "यथा शुष्के पतिष्यामिति कर्दमे पतति, तथा साधौ प्रयोक्तव्येऽसाधोः प्रयोगः" ।

एवञ्चैतावता प्रबन्धेनेदं प्रतिपादितं भवति यत् संस्कृतशब्दा अपि सिद्धाः; तेषामर्थाः, शक्तिः, लिङ्गानि च सिद्धानि सन्ति, लोकतश्च ज्ञातानि भवन्ति । एवमपभ्रंशनामपि विषये बोद्धव्यम् । एवं सिद्धे सति शब्दानुशासनस्य साध्वसाधुशब्दविवेकज्ञानपूर्वकं साधुशब्दप्रयोगे धर्मः, व्याकरणव्युत्पादिताश्च शब्दाः साधवः, अन्येऽशाधव इत्यत्र तात्पर्यमध्यवस्यति ।

अत एव व्याकरणस्य साक्षात् परम्परया च प्रयोजनप्रतिपादनप्रसङ्गे रक्षोहागमलध्वसन्देहानां साक्षात् प्रयोजनत्वं भाष्ये प्रतिपादितम् । लोके 'अदुहत', 'जहार' इत्यादावदृष्टान् लोपागमवर्णविकारान् 'अदुह्र', 'जभार' इत्यादौ वेदे दृष्ट्वाऽशाब्दिको भ्रमेण पाठान्तरं कल्पयेत् । दृढतरभ्रंशशङ्कया-ऽऽचार्येष्वविश्वासात् तेषां वचनाद् भ्रमनिवृत्तिस्तु दुर्लभैव । शाब्दिकस्तु न व्यामुह्येत्, वेदार्थञ्चाध्यवस्येत् । एवञ्च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्त-

द्विहितकर्मानुष्ठानेन स्वर्गसुखम्, उपनिषदर्थज्ञानेन वा मोक्षश्च पुरुषार्थौ व्याकरणाध्ययनस्य फलमिति वेदरक्षक व्याकरणमिति सिद्धयति ।

यस्मिन् यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणौपजीव्यते सा प्रकृतिः, येनोपजीव्यते सा विकृतिः । प्रकृतिवद्विकृतिः कर्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग् विजानाति । तत्राग्नेर्मन्त्रोऽस्ति 'अग्नये त्वा जुष्टं निर्वपामि' इति । तत्र "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति सौर्ये चरौ मन्त्र ऊह्यते—"सूर्याय त्वा जुष्टं निर्वपामि" इति । यद्यप्यूहे न मन्त्रत्वम्, तथाप्येकदेशस्योहेऽनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात् तद्घटिते समुदाये मन्त्रत्वव्यवहारः कर्मणः साङ्गत्वञ्चेति बोध्यम् । ऊहज्ञस्य ह्यार्त्विज्य-लाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमित्यैहिकसुखप्राप्तिकर्तृत्वमपि व्याकरणस्य सिद्धयति ।

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुत्या व्याकरणाध्ययनस्य नित्यकर्मत्वं प्रतिपाद्यते । "प्रधानं च षट्सु अङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति ।" [व्याकरणाध्ययनस्यागमः खल्वपि प्रयोजनः=प्रवर्तकः । अत्र करणसाधनेन प्रयोजनशब्देनागमस्य सामानाधिकरण्यम् । भाष्यस्थप्रयोजनपदेन फलं प्रयोजकश्चोच्यते] । अत्र फलपदेन वाक्यार्थावगमो विवक्षितः, व्याकरणशास्त्रं च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगि । एवं च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकतयास्य नित्यकर्मत्वमित्यर्थः ।

यैः किल वेदे आस्था नाधीयते, तेषामपि लघुनोपायेन शब्दज्ञानार्थं व्याकरणमावश्यकम् शब्दानां प्रतिपदपाठः शब्दज्ञानेऽनभ्युपाय एव । तथा हि भाष्यम्—"एवं हि श्रूयते—'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम' । बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यवर्षसहस्रमध्ययनकालः, न चान्तं जगाम" इत्यादि । एवं चाल्पायासेन शब्दौघज्ञानजनकत्वं व्याकरणत्वं सिद्धम् ।

असन्देहपरिपालकत्वमपि व्याकरणस्य स्वरूपं भाष्यादवगम्यते । तथा हि—"याज्ञिकाः पठन्ति-'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति । तस्यां सन्देहः—स्थूला चासौ पृषती च, स्थूलानि वा पृषन्ति यस्याः सा स्थूल-पृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति, यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथान्तोदात्तत्वं ततस्तत्पुरुष इति ।" अत्रासन्देहः=सन्देहाभावः, स च नात्यन्ताभावः, तस्य नित्यत्वात्, न चापि ध्वंसः, तत्तद्विषयकव्याकरण-ज्ञानवतः सन्देहस्यैवाभावेन तदसम्भवात्, नहि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात् । यस्य त्वधीतव्याकरणस्यापि क्वचित् सन्देहः, स तद्विषयकवैयाकरणत्वाभाववानेव, वेदनार्थे हि तत्र प्रत्ययविधानात् । अतोऽत्रासन्देहपदेन सन्देहप्रागभावो विवक्षितः ।

एतत्सर्वं व्याकरणस्य तटस्थलक्षणं प्रतिपाद्य 'सूत्रं व्याकरणम्' इति तस्य स्वरूपलक्षणेऽनेका अनुपपत्तीः प्रदर्श्य 'लक्ष्यलक्षणे व्याकरणम्' इति वार्त्तिक-व्याख्यानावसरे "लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति। शब्दो लक्ष्यः, सूत्रं लक्षणम्" इति भगवता भाष्यकारेण सिद्धान्तितम्।

अत्र व्याकरणशब्दो योगरूढ्या लक्ष्यलक्षणसमुदायपरः। अस्मिन् पक्षे करणत्वं समुदायस्यापि। अत एव शब्दानां प्रतिपत्तिर्भवति। समुदायावयवयो-र्वैयाकरणानां मते भेदेन व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थोपपत्तिर्वृक्षस्य शाखेतिवत्। भवे तद्धिते नास्ति सन्देहः। प्रोक्ततद्धितोऽपि समुदायस्यानन्य-त्वान्नेतुं शक्य इति नास्ति कश्चित् सन्देहः।

### ब्रह्मप्राप्तिसाधकत्वरूपदार्शनिकस्वरूपनिरूपणम्

एतावता प्रबन्धेन शब्दसाधुत्वलक्षणं शब्दशास्त्रस्य स्वरूपं निरूप्य सम्प्रति प्राक् संकेतितं दार्शनिकं स्वरूपं निरूपयितुमुपक्रम्यते—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० २, ४, ५), य आत्मा-ऽपहतपाप्मा, सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः"—(छा० ८, ७, १), "आत्मेत्येवोपासीत" (बृ० १, ४, ७), "आत्मानमेव लोकमुपासीत्" (बृ० १, ४, १५), "ब्रह्म वेद ब्रह्मैव भवति" (मु० ३, २, ९) इत्यादिश्रुतिभिः प्रत्यगात्मसाक्षात्कारस्यैव परमपुरुषार्थमोक्षसाधनत्वं समर्थितम्। तादृश-साक्षात्कारसाधकानि वेदान्तादीन्येव शास्त्राणि दर्शनशास्त्रपदव्यपदेश्यानि भवितुमर्हन्ति, न तु पदसाधुत्वासाधुत्वसाधनेन शब्दसाक्षात्कारसाधकं शब्द-शास्त्रं दर्शनशास्त्रपदव्यपदेश्यतामादधीत।

अत्रेदं तात्पर्यम्—यद्यप्याकरग्रन्थेषु दर्शनशब्दप्रवृत्तिनिमित्तमधिकृत्य शास्त्रीयपद्धत्या न क्वचनापि कश्चनापि विचारलेशो निभाल्यते; तथापि येषु शास्त्रपदवाक्येषु किं वस्तु, क आत्मा, किं तत्स्वरूपम्, कानि च तत्साधकानि प्रमाणानि, को मोक्षः? इत्यादयोऽध्यात्मविषयाः प्राधान्येन प्रतिपादिताः स्युः, प्रसङ्गोपात्तानां लौकिकानामपि विषयाणां विवेचने तात्पर्यं यदि तत्रैव पर्यवस्येत्, तान्येव दर्शनशास्त्रपदव्यपदेश्यतां समुपयान्तीति पण्डितमण्डलीषु प्रवहन्ती काचन परम्परा पर्यालोच्यते। नैवम्भूतं व्याकरणशास्त्रम्, केवलमत्र पदसाधुत्वासाधुत्वाख्यानमेव विजयतेतमामिति कथङ्कारमस्य दर्शनशात्रत्वमिति संशीतिः कदाचिद् विदुषामपि मनांसि समुद्वेजयेदित्यत्र व्याकरणाकरग्रन्थेषु निगूढानि प्रस्थानग्रन्थेषु प्रपञ्चितानि च दर्शनतत्त्वानि संक्षेपतः प्रदर्श्य दार्शनिकं व्याकरणस्वरूपं प्रदर्शयिष्यते।

तपः स्वाध्यायसततनिरतैर्विगतकल्मषैः समाधिसमाहितस्वान्तैऋषिभिः स्वेन स्वेनार्षेण चक्षुषा स्वे स्वे निर्विकल्पके समाधौ सम्प्रति समुपलभ्यमानानां चेतनाचेतनभेदेन द्वैविध्यमाप्तानां पदार्थानां ग्राह्यग्राहकसर्वाकाररहितम-

परिच्छिन्नं सर्वतः संहृतक्रमं यन्मूलतत्त्वं दृष्टमनुसंहितं च, यच्च तत्तन्मतानुयायिनां सर्वेषां प्राणिनां परमपुरुषार्थसाधनतयाऽभीप्सिततमम्, तदेव दर्शनम्। तत्प्रतिपादकानि शास्त्राण्यपि दर्शनाभिधानानि, 'शिष्यतेऽनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेन, दृश्यते बोध्यतेऽपूर्वोऽर्थोऽनेन' इति विग्रहाभ्यां दर्शनशास्त्रपदयोः पर्यायवाचकत्वात्। एवं च दार्शनिकान्तरैरिव शाब्दिकशार्दूलैरपि शब्दतत्त्वं मूलतत्त्वरूपेण समाधौ साक्षात्कृतम्, तस्यैव च प्रत्यगात्मस्वरूपत्वेन व्याकरणस्याप्यध्यात्मज्ञानोपायभूतत्वाद् दर्शनशास्त्रत्वे न विप्रतिपद्येरन् मात्सर्यविधुरा विद्वांसः।

अत्रेदमाकूतम्—"सदेव सोमेदमग्र आसीदेकमेवाद्वितीयम्, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्" इत्यादिभिः श्रुतिभिर्जगत्कारणस्य सत्यत्वमेकत्वं ब्रह्मत्वमात्मत्वं च यथा प्रतिपाद्यते, तथा "वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते ॥" "ओमित्येतदक्षरमिदं सर्वम्, ओमिति ब्रह्म" इत्यादिश्रुतिभिः शब्दरूपतापि प्रतिपाद्यत इति शब्दब्रह्मैव जगत्कारणम्। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्याऽस्य स्वप्रकाशकत्वमपि प्रतिपाद्यते। हेलाराजोऽपि "इह त्रीणि ज्योतींषि त्रयः प्रकाशाः स्वरूपपररूपयोरवद्योतकाः। तद्यथा—'योऽयं जातवेदाः, यश्च पुरुषेष्वान्तरः प्रकाशः, यश्च प्रकाशाप्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशस्तत्रैतत् सर्वमुपनिबद्धं यावत् स्थास्नु चरिष्णु च"। अभियुक्तोक्त्याऽनया शब्दतत्त्वस्य स्वप्रकाशकत्वं समर्थितवान्।

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगिव स्थिते ॥

( वा० १।५५ )

इति प्रतिपादयन् हरिरप्यत्र परमानुकूलतां भजते। यथा तेजसः=प्रदोपादेर्ग्राह्यत्वं ज्ञानविषयत्वम्, ग्राहकत्वं घटादिविषयकज्ञानजनकत्वं चेति द्वे ग्राह्यत्वग्राहकत्वरूपे शक्ती स्तः, तथैव सर्वशब्दानामेते ग्राह्यत्वग्राहकत्वशक्ती शक्तिशक्तिमतोरभेदाद् नित्यात्मभूते अपि भिन्ने इव स्थिते प्रतिभासमाने स्त इत्यर्थः। शब्दः स्वं प्रकाशयन्नेवार्थं प्रशकाशयतीति कारिकाया निर्गलितोऽर्थः।

एतदेव शब्दतत्त्वं केनोपनिषदा "अन्यदेव तद्विदितादथो अविदितादधि" ( केनो० १।३ ) इत्यनेनात्मनो ब्रह्मत्वे प्रतिपादिते कथं न्वात्मा ब्रह्म ? आत्मा नामाधिकृतः कर्मण्युपासने च। संसारी कर्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वाऽऽसादयितुमिच्छति। तस्मादन्य उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति, न त्वात्मा, लोकप्रत्ययविरोधात्। तार्किका अपि ईश्वरादन्यमात्मानमाचक्षते। मीमांसकाश्च 'अमुं यजामुं यज' इत्यन्या एव देवता उपासते। तस्माद्युक्तं यद्विदिततमुपास्यं तद् ब्रह्म भवेत्, ततोऽन्य उपासक-

इत्यस्या विप्रतिपत्तेर्विपातनाय सिद्धान्तितया यच्चैतन्यमात्रसत्ताकमक्रमं शब्दतत्त्वं वाचा सक्रमया वर्णपदवाक्यरूपया नाभ्युद्यते, येन चाक्रमेण शब्द-तत्त्वेन सक्रमा वागभ्युद्यते तद् ब्रह्म। इदं यदनात्मभूतमुपाधिभेदविशिष्ट-मीश्वराद्युपास्यते 'तत्र ब्रह्मेति विद्धि' इत्यर्थिकया "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥" (केनोपनिषद् १।४) अनया श्रुत्या ब्रह्मपदेन प्रतिपादितम्।

यः स्फोटम्=स्फोटाभिव्यञ्जकं ध्वनिं शृणोति, सुषुप्तौ इन्द्रियगणे विलीनेऽपि, शून्यम्=अज्ञानं पश्यतीति शून्यदृक्, सुप्तोत्थितस्य 'न किञ्चिद-वेदिषम्' इति स्मरणं तदानीमज्ञानानुभवं साधयति, येनाक्रमेण प्रणवेन वाग् व्यज्यते, 'यस्य चात्मनः शकाशाद् हृदयाकाशे प्रत्यक्षम्, स परामात्मा' इत्यर्थकेन—

**शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक्।**
**येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥**

अनेन भागवतेनापि परमात्मपदेन तदेव वस्तु समर्थितम्।

भगवती गीतापि-'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (१८।६१) इत्यनेन ईश्वरपदेन तदेव तत्त्वं प्रतिपादयति। तथा चोक्तं नागेशभट्टेन— "चतुर्विधा हि वागस्ति-परा, पश्यन्ती, मध्यमा, वैखरी च। तत्र मूलाधारस्थ-पवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा मनोगोचरीभूता पश्यन्ती वागुच्यते। एतद्द्वयं (परारूपं पश्यन्तीरूपञ्च) वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते" (पर-मल० म० स्फोटविचारः, पृ० ६८-६९) इति। एवं च व्यासनागेशयोरैक्यं स्पष्टमेव।

सर्वग्राह्यग्राहकाकारवर्जिता अपरिच्छिन्ना सर्वतः संहृतक्रमा ब्रह्मा-परपर्याया पश्यन्तीवाग् अविद्यालणया अन्तःपश्यदवस्थया भोक्तृतारूपया विशिष्टं ज्ञेयरूपशून्यं चैतन्यमात्रं जीव इत्यभिधीयते। अनुमोदितश्चायमर्थो भागवतेन--

**स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।**
**मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥**

(११।१२।१७)

स एषः=अपरोक्षः, जीवयतीति जीवः=परमेश्वरः, अपरोक्षत्वे हेतुः— विवरेषु=आधारादिचक्रेषु प्रसृतिरिव प्रसृतिरभिव्यक्तिर्यस्य सः, तामेवाभि-व्यक्तिमाह—घोषेणेति। घोषेण पराख्येन नादवता प्राणेन सह, गुहामाधारचक्रं प्रविष्टः सन्, मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरचक्रे

विशुद्धिचक्रे च उपेत्य=प्राप्य, वक्त्रे मात्रा=ह्रस्वादिः, स्वरः=उदात्तादिः, वर्णः=अकारादिः, इत्येवं वैखर्याख्यः स्थविष्ठ=अतिस्थूलो नानावेदशाखात्मको भवति। तथा च श्रुतिः—

**चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥**

निगमरूपोऽयं मन्त्रोऽनेकधा मुनिभिराचार्यैं व्याख्यायते। नामाख्यातोपसर्गनिपातेति भेदचतुष्टयमुपक्रम्य महाभाष्ये व्याख्यातः। पशुषु वाच एको भागः पक्षिष्वेकः, सरीसृपेष्वेकः, तुरीयस्तु मनुष्येषु इत्यपि क्वचिद् व्याख्यायते। परं परापश्यन्तीत्यादिभेदचतुष्टयानुवादेन तु समनुगतार्थमिदं सुस्पष्टतया भवति 'तुरीयं वाचो मनुष्या वदन्ति' इति। एवं च सम्मुग्धज्ञानरूपया पश्यन्त्या स्फुटज्ञानरूपया च मध्यमया वैखरीवागियमर्थावबोधक्षमा भवतीति न कोऽप्यत्र विवादावसरः।

शाम्बपञ्चाशिकायामुक्तम्—

**या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टि-**
**र्वर्णानन्तः प्रकटकरणैः प्राणसङ्गात् प्रसूते।**
**तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां**
**वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये॥ ५ ॥** इति।

पश्यन्त्येव च वक्त्रकुहरं प्राप्ता कण्ठादिस्थानभागेषु विभक्ताकारादिवर्णरूपा वैखरी वागुच्यते। ततः सैव बाह्यार्थवासनयाऽविद्यारूपया क्रमेण घटपटाद्याकारैर्विवृता चक्षुरादिना गृह्यते। 'तिस्र एव वाचः' इति मतेनेदम 'परा वाक् चतुर्थी' इति मते तु परैव वाग् ब्रह्मरूपेति विवेकः।

इदमत्र रहस्यम्—कार्येषु कारणधर्मसमन्वयदर्शनाद् वैशेषिकैर्घटादिकार्यस्य पृथिवीत्वेन तत्कारणस्य परमाणोः पृथिवीत्वम्, सांख्यैश्च विकारग्रामेषु सुखादिसमन्वयदर्शनात् तत्कारणस्य प्रधानस्य सुखादिरूपत्वं यथाऽऽस्थीयते, तथैव घटादिषु पदार्थेषु शब्दरूपानुगमात् तत्कारणस्यापि शब्दरूपत्वं शाब्दिकैः स्वीक्रियते। जात्यादीनां मिथो विशेष्यविशेषणभावानवगाहिजात्यादिस्वरूपावगाहि'घटघटत्वे' इत्येवंरूपं निर्विकल्पकम्; 'गौः, शुक्लः, चलः, डित्थः' इत्यादिविशेष्यविशेषणभावावगाहि सविकल्पकं वा शब्दानुविद्धमेवेति सर्वेऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयेनान्विता इति नास्ति सोऽर्थो यः कथञ्चित् कदाचित् क्वचिन्नामधेयेन वियुज्येतेति शब्दार्थयोस्तादात्म्यमभ्युपेयं। अत एवार्थाः प्रतीयमाना नामधेयैरुपेताः स्वसामानाधिकरण्येनावगम्यन्ते—गौरित्यर्थः, अश्व इत्यर्थ इति।

एवं च निर्विकल्पकं सविकल्पकं वा ज्ञानम् 'गौः शुक्लः, चलः, डित्थः' इति शब्दविशिष्टमेवार्थमवबोधयति। शब्दाख्यविशेषणानुरक्तस्य तस्य

विशेष्यस्य स्वरूपं पृथक्त्वं शब्देनैव दर्शयति, शब्दापरित्यागलब्धप्रकाशस्वरूपया वानुभूत्याऽनुभवसीति सोऽपि विशेष्यः शब्दरूप एवेति जानीहि। शब्द एवार्थोपारूढः प्रतिभातीति व्यवतिष्ठते अथ च यदुपारूढः शब्दः प्रकाशते, तस्य पृथक् प्रदर्शयितुमनुभवितुं चाशक्यत्वाच्छब्द एव तथा प्रतिभाति। यथा चेन्द्रियजज्ञानेषु प्रक्रमः, तथा शाब्देष्वपि प्रत्ययेषु शब्दविशिष्टो वार्थः शब्दारूढो वार्थः प्रतिभातीति शब्दविवर्त एवायमर्थः, नान्यः कश्चित्। अतश्च शब्दब्रह्मदेमेकमविद्योपाधिदर्शितविचित्रभेदमविद्योपरमे यथावस्थितरूपं प्रकाशत इति सिद्धम्। तदुक्तं हरिणा—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**

( वा० १।१ )

श्रुतिश्चाप्यमुमर्थमनुमोदते—

**वागेव विश्वाभुवनानि जज्ञे नामैवेदं रूपत्वेन ववृते।**

( वा० १२१ टीका )

**द्वे ब्राह्मणी वेदितव्ये शब्दब्रह्म परं च तत्।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥**

इति स्मृतिरप्यत्रानुकूला। शाब्दिकैस्तु परं ब्रह्मैव शब्दब्रह्मपदेनोच्यते। एतच्चौपनिषदममृतं शब्दब्रह्म शाब्दिकः समश्नुते। उक्तं च भगवता भाष्यकारेण—"एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति तथा हि—व्यवस्थितसाधुत्वेन रूपेण शब्दतत्त्वे संक्रियमाणेऽपभ्रंशरूपप्रतिबन्धकापगमे धर्मविशेष आविर्भवति। ततः शब्दब्रह्मतादात्म्योपगमरूपा ब्रह्मणः प्राप्तिर्भवति। तथा चोक्तं हरिणा—

**तस्माद्यः शब्दसंस्कारः सा सिद्धिः परात्मनः।**
**तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते॥**

"इह द्वौ शब्दात्मानौ—कार्यो नित्यश्च। तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहङ्कारग्रन्थीन् अत्यन्तं ससृज्यत इति तदर्थ इति तद्व्याख्यातारः" इति नागेशः।

एवं च शब्दशास्त्रस्य ब्रह्मप्राप्तिसाधकत्वरूपं दार्शनिकं स्वरूपं सिद्धम्।

**परिभाषापदार्थनिरूपणम्**

एतावता प्रबन्धेनेदं निष्कृष्टुं शक्यते यद् व्याकरणशास्त्रस्योपरि प्रतिपादितं धाराद्वयं निर्बाधगत्या प्रवहमाणं दृश्यते। धाराद्वयस्यापि निर्दुष्टं वैज्ञानिकम् पन्थानं परिष्कर्त्तुमनेकैश्शाब्दिकैस्तपःस्वाध्यायनिरतैस्ते ते ग्रन्था निर्मिताः, महता परिश्रमेण देशस्य कोणे कोणे प्रचारिताश्च। तत्र प्रथमायाः धारायाः पथिः परिष्काय काशिकाप्रक्रियाकौमुदीसिद्धान्तकौमुदीतट्टीकाप्रभृतयो

भूयांसो महीयांसो ग्रन्था ग्रन्थिताः। शब्दानुशासनस्य परमं प्रयोजनं शब्दानां व्युत्पादनम्, व्युत्पादिताञ्च साधुत्वसमर्थनम्। तत्र शब्दानां व्युत्पादनाय भगवता पाणिनिना केचन नियमा निर्मिताः। ते चाष्टस्वध्यायेषु विभक्ताः सूत्रपदव्यवहार्या भवन्ति। प्रयोगसिद्धौ स्वस्वविधेयमादाय परस्परं विरुद्धानां सूत्राणां विरोधप्रशमाय, इष्टप्रयोगसाधनायानिष्टप्रयोगव्यावर्त्तनाय च तेषां समुचितार्थपरिष्काराय च पाणिनिनापि कानिचित् परिभाषासूत्राणि प्रोक्तानि, किन्तु तावताप्यनेकेषु स्थलेष्विष्टप्रयोगसिद्धावनिष्टप्रयोगव्यावृत्तौ च सम्भावितसमस्यासमाधानायाक्षमा अन्तेवासिनो भवन्ति। यथा महांश्चासौ चन्द्रमा इत्यत्रात्त्वं सूत्रेण साक्षाद्विधीयते, महद्भूतश्चन्द्रमा इत्यत्रात्त्वाभावः कथम्? एवं गर्गशब्दाद् यञ्, परमगर्गशब्दात्तदभावः कथम्? तुल्यबलविरोधे यथा पूर्वापेक्षया परस्य बलवत्त्वव्यवस्थासूत्रे वर्तते तथा पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरबलीयस्त्वव्यवस्था कथन्न विलोक्यते? एवमादीनामनेकासां समस्यानां समाधानाय परवर्तिन आचार्याः काश्चन परिभाषाः सूत्रतो लोकतश्च गवेषयामासुः। ताभिश्चाप्रामाण्यज्ञानानास्कन्दितसूत्रार्थसम्पादनेनेष्टप्रयोगसिद्धावनिष्टप्रयोगव्यावृत्तौ च साहाय्यं सम्पाद्यते। तथा चोक्तम्—"संकेतग्राहकभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानाकन्दितबोधे सहकारित्वेन मुन्यभिप्रेतत्वे सति पाणिन्युच्चरितभिन्नत्वं परिभाषात्वेन मुन्यभिप्रेतत्वे सति पाणिन्युच्चरितभिन्नत्वं परिभाषात्वम्"।

नन्वेवमपि "अकः सवर्णे दीर्घः" [ ६।१।१०१ ] इत्यस्य "इको यणचि" [ ६।१।७७ ] इत्येतदपेक्षया व्याप्यत्वेन तस्य च व्यापकत्वात् तस्मिन् सवर्णाजतिरिक्तत्वेन संकोचात् तद्बोधोपयोगिबोधजनकत्वेन परिभाषत्वम् "अकः सवर्णे दीर्घः" [ ६।१।१०१ ] इत्यत्रातिव्याप्तमिति चेत्, न; लक्ष्यधर्मिकसाधुत्वप्रकारकबोधाजनकत्वस्यापि निवेशेनादोषात्। एवं निषेधशास्त्राणामपि परिभाषात्वं न भवति, पृथग्बोधजनकत्वाभावात्। "षष्ठीस्थाने योगा" [ १।१।४९ ] इत्यादीनां पाणिन्युच्चरितत्वेऽपि 'निर्दिश्यमानस्यादेशा भवन्ति' [ प० १२ पृ० ५१ ] इत्यानुपूर्वीमद्वाक्यस्य पाणिन्यनुच्चरितत्वान्न दोषः। स्वातन्त्र्येण व्यवस्थापिकानाम् 'असिद्धं बहिरङ्गम्' [ प० ५० पृ० ५४ ] इत्यादीनामनेवंविधत्वेऽपि पाणिनिप्रयत्नानुमितत्वसादृश्यादारोपितं परिभाषात्वमनुसन्धेयम्' ( परि० शे० टी० भूति० तत्त्वा० पृ० ४ )।

यद्यपि व्याकरणाकरग्रन्थेषु परिभाषाशब्दस्तु दृश्यते, किन्तु तस्य निर्दुष्टं लक्षणं क्वचनापि न लक्ष्यते। पाणिनिना तु तस्य नामापि नोच्चारितम्। एवञ्च परिभाषापदार्थनिरूपणे शाब्दिकैः किञ्चित् काठिन्यमनुभूयते। तथापि परवर्त्तिन आचार्याः परिभाषापदार्थनिरूपणे लेखनीं व्यापारयामासुः तथाहि पदमञ्जरीकारो हरदत्तमिश्रः—'परितः सर्वत्र पूर्वत्र परत्र व्यवहिते नान्तरे च भाष्यते कार्यमनया सा परिभाषा'। अन्येऽप्याचार्या परितो व्यापृतां भाषाम् परिभाषां प्रचक्षते,' 'भाष्यन्ते परितो यस्मात् परिभाषास्ततः स्मृताः'। परितो

भाष्यते या सा पभिाषा,' विधौ नियमकारिणी परिभाषा,' अनियमे नियम-कारिणीत्वं परिभाषात्वम्,' लिङ्गवत्त्वे सति फलवत्त्वं परिभाषत्वम्' इत्यादि। परन्त्वेतत् सर्वलक्षणापेक्षया परिभान्दुशेखरटीका 'भूति' कारस्य पूर्वोक्तं लक्षणमतीव स्पष्टं निर्दुष्टञ्च प्रतीयते। एवञ्च परिभाषापदस्य योगरूढत्वं प्रतिपादितं भवतीति विभावयन्तु विद्वांसः।

**परिभाषेन्दुशेखरस्योपजीव्यग्रन्थः**

पाणिनिकालतोऽद्यावधि समुपलब्धशब्दानुशासनसामग्रीसमीक्षणेन प्रतिपादयितुं शक्यते यद् व्याकरणपरिभाषा उपजीव्यत्रयः सम्प्रदाया व्याख्यातृत्वेन स्वप्रतिष्ठां प्राप्नुवन्ति। परिभाषाणां ये केचन पाणिनीया अपाणिनीयाश्च व्याख्यातारो दृष्टिपथमवतरन्ति ते सर्वेऽप्येषामेव सम्प्रदायानां कस्मिंश्चिद् दीक्षिता दृश्यन्ते यद्यपि तेषां समेषामाचार्याणां स्वरूपे वैरूप्यम्, संख्यायां न्यूनाधिक्यञ्चापि तत्र तत्राक्षिलक्ष्यीक्रियते, नैतावदेव, यत्र तत्र परिभाषासूत्रत्वेनापि पाठो दृश्यते, तथापि परिभाषात्वेन तद्गणनायां मनाङ्मनो न संकुचितं सुमनसाम्। परिभाषावृत्तिविधायकेषु सर्वेष्वपि परमप्राचीनः प्रौढश्च व्याख्यातो व्याडिर्विलोक्यते। तेन परिभाषासूचनापरपर्याया परिभाषावृत्तिर्विरचिता। अतस्तस्य प्रथमसम्प्रदायप्रवर्तकत्वं प्रतिपादयितुं शक्यते परिभाषाविवरणविषये। किन्तु मूलपरिभाषाकर्त्तारः के? मूलपरिभाषाः कियत्यश्च। प्रश्नोऽयमद्याप्यसमाहितोऽवशिष्यते। यतो हि परिभाषेतिहासोऽपि मूकतां भजतेऽत्र। महती परिभाषाव्याख्यातृपरम्परा मौनमेवालम्बते विषयेऽस्मिन् गतानुगतिका सतो अक्षिणी पिधाय केवलं पवित्रं कर्त्तव्यं मनुते।

यद्यपि परिभाषाभास्करस्य रचयिता हरिभास्करः स्वग्रन्थान्ते लिखति– 'केचित्' व्याख्यानतो विशेषप्रतिपत्तिः' इत्यादिसर्वपरिभाषा व्याडिमुनिना रचिता इत्याहुः। वस्तुतस्तु-नानाचार्याणामिमानि वचनानि पूर्वोदाहृतलण्-सूत्रादिगतणकाराद्युपादानतात्पर्यज्ञापकेभ्य इष्टसिद्धये केवलं पाणिन्यादिमुनित्रयेणोररी क्रियन्ते' [ प० सं० १३२ ], तथापि ते किन्नामधेया आचार्याः। कियत्संख्याकाश्च तेषां परिभाषाः? प्रश्नोऽयं समाधापमितुमात्मानमद्यमपि गवेषणानिपुणानां मेधाविनां शाब्दिकानां वदनं विलोकयति।

हरिभास्करस्योक्तिरियं सर्वथा सत्या प्रतीयते, यतो हि व्याडिः स्वयं स्वग्रन्थादौ प्रतिजानाति—'अथ परिभाषासूचनं व्याख्यास्यामः। अथेत्ययमधिकारार्थः। परिभाषासूचनं शास्त्रमधिकृतं वेदितव्यम्'। अत्र परिभाषासूचनपदेन परिभाषावृति विदधाति व्याडिः, न तु परिभाषा इति सूच्यते।

अत्रेदं प्रतिभाति यच्चशब्दशास्त्रेतिहासप्रारम्भकालत एव परिभाषेतिहासोऽपि प्रारभ्यते। कालवशादवश्यं परिभाषाणां स्वरूपे परिवृत्तिः, संख्यायां वृद्धिह्रासौ च दृश्यन्ते। व्याडिप्रभृतिभिश्चाचार्यैस्तैरुपायैस्तासां सूत्रसम्मतत्वं

समसाधि । चान्द्रव्याकरणस्य शाकटायनव्याकरणस्य चाचार्या अपि परिभाषा-परिभाषणे व्याडिमेवोपजीव्यतां प्रापयन्ति ।

संस्कृतव्याकरणपरिभाषासंसारेऽपरः कातन्त्रसम्प्रदायः सम्प्रेक्ष्यते । सम्प्रदायस्यास्याचार्याः पाणिनीयपरिभाषासूत्राण्यपि स्वपरिभाषासु निवेशयन्तो निभाल्यन्ते, परिभाषाश्च परिभाषासूत्रत्वेन व्यवहरन्ति । कातन्त्रसम्प्रदाय-शाब्दिकैः परिभाषा द्विधा—परिभाषासूत्रत्वेन, बलाबलसूत्रत्वेन च विभज्यन्ते ।

तृतीयस्यात्र सम्प्रदायस्य प्रवर्तकेनाचार्यपुरुषोत्तमदेवेन विहिता परि-भाषाणां लघुवृत्तिर्विलोक्यते । अतः परं परिभाषाव्याख्यातारो यावन्तोऽपि पाणिनीयवैयाकरणा दृष्टिपथमवतरन्ति तावन्तः सर्वेऽप्यमुमेव सम्प्रदायमनु-सरन्ति । इत्थं संस्कृतव्याकरणपरिभाषेतिहासावलोकनेन निश्चीयते यत् परिभाषाविषयिका अनेकाः पाणिनीया अपाणिनीयाश्च विपुलाः कृतयः परिभाषा गौरवगिरिमारोपयन्ति । नैतत्सौभाग्यं भाषान्तराणाम् ।

नागेशभट्टोऽपि पुरुषोत्तमदेवस्य परिभाषापाठक्रममेवाद्रियते स्वीये परिभाषेन्दुशेखरे । पुरुषोत्तमदेवस्य परिभाषापाठे येन क्रमेण यावत्यः परिभाषाः पठिताः, नागेशेनापि स क्रमः, ताश्चाविकलाः परिभाषा व्याख्याने संगृहीताः । अतः पुरुषोत्तमदेवपरिभाषापाठ एव परिभाषेन्दुशेखरस्योपजीव्यत्वेन स्वीकर्त्तु शक्यते । परन्तु पुरुषोत्तमदेवपरिभाषापठपठिताः 'कृत्रिमाकृत्रिमयोः' 'कृताकृत-प्रसङ्गि नित्यम्' 'येन नाप्राप्ते' 'लक्ष्ये लक्षणं सकृदेव' इमाश्चतस्रः परिभाषाः परिभाषेन्दुशेखरग्रन्थे मुद्रितेऽमुद्रिते च नावलोक्यन्ते, पाणिनीयैश्चाचार्यैः पदे पदे ताश्चोपयुज्यन्ते । वाराणसेयपरिभाषेन्दुशेखरसंस्करणे तु 'येन नाप्राप्ते' इत्यस्य स्वतन्त्रपरिभाषात्वेनोल्लेखो दृश्यते, किन्त्वपरासां तिसृणां पूर्वोक्तानां परिभाषाणां स्वतन्त्रपरिभाषात्वेनोल्लेखो नास्ति । अत्र किमपि कारणं नाव-लोक्यते यत् पुरुषोत्तमदेवं सर्वतो भावेनानुसरता नागेशेन पुरुषोत्तमदेवावृताः पूर्वोक्ताः परिभाषाः कथन्न व्याख्याताः । विशेषतः सम्भाव्यते यदवश्यं नागेशेन व्याख्याता अपीमा लेखकप्रमावाद् भ्रष्टाः । यतो हि तासु तासु परिभाषेन्दु-शेखरटीकासु ता अपि येन केनापि रूपेणोपलभ्यन्ते ।

इदन्त्वत्रावश्यं विचारणीयं विद्यते यत् पुरुषोत्तमदेवव्याख्यातपरि-भाषातिरिक्ता अपि काश्चन परिभाषा नागेशेन विवृता विलोक्यन्ते । तासु काश्चन व्याडिसीरदेवनीलकण्ठैर्व्याख्याता विद्यन्ते । अवशिष्टानां प्रायोदशानां परिभाषाणां कुतः संग्रह इति मतिरद्यापि निर्णयपथं धावति । यतो हि नागेश-भट्टेन स्वव्याख्येयपरिभाषाणां ग्रन्थादौ य आधारः संकेतितः, तत्प्रतिपादक-वाक्यार्थं यथायथं निर्णेतुं परिभाषेन्दुशेखरस्य सर्वेऽपि व्याख्यातारः समानरूपेण सन्दिहानाः समवलोक्यन्ते । तथाहि 'प्राचीनवैयाकरणतन्त्रे वाचनिकानि, पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि परिभाषा-रूपाणि व्याख्यायन्ते' इति नागेशपङ्क्तिः । अत्र टीकाकाराः—'प्राचीनवैया-

करणानाम्=इन्द्रादीनाम्, तन्त्रे=शास्त्रे, वाचनिकानि=वचनरूपाणि, विनयादित्वात् स्वार्थे ठक्, ज्ञापकन्यायाभ्यां सिद्धानि=प्रमितानि, भाष्यवार्त्तिकयोः=भाष्यवार्त्तिककारयोरुपनिबद्धानि= अभिप्रेतानि यानि परिभाषारूपाणि तान्यत्र ग्रन्थे व्याख्यायन्ते। व्याख्यानञ्च प्रकृतशास्त्रप्रवृत्तिनिवृत्त्युपयोगित्वेन प्रतिज्ञानविशिष्टमत्र विवक्षितम्। तेन 'अकृतव्यूहाः' इत्याद्युपन्यासेऽपि न प्रतिज्ञाविरोधः।

नन्वत्र ज्ञापकन्यायसिद्धानीति विशेषणेन वाचनिकीनामसंग्रह इति चेत्, अत्र केचित् प्रायेणेति शेषं कृत्वा वाचनिकीनां संग्रहणमाहुः।

अन्ये तु ज्ञापकन्यायशब्दावर्शं आद्यजन्तौ ज्ञापकन्यायसिद्धपरौ, सिद्धशब्दश्च वाचनिकपरः, तेन 'निर्दिश्यमानस्य' इत्यादिवाचनिकीनां संग्रहमाहुः।

सदाशिवभट्टास्तु—'भाष्यवार्त्तिकयोरिति पृथक् कोटिः, तेन ज्ञापकन्यायसिद्धानां भाष्याद्यनुपन्यस्तानाम् 'अकृतव्यूहाः' इत्यादिपरिभाषाणां ज्ञापकन्यायसिद्धानां केवलवाचनिकीनाञ्च संग्रहमाहुः।

केचिच्च—प्राचीनवैयाकरणतन्त्रे वाचनिकान्यपि पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धान्यपि यानि भाष्यवार्त्तिकयोरुपनिबद्धानि तान्येवात्र व्याख्यायन्त इति व्याचख्युः। वस्तुतस्तु ज्ञापकन्यायसिद्धानि व्याख्येयपरिभाषारूपाणि नैव सन्तीति प्राचीनेत्यादेर्यथाश्रुतार्थं एव समीचीनः। 'यस्मिन् विधिः' इत्यादौ 'वाचनिक्येषा' इत्याद्युल्लेखस्तु भाष्ये एतस्यां ज्ञापकन्यायौ नोपन्यस्तौ, केवलं वचनरूपेण पठितौ इत्येवार्थः, न तु तौ न स्त इति (प० शे० भू० टी० पृ० ४)।

एवं पङ्क्तिरियं परिभाषेंदुशेखरस्य तैस्तैर्व्याख्यातृभिः स्वस्वकल्पनानुसारेणानेकधा व्याख्याता। तेषां समेषामपि व्याख्यानपर्यालोचनेन निश्चेतुं न शक्यते यद् दश परिभाषाः कुतः संगृहीता नागेशेनेति सुधीभिराकलनीयम्।

**परिभाषाग्रन्थेषु परिभाषेन्दुशेखरस्य शेखरायमाणत्वम्**

सुरसरस्वतीशब्दशास्त्रस्य तस्य तस्य सम्प्रदायस्य तैस्तैश्शाब्दिकशार्दूलैस्ते ते परिभाषाविषयका ग्रन्थाः शब्दशास्त्राकरग्रन्थान् पर्यालोच्य महताऽऽडम्बरेण महता च परिश्रमेण निरमायिषत। यद्यपि तेषां परितोऽवगाहनेन; परिभाषाविषयकतत्तद्व्याख्यानपर्यालोचनेन; लघुनि वाक्ये तावदर्थसमावेशपरिपाटीपाटवदर्शनेन च तेषां कोविदानां संस्कृतशब्दशास्त्रपरिशीलनबुद्धिवैभवस्य पराकाष्ठा परिलक्ष्यते; तथापि परिभाषेन्दुशेखरस्तेषु सर्वतोभावेन शेखरायत इति मतिरुदेति तत्तत्परिभाषाग्रन्थपरिशीलनवतां सचेतसां सुमनसाम्। ग्रन्थश्चायमात्मलाभकाल एव परां प्रतिष्ठां प्रापत्। सा च तथा वृद्धिमिता यद् नागेशनिर्णीताः परिभाषाविषयकाः सिद्धान्ता एव सर्वमान्याः समजनिषत। परिभाषेन्दुशेखरनिर्माणकालमारभ्याद्यावधि केनापि मेधाविना विदुषा नागेशनिश्चितं परिभाषाविषयकं वस्तु मनागपीतस्ततो विधातुं साहसं कृतम्भवेदिति वक्तुं सुतरां दुश्शकम्। हेतुरत्रायं प्रतिभाति यद्

ग्रन्थोऽयं समयस्य तस्य रचना लभ्यते यदा शब्दशास्त्रस्याकरग्रन्थानां सर्वतः परिशीलनेन, व्याकरणविषयमाश्रित्यानेकमौलिकग्रन्थनिर्माणेन कोविदानामन्तेवासिनाञ्च परिषदि सततं प्रवचनेन च शब्दशास्त्रे नागेशेन परा प्रौढिः प्राप्तासीत् परिभाषेन्दुशेखरस्य पूर्णतः परिशीलनेन परितः प्रमाणयितुं पार्यते यदयं व्याकरणविषयकोऽन्तिमो ग्रन्थोऽप्रतिमप्रतिभस्य नागेशभट्टस्य। शब्दानुशासनस्य पदार्थबोधे विदुषोऽस्य महती प्रौढिरासीद् यया स्वप्राग्वर्तिनां प्रायः समेषामप्याचार्याणां सिद्धान्ताः समालोचिताः प्रत्याख्याताश्च। किं बहुना, सकलसम्प्रदायसुमनःसम्मानितसिद्धान्तो विश्वविश्रुतयशा महर्षिपतञ्जलिरप्यात्मानं व्याकरणसिद्धान्तस्थापने नागेशभट्टस्य 'एकदेशोक्ति'प्रभृतिप्रहारात् रक्षितुं नाशकत्। अहो विधेर्विडम्बना? यदेतदन्तरं भरतभूस्तादृशेन सौभाग्येन नाञ्चिता, येन शब्दशास्त्रविषयकमौलिकग्रन्थनिर्माता कश्चिदिमां भूषयेत्, तदाप्रभृत्यद्यावधि विबुधैरस्य ग्रन्थस्य यथायथमवगमाय व्याख्यानिर्माणप्रयत्न एवात्मनः परं गौरवमन्वभावि। यद्यपि परिभाषेन्दुशेखरस्य कतिपये व्याख्यातारो नागेशभट्टप्रस्थापितान् कतिपयसिद्धान्तान् प्रत्याख्यातुं भृशं प्रायतिषत, तथापि तेषां संख्याऽतीवाल्पीयसी। अथ च मेधाविनस्तेऽपि कियदंशं यावत् सफलाः स्वचेष्टायामिति विद्वांस एव विदाङ्कुर्वन्तु। सूक्ष्मेक्षिकया निरीक्षणे प्रतीयते यत्ते मनाग् कमप्यपराधं विदधतो भीता इव तत्प्रयत्ने परिलक्ष्यन्ते। अत एव स्वाशयं सम्भावितनागेशाशयमेवोपवर्णयन्ति। यथार्थता यत्र कुत्रापि तिष्ठतु, किन्त्वतिशयितनागेशविमर्शो न कोऽपि ततः परमद्य यावज्जात इत्यत्र तु न केऽपि विप्रतिपत्तुमपि साहसं कुर्वन्ति। अत्र वस्त्वेकमुपेक्षणीयतां नार्हति यदस्य विदुषः स्वसिद्धान्तसमर्थने तथाऽऽग्रहिलताऽवलोक्यते, यतो बहोः कालादक्षुण्णतया प्रवहमाणा अपि शब्दानुशासनसिद्धान्तास्तत्साधिका आकरयुक्तीरप्यन्यथा संयोज्यान्यथैव व्यवस्थाप्यन्ते। अत एव शाब्दिकानां पदार्थविमर्शविषय एष एव सिद्धान्त इति प्रतिपादयितुं महीयांसोऽपि विद्वांसो व्यामुह्यन्त इदं प्राचीनमतम्, इदञ्च नवीनमतमिति व्यवहरन्तो विलोक्यन्ते। परिपाटीयं न केवलं परिभाषेन्दुशेखर एव पर्यवलोक्यते, अपि तु नागेशस्य कोऽपि ग्रन्थोऽस्या अपवादो नास्ति। नागेशभट्टेन ग्रन्थनिर्माणे सूत्रशैली समाद्रियते। अथ च व्याख्यालेखनेऽपि काममभ्यस्ता सा क्वचनापि न परित्यज्यते, सैव परिभाषेन्दुशेखर उपयोजिता। अत एव पाणिनीयव्याकरणग्रन्थेषु परिभाषेन्दुशेखरस्य यावत्यो व्याख्याः सन्ति, न तावत्योऽन्येषाम्। यतो हि ग्रन्थस्यास्याध्ययने पदे पदे काठिन्यमनुभवन्तो दयालवो विद्वांसोऽन्तेवासिनामुपकारायाऽनेकव्याख्या निर्मितवन्तः। परिभाषेन्दुशेखरप्रणयनप्रणालीपर्यवेक्षणेन पदे पदे प्रतीयते यत् प्रयोगसिद्धिसमयेऽन्तेवासिसमुद्भावितसमस्यासमाधानाय प्रयुक्तानां परिभाषाणां संक्षिप्तं विवरणमेव कालेन परिभाषेन्दुशेखरग्रन्थत्वेन प्रसिद्धिं प्राप्तम्। यतो हि मञ्जुषादाविवात्र विषयविवेचनविस्तरो न विलोक्यते। यद्यपि काश्चन परिभाषा अस्यापवादभूताः सन्ति, तथापि भूयस्यः

परिभाषास्तथाविधा उपलभ्यन्ते यासां व्याख्यानं ज्ञापकफलप्रदर्शनेनैव कृतकृत्यतामगात्। यत्र तत्र परिदृश्यमानं विशदविवेचनमपि ग्रन्थममुं परिभाषाटीकाग्रन्थयशसा समलङ्कर्तुं नालमिति प्रतिपादने मनागपि मनो न संकुचति सुमेधसां विदुषाम्।

अत्रेदमाकूतम्—परिभाषेन्दुशेखरस्य टीकासु तासु तासु निर्दिश्यमानान्तरङ्गादिपदार्थानाम्, अपवादपदार्थस्वरूपतद्भेदानाम्, 'अनेकान्ता अनुबन्धाः' 'एकान्ता अनुबन्धाः' इत्यत्रानुमानस्वरूपस्य, तत्र तत्रावतरणासंगतितत्परिहारोपायस्य च विस्तरेण निरूपणं दर्शं दर्शं मनसीयं शङ्का समुदेति यत् समये समये प्रतिपादितं पश्चात् संकलितं संक्षिप्तं विवरणमेव परिभाषेन्दुशेखरेत्यभिधां धत्ते। अन्यथा नागेशभट्टेनापि समस्या एतास्तर्किताः समाहिताश्च स्युः। इदमप्यनुमातुं शक्यते यच्चरमे वयसि वर्तमानेनासादितशब्दानुशासनप्रौढिना ग्रन्थममुं विरचयता नागेशेन भूयसो भावान् स्वल्पैः शब्दैः प्रकाशयितुं पारितम्, अथवा वार्द्धक्याद् विस्तरेण व्याख्यातुमुदासितम्, अथवा परिभाषाणां प्राक्तनेषु व्याख्यानेषु विस्तरेण व्याख्यायमानानां तासामधिकव्याख्यानापेक्षणं नानुमतम्।

सम्भवन्तु नामात्र ते ते विकल्पाः, परन्त्वत्र कश्चनापि विकल्पो नोदेति यद् ग्रन्थस्यास्य व्याख्याप्रौढिः परां काष्ठामधितिष्ठति।

**ग्रन्थस्यास्य प्रकरणत्रयसमीक्षा**

परिभाषेंदुशेखरस्य भूतिप्रभृतिव्याख्यापर्यालोचनेनावगम्यते यदस्मिन् ग्रन्थे त्रीणि प्रकरणानि सन्ति—शास्त्रत्वसम्पादकं प्रथमम्, बाधबीजकथनं द्वितीयम्, शेषार्थकथनं तृतीयम्। प्रथमे प्रकरणे शास्त्रत्वसम्पादिकानां परिभाषाणां सन्निवेशो दृश्यते। अप्रामाण्यज्ञानानास्कन्दितबोधजनकत्वमेव शास्त्राणां शास्त्रत्वम्। अप्रामाण्यज्ञानानास्कन्दितबोधेनेष्टानिष्टस्थलप्रवृत्तिनिवृत्ती क्रमेण भवतो लोकानाम्। पाणिनीयसूत्राणामपि प्रयोगसिद्धिसंसारे शाब्दिकैशास्त्रत्वं शिरसोह्यते। परन्तु तेषु भूयसां परिभाषामिरेव शास्त्रत्वमव्याहतं विलोक्यते। यथा "आन्महतः समानाधिकरणजातीययोः" [६।३।४६] इत्यस्य 'महाचन्द्रः' इत्यत्रेष्टस्थले प्रवृत्तिः, 'महद्भूतश्चन्द्रः' इत्यनिष्टस्थलान्निवृत्तिश्च 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' [प० १५ पृ० ६८] इति परिभाषासाहाय्यमन्तरा शब्दसिद्धिसाधुत्वबोधपरैर्लक्षणैकचक्षुष्कैशाब्दिकैः सम्पादयितुं न शक्यत इति सिद्धचत्यस्याः शास्त्रसम्पादिकात्वम्। ईदृशीनामेव परिभाषाणामस्मिन् प्रकरणे सन्निवेशः। आभिश्च विधिसूत्राणामप्रामाण्यज्ञानानास्कन्दितार्थबोधं सम्पाद्य शास्त्रत्वं साध्यत इति शास्त्रत्वसम्पादकप्रकरणाभिधम् 'व्याख्यानतः' इत्यारभ्य 'एकदेशविकृतम्' इत्यन्तं प्रथमं प्रकरणमुच्यते। प्रथमं तन्त्रम्, द्वितीयं तन्त्रमित्याद्यपि व्यवहारो विदुषां विलोक्यते परिभाषाविभागे।

प्रथमप्रकरणप्रतिपादिताभिस्ताभिः परिभाषाभिः सूत्राणां शास्त्रत्वे

प्रतिष्ठापितेऽपि विचिकित्सा जायते यत् 'तिसृणाम्' इत्यत्र त्रयादेशतिस्रादेश-विधायकयोर्द्वयोरपि शास्त्रत्वेन कतरस्य प्रवृत्तिः ? द्वयोः प्रवृत्तौ त्वनिष्टं रूपमापद्येत ? "विप्रतिषेधे परं कार्यम्" इत्यनेन परत्वात् तिस्रादेशस्य प्रथम-प्रवृत्तौ व्यवस्थापितायामपि पुनस्त्रयादेशः कथन्नेति शङ्का जागर्त्येव । तस्या निरासार्थम् "सकृद्गतौ विप्रतिषेधे" इत्यनया त्रयादेशस्य पुनर्बाधो बोध्यते । एवं पूर्वापेक्षया परस्य बलवत्त्वे व्यवस्थापितेऽपि परनित्यान्तरङ्गापवादाना-मुत्तरोत्तरबलवत्त्वव्यवस्था शास्त्रेण न सम्पाद्यत इति शास्त्रत्वसम्पत्तौ बाध-चिन्ताया औचित्येन तदर्थम् 'परनित्यान्तरङ्ग' इत्यारभ्य 'उभयनिर्देशे' इत्यन्तं बाधबीजाभिधं द्वितीयं प्रकरणमारब्धम् ।

अहो ! धन्या शाब्दिकशैली; लोके महनीयचरितानां सचेतसां विरोधे पदे पदे बलवता दुर्बलबाधो विभाव्यते । इह त्वचेतनानामपि शास्त्राणां बाध्यबाधकभावो बोध्यते ।

प्रकरणद्वयावशिष्टानां कासाञ्चित् परिभाषाणां व्याख्यानं तृतीयस्मिन् प्रकरणे समुपलभ्यते । अत्र व्याख्याताः काश्चित् परिभाषाः पाणिनीयसूत्राणां तात्पर्यमवधारयन्ति । येन लक्षणैकचक्षुष्काः साधुशब्दनिष्पादने, असाधुशब्द-व्यावर्तने च समर्थाः स्युः । यथा 'प्रातिपदिकग्रहणे' इति परिभाषया 'अयस्कुम्भः' इत्यत्रेव 'अयस्कुम्भी' इत्यत्रापि सत्वं सम्पाद्यते । अन्यथा "अतः कृकमि०" इति सूत्रे कुम्भशब्दस्योपादानादत्र सत्वं न स्यात् । सत्याञ्चास्यां परिभाषायां प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणे सूत्रतात्पर्यमवगम्यते । तथाविधे तात्पर्येऽवगमिते 'यूनः पश्य' इत्यत्रेव 'युवतीः पश्य' इत्यत्रापि "श्वयुव०" इति सम्प्रसारणेन भवितव्यम् । सर्वविधविभक्तिसम्बन्धिकार्ये प्रातिपदिकग्रहणेन लिङ्गविशिष्टग्रहणाभावः "विभक्तौ लिङ्गविशिष्टाग्रहणम्" इति परिभाषया व्यवस्थाप्यते । तथा च 'युवतीः पश्य' इत्यत्र सम्प्रसारणप्रयुक्तानिष्टरूप-व्यावृत्तिर्वर्तते । एवञ्च संहत्योभाभ्यां परिभाषाभ्यां विधिसूत्राणां पूर्वोक्तं शास्त्रत्वं सम्पाद्यते । एवंविधाः सन्त्यनेकाः परिभाषा अत्र प्रकरणे, यासां सर्वासां साक्षात् परम्परया वाऽप्रामाण्यज्ञानानास्कन्दितसूत्रार्थबोधने साहाय्य-सम्पादने व्यापापारः । अतस्ताः प्रथमतन्त्रावशिष्टास्तत्रैव पठितव्या आसन् । काश्चन परिभाषाः परिभाषाणामेव विषयविभागं विदधति, यथा 'विधौ परिभाषोपतिष्ठते नानुवादे' 'ज्ञापकसिद्धं न सर्वत्र' इत्यादयः । एवं काश्चन द्वितीयप्रकरणावशिष्टाः, यथा 'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्, निषेधाश्च बलीयांसः' इत्यादयः । काश्चन तथाविधा अपि परिभाषा परि-लक्ष्यन्ते याः सूत्राणि नोपकुर्वन्ति, न च परिभाषाणां विषयविभागं निर्दिशन्ति, किन्तु सूत्रघटकशब्दानामौचित्यानौचित्यचर्चां सम्पादयन्ति, यथा—'पर्याय-शब्दानां लाघवगौरवचर्चा नाद्रियते' इत्यादयः । अत एव शास्त्रशेषाभिधं प्रकरणमिदमुच्यते विचारकैः ।

अत्रेदं विचारणीयमवशिष्यते यत् परिभाषेंदुशेखरस्य प्राचीनतमपाण्डुलिपिषु क्वचनापि नागेशकृतोऽयं प्रकरणविभागो न विभाव्यते। नागेशभट्टस्य साक्षाच्छिष्येण वैद्यनाथपायगुण्डेमहोदयेनापि गदायां टीकायां परिभाषेन्दुशेखरग्रन्थे च विहितः प्रकरणविभागो लक्ष्यते। परिभाषेन्दुशेखरोपजीव्यपुरुषोत्तमदेवपरिभाषापाठेऽपि नायं विभागो विलोक्यते। कुतः कथं केन च परिपाटीयं प्रचालिता, सापि नागेशसम्मता न वेति।

अत्रेदं वक्तुं शक्यते—परिभाषेन्दुशेखरस्य तत्तव्याख्यावलोकनेनेदमवगम्यते यद् ग्रन्थस्यास्य व्याख्यातॄणां महती काचन परम्परा वर्तते। तस्यां परम्परायां वर्तमानानामप्रतिमप्रतिभासम्पन्नानां केषाञ्चन विदुषां तस्यां दिशि दृष्टिपातः स्वाभाविकोऽन्तेवासिनामध्ययनसौकर्याय। व्याख्याने नागेशकृतपरिभाषासन्निवेशक्रममवलोक्यापि विदुषां बुद्धिः प्रकरणविभागविषया सम्भाव्यते। अतस्तादृशो विभागस्तदभिलषितोऽनुमीयते। इदमप्युत्प्रेक्षितुं शक्यते यत् पुरुषोत्तमदेवव्याख्यातपरिभाषातिरिक्ता याः परिभाषा नागेशेन पश्चात् सङ्कलिताः, ताः क्रममनादृत्यात्र परिशिष्टे प्रकरणे निवेशिताः स्युः। यत् किमपि भवतु, प्रकरणविभागस्यानौचित्यचर्चा सचेतस उद्वेजयत इत्यलं फलाजिघृक्षया प्रवृत्तस्य वृक्षगणनया।

**परिभाषेन्दुशेखरस्य हैमवती व्याख्या**

परिभाषाणां सीरदेवपुरुषोत्तमप्रभृतिप्रौढपण्डितैर्विहितासु विविधासु व्याख्यासु सतीष्वपि परिभाषेंदुशेखराख्यव्याख्याया अद्भुतं किमपि गौरवं गीयते पण्डितमण्डलीषु प्रागुक्तमिदं न पुनरावृत्यते। व्याकरणाकरग्रन्थानन्तरं ग्रन्थेनानेनैव तथाविधं सौभाग्यमर्जितम्, येनास्य प्रायो द्वात्रिंशद्व्याख्यासु द्वाविंशतिर्व्याख्या अनायासेनोपलब्धुं शक्यन्ते। तासां व्याख्यानां काश्चन प्रकाश्यं प्राप्ताः काश्चनात्मनः पाण्डुलिपित्वमद्यापि न विजहति। नागेशभट्टस्य विशाला शिष्यश्रेणिः श्रूयते। तस्यां प्रधानशिष्येण वैद्यनाथप्रायगुण्डेमहोदयेन गदाख्या व्याख्या विरचिता। श्रूयते तत्र व्याख्यायां साक्षान्नागेशेन विषमस्थलानां प्रतिपादिता अभिप्राया निवेशिता विराजन्ते। अत एव 'नव्यास्तु', 'केचित्तु' 'कश्चित्तु' 'परे तु' इत्यादिसङ्केतैर्येषां मतानि समालोचितानि, तेषां सर्वेषां नामानि स्पष्टं तत्राभिहितानि विलोक्यन्ते। परिभाषेन्दुशेखरस्य त्रिपथगाप्रभृतिषु तासु तासु भाषाभावप्रौढासु व्याख्यासु विद्यमानास्वपि सम्प्रति प्रौढपण्डितमण्डलीषु भैरवमिश्रकृता 'भैरवी' यागेश्वरशास्त्रिरचिता 'हैमवती', श्रीरामकृष्णशास्त्रिविरचिता 'भूतिः', श्रीजयदेवमिश्रकृता, 'विजया' श्रीवेणीमाधवशास्त्रिकृता 'शास्त्रार्थकला' व्याख्याः सर्वतः समादृता दृश्यन्ते। तत्रापि 'हैमवती'व्याख्यायाः किमप्यपूर्वं वैशिष्ट्यं प्रतीयते : श्रीयागेश्वरशास्त्री दुरूहाणि पदानि सम्यग् व्याख्याय तत्र निहितानां निगूढानामभिप्रायाणामाविष्करणं करोति, ततश्च सन्दर्भस्याशयं प्रकाशयति। नागेशभट्टस्य निखिलेषु निबन्धेषु बाहुल्येन सर्वनामशब्दानां प्रयोगो दृश्यते। अनेकेषु स्थलेषु तु विभिन्न-

च

विभक्तिकस्यैकस्यैव सर्वनामशब्दस्य 'तेन तत्र तस्य तथात्वं सूचितम्' इत्याकारकप्रयोगपरम्परां पर्यालोचं पर्यालोचं मनसि महान् प्रमोदो जायते यदहो शब्दसन्निवेशाभिनिवेशः। तादृशेषु स्थलेषु प्राक्तनोभिधेयानुसन्धाने विद्वांसोऽपि व्यामुह्यन्तो विलोकिता आसन्, किन्तु साम्प्रतं स व्यामोह एव व्यामोहं गमितो हैमवत्याख्यव्याख्यया। एवं पदे पदे प्रयुक्ते 'अतः' इति पदे एतत्पदस्य यथायथमर्थनिर्देशे 'हैमवती' परितो व्याप्रियते। समुचितसमुपासितशब्दानुशासनशास्त्रोऽनितरसाधारणशेमुषीकः शास्त्रिवर्योऽयं परिभाषेन्दुशेखरग्रन्थग्रन्थिं भित्त्वा तत्र तत्र नागेशमतं प्रत्याख्याय व्याकरणाकरप्रमाणप्रमाणितं स्वमतं सिद्धान्तत्वेन व्यवस्थापयति। ग्रन्थस्यास्य गदाप्रभृतयो व्याख्याः परिगणितानामेव परिभाषाणां कतिपयविषमस्थलानि व्याचक्षते। भूतिप्रभृतयस्तु परिष्कारपरिधिपिहिताभिप्राया व्याख्यासापेक्षा ग्रन्थप्रायाः पदार्थावबोधं न नयन्त्यनायासेनान्तेवासिनः। हैमवती तु हैमवतीव सरलशब्दसलिला तत्र तत्र निहितान् गूढान् भावान् सरलैः शब्दैः प्रकाश्यान्तेवासिनश्च सन्तोष्य विदुषां मनोविनोदाय परिष्कारान् प्रयुञ्जानापि सर्वसुलभा भवति। दुरूहप्रयोगाणां प्रक्रियापि पदे पदे प्रदर्शिता विद्यते। नागेशो यत्र स्वमतं व्यवस्थापयन् भाष्यकैयटयोः संकेतमात्रं करोति, तत्र तत्पङ्क्तिसमुद्धरणपुरस्सरं तयोराशयं वर्णयति व्याख्येयम्। हैमवती स्वप्रारम्भ एवात्मवैशिष्ट्यात् तथा प्रसिद्धिमगाद् येन परमसहृदयो भूतिकारः "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषाव्याख्यानावसरे 'केचित्तु' इति पदेन सादरं स्मरति हैमवतीव्याख्याकारम्। प्रमाणयतीदं तत्रैव तत्त्वप्रकाशिकायाम् 'केचित्तु' इति 'हैमवतीकारा इत्यर्थः' इति पदेन श्रीगणपतिशास्त्रिमहोदयः [ परि० भूति०, पृ० १८० ]। एवमनेकानि स्थलानि सन्ति यत्र भूतौ स्मृतोऽयमाचार्यः। दिदृक्षुभिः स्वयमेव गवेषणीयानि तत्तत्स्थलानि। तत्त्वप्रकाशिकाख्यव्याख्यायामपि स्थलद्वये स्मृतोऽयं व्याख्याकारः [ परि० १५, पृ० ८७, परि० १६, पृ० ९२ ]। एवमनेकानि वैशिष्ट्यानि व्याख्याया अस्याः, तानि विचारकाः स्वयमेव पश्येयुः।

अत्रेदमाकूतम्—तत्त्वप्रकाशिकावचनेन पूर्वोक्तेनेदं निश्चीयते यद् हैमवतीकारो भूतिकारात् प्राग्वर्ती। अतो हैमवत्या भूतौ प्रभावः स्वाभाविकः। यत्र तत्र तु व्याख्ययोर्द्वयोर्भावसादृश्येन सहाक्षराण्यपि समानानि।

**हैमवतीप्रकाशनप्रसङ्गः**

एवं विविधगुणविशिष्टापि व्याख्येयं विधिवशात् तिमिरततितिरोहिता सती शाब्दिककुलं नोपकुर्वन्त्यासीत्। प्राय इतः षड्भ्यो वर्षेभ्यः प्राक् परमेण सौभाग्येन वाराणसेयसंस्कृतविश्वविद्यालयस्य गवेषणालये संचालकपदं भूषयद्भिर्विविधविद्याविशारदैर्विश्वविश्रुतयशोभिः श्रीमद्बलदेवोपाध्यायमहोदयैर्महता परिश्रमेणान्विष्यास्या व्याख्याया अपूर्णैका पाण्डुलिपिः प्रकाशनाय मह्यं प्रदत्ता। सम्पादनकार्यं विदधता पाण्डुलिप्यन्तराभावात् प्राप्तपाण्डुलिप्य-

क्षरदोषाच्च पदे पदे महत्काठिन्यमनुभवता मया विदुषां साहाय्येनेदं कार्यं समाप्तिं नीतं सरस्वतीभवनपुस्कालयादवशिष्टां त्रुटिताक्षरां पाण्डुलिपिं प्राप्य। तत्रापि तृतीयस्मिन् प्रकरणे कतिपयपरिभाषाणां व्याख्यापत्राण्येव त्रुटितान्यासन्। ताः परिभाषा मया स्वमत्या व्याख्याताः। यद्यस्मिन् कार्ये मया यद् किञ्चिदपि साफल्यं प्राप्तम् तत् श्रीमतामुपाध्यायानामेव। अवसरेऽस्मिन् महाकविकालिदासो बलान्मम स्मृतिपथमारोहति—

**सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः**
**सम्भावनागुणमवेहि तमीश्वराणाम्।**
**किं प्राभविष्यदरुणस्तमसां वधाय**
**तञ्चेत् सहस्रकिरणो धुरि नाकरिष्यत्॥**

हैमवतीव्याख्याकारस्य जीवनेतिवृत्तं श्रीमद्भिरुपाध्यायमहोदयैर्लिखितमत्र सम्बद्धमिति न तत्र मम लेखनी व्याप्रियते।

## उपकारस्मरणम्

सर्वप्रथमं संस्कृतसमाजस्यानतिशयेन सौभाग्येन सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्योपकुलपतिपदमधितिष्ठतां श्रीमतां करुणापतित्रिपाठिमहोदयानामुपकारं शिरसा वहामि, यैरहं कार्यस्यास्य सम्पादनाय पुनः पुनरुद्बोधितः, पदे पदे च समुपस्थितामनेकविधां बाधां प्रबाध्य समुचितेन सौविध्येन संयोजितश्च। येनाहं कार्यमिदं पूर्णतां प्रापितवान्। अतः—

**सौजन्यसिन्धुविबुधावलिगीतकीर्ते**
**विद्यावदातहृदयातिगभीरमूर्ते।**
**पाथोजपाणिपुटके करुणापते ते**
**सारस्वतानि सुमनांसि समर्पयेऽहम्॥**

विश्वविद्यालयस्यास्य नव्यव्याकरणविभागाध्यक्षाणां श्रीमतां भूपेन्द्रपतित्रिपाठिमहाभागानामप्युपकारं महान्तं कथं विस्मरामि यैर्ग्रन्थस्यास्य पाठसंशोधने समुपस्थितानां समस्यानां समाधानेन साधु साहाय्यं संपादितम्। अतः—

**विद्याशीलकुलख्यात श्रीभूपेन्द्रपते तव।**
**अक्षमः प्रतिदानेऽयं मौनमेवावलम्ब्यते॥**

गवेषणालयसंचालक श्रीभागीरथप्रसादत्रिपाठिनं प्रति साधुवादं व्याहरामि, यस्य समीचीनया व्यवस्थयाऽह्नाय ग्रन्थोऽयं प्राकाश्यं प्राप्तम्। महानुभावस्यास्यात्र तादृशी तत्परता नाभविष्यत्, तर्हि ग्रन्थिग्रथित एवाभविष्यत्।

हिन्दूविश्वविद्यालयस्य कलासंकाये संस्कृतपालिविभागेऽध्यापकपदं भूषयन्तं व्याकरणाचार्य—एम्० ए० पदभाजं डॉ० जयशङ्करलालत्रिपाठिनमपि

शुभाशीर्वचोभिर्भूयो भूयः संवर्द्धयामि येन ग्रन्थस्यास्य प्रस्तावनाप्रस्तुतौ सम्यक् साहाय्यमाचरितम् ।

व्याकरणाचार्य-विद्यावारिध्युपाध्युपहितं श्रीहरिश्चन्द्रमणित्रिपाठिनमपि अनेकैः शुभाशीर्वचनैः संयुनज्मि येनावश्यकपुस्तकप्रदानादिना ग्रन्थस्यास्य सम्पादने महदुपकृतम् ।

ग्रन्थस्यास्य गौरवप्रख्यापनाय भृशं प्रयतमानेन अस्मच्छिष्यकल्पेन पालिसाहित्याचार्यश्रीपरमेश्वरपाण्डेयमहोदयेन प्रागुरूपसंशोधन एवं साहाय्य-माचरितमित्येव न, अपि तु तत्र तत्र संकीर्णायां पाठसंशोधनसमस्यायां समुपस्थितं कल्पनातीतं साहाय्यं व्यधायि । महानुभावस्यास्य यदि तादृशः प्रयत्नोनाभविष्यत् तदा साम्प्रतं समुपस्थितमेतद्रूपमस्य नाभविष्यत् । अत उदात्तचेतस महानुभवमिमं प्रचुराणां प्रशंसापदानां पात्रमाकलयामि, अभ्युदय-मप्यस्याभिलषामि ।

अनुसन्धानसंस्थाने संशोधनकार्ये व्यापृतेन पुराणाचार्यपदभाजा श्रीहरिहरदत्तदीक्षितमहाभागेनाप्यत्र पाण्डुलिपिसंस्कारादौ काममुपकृतम् । असमीचीनायां पाण्डुलिपावशुद्धिबाहुल्यं संभाव्येत । अतो महाशयस्यास्यापि शुभकामनां कामये, प्रार्थये च भवानीजानिं यदयमचिरेणाभ्युदयेन युज्येत ।

अन्ते दयार्द्रतहृदयानां सहृदयानां सपर्यायाम्—

**खद्योतमुद्द्योतयुतं निरीक्ष्य**
**निशाधिनाथो नहि मन्युमेति ।**
**ब्राह्मीपदध्यानपरं प्रयत्नं**
**दयालवो मे कृतिनः क्षमन्ताम् ॥**

पद्यप्रसूनमिदं सविनयं समर्प्य विरमामि ।

वाराणस्याम्,
गणेशचतुर्थ्याम्,
वि० सं० २०३१
३०-१-१९७५ खूस्ताब्दे

**कालिकाप्रसादशुक्लः**
व्याख्याता, व्याकरणविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# आमुखस्थसंकेतशब्दपरिचयः

| पृष्ठसंकेतः | सङ्केतशब्दाः | पूर्णशब्दाः |
|---|---|---|
| (२०) | वा० प० | वाक्यपदीयम् |
| (२०) | का० वृ०, पृ० | काशिकावृत्तिः, पृष्ठम् |
| (२०) | वा० प० | वाक्यपदीयम् |
| (२०) | अ० पा०, आ० पृ० | अष्टाध्यायी, पादः,आह्निकम्,पृष्ठम् |
| (२२) | महाभा०, पृ० | महाभाष्यम्, पृष्ठम् |
| | [ ] | ईदृशचिह्नान्तर्गतान्यक्षराणि पाठस्य शुद्धये संपादकेनोहितानि |
| (२४) | वा० | वार्त्तिकम् |
| (२४) | आ०, पृ० | आह्निकम्, पृष्ठम् |
| (२५) | म० भा० | महाभाष्यम् |
| (२६) | म० भा०, प० आ० | महाभाष्यम्, पस्पशाह्निकम् |
| (२६) | वै० सि० ल० म०, श० नि० पृ० | वैयाकरणसिद्धान्तलघुमञ्जूषा, शक्तिनिरूपणम्, पृष्ठम् |
| (२६) | न्या० सू० | न्यायसूत्रम् |
| (२६) | वै० सू० | वैषेशिकसूत्रम् |
| (२७) | कि० | किरातार्जुनीयम् |
| (२७) | पा० सू० | पाणिनीयसूत्रम् |
| (२७) | वा० | वार्त्तिकम् |
| (२७) | सा० द० | साहित्यदर्पणम् |
| (२७) | मी० द० | मीमांसादर्शनम् |
| (२७) | मी० द० | मीमांसादर्शनम् |
| (२७) | मी० द० | मीमांसादर्शनम् |
| (२९) | बृ० | बृहदारण्यकोपनिषद् |
| (२९) | छा० | छान्दोग्योपनिषद् |
| (२९) | बृ० | बृहदारण्यकोपनिषद् |
| (२९) | बृ० | बृहदारण्यकोपनिषद् |
| (२९) | मु० | मुण्डकोपनिषद् |
| (३०) | वा० | वाक्यपदीयम् |
| (३०) | केनो० | केनोपनिषद् |

| | | |
|---|---|---|
| (३१) | परमल० म०, स्फोट-विचारः, पृ० | परमलघुमञ्जूषा, स्फोटविचारः, पृष्ठम् |
| (३३) | वा० | वाक्यपदीयम् |
| (३३) | वा० टीका | वाक्यपदीयटीका |
| (३४) | प० पृ० | परिभाषेन्दुशेखरः, पृष्ठम् |
| (३४) | प०, पृ० | परिभाषेन्दुशेखरः, पृष्ठम् |
| (३४) | प० शे०, टी० भूति० तत्त्व० पृ० | परिभाषेन्दुशेखरः, टीका भूतितिलक-तत्त्वादर्श, पृष्ठम् |
| (३५) | प० सं० | परिभाषासंख्या |
| (३७) | प० शे०, भू० टी०, पृ० | परिभाषेन्दुशेखरः, भूतितिलकटीका, पृष्ठम् |
| (३९) | प० पृ० | परिभाषा, पृष्ठम् |
| (४२) | परि०, भूति० पृ० | परिभाषेन्दुशेखरः, भूतितिलकः, पृष्ठम् |
| (४२) | परि० पृ० परि० पृ० | परिभाषा, पृष्ठम्, परिभाषा, पृष्ठम् |

●

# परिभाषापाठः

( परिभाषेन्दुशेखरानुमोदितः )

## अथ प्रथमं प्रकरणम्

व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।

यथोद्देशं संज्ञापरिभाषम् ।

कार्यकालं संज्ञापरिभाषम् ।

अनेकान्ता अनुबन्धा इति ।

एकान्ताः ।

नानुबन्धकृतमनेकाल्त्वम् ।

नानुबन्धकृतमनेजन्तत्वम् ।

नानुबन्धकृतमसारूप्यम् ।

उभयगतिरिह भवति ।

कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ।

यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।

निर्दिश्यमानस्यादेशा भवन्ति ।

यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ।

अर्थवद्ग्रहणे नानर्थकस्य ।

गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।

अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।

एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिः ।

क्वचिदेकदेशोऽप्यनुवर्त्तते ।

भाव्यमानेन सवर्णानां ग्रहणं न ।

भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ।

वर्णाश्रये नास्ति प्रत्ययलक्षणम् ।

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।

प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम् ।

प्रत्ययग्रहणे चापञ्चम्याः ।
उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ।
स्त्रीप्रत्यये चानुपसर्जने न ।
संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ।
कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।
पदाङ्गाधिकारे तस्य च तदन्तस्य च ।
व्यपदेशिवदेकस्मिन् ।
ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।
व्यपदेशिवद्भावोऽप्रातिपदिकेन ।
यस्मिन्विधिस्तदादावल्ग्रहणे ।
सर्वो द्वन्द्वो विभाषयैकवद् भवति ।
सर्वे विधयश्छन्दसि विकल्प्यन्ते ।
प्रकृतिवदनुकरणं भवति ।
एकदेशविकृतमनन्यवत् ।

॥ इति प्रथमं प्रकरणम् ॥

## अथ द्वितीयं प्रकरणम्

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ।
पुनः प्रसङ्गविज्ञानात् सिद्धम् ।
सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव ।
विकरणेभ्यो नियमो बलीयान् ।
परान्नित्यं बलवत् ।
शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ।
शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ।
लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः ।
क्वचित् कृताकृतप्रसङ्गमात्रेणापि नित्यता ।
यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ।
यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ।
स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यो भवति ।
असिद्धं बहिरङ्गमन्तरङ्गे ।

नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।

अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ।

पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न ।

अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ।

वार्णादाङ्गं बलीयो भवति ।

अकृतव्यूहाः पाणिनीयाः ।

अन्तरङ्गादप्यपवादो बलवान् ।

येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ।

क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ।

पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते, नोत्तरान् ।

मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते, नोत्तरान् ।

अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ।

पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ।

प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ।

उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति ।

अपवादो यद्यन्यत्र चरितार्थः, तर्ह्यन्तरङ्गेण बाध्यते ।

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ।

ताच्छीलिकेषु वासरूपविधिर्नास्ति ।

क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ।

लादेशेषु वासरूपविधिर्नास्ति ।

उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ।

॥ इति द्वितीयं प्रकरणम् ॥

## अथ तृतीयं प्रकरणम्

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।

विभक्तौ लिङ्गविशिष्टाग्रहणम् ।

सूत्रे लिङ्गवचनमतन्त्रम् ।

नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।

गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ।

सांप्रतिकाभावे भूतपूर्वगतिः ।

बहुव्रीहौ तद्गुणसंविज्ञानमपि ।

चानुकृष्टं नोत्तरत्र ।

स्वरविधौ व्यञ्जनमविद्यमानवत् ।

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ।

निरनुबन्धकग्रहणे न सानुबन्धकस्य

तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।

क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ।

समासान्तविधिरनित्यः ।

संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।

सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ।

ताच्छीलिके णेऽण्कृतानि भवन्ति ।

धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ।

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ।

प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ।

अङ्गवृत्ते पुनर्वृत्तावविधिः ।

संज्ञापूर्वकविधेरनित्यत्वम् ।

आगमशास्त्रमनित्यम् ।

गणकार्यमनित्यम् ।

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ।

नञ्घटितमनित्यम् ।

आतिदेशिकमनित्यम् ।

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ।

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।

विधौ परिभाषोपतिष्ठते नानुवादे ।

उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।

अनन्त्यविकारेऽन्त्यसदेशस्य ।

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ।

प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ।

अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।
व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ।
विधिनियमसम्भवे विधिरेव ज्यायान् ।
सामान्यातिदेशे विशेषानतिदेशः ।
प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ।
सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।
श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् ।
लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।
गामादाग्रहणेष्वविशेषः ।
प्रत्येकं वाक्यपरिसमाप्तिः ।
क्वचित् समुदायेऽपि ।
अभेदका गुणाः ।
बाधकान्येव निपातनानि ।
पर्जन्यवल्लक्षणप्रवृत्तिः ।
निषेधाश्च बलीयांसः ।
अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ।
योगविभागादिष्टसिद्धिः ।
पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ।
ज्ञापकसिद्धं न सर्वत्र ।
पूर्वत्रासिद्धीयमद्वित्वे ।
एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ।
सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ।
क्वचिद्विकृतिः प्रकृतिं गृह्णाति ।
औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।
श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥
पदगौरवाद् योगविभागो गरीयान् ।
अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ।

॥ इति तृतीयं प्रकरणम् ॥

# विषयानुक्रमणिका

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| भूमिका (द्वितीयसंस्करणस्य) | १ |
| प्रास्ताविकम् (प्रथमसंस्करणस्य) | १–८ |
| उपोद्घातः (प्रथमसंस्करणस्य) | ९–१७ |
| आमुखम् (प्रथमसंस्करणस्य) | १९–४४ |
| आमुखस्थसंकेतशब्दानां परिचयः | ४५–४६ |
| परिभाषापाठः | ४७–५१ |
| अनुबन्धचतुष्टयनिरूपणम् (मङ्गलाचरणम्) | १ |
| शास्त्रत्वसम्पादनोद्देशप्रकरणम् | ४–१२७ |
| व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् | ५ |
| लण्सूत्रस्थभाष्येण परिभाषाज्ञापनम् (टी०) | ५ |
| यथोद्देशं संज्ञापरिभाषम् | ६ |
| कार्यकालं संज्ञापरिभाषम् | ६ |
| यथोद्देशपक्षनिरूपणम् | ७ |
| यथोद्देशकार्यकालपक्षयोर्विशेषप्रतिपादनम् | ८ |
| एकवाक्यताभेदाः | ९ |
| आकडारीयसंज्ञासु यथोद्देशपक्ष एव | १२ |
| कार्यकालव्याख्यानम् | १६ |
| यथोद्देशकार्यकालपक्षयोर्निष्कर्षः | १९ |
| अनेकान्ता अनुबन्धा इति | २० |
| एकान्ताः | २३ |
| नानुबन्धकृतमनेकाल्त्वम् | २५ |
| परिभाषाया ज्ञापनम् | २६ |
| नानुबन्धकृतमनेजन्तत्वम् | २८ |
| नानुबन्धकृतमसारूप्यम् | २९ |
| अभिधानियामकत्वम् | ३० |
| उभगतिरिह भवति | ३१ |
| सञ्ज्ञाशब्दानां नियमार्थत्वकथनम् | ३२ |
| कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते | ३३ |
| समवायिनिमित्तकारणयोरैक्यप्रतिपादनम् (टी०) | ३४ |

| | |
|---|---|
| परिभाषाध्वननप्रकारः (टी०) | ३५ |
| परिभाषावैयर्थ्यप्रतिपादनम् (टी०) | ३६ |
| यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते | ३८ |
| अत्रानित्यत्वे ज्ञापकम् | ४० |
| अस्या वर्णग्रहणेऽपि प्रवृत्तिः | ४३ |
| स्थानिवत्सूत्रेण नास्या गतार्थता | ४७ |
| निर्दिश्यमानस्यादेशा भवन्ति | ५० |
| वर्णग्रहणे जातिग्रहणपक्षः | ५२ |
| निर्दिश्यमानपदार्थः (टी०) | ५४ |
| इयम् 'येन विधिः' इति सूत्रस्थयदागमा इत्यस्य च बाधिका | ५५ |
| अलोऽन्त्यस्येत्यादौ न बाध्यबाधकभावः | ५६ |
| अकज्विषये त्वस्याः प्रवृत्तिः | ५८ |
| अवयवषष्ठीविषये त्वस्याः प्रवृत्तिः | ६० |
| यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः | ६१ |
| चतुर्विधान्तर्यनिरूपणम् | ६२ |
| अर्थवद्ग्रहणे नानर्थकस्य | ६४ |
| वर्णग्रहणे नास्याः प्रवृत्तिः | ६५ |
| गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः | ६६ |
| इयं प्रातिपदिककार्ये न प्रवर्तते, अपि तु विशिष्टरूपोपादानविषये | ६७ |
| भाष्योदाहरणैः गौणमुख्यत्वप्रतिपादनम् | ७० |
| लौकिकार्थवत्त्वे सत्येवास्याः प्रवृत्तिः | ७२ |
| अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन० | ७३ |
| एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः | ७६ |
| अस्या ज्ञापकत्वनिरसनम् | ७७ |
| क्वचिदेकदेशोऽप्यनुवर्तते | ७८ |
| समासेऽप्येकदेशानुवृत्तिः (टी०) | ७९ |
| भाव्यमानेन सवर्णानां ग्रहणं न | ८० |
| भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति | ८१ |
| उदुपधाया इत्यादौ नास्याः प्रवृत्तिः | ८२ |
| वर्णाश्रये नास्ति प्रत्ययलक्षणम् | ८४ |
| प्रत्ययस्येतराविशेषणत्वरूपव्याख्यानम् (टी०) | ८५ |
| उणादयोऽव्युत्पन्नानि प्रातिपदिकानि | ८७ |
| प्रत्ययग्रहणे यस्मात् स विहितः | ८९ |
| तदादिविशेष्यक एव तदन्तविधिः (टी०) | ९० |
| इयं च प्रत्ययग्रहणे एव | ९२ |
| प्रत्ययग्रहणे चापञ्चम्याः | ९३ |

ङ्याब्भ्य इत्यादौ नास्याः प्रवृत्तिः ९५
उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ९६
लेखग्रहणस्य ज्ञापकत्वसाधनम् ९७
स्त्रीप्रत्यये चानुपसर्जने न ९८
नात्र शास्त्रीयमुपसर्जनं गृह्यते ९९
स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेषग्रहणे चास्याः प्रवृत्तिः १००
संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति १०१
अस्या निष्फलत्वप्रतिपादनम् (टी०) १०२
कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् १०३
अभ्युद्धृतमित्यत्र स्वरक्रमः (टी०) १०३
पदाङ्गाधिकारे तस्य च तदन्तस्य च १०७
व्यपदेशिवदेकस्मिन् १०९
'हरिषु' इत्यत्र पदत्वाभावप्रयोजनकथनम् ११०
'हरिषु' इत्यत्र परिभाषाया अप्रवृत्तिः (टी०) ११०
दृष्टान्तैर्लोकन्यायसिद्धत्वमस्याः ११०
ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ११४
व्याख्याने मात्रग्रहणप्रयोजनम् (टी०) ११४
व्यपदेशिवद्भावोऽप्रातिपदिकेन ११६
इयं च प्रत्ययविधिविषया ११७
यस्मिन् विधिस्तदादावल्ग्रहणे ११८
सर्वो द्वन्द्वो विभाषयैकवद्भवति १२०
अद्भिर्विना ग्लायमानप्राणा एव प्राणिनः १२१
सर्वे विधयश्छन्दसि विकल्प्यन्ते १२२
प्रकृतिवदनुकरणं भवति १२२
एकदेशविकृतमनन्यवत् १२३
रामौ इत्यवतरणेऽरुचिः १२४
विकृतावयवनिबन्धनकार्ये नायं न्यायः १२४
अत्र ध्वननप्रकारः (टी०) १२५
अक्षपरिमाणग्रहणेऽपि नायम् १२६

बाधबीजनामकं द्वितीयं प्रकरणम् १२८–२४७
पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः १२८
पुनः प्रसङ्गविज्ञानात् सिद्धम् १२८
भिन्धि इत्यत्रेति अपपाठः (टी०) १२८
सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव १२९
शाधि इत्यत्र विप्रतिषेधप्रदर्शनम् (टी०) १२९

जातिव्यक्तिपक्षाश्रयेण परिभाषयोर्भेदखण्डनम् १३१
सरूपसूत्रस्थो जातिव्यक्तिपदार्थविचारः (टि०) १३१
विकरणेभ्यो नियमो बलीयान् १३४
धातोः प्रत्ययापेक्षया गुणत्वम् (टी०) १३५
परान्नित्यं बलवत् १३७
शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति १३८
शब्दान्तरात् प्राप्नुवतः शब्दान्तरे १३९
अस्या असाधारणं प्रयोजनं वरिष्यति (टी०) १३९
अस्य प्रयोजनस्यान्यथासिद्धत्वात् प्रयोजनान्तरम् (टी०) १३९
शब्दान्तरात् प्रसक्तस्यानित्यत्वम् (टी०) १३९
लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः १४०
क्वचित् कृताकृतप्रसङ्गमात्रेणापि नित्यता १४०
द्विविधः कृताकृतप्रसङ्गः (टी०) १४१
यस्य च लक्षणान्तरेण निमित्तं विहन्यते० १४१
यस्य च लक्षणान्तरेण निमित्तं विहन्यते० १४१
लोकन्यायेनोभयोर्व्यवस्थापनम् १४१
स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यो भवति १४२
परिभाषायाः फलं दध्युदकम् (टी०) १४२
निष्फलत्वमस्याः (टी०) १४३
असिद्धं बहिरङ्गमन्तरङ्गे १४३
नित्यादन्तरङ्गं बलीय इत्यस्योदाहरणं केशा इति (टी०) १४४
अन्तरङ्गबहिरङ्गव्याख्यानम् १४४
अनेकविधमन्तरङ्गत्वम् (टी०) १४५
अर्थनिमित्तकस्य न बहिरङ्गत्वम् १४६
अपरनिमित्तकत्वमन्तरङ्गत्वम् १४६
स्योन इत्यत्र संज्ञापेक्षस्यापि बहिरङ्गत्वम् १४७
जातबहिरङ्गस्य समकालप्राप्तबहिरङ्गस्यासिद्धत्वम् १५२
उभयोरुदाहरणे (टी०) १५२
इयं त्रिपाद्यां न प्रवर्तते, ऊठ्ग्रहणमत्र ज्ञापकम् १५४
कार्यकालपक्षेऽपीयं त्रिपाद्यां न प्रवर्तते १५६
अस्यां यथोद्देशपक्ष एव (टी०) १५७
कार्यकालपक्षे इयं त्रिपाद्यामपि प्रवर्तते १५८
नव्यमतप्रतिपादनम्, न प्रवर्तत इति १६०
समकालप्राप्तबहिरङ्गस्यासिद्धत्वज्ञापनम् १६०
पूर्वं धातुरुपसर्गेण युज्यते १६३
अत्र दोषः १६५

दोषोद्धारः (टी०) १६६
विशेषापेक्षं बहिरङ्गं सामान्यापेक्षमन्तरङ्गम् १६७
नात्र भाष्यप्रामाण्यं सम्भवति १६८
अन्तःकार्यत्वरूपान्तरङ्गत्वं लोकन्यायसिद्धत्वञ्चास्य १७१
पूर्वस्थानिकस्यान्तरङ्गत्वनिरसनम् १७३
उत्तरपदाधिकारस्थस्यापि बहिरङ्गस्यानयाऽसिद्धत्वम् १७३
आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य नासिद्धत्वम् १७४
न सिच्यन्तरङ्गमस्ति १७४
नाजानान्तर्ये बहिष्ट्वप्रक्लृप्तिः १७५
अधीत्येत्यत्र तुक्प्रतिपादनम् १७५
षत्वग्रहण न ज्ञापकम् १७७
परिभाषार्थः १७६
अस्या वैयर्थ्यप्रतिपादनम् १८०
अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते १८२
अपिग्रहणफलम् (टी०) १८२
अपिग्रहणं भाष्यानुक्तम् (टी०) १८३
परिभाषायां ज्ञापनम् १८४
विरोधे बाधकत्वं सत्यपि सम्भवे बाधनम् १८५
ज्ञापकान्तरम् १८६
अस्या विषयः १८७
पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न १९१
अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते १९१
वार्णादाङ्गं बलीयो भवति १९२
असवर्णग्रहणफलम् (टी०) १९२
परिभाषाभावे अभ्यासस्येति सूत्रवैयर्थ्यम् १९३
इयं चाङ्गवर्णयोः समानकार्यित्व एव १९८
गाते, चच्छौ इत्यादीनि फलानि (टी०) १९८
इयायेत्यत्र स्थानिवत्त्वाभावज्ञापनम् २००
ज्ञापके प्रतिबन्धकेति पदनिवेशफलम् (टी०) २०१
अकृतव्यूहाः पाणिनीयाः २०४
अत्र ज्ञापनं समर्थानामिति २०४
अपेक्षाबुद्धिपरिष्कारः (टी०) २०८
त्रिविधकर्मविचारः (टी०) २०८
स्वमते परिभाषाऽस्वीकारः २०९
विषुण इति प्रयोगविचारः (टी०) २१०
परिभाषाखण्डने युक्तयः २११

परिभाषासमर्थनम् (टी०) २१४
अन्तरङ्गादप्यपवादो बलवान् २१४
येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति २१५
परिभाषार्थकथनम् २१५
प्रवृत्तिस्थलानि विस्तरेण (टी०) २१५
परिभाषार्थपरिष्कार: २१६
तक्रकौण्डिन्यन्यायेन विषयभेदेऽपि अपवादप्रदर्शनम् २२१
क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते २२७
बाध्यविशेषपक्षो बाध्यसामान्यचिन्तापक्षश्च २३०
पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् २३१
मध्येऽपवादा: पूर्वान् विधीन् बाधन्ते, नोत्तरान् २३२
अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा २३२
पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा: २३४
प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते २३५
उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जात० २३६
अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते २३९
अभ्यासविकारेषु बाध्यबाधकभावो नास्ति २४०
'दीर्घोऽकित:' इति सूत्रेऽकिद्ग्रहणेन ज्ञापकत्वसाधनम् (टी०) २४०
ताच्छीलिकेषु वासरूपविधिर्नास्ति २४३
क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति २४४
लादेशेषु वासरूपविधिर्नास्ति २४५
उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् २४६

**शास्त्रशेषनामकं तृतीयं प्रकरणम्** २४८–३२६

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् २४८
कुमार: श्रमणादिभिरिति ज्ञापनस्य स्वीकार: (टी०) २४८
अस्या अप्रवृत्तिस्थलानि २४९
अनया च प्रत्ययविशिष्टे प्रातिपदिकत्वातिदेश: २५१
विभक्तौ लिङ्गविशिष्टाग्रहणम् २५२
सूत्रे लिङ्गवचनमतन्त्रम् २५२
अर्धं नपुंसकमिति ज्ञापनस्य समर्थनम् (टी०) २५३
नञिवयुक्तमन्यसदृशाधिकरणे० २५४
'गतिकारक' इत्यस्या अवतरणसमीक्षणम् (टी०) २५५
गतिकारकोपपदानां कृद्भि: सह समासवचनम्० २५६
कारकांशे इयं परिभाषा नास्ति २५८
साम्प्रतिकाभावे भूतपूर्वगति: २५९

| | |
|---|---|
| बहुव्रीहौ तद्गुणसंविज्ञानमपि | २६० |
| चानुकृष्टं नोत्तरत्र | २६१ |
| इयमनित्या भाष्यविरुद्धा च | २६२ |
| स्वरविधौ व्यञ्जनमविद्यमानवत् | २६३ |
| अनावश्यकी चेयम् | २६४ |
| उच्चैरुदात्त इत्यस्य भाष्यम् (टी०) | २६४ |
| हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् | २६५ |
| निरनुबन्धकग्रहणे न सानुबन्धकस्य | २६६ |
| तदनुबन्धकग्रहणे नातदनुबन्धकस्य | २६७ |
| वर्णग्रहणे चानयोरप्रवृत्तिः | २६८ |
| क्वचित् स्वार्थिकाः प्रकृतितो लिङ्ग० | २६९ |
| समासान्तविधिरनित्यः | २६९ |
| सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य | २७० |
| परिभाषार्थकथनम् | २७० |
| सन्निपातलक्षणविधित्वमस्या लिङ्गम् | २७२ |
| विविधैर्निर्देशैरनित्या चैषा | २७३ |
| सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः | २७५ |
| अस्या अनित्यत्वखण्डनम् | २७६ |
| ताच्छीलिके णेऽण्कृतानि भवन्ति | २७७ |
| धातोः कार्यमुच्यमानं तत्प्रत्यये भवति | २७८ |
| तन्मध्यपतितस्तद्ग्रहणेन गृह्यते | २७९ |
| लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य | २७९ |
| प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् | २८१ |
| अङ्गवृत्ते पुनर्वृत्तावविधिः | २८२ |
| संज्ञापूर्वकविधेरनित्यत्वम् | २८४ |
| आगमशास्त्रमनित्यम् | २८४ |
| गणकार्यमनित्यम् | २८५ |
| अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् | २८५ |
| नञ्घटितमनित्यम् | २८५ |
| आतिदेशिकमनित्यम् | २८६ |
| सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् | २८६ |
| प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् | २८७ |
| विधौ परिभाषोपतिष्ठते नानुवादे | २८८ |
| उपपदविभक्तेः कारकविभक्तिर्बलीयसी | २९० |
| अनन्त्यविकारेऽन्त्यसदेशस्य | २९० |
| नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे | २९४ |
| प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः | २९५ |

अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी २९६
व्यवस्थितविभाषयापि कार्याणि क्रियन्ते २९७
विधिनियमसम्भवे विधिरेव ज्यायान् २९७
सामान्यातिदेशे विशेषानतिदेशः २९७
प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् २९८
परिभाषायाः फलम् (टी०) २९९
सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ३००
श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् ३०२
लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ३०४
गामादाग्रहणेष्वविशेषः ३०६
प्रत्येकं वाक्यपरिसमाप्तिः ३०६
क्वचित् समुदायेऽपि ३०७
अभेदका गुणाः ३०८
जातिपक्षे नास्योपयोगः ३०८
भाव्यमानपदं भाव्यमानत्वाश्रयपरम् (टी०) ३०८
बाधकान्येव निपातनानि ३१०
पर्जन्यवल्लक्षणप्रवृत्तिः ३११
तल्लक्ष्यत्वम् (टी०) ३१२
निषेधाश्च बलीयांसः ३१३
अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ३१४
योगविभागादिष्टसिद्धिः ३१४
पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ३१५
ज्ञापकसिद्धं न सर्वत्र ३१५
पूर्वत्रासिद्धीयमद्वित्वे ३१६
एकस्या आकृतेश्चरितः प्रयोगो द्वितीय० ३१७
लोकन्यायसिद्धापीयम् (टी०) ३१७
सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ३१७
क्वचिद् विकृतिः प्रकृतिं गृह्णाति ३१८
औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ३१८
ध्वननप्रकारः (टी०) ३१९
श्तिपाशपानुबन्धेन निर्दिष्टं यद्० ३२०
पदगौरवाद् योगविभागो गरीयान् ३२४
अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ३२५
परिभाषानुक्रमणी ३२७–३२९


**परिशिष्टम्**


नागेश-व्याडि-पुरुषोत्तमदेव-सीरदेव-शेषाद्रि-नीलकण्ठ-प्रणीतासु परिभाषाव्याख्यासु समुपन्यस्तः परिभाषासंख्याक्रमः ३३१–३३६



सर्वतन्त्रस्वतन्त्राः पुण्यश्लोका म० म० श्रीशिवकुमारशास्त्रिचरणाः
जनुर्वैक्रमाब्दः १९०४, शिवसायुज्यवैक्रमाब्दः १९७५

* श्रीगणेशाय नमः *

श्री यागेश्वरशास्त्रिविरचितया

## हैमवतीटीकया संवलितः

# परिभाषेन्दुशेखरः

### १. अनुबन्धचतुष्टयनिरूपणम्

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥

---

श्रीविष्णु विधिनारदप्रभृतिभिः संसेविताङ्घ्रिद्वयं
काशीनाथगुरुं समस्तविदुषां धुर्यं सुधीनां वरम् ।
ध्यात्वा [1]टिप्पणकृत्प्रसारितमहामोहान्धकारं मया
सद्यस्तर्कमयूखराजिभिरपाकर्तुं पराक्रम्यते ॥ १ ॥

सन्ति येऽर्था महागूढाः परिभाषेन्दुशेखरे ।
उपासिता हैमवती प्रकटीकुरुतां हि तान् ॥ २ ॥

सभ्यान् प्रणम्य विहिताञ्जलिरस्मि भक्त्या
यागेश्वरोऽधिगतार्थसुशब्दशास्त्रः ।
सत्यं तथापि पुरुषोत्तमपादपद्म-
ध्यानेन लब्धसुमतिर्वितनोमि किञ्चित् ॥ ३ ॥

[2]विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निर्दिशति—**नत्वा साम्बं शिवं ब्रह्मेति ।** अम्बयति=उत्पादयती[3]त्यम्बा=जगत्कर्त्री, तया सहितः साम्बः, शेते जगद् यस्मिन्निति शिवः=जगल्लयाधि[4]करणः, साम्बश्चासौ शिवश्च [तं]साम्बशिवम्, बृंहते=वर्धयति प्रजामित्यन्तर्भावितण्यर्थाद् बृंहतेर्मनिनि

---

१. टिप्पणी—ख. पु. पाठः ।
२. विघ्नविघाताय... इत्यारभ्य निर्दिशतीत्यन्तं ख. पु. नास्ति ।
३. जगत् इति ख. पु. अधिकः पाठः ।
४. दि इति ख. पु. पाठः ।

ब्रह्म प्रजावर्धकमित्यर्थः। एतेन सृष्ट्यादिकर्तृत्वं ब्रह्मणः प्रतिपादितम्। **नागेश इति**। यद्यपि 'आत्मनाम गुरोर्नाम' इति निषेधात् स्वनामग्रहणं निषिद्धम्, तथापि सामान्यनिषेधस्य वैधनामग्रहणातिरिक्तविषयकत्वकल्पनान्न दोषः, यागीयहिंसाविधिना 'न हिंस्यात्' इति सामान्यनिषेधस्य वैधहिंसातिरिक्तविषयकत्वकल्पनावत्। विधिश्चास्य 'स्वनामग्रहणं कुर्वन्नभिवादयेत्' इति धर्मशास्त्रे प्रसिद्धः, 'प्रत्यभिवादेऽशूद्रे' (८. २. ८३) इति सूत्रस्य भाष्ये च[1]।

यत्तु 'आत्मनाम' इति निषेधो व्यावहारिकनाममात्रविषयः, इदं तु यौगिकं नाम—नाग ईशः=प्रवर्तको यस्येति, अत एव भगवान् **पतञ्जलिरपि** 'गोनर्दीय आह' इति तत्र तत्र यौगिकं नाम जग्राह इति नामान्तरेणाव्यवहारात्, व्यहारेऽप्येतन्नाम्न एव प्रसिद्धेश्च।

तथा चाभिवादनादौ व्यावहारिकनामकीर्तनं न दोषायेत्येव तत्त्वम्।

**यद्वा**—

श्राद्धे विवाहे संन्यासेऽप्यापत्कालादिषु क्वचित्।
स्वनामग्रहणं कुर्वन् श्रेयस्कामोऽप्यदोषभाग्॥

इति तदपवादकस्मृतावादिपदेन ग्रन्थारम्भसन्ध्यावन्दनप्रोषिताभिवादनेषु नामग्रहणस्य ग्रहणान्न दोषः।

वस्तुतो नामोच्चारण एव दोषः, न तु लेखन इत्यैव परमार्थः।

कुरुत इति। यशोरूपस्य स्फूर्तिरूपस्य वा फलस्य कर्तृगामित्वात्तङ्। ननु यशोरूपस्य कर्तृगामित्वेऽपि सुखबोधरूपफलस्य परगामित्वात् परत्वात् परस्मैपदेन बाधात् कथं तङिति चेत्? 'गन्धनावक्षेपण···( १। ३। ३२ ) इति स[प्र]कथने[2] कृञस्तङो विशिष्य विधानात्तङित्यवेहि।

**केचित्तु**, न मया स्वार्थं ग्रन्थः क्रियते, किन्त्वात्मबोधार्थमित्यहङ्कृतिनिरासरूपफलस्यात्मगामित्वात् तङ्। **सुखबोधायेति** तु "घटायोन्मीलितं चक्षुः"[3] इति न्यायेनान्धकारे स्वार्थं नीयमानो दीपः परप्रकाशश्चेत् को वारयितेत्याशयेनोक्तमित्याहुः।

वस्तुतो यथा "ऋत्विजो यजन्ति" इत्यादौ दक्षिणारूपफलस्यात्मगामित्वेऽपि मुख्ययजनजन्यफलस्य स्वर्गरूपस्य यजमाननिष्ठत्वेन परस्मैपदम्, तथा सुखरूपपरोपकृतिजन्यस्वर्गरूपफलस्य यशोरूपफलस्य वाऽऽत्मगामित्वादात्मनेपदमेव युक्तमिति परे।

**सुधीरिति**। अनेन ग्रन्थकरणे स्वेष्टदेवतानुग्रहात् स्वस्य सामर्थ्यमस्तीति

---

१. तद्भाष्यस्य कैयटे इत्यर्थः। एवं हि तत्रत्यः कैयटः—'नामगोत्रशब्दमन्तरेण प्रत्यभिवादो नास्तीति समाचारे भोःशब्दस्यासाधुत्वे प्राप्ते वचनम्'।

२. उपयोगेऽपि तङ् विधातुं शक्यते।

३. अस्य 'पटं न पश्यतीति न' इति शेषो बोध्यः।

**प्राचीनवैयाकरणतन्त्रे वाचनिकानि, अत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्त्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि, तानि व्याख्यायन्ते ।**

---

सूचितम् । बालानामिति । भाष्यादितः परिभाषार्थनिर्णयासमर्थानामित्यर्थः । आयासेन भाष्यादितोऽपि बोधसम्भवात् । परिभाषेन्द्विति । इन्दुरिव परिभाषा परिभाषेन्दुः, स शेखरो भूषणं यस्य तम् 'उपमितं व्याघ्रादिभिः' ( २।१।५६ ) इति समासः । यथा स्वयं लघुरपीन्दुः सर्वं जगत् प्रकाशयति, तथा लघीयस्योऽपि ताः सर्वंशास्त्रं प्रकाशयन्तीति भावः । अत्र परिभाषाणां व्याख्येयत्वात् प्रधानत्वाद् भूषणमित्यवधेयम् ।

ननु कास्ताः परिभाषा इत्यत आह—**प्राचीनेत्यादिना** । प्राचीनवैयाकरणाः=इन्द्रादयः, तेषां तन्त्रे=शास्त्रे, वचनरूपेण=सूत्ररूपेण पठितानि[1] अत्र= पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि यानि परिभाषारूपाणि, तानि व्याख्यायन्त इत्यन्वयः । तानि च चतुर्विधानि—ज्ञापकसिद्धानि, न्यायसिद्धानि, उभयसिद्धानीति, वचनसिद्धानि तत्र ज्ञापकसिद्धानि–'नानुबन्धकृतमनेकाल्त्वम्' इत्यादीनि, न्यायसिद्धानि–'यथोद्देशं संज्ञापरिभाषम्' इत्यादीनि, उभयसिद्धानि–'अकृतव्यूहाः', 'सन्निपातलक्षणो विधिः' इत्येवमादीनि, वचनसिद्धानि–'स्त्रीप्रत्यये चानुपसर्जने न' इत्यादीनि । अत्र ज्ञापकन्यायसिद्धानीत्युक्त्या सूत्रपाठस्थपरिभाषाणामत्राव्याख्यानमिति सूचितम् । तत्र न्यायस्य लौकिकत्वेन तदपेक्षया ज्ञापकस्य शास्त्रीयत्वेनाभ्यर्हितत्वात् तत्प्रतिपादकपदस्यैव पूर्वनिपातः । न्यायश्चैतच्छास्त्रप्रसिद्धा युक्तिः, यथा–नित्यस्य बलवत्त्वे प्रदर्शिता लाघवरूपा । अपि च लोकतन्त्रान्तरप्रसिद्धा युक्तिः । एताभ्यां सिद्धानीत्यर्थः ।

तत्र ज्ञापकन्यायसिद्धानीत्यन्तैका कोटिः । तेन भाष्यवार्त्तिकयोरनुपनिबद्धानां वाचनिकानामपि ज्ञापकसिद्धानाम् 'अकृतव्यूहा पाणिनीयाः' इत्येवमादीनां संग्रहः ।

तत्र भाष्यवार्त्तिकयोरुपनिबद्धानीति द्वितीया कोटिः । तेन ज्ञापकन्यायसिद्धानामपि भाष्यवार्त्तिकयोरुपनिबद्धानां वाचनिकानाम् 'स्त्रीप्रत्यये चानुपसर्जने न' इत्येवमादीनां संग्रह इति **केचित्** ।

**परे** तु प्राचीनवैयाकरणतन्त्रे वाचनिकानीत्यस्य भाष्यवार्तिकयोः (इति) विशेषणम्, पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानीत्यस्यापि तद्विशेषणमावृत्त्या । तथा च यानि परिभाषारूपाणि प्राचीनवैयाकरणतन्त्रे वाचनिकानि तानि भाष्यवार्त्तिकयोरुपनिबद्धानि पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि च भाष्यवार्त्तिकयोरुपनिबद्धानि । अत्र=व्याख्यास्यमानग्रन्थे, व्याख्यायन्ते इत्यर्थः ।

---

१. वाचनिकानीत्यस्य व्याख्यानं वचनरूपेण पठितानीति, वचनशब्दाद् विनयादित्वात् स्वार्थे ठक्प्रत्ययविधानात् ।

## २. शास्त्रत्वसम्पादनोद्देशप्रकरणम्

ननु 'लण्', 'अइउण्' सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयोऽत आह—

प्राचीनेत्यस्य भाष्येत्यस्य विशेषणत्वेन 'यस्मिन् विधिः' इत्यादिवाचनिकानां संग्रहः। भाष्यवार्त्तिकाननुमतानाम् 'सर्वविधिभ्यो लोपविधिः' इत्यादीनामत्र व्याख्यानं सूचितम्। उपनिबद्धानीत्यस्यानुमितानीत्यर्थः। तेन तत्र ध्वनितानां परिभाषाणाम् 'लुग्विकरणम्' इत्यादीनां संग्रह इत्याहुः।

**परिभाषेति**। संज्ञाशास्त्रान्यत्वे सति विध्यपेक्षितार्थविधायकत्वं परिभाषात्वम्। 'संज्ञा च परिभाषा च' इत्यभियुक्तोक्तावतिदेशस्य पृथगुपादानं गोवलीवर्दन्यायेनेत्येके। 'परितो व्यापृतां भाषां परिभाषां प्रचक्षते' इति कारिकायां लिङ्गवत्त्वे सति फलवत्त्वे सति फलवत्त्वं परिभाषात्वमित्यपरे। **व्याख्यायन्त** इति। पूर्वं सामान्यतः प्रतिज्ञातेऽपि विशेषरूपेणेयं प्रति (ज्ञेति) बोध्यम्।

### इत्यनुबन्धचतुष्टयनिरूपणम् ॥ १ ॥

तत्र परिभाषाणां ज्ञापकसिद्धत्वेन ज्ञापकस्य व्याख्यानगम्यत्वेन व्याख्यानस्यैतत्सकलशास्त्रोपकारकत्वेन सर्वशास्त्रमूलभूतचतुर्दशसूत्रान्तर्गतलण् ण उतरणि [ अइउण् इ ] ति सूत्रस्यानुबन्धमूलकत्वेन च तां प्रथमं वक्तुमुपक्रमते—नन्वित्यादिना। **अणिण्ग्रहणेष्विति**। अण् [इति]। अकारादयः, इणितीकारादयः, ते गृह्यन्ते यैः पदैराम्नातेषु 'केऽणः' (७।४।१३), 'इण्कोः' (८।३।३३) इत्यादिसूत्रस्थाणिण्पदेष्विति यावत्। **सन्देहादिति**। अणादिपदस्यानेकार्थत्वेन हर्यादिपदवत् तात्पर्यसन्देहादित्यर्थः।

ननु[1] 'कपिञ्जलाधिकरण'न्यायेन पूर्वेणैव ग्रहणे सन्देहः कोऽसाविति चेत्, 'णिजां त्रयाणाम्' (७।४।७५) इति सूत्रे 'त्रयाणाम्' ग्रहणसामर्थ्यादत्र शास्त्रे तस्यानाश्रयणात्। **अनिर्णय** इति। नाथनिर्णय इत्यर्थः। **अन्यतरादीति** बहुसन्देहेऽन्यतमस्यादिना परामर्शः। वस्तुतः परिभाषाघटकविशेषस्येत्यस्यैका कोटिरित्यर्थ उचितः। **व्याख्यानादिति**।

---

१. अष्टमेऽधिकरणे—

कपिञ्जलेषु त्रित्वाद्याः पाक्षिकास्त्रित्वमेव वा।
आद्यो बहुत्वसाम्यान्न त्रित्वेनेव कृतत्वतः॥

अयं भावः—अश्वमेधे 'वसन्ताय कपिञ्जलानालभेत' इति त्रित्वचतुष्ट्वादिसंख्यानां बहुत्वसाम्यादिच्छया या काचिद् बहुत्वसंख्या स्वीकार्या इति चेत् न त्रित्वेनैव शास्त्रस्य कृतत्वात्। यो हि चतुष्ट्वादि संख्यामुपादत्ते, तेन न तदन्तर्भूतं त्रित्वं वर्जयितुं शक्यम्, त्रित्वमुपपादनेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं शक्यते। अतोऽवश्यम्भावित्वेन प्रथमभावित्वेन लाघवेन च त्रित्वे उपात्ते शास्त्रार्थसिद्धौ ततोऽधिकपक्षिहिंसायां प्रत्यवायात्। तस्मात् त्रित्वमेवोपादेयम्।

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ॥ १ ॥**

**विशेषस्य=अन्यतराद्यर्थरूपस्य, व्याख्यानात्=शिष्टकृतात् प्रतिपत्तिः= निश्चयः, हि=यतः सन्देहाच्छास्त्रमलक्षणम्=अननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असन्दिग्धानुष्ठानसिद्धयर्थेऽत्र शास्त्रे सन्दिग्धोच्चारणरूपाचार्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तान-पेक्षत्वं बोध्यत इति यावत्। तेन 'अणुदित्सवर्णस्य' इत्येतत्परिहाराय पूर्वेणा-ण्ग्रहणं परेणेण्ग्रहणमिति 'लण्' सूत्रे भाष्ये स्पष्टम् ॥ १ ॥**

**तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—**

---

पदच्छेदः पदार्थोक्तिर्विग्रहो वास्य[ क्य ]योजना।
आक्षेपोऽथ समाधानं व्याख्यानं षड्विध मतम् ॥

इत्यभियुक्तोपदेशपरम्परारूपागमादित्यर्थः। अत्र समाधानेन ज्ञापकादीनां संग्रहो बोध्यः। ननु तत्त्वमस्यादावप्यतिप्रसक्तमत आह—**शिष्टेति**। भाष्य-कारादित्यर्थः। **औचित्यादिति**। अन्यथा शास्त्रानर्थ [ क्य ] स्यापत्तिरिति भावः। परिभाषायां ज्ञापकमाह—**असन्दिग्धेति। व्याख्यानातिरिक्तेति**। न च नञ्द्वयोपादानं व्यर्थम्, व्याख्याननिमित्तापेक्षत्वमित्येवास्त्विति वा[च]यम्, 'हृदयस्य हृल्लेख' (६।३।५०) इत्यादौ लेखेति घञन्तग्रहणेनापि लेखग्रहण-सार्थक्यात्तस्यैव ग्रहणं स्यात्। परिभाषायां ज्ञापकता तु न स्यात्। तस्मात् व्याख्यानस्य निमित्तत्वेऽपि घञन्तग्रहणरूपस्यातिरिक्तार्थस्य परिभाषया व्यावर्तनासम्भवात्। अतः—**अतिरिक्तेत्युक्तम्**। भाष्यकारव्याख्यानेनैव निर्णयः, न तु सूत्रकारीयतात्पर्यसममन्यादृशं निवर्चनीयमित्यस्य योऽर्थः, स एवार्थः। अन्यथा व्याख्यानतो विशेषनिर्णयस्य सकलशास्त्रप्रसिद्धत्वात् परिभाषाया वैयर्थ्यं स्पष्टमेव।

ननु ज्ञापिताया [मपि] प्रवर्तकतया निवर्तकतया वा नास्य चारितार्थ्य-मत आह– **बोध्यत** इति। तथा चोपदेशपरम्परया सिद्ध एवायमर्थस्तादृशव्यव-हारेण बोध्यत इति नान्यत्रेव ज्ञापकता भगवतोऽभिमतेति भावः। **लण्सूत्रे भाष्ये** इति। तत्राण्ग्रहणानि तावत् पञ्च—'उरण् रपरः' (१।१।५१), 'अणुदित्०' (१।१।६१), 'ढ्लोपे०' (६।३।१११), 'केऽणः' (७।४।१३), 'अणोऽप्रगृह्यस्य०' (८।४।५७) इति। तत्र 'उरण् रपरः' इत्यत्र पूर्वेण अण्ग्रहणं मातृणामित्यादौ 'नामि' [६।४।३] इति दीर्घस्य रपरत्वार्थं तदिति चेत्, 'उरच्' इत्यज्ग्रहणमेव कुर्यादिति भाष्याद् गम्लेत्यादीनामनभिधानमेव। 'अणुदित्' इत्यत्र तु परेणैव, 'उर्ऋत्' (७।४।७) इति सूत्रे तपरकरणात्। तद्धि 'कृत संशब्दने' इत्यस्माच्चु-रादिण्यन्ताल्लुङि, चङि, 'अचीकृतत्' इत्यत्र दीर्घऋकारस्य स्थाने ह्रस्व एव यथा स्यादित्येवमर्थम्। तत्र यदि[?]पूर्वेण ग्रहणे तु ऋकारस्यानण्त्वाद् ग्राहक-

**यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥**

**कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥**

**उद्देशमनतिक्रम्य यथोद्देशम् उद्देशः=उपदेशदेशः। अधिकरणसाधनश्चायम्। यत्र देश उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः।**

---

शास्त्राप्रवृत्त्या दीर्घादिग्रंहणेन तपरकरणवैयर्थ्यं स्पष्टमेव। न च तपरसूत्रेण लृकारग्रहणार्थं तदिति वाच्यम्, स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने तस्य वारणेन तद्ग्रहणे फलाभावात्। न चैवं ज्ञापितेऽपि भाव्यमानत्वात् सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम्, तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेनाविधेयत्वात्। कृते तु तपरत्वे भाव्यमानतापीत्यन्यदेतत्। '[ढ्रू] लोपे' (६।३।१११) इत्यत्र 'अचश्च' इत्येव सिद्धमित्यण्ग्रहणसामर्थ्यात् पूर्वेण। 'केऽणः' इत्यत्र ह्रस्वश्रुत्योपस्थिततस्य 'अचश्च' इत्यस्य बाधाय पूर्वेणैव। अण्भिन्नानामप्यचां ह्रस्वार्थं परेण चेत् 'के' इत्येव ब्रूयात्। 'अणोऽप्रगृह्यस्य' इत्यत्रापि पूर्वेणैव, 'न[1] पदान्ताः परेऽणः सन्ति' इति भाष्यात् परेणासम्भवात्। ननु चायमस्ति—कर्तृ, हर्तृ इति, तथा सति 'अचोऽप्रगृह्यस्य' इत्येव ब्रूयात्। यद्वा—'अप्रगृह्यस्याननुनासिकः' इत्येव ब्रूयात्, पर्युदासादेवेष्टसिद्धेः। 'अचोऽप्रगृह्यस्य' इति भाष्योक्त्या प्रसज्यप्रतिषेधे 'गमुल्, शकुल्' इत्यादेरनभिधानमेव।

इण् तु परेणैव, 'अचि श्नुधातु०' (६।४।७७) इति सूत्रे 'य्वोः'इति गुरुनिर्देशात्। अन्यथेण इत्येव वदेदित्युक्तमिति दिक्॥ १॥

संज्ञापरिभाषाणां सर्वशास्त्रोक्तत्वादादौ तत्करणोल्लेखवत्तद्विषयिणीं परिभाषामादौ वक्तुं पूर्वसंगतिमाह—तत्रेति। शास्त्रे[2] इत्यर्थः। पाणिनितन्त्रे[3] इति यावत्। अलक्षणमित्यनेन तस्य पूर्वमुपस्थितत्वादिति भावः। ननु तत्रेति पदमधिकमिति चेत्, न, तत्पदाभावे एतद्ग्रन्थीयव्याख्यास्यमानपरिभाषाविषये एव पक्षद्वयमिति सम्भाव्येत, न तु 'तस्मिन्निति' इत्यादौ। तद्वारणार्थं पाणिनीयशास्त्रे पक्षद्वयमिति बोधनार्थं तत्पदं सार्थकं स्यात्। अथवा संज्ञापरिभाषाविषये पक्षद्वयमित्यनेन संज्ञापरिभाषात्वावच्छेदेन पक्षद्वमम्, किन्तु शास्त्रे एतत्पक्षद्वयस्याश्रयणम्। तत्र कुत्रचिदेकः पक्षः, कुत्रचिदुभयमिति बोधनार्थं तत्पदमिति ज्ञेयम्।

---

१. 'न हि' इति निर्णयसागरपाठः।

२. 'पाणिनीयशास्त्रे' इति ख. पुस्तके पाठः।

३. ख. पुस्तके नास्ति।

**देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते 'भविष्यति किञ्चिदनेन प्रयोजनम्' इति ज्ञानमात्रेण सन्तुष्यद्यथाश्रुतग्राहि-प्रतिपत्त्रपेक्षोऽयं पक्ष इतीदूत्सूत्रे कैयटः।**

---

**संज्ञापरिभाषेति**। इतरेतरद्वन्द्वः। ननु 'जातिरप्राणिनाम्' (२।४।६) इति नियमात् कथमितरेतरयोग इति चेत्, न, जातिप्राधान्य एव तत्प्रवृत्तेः, इह तु व्यक्तिप्राधान्यात् 'चार्थे द्वन्द्वः' (२।२।२९) इत्युभयं भवतीति बोध्यम्। विषय इति। एतत्पक्षद्वयस्याश्रयणं यस्मिन् तस्मिन्नित्यर्थः। **संज्ञापरिभाषमिति** समाहारद्वन्द्वः। **अनतिक्रम्येति**। अत्यक्त्वेत्यर्थः, ल्यबन्तत्वाद्वर्तते इति शेषः[1]। प्रत्यक्षमाख्यानमुपदेशः,गुणैः प्रापणमुद्देशः–इत्युद्देश-उपदेशयोरन्यत्र क्वचिद्भेदेऽपि 'उद्दिष्टो मे गौः, उद्दिष्टो मेऽनुवाकः' इत्यादौ साङ्कर्यदर्शनादाह–**उद्देश** इति। उद्देशपदं न भावप्रत्ययान्तमिति सूचयितुमाह –**देश** इति। तर्हि कस्मिन्नर्थे घञ्? इत्यत आह—**अधिकरणसाधन** इति। अधिकरणं साधनं यस्येत्यर्थः। यद्यप्युच्चारणस्य शब्दरूपतया तदधिकरणं गगनं सुप्रसिद्धम्; तथापि तस्यात्रौपाधिकभेदाभावेन पूर्वापरव्यवहारनियामकत्वाभावादिहाधिकरणं स्वोच्चारणकाल एव विवक्षितः। तथा चोपदेश एवात्रोद्दिशेरर्थः। **अयमिति**। उद्देशशब्दः। ननु देशानतिक्रमे विध्युपकाराभावप्रसक्त्या[2] कार्यानिर्वाहः, अत आह — **यत्रेति**। एवेन विधिदेशव्यावृत्तिः। **वाक्यार्थबोधेनेति**। अस्य 'गृहीतशक्त्या, गृहीतपरिभाषार्थेन च' इत्युभयत्रान्वयः। संज्ञास्थले आह—**गृहीतशक्त्येति**। अत्र कर्मधारयसमासः। "वृद्धिरादैच्" (१।१।१) इत्यादौ वृद्धिपदस्यादैचा सह तादात्म्यदर्शनात् वृद्धिपदस्यादैज्रूपोऽर्थः। यतो वृद्धिपदस्यादैज्रूपोऽर्थः, अतस्तत्र शक्तिर्गृह्यते—**वृद्धिपदमादैक्षु शक्तमिति**। तत्स्मरणेनेत्यर्थः। परिभाषास्थले आह—**गृहीतपरिभाषार्थेनेति**। अत्रापि कर्मधारय एव। वाक्यार्थबोधेनेत्यत्रापि सम्बध्यते। परिभाषाशास्त्रस्य वाक्यार्थबोधोत्तरं सप्तमीनिर्देशादिलिङ्गेन "इको यणचि" (६।१।७७) इत्यादौ स्मरणं कृत्वा पुनः स्मरणपूर्वकः परिभाषार्थो गृह्यते। स एवागृहीतपरिभाषार्थः, तेनेत्यर्थः। **सर्वत्रेति**। अष्टाध्याय्यामित्यर्थः।

ननु कोऽसौ देशः, यत्र वाक्यार्थबोधः; प्रसिद्धदेशस्त्वत्र न सम्भवतीत्यत आह—**देशश्चोच्चारणेति**। चस्त्वर्थे। देशशब्देनाष्टाध्याय्या भागविशेषो गृह्यते, न तु कुरुपाञ्चालादिः। तेनाष्टाध्याय्यां यतः पूर्वं पाणिनिना यदुच्चारितं तत्पूर्वकाल एव तद्वाक्यार्थ इत्यर्थः। नन्विदानीं विधिवाक्यार्थाभावेन फलाभावात् संज्ञापरिभाषयोरपि वाक्यार्थाभावप्रसक्त्यैतत्पक्षासंगतिरत आह—**तदिति**। संज्ञापरिभाषार्थेत्यर्थः। **अनेनेति**। संज्ञासु शक्तिग्रहेण परिभाषासु

---

१. 'एवञ्च क्त्वोपपन्नः' पाठः ख. पुस्तके।
२. 'विध्युपकारकत्वाप्रसक्त्या' इति ख. पुस्तके पाठः।

**केचित्तु परिभाषाविषये तस्मिन्नित्यादिवाक्यार्थबोधे सप्तमीनिर्देशादिकवेति पर्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः। कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः।**

---

तदर्थंग्रहणेनेत्यर्थः। **ज्ञानमात्रेणेति**। मात्रपदेन विशेषज्ञानव्यावृत्तिः। सामान्यज्ञानेनैव सन्तोषो न त्वत्र पक्षे विशेषज्ञानजिज्ञासेति भावः। **यथाश्रुतेत्यादि**। यथाश्रुतग्राही=यथाश्रुतं गृह्णाति, स चासौ प्रतिपत्ता च यथाश्रुतग्राहिप्रतिपत्ता च; सन्तुष्यंश्चासौ यथाश्रुतग्राहिप्रतिपत्ता च सन्तुष्यद्यथाश्रुतग्राहिप्रतिपत्ता। एवं तस्य प्रतिपत्तुरपेक्षा यस्मिन् पक्षे स सन्तुष्यद्यथाश्रुतग्राहिप्रतिपत्रपेक्ष इति। यथाश्रुतग्राही=मन्दाधिकारी, प्रतिपत्ता=निश्चयवान्। **ईदूत्सूत्र** इति। तत्र हि—तपरकरणेनाग्नी३ इत्यत्र कार्यकालपक्षे "अणोऽप्रगृह्यस्य" (८।४।५७) इत्यत्र "ईदूदेत्" इत्यस्योपस्थितौ तद्दृष्टचा प्लुतस्य सिद्धतया ईकारस्य त्रिमात्रिकत्वेनाल्विधित्वेन स्थानिवत्त्वाभावाच्च प्रगृह्यसंज्ञाया अप्रवृत्त्याऽनुनासिकत्वापत्तिमाशङ्क्य यथोद्देशपक्षमाश्रित्य प्रगृह्यसंज्ञां प्रति प्लुतस्यासिद्धत्वाद् जातस्यापि प्लुतस्यासिद्धत्वेन पुनः संज्ञायां नानुनासिकत्वम्। संज्ञाप्रवृत्तौ कार्यस्यैव नियामकत्वाद् यदा यदा कार्यं तदा तदा तत्प्रवृत्त्यभ्युपगमाल्लक्ष्ये लक्षणमिति न्यायस्य "समः सुटि" (८।६।५) इति ज्ञापकसिद्धस्य धर्मिग्राहकमानेन संज्ञातिरिक्तविषयत्वाच्चेत्याशयकमुक्तम्। तथा चैतन्मते यथोद्देशे संज्ञापरिभाषयोः स्वदेशे लक्ष्यसंस्कारकवाक्यस्यार्थबोधः; तदुत्तरं विधिप्रदेशे शक्यार्थयोः स्मरणेन लक्ष्यसंस्कारः, कार्यकाले तु विनैव स्वदेशे वाक्यार्थं तत्र तत्र विधिप्रदेशे एतदुपस्थितपदैकवाक्यतया लक्ष्यसंस्कारको वाक्यार्थबोध इति फलितम्[1]।

उत्तमाधिकारिणो विशेषजिज्ञासायां यथोद्देशपक्षेऽपि परिभाषाविषये किञ्चिद् विशेषं वक्तुमुपक्रमते—**केचित्त्विति**। भाष्यतत्त्वविद इत्यर्थः। **परिभाषाविषय** इति। संज्ञाविषये यथोद्देशे प्राचीननव्यमतयोः समत्वमेवेति भावः। **बोधे** इति। जाते सतीति शेषः। **सकलतत्तद्विधीति**। सकलसप्तम्यन्तपदघटितविधिशास्त्रोपस्थितावित्यर्थः। **संस्कारायेति**। सप्तम्यन्तादिपदघटितविधिशास्त्रनिश्चयात्मकवाक्यार्थबोधायेत्यर्थः। संस्कारः=निश्चयात्मकवाक्यार्थबोधः। स चोपकारकसहकारेणैव भवतीति कदाचिदुपकार्यस्योपकारकदेशसन्निधानेन, कदाचिदुपकारकस्यैवोपकार्यदेशसन्निधानेन साधनीय इति पक्षद्वयेऽपि संस्कार उचित इति बोध्यम्।

---

१. 'वाक्यार्थबोधे जातेऽपेक्षाबुद्धचा विधिप्रदेशे'''जातेऽपि स्वदेशे वाक्यार्थबोधे उपेक्षाबुद्धचा तत्संस्काराभावेन पुनर्विधिदेशे तदुपस्थिते तत्र पुनर्वाक्यार्थबोधो लक्ष्यसंस्कारकः। एवञ्चापेक्षाबुद्ध्युपेक्षाबुद्धी यथोद्देशकार्यकालपक्षौ' पाठः कुत्रचित्।

**एतदेवाभिप्रेत्य 'अधिकारो नाम त्रिप्रकारकः—'कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति' इति 'षष्ठीस्थाने' इति सूत्रे भाष्ये उक्तम् ।**

---

यद्वा, संस्कारः=लक्ष्यसंस्कारः । स च तत्तद्विधिसम्बन्धिपरिभाषाभिः सहैकवाक्यत्वे एव सम्भवति । केवलं वाक्यार्थस्योपस्थितिसम्पादनेन कृतार्थस्य लक्ष्यासंस्कारत्वमेव । **तत्तत्संस्कारायेत्यस्य** तत्तत्सप्तम्यन्तादिपदघटितविधिसम्बन्धिलक्ष्यसंस्कारायेत्यर्थः । एवञ्च संस्कारशब्दस्यापूर्वार्थकतेति बोध्यम् । गुणभेदम्=अप्रधानभेदम्, परिभाषाभेदमित्यर्थः । आवृत्त्या परिभाषायां भेदं प्रकल्प्येति यावत् । **एकवाक्यतयैवेति** । पदैकवाक्यतयैवेत्यर्थः । नियमः=अनिष्टव्यावृत्तिः ।

ननु यथोद्देशेऽपि पदैकवाक्यतायां को भेदः कार्यकालपक्षात्; न चैकत्र स्वदेशे एकवाक्यता, परत्र विधिदेश इति भेद इति वाच्यम्; फलभेदाभावात् तस्याकिञ्चित्करत्वात्? अत आह—**कार्यकालपक्षे तु त्रिपाद्यामपीति** । त्रैपादिकेन विधिना स्वसंस्काराय परिभाषोपस्थानात् । अदृश्यपिशाचेनाकर्षणवदिति कश्चित् । त्रिपादीस्थशास्त्राणां निश्चितवाक्यार्थाभावे शास्त्रत्वासम्पत्त्या तेषां तद्दृष्टयाऽसिद्धत्वाप्रसक्तेस्तदुपस्थितिरिति भाव इत्यन्ये । अपिः सपादसप्ताध्यायीसमुच्चायकः । तथा च कार्यकालपक्षे सर्वैरेकवाक्यता, यथोद्देशे तु त्रिपादीभिन्नैरेवेति भेदः । वाक्यार्थबोधस्तु स्वदेशे उभयथाऽप्यस्त्येवेति भावः । तथा च सपादसप्ताध्याय्यां पक्षद्वयेऽपीष्टसिद्धिः, त्रिपाद्यां तु कार्यकाल एवेति बोध्यम् । गृहीतपरिभाषार्थेन तु न निर्वाहः । वक्ष्यमाणेन "पूर्वत्रासिद्धम्" ( ८।२।१ ) इति सूत्रस्य भाष्येण विरोधात् । तथा च परिभाषाणां पदैकवाक्यतयैवेष्टसाधकत्वमिति ध्वनितम् । संज्ञाविषये तत्र सूत्रे भाष्ये सन्देहस्याकरणात् तत्र जातशक्तिग्रहेणेष्टसिद्ध्यभ्युपगमाद् वाक्यैकवाक्यतैवेति विवेक इति दिक् ।

परिभाषाणां पक्षद्वयेऽपि पदैकवाक्यत्वे उपष्टम्भकमभिदधाति—**एतदेवेति** । पक्षद्वयेऽपि पदैकवाक्यतयैव नियम इत्येतदेवेत्यर्थः । नामशब्दो निश्चयार्थः । **त्रिप्रकारक इति** । यत्रैकस्तु मूल एव 'कश्चिदेकदेशस्थः' इत्यादिनोक्तः; अपरः 'यथा रज्ज्वा अयवा वा बद्धं काष्ठमनुकृष्यते जनैस्तद्वदनुकृष्यते चकारेण'; 'योगे योगे उपतिष्ठते' इति तृतीयः । परिभाषाशास्त्रं स्वविषयकबुद्ध्युपस्थित्या सर्वशास्त्रोपकारकमिति 'कश्चिदेकदेशस्थः' इति भाष्यस्य तात्पर्यमित्यर्थः ।

ननु व्यवहर्तॄणामिति न्यायेनेदं कार्यकालसम्बन्ध्येव कुतो नेत्याह—**एतच्चेति** । उक्तरीत्या यथोद्देशेऽपि पदैकवाक्यतासम्भवो विनिगमनाविरहात् । तदाह—**पक्षद्वयेऽपीति** । प्रदेशः=विधिशास्त्रम्, इतः=अस्मात् भाष्यात् । सर्वशास्त्राभिज्वलनञ्च एकवाक्यतया संस्कारकत्वमिति भावः । चिन्त्यमिदम्,

अधिकारशब्देन पारार्थ्यात् परिभाषाऽप्युच्यते । कश्चित परिभाषारूप इति कैयटः । दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशकः, एवमेतत् स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम् ।

एतच्च पक्षद्वयसाधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः ।

तत्रैतावान् विशेषः—यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्, तदुक्तं 'क्ङिति च' इति सूत्रे कैयटे—'यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते' इति ।

कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति । अत्र 'एकदेशस्थः' इत्यनेन तत्र तत्र तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति, यथा व्प्रवहर्तृणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः; किन्त्वभिजनदेशीयत्वव्यवहार एव, तद्वत् ।

---

संस्कारमात्रस्यैव ज्वलनशब्दार्थत्वे बाधकाभावेनैकवाक्यतेति निवेशे मानाभावात्, स्वदेशे गृहीतवाक्यार्थबोधस्य तत्र विधौ स्मृतिमात्रेण तत्तत्संस्काराभिप्रायेणैव एकदेशस्य इत्युक्तेरुपपत्तेश्च । नहि तत्रापि कार्यकालपक्षे परिभाषाणां स्वदेशे वाक्यार्थाभावः; बाधकाभावात्, गुणेन प्रधानाकर्षणायुक्तत्वाच्च । तस्मात् कार्यकाल इव यथोद्देशेऽपि स्वदेशे विध्येकवाक्यतां विनैव वाक्यार्थबोधः । तस्य च प्रदेशे स्मृतिमात्रम्, नैकवाक्यता; कार्यकालपक्षे तु प्रदेशे एकवाक्यतेति ध्येयम् ।

नन्वसिद्धत्वस्योभयत्राविशेषेऽपि कार्यकालपक्षे एव त्रिपाद्यां प्रवृत्तौ किं बीजमिति चेत्, न; संस्कार्याकाङ्क्षयैव परिभाषाप्रवृत्तेः, यथोद्देशे तु संस्कारकाकाङ्क्षयैवेति भाष्यनियमात् ।

ननूभयोः पक्षयोर्भेदाभावाद् द्वित्वोक्तिरसङ्गता ? इत्यत आह—**तत्रैतावानिति** । आत्मभेदम्=परिभाषाभेदम् । यद्वा—आत्मने भेदम् आत्मभेदम्, आत्मार्थं स्वसंस्कारार्थमित्यर्थः । तैः=विधिशास्त्रैः । विधिशास्त्राणामितरदेशगमने कैयटोक्तिमवष्टम्भयति—**तदुक्तमिति** । प्रधानानि=विधिशास्त्राणि । तदित्यनेन यौगपद्यं निरस्तम् ।

ननु कार्यकाले विधिप्रदेशे परिभाषागतौ परत्वविचारो भज्येत ? इत्यत आह—**अत्रैकेति** । अत्र=उक्तभाष्ये । लिङ्गसिद्धेऽप्यर्थे न्यायमप्याह—**यथेति** । **तत्तद्देशीयत्वेति** । यथा कान्यकुब्जानां काश्यां स्थितावपि न काशीस्थत्वव्यवहारः; तद्वदित्यर्थः ।

ननु 'यथोद्देशं संज्ञापरिभाषम्' इत्याद्युक्तेर्निषेधे तदुपादानमसङ्गतम् ? अत आह—**निषेधवाक्यानामपीति** । अपिना उक्तपरिग्रहः 'कैमुतिक' न्याया-

निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात् परिभाषात्वेन व्यवहारः 'क्ङिति च' इत्यत्र भाष्ये। तत्रैकवाक्यता पर्युदासन्यायेन, प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः।

संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः; किन्तु प्रदेश-

---

दिति भावः। **निषेध्येति**। निषेद्धचौ वृद्धिगुणौ, तयोर्ये विशेषाः=विधिविशेषाः, "सार्वधातुकार्धधातुकयोः" (७।३।८४) इत्यादय इत्यर्थः। 'निषेधवाक्यानाम्' इत्यस्य 'परिभाषात्वेन व्यवहारः' इत्यत्रान्वयः। इतिर्हेतौ, अस्माद्धेतोरित्यर्थः। **भाष्य इति**। तत्र हि क्ङितीति परसप्तम्यामव्यवहिते चितम्; स्तुतम्-इत्यादौ किति गुणनिषेधः स्यात्; न तु भिन्नम्, छिन्नम्-इत्यादौ व्यवहिते। किञ्च, रोरवीतीत्यादौ यङ्लुकः प्रत्ययलक्षणेन ङिति गुणनिषेधश्च स्यात्। न च "न लुमता" (१।१।६३) इति प्रत्ययलक्षणनिषेधः शङ्क्यः; अङ्गाधिकारस्थकार्यस्यैव "न लुमता" इत्यनेन निषेधात्। न त्विदम् "क्ङिति च" (१।१।५) इति सूत्रमङ्गाधिकारस्थम्, अतो वार्त्तिककृता वार्त्तिकमारब्धम् "तन्निमित्तग्रहणं कर्तव्यम्" इति। तत्र 'कार्यकालं संज्ञापरिभाषम्' "यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम्" इति भाष्यकृता कार्यकालपक्षेण "क्ङिति च" इति निषेधस्यापि 'सार्वधातुकार्धधातुकयोः' इति गुणविधायकशास्त्रैकवाक्यतयाङ्गाधिकारस्थत्वेन तत्प्रत्याख्यातम्। भिन्नम्, छिन्नम्—इति तु क्नोः कित्वेन परसप्तम्यामप्येकवर्णव्यवधानेऽपि निषेधप्रवृत्त्या सिध्येदित्युक्तम्। ननु निषेधशास्त्रस्य विधिशास्त्रस्य च परस्परविरोधात् कथमेकवाक्यता? अत आह—**तत्रेति**। निषेधसूत्रे इत्यर्थः। **एकवाक्यतेति**। विधिनिषेधयोरित्यादिः। **पर्युदासन्यायेनेति**। अनेन वाक्यैकवाक्यता सूचिता[1]। सा च "क्ङिद्भिन्नसार्वधातुकादौ गुणः" इत्यादिरूपा शाब्दी। नन्वसमस्तस्य नञः प्रथमान्तद्वयसमभिव्याहृतस्य वा पर्युदासत्वम्, न त्वत्रेत्यत आह—**प्रसज्येति**। तेन विधिना साहित्यञ्चात्र स्ववाक्यार्थबोधाव्यवहितोत्तरत्वसम्बन्धेन वाक्यैकवाक्यतया वाक्यार्थ इति यावत्। विधिनिषेधयोरेकवाक्यत्वासम्भवात् पदैकवाक्यत्वासम्भवादित्यर्थः।

एवं यथोद्देशे कार्यकाले च परिभाषास्थले निर्णयमुक्त्वा संज्ञास्थले तमाह—

---

१. एकवाक्यता हि त्रिधा भवति—वाक्यैकवाक्यता, पदैकवाक्यता, वाक्यार्थैकवाक्यता च। ययोरुपजीव्योपजीवकभावेन शास्त्रबोधप्रयोजकत्वं तयोः प्रथमा, यथा—संज्ञाशास्त्रविधिशास्त्रयोः। ययोर्निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वं तयोर्द्वितीया, यथा—पदोपस्थापकपरिभाषाया विधिशास्त्रस्य च। ययोः परस्परं निरूप्यनिरूपकभावापन्नविषयताश्रयत्वं तयोस्तृतीया, यथा—अर्थोपस्थापकपरिभाषाणां विधिशास्त्रस्य च। विधिनिषेधयोर्हि परस्परमुपजीव्योपजीवकभावेन बोधप्रयोजकमिति तयोक्तम्,—इत्यधिकः पाठः ख. पुस्तके।

**अधिकारशब्देन पारार्थ्यात् परिभाषाऽप्युच्यते। कश्चित परिभाषारूप इति कैयटः। दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशकः, एवमेतत् स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्।**

**एतच्च पक्षद्वयसाधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः।**

**तत्रैतावान् विशेषः--यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्, तदुक्तं 'क्ङिति च' इति सूत्रे कैयटे--'यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते' इति।**

**कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति। अत्र 'एकदेशस्थः' इत्यनेन तत्र तत्र तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति, यथा व्रवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः; किन्त्वभिजनदेशीयत्वव्यवहार एव, तद्वत्।**

---

संस्कारमात्रस्यैव ज्वलनशब्दार्थत्वे बाधकाभावेनैकवाक्यतेति निवेशे मानाभावात्, स्वदेशे गृहीतवाक्यार्थबोधस्य तत्र विधौ स्मृतिमात्रेण तत्तत्संस्काराभिप्रायेणैव एकदेशस्य इत्युक्तेरुपपत्तेश्च। नहि तत्रापि कार्यकालपक्षे परिभाषाणां स्वदेशे वाक्यार्थाभावः; बाधकाभावात्, गुणेन प्रधानाकर्षणायुक्तत्वाच्च। तस्मात् कार्यकाल इव यथोद्देशेऽपि स्वदेशे विध्येकवाक्यतां विनैव वाक्यार्थबोधः। तस्य च प्रदेशे स्मृतिमात्रम्, नैकवाक्यता; कार्यकालपक्षे तु प्रदेशे एकवाक्यतेति ध्येयम्।

नन्वसिद्धत्वस्योभयत्राविशेषेऽपि कार्यकालपक्षे एव त्रिपाद्यां प्रवृत्तौ किं बीजमिति चेत्, न; संस्कार्याकाङ्क्षयैव परिभाषाप्रवृत्तेः, यथोद्देशे तु संस्कारकाकाङ्क्षयैवेति भाष्यनियमात्।

ननूभयोः पक्षयोर्भेदाभावाद् द्वित्वोक्तिरसङ्गता ? इत्यत आह—**तत्रैतावानिति**। आत्मभेदम्=परिभाषाभेदम्। यद्वा—आत्मने भेदम् आत्मभेदम्, आत्मार्थं स्वसंस्कारार्थमित्यर्थः। तैः=विधिशास्त्रैः। विधिशास्त्राणामितरदेशगमने कैयटोक्तिमवष्टम्भयति—**तदुक्तमिति**। प्रधानानि=विधिशास्त्राणि। तदित्यनेन यौगपद्यं निरस्तम्।

ननु कार्यकाले विधिप्रदेशे परिभाषागतौ परत्वविचारो भज्येत ? इत्यत आह—**अत्रैकेति**। अत्र=उक्तभाष्ये। लिङ्गसिद्धेऽप्यर्थे न्यायमप्याह—**यथेति**। **तत्तद्देशीयत्वेति**। यथा कान्यकुब्जानां काश्यां स्थितावपि न काशीस्थत्वव्यवहारः; तद्वदित्यर्थः।

ननु 'यथोद्देशं संज्ञापरिभाषम्' इत्याद्युक्तेर्निषेधे तदुपादानमसङ्गतम् ? अत आह—**निषेधवाक्यानामपीति**। अपिना उक्तपरिग्रहः 'कैमुतिक' न्याया-

**निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात् परिभाषात्वेन व्यवहारः 'क्ङिति च' इत्यत्र भाष्ये। तत्रैकवाक्यता पर्युदासन्यायेन, प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोध-मात्रेणैकवाक्यताव्यवहारः।**

**संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः; किन्तु प्रदेश-**

---

दिति भावः। **निषेध्येति**। निषेद्धचौ वृद्धिगुणौ, तयोर्ये विशेषाः=विधिविशेषाः, "सार्वधातुकार्धधातुकयोः" (७।३।८४) इत्यादय इत्यर्थः। 'निषेधवाक्यानाम्' इत्यस्य 'परिभाषात्वेन व्यवहारः' इत्यत्रान्वयः। इतिर्हेतौ, अस्माद्धेतोरित्यर्थः। **भाष्य** इति। तत्र हि क्ङितीति परसप्तम्यामव्यवहिते चितम्; स्तुतम्-इत्यादौ किति गुणनिषेधः स्यात्; न तु भिन्नम्, छिन्नम्-इत्यादौ व्यवहिते। किञ्च, रोरवीतीत्यादौ यङ्लुकः प्रत्ययलक्षणेन ङिति गुणनिषेधश्च स्यात्। न च "न लुमता" (१।१।६३) इति प्रत्ययलक्षणनिषेधः शङ्क्यः; अङ्गाधिकारस्थकार्य-स्यैव "न लुमता" इत्यनेन निषेधात्। न त्विदम् "क्ङिति च" (१।१।५) इति सूत्रमङ्गाधिकारस्थम्, अतो वार्त्तिककृता वार्त्तिकमारब्धम् "तन्निमित्तग्रहणं कर्तव्यम्" इति। तत्र 'कार्यकालं संज्ञापरिभाषम्' "यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम्" इति भाष्यकृता कार्यकालपक्षेण "क्ङिति च" इति निषेधस्यापि 'सार्वधातुकार्धधातुकयोः' इति गुणविधायकशास्त्रैकवाक्यतयाङ्गाधिकारस्थत्वेन तत्प्रत्याख्यातम्। भिन्नम्, छिन्नम्—इति तु क्नोः कित्वेन परसप्तम्यामप्येक-वर्णव्यवधानेऽपि निषेधप्रवृत्त्या सिध्येदित्युक्तम्। ननु निषेधशास्त्रस्य विधि-शास्त्रस्य च परस्परविरोधात् कथमेकवाक्यता ? अत आह—**तत्रेति**। निषेधसूत्रे इत्यर्थः। **एकवाक्यतेति**। विधिनिषेधयोरित्यादिः। **पर्युदासन्यायेनेति**। अनेन वाक्यैकवाक्यता सूचिता[1]। सा च "क्ङिद्भिन्नसार्वधातुकादौ गुणः" इत्यादि-रूपा शाब्दी। नन्वसमस्तस्य नञः प्रथमान्तद्वयसमभिव्याहृतस्य वा पर्युदासत्वम्, न त्वत्रेत्यत आह—**प्रसज्येति**। तेन विधिना साहित्यञ्चात्र स्ववाक्यार्थबोधा-व्यवहितोत्तरत्वसम्बन्धेन वाक्यैकवाक्यतया वाक्यार्थ इति यावत्। विधिनिषेध-योरेकवाक्यत्वासम्भवात् पदैकवाक्यत्वासम्भवादित्यर्थः।

एवं यथोद्देशे कार्यकाले च परिभाषास्थले निर्णयमुक्त्वा संज्ञास्थले तमाह—

---

१. एकवाक्यता हि त्रिधा भवति—वाक्यैकवाक्यता, पदैकवाक्यता, वाक्यार्थैकवाक्यता च। ययोरुपजीव्योपजीवकभावेन शास्त्रबोधप्रयोजकत्वं तयोः प्रथमा, यथा—संज्ञा-शास्त्रविधिशास्त्रयोः। ययोर्निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वं तयो-र्द्वितीया; यथा—पदोपस्थापकपरिभाषाया विधिशास्त्रस्य च। ययोः परस्परं निरूप्य-निरूपकभावापन्नविषयताश्रयत्वं तयोस्तृतीया, यथा—अर्थोपस्थापकपरिभाषाणां विधिशास्त्रस्य च। विधिनिषेधयोर्हि परस्परमुपजीव्योपजीवकभावेन बोधप्रयोजक-मिति तथोक्तम्,—इत्यधिकः पाठः ख. पुस्तके।

**वाक्येन सहैव । अत एव 'अणोऽप्रगृह्यस्य' इत्येतदेकवाक्यतापन्नात् 'अदसो मात्' इत्येतत् प्रति न मुत्वाद्यसिद्धम्, असिद्धत्वस्य कार्यार्थतया कार्यज्ञानोत्तरमेव तत्प्रवृत्तेः । कार्यज्ञानं च प्रदेशदेश एवेति तद्देशस्थस्यासिद्धत्वात् पूर्वग्रहणेनाग्रहणात् ।**

**एवं तद्बोधोत्तरमेव विरोधप्रतिसन्धानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम् ।**

**अत एव कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसंज्ञेति 'अदसो मात्' इति सूत्रे भाष्ये उक्तम् । आकडाराधिकारस्थभपदसंज्ञादिविषये तु यथोद्देश-**

---

**संज्ञेति । न पृथगिति ।** संज्ञाशास्त्रार्थबोधं विना विधिवाक्यार्थबोधस्याप्यसम्भवेनात्याकाङ्क्षित्वान्न स्वदेशे साधुत्वोपयोगी वाक्यार्थः । तथा च तद्देशे वाक्यार्थबोधजनकत्वस्य तद्देशस्थत्वे तद्वत्त्वेन, तदभावे तदभाव इति भावः । **सहैवेति ।** वाक्यैकवाक्यतया, न तु पदैकवाक्यतया; अन्यतरवृद्ध्यादिपदानां वैयर्थ्यापत्तेरिति भावः । वृद्ध्यादिपदानामादैचामुपस्थापकता तु न, "उपस्थितमिदं द्रष्टव्यम्—'ईदूदेद्द्विवचनं प्रगृह्यम्' ( १।१।११ ) इत्यादिभाष्यविरोधात् । एवकार उक्तनिषेधानुवादको दाढ्र्यबोधकः । उक्तेऽर्थे प्रमाणं प्रयोजनञ्चाभिदधाति—**अत एवेति** । स्वदेशे लक्ष्योपयोगिवाक्यार्थबोधाभावादेवेत्यर्थः । प्रदेशीयवाक्यार्थस्यैव लक्ष्यसंस्कारकत्वादेवेति वाऽर्थः । **न मुत्वाद्यसिद्धमिति ।** असिद्धत्वे प्रगृह्यत्वादप्रगृह्यस्येति निषेधाप्रवृत्त्याऽनुनासिकः स्यादिति प्रयोजनं स्फुटम् । ननु स्वदेशे लक्ष्योपयोगिवाक्यार्थाभावेऽप्यष्टाध्यायीपाठकृतस्य पूर्वत्वपरत्वस्यापलापासम्भवात् तन्मात्रेण पूर्वग्रहणेन ग्रहणादसिद्धत्वं दुर्वारमत आह—**असिद्धत्वस्येत्यारभ्याग्रहणादित्यन्तेन** । न 'मुत्वाद्यसिद्धम्' इत्यस्य पूर्वग्रहणेनाग्रहणादित्यत्रान्वयः । **अग्रहणादिति** । अत्र "अदसो मात्" ( १।१।१२ ) इत्यस्येति शेषः । स्वदेशे वाक्यार्थाभावेन पूर्वग्रहणेन ग्रहणयोग्यताऽभावादिति भावः ।

**मिश्रास्तु**—तद्देशस्थस्येत्यादेर्विवरणं तद्देशस्थस्य 'अणोऽप्रगृह्यस्य' इत्येतद्देशस्थस्य 'अदसो मात्' इत्यस्येति शेषः । पूर्वग्रहणेन "अदसोऽसेः" ( ८।२।८० ) इति सूत्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्येकदेशभूतपूर्वग्रहणेनेत्याहुः ।

स्वदेशे वाक्यार्थबोधाभावस्य प्रयोजनानन्तरं प्रमाणान्तरञ्च पूर्ववत्तुल्यन्यायेनाभिदधाति—**एवं तदिति । तद्बोधोत्तरमेव** विधिदेशीयवाक्यार्थबोधोत्तरमेव । **विरोधप्रतिसन्धानं चेति** । चकारेण कार्यज्ञानं ग्राह्यम् । तत्रत्यपरत्वम्=विधिदेशीयपरत्वम् ।

सम्प्रति प्रयोजनान्तरं प्रमाणान्तरं चोपदिशति—**अत एवेति** । प्रदेशस्थपरत्वस्य तद्बीजत्वादेवेत्यर्थः । अनुनासिकपर्युदासेन संज्ञायाः कृतार्थत्वात् परत्वादायादयः प्राप्ताः, तत् प्रतिबन्धप्रयोजनम् । स्वदेशे वाक्यार्थबोधे आयादीनां परत्वस्य दुर्वारतया तद्भाष्यासंगतिरिति प्रमाणञ्च स्फुटम् । एवञ्चैवकारेण

**पक्ष एवेति तत्रत्यपरत्वेनैव बाध्यबाधकभावः। पदादिसंज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः।**

---

पूर्वपाठस्य परत्वादिप्रयोजनत्वाभावो बोधितः। संज्ञाविषये एतद्विशेषं वदता परिभाषायां पाठकृतपरत्वमेव नियामकमिति व्यवहर्तॄणामित्यादिना प्रतिपादितमेव। **भाष्य** इति। तत्रामू इत्यादौ अनुनासिकप्रतिबन्धेन कृतार्थायाः प्रगृह्यसंज्ञाया अमी ईशा इत्यादौ मीत्वादेरसिद्धत्वात् परत्वादायादयः प्राप्नुवन्ति। तेषाम्प्रतिबन्धार्थम् "प्लुतप्रगृह्या" ( ६।१।१२५ ) इत्येतदेकवाक्यतापन्नप्रगृह्यसंज्ञाऽयादिभ्यः परैवेत्युक्तं कार्यकालतयेति बोध्यम्। न च प्रगृह्यसंज्ञायाः परत्वकथनमनुचितम्, आयादीनां वर्णद्वयसापेक्षत्वेन बहिरङ्गत्वादिति वाच्यम्, संज्ञाशास्त्रस्यापि विधिनिमित्तकत्वमिति स्वीकारेण 'प्लुतप्रगृह्या' इत्येतदेकवाक्यतापन्नप्रगृह्यसंज्ञाया अचीति सप्तम्यन्तनिमित्ताया आयादीनाञ्च समत्वात्।

वस्तुतस्तु, **भाष्ये** परैवेत्यस्योत्कृष्टत्वात्, अनवकाशत्वादित्यर्थः, 'प्लुतप्रगृह्या' इत्येतदेकवाक्यतापन्नप्रगृह्यसंज्ञाया वैयर्थ्यापत्तेः, 'प्लुतप्रगृह्या' ( ६।१।१२५ ) इत्यत्र प्रगृह्यपदसामर्थ्याच्च। अन्यथा हरी एतावित्यादावपि परत्वाद् यणादेः प्राप्तत्वात् तद्वैयर्थ्यं स्पष्टमेव। न चायादीनां प्रगृह्यसंज्ञायाश्च युगपत्प्रवृत्तिरेव दुर्लभा, सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां त्रिपादीस्थकार्याप्रवृत्तेरायादीनां पूर्वमेव प्रवृत्तिः, प्रगृह्यसंज्ञायास्तु मूत्वोत्तरमिति वाच्यम्, एतद्भाष्यप्रामाण्येन त्रिपादीस्थकार्यप्रतिबन्धकस्यैव सपादसप्ताध्यायीस्थस्य पूर्वं प्रवृत्तेः स्वीकारादिति दिक्।

नन्वेवमाकडारीयभपदसंज्ञादोनामपि स्वदेशत्यागेन "अल्लोपोऽनः" ( ६।४।१३४ ) इत्येतदेकवाक्यतापन्नभसंज्ञां प्रति नलोपैकवाक्यतापन्नपदसंज्ञाया असिद्धत्वाद् राज्ञ इत्यादावल्लोपोत्तरं नलोपोऽपि स्यात्। न च "नलोपः सुप्स्वर" ( ८।२।२ ) इति नियमाद् नलोपैकवाक्यतापन्नपदसंज्ञाया भत्वदृष्टया नासिद्धत्वमिति वाच्यम्, नलोपस्यासिद्धत्वाभावेऽपि तदेकवाक्यतापन्नपदसंज्ञाया असिद्धत्वे बाधकाभावात्। किञ्च, असिद्धत्वाभावेऽपि परत्वादेव नलोपापत्तेरित्यत आह—**आकडारेति**।

केचित्तु, भसंज्ञा पदत्वकार्यप्रतिबन्धरूपेऽशास्त्रीयेऽपि कार्ये भवतीति "न पदान्त" ( १।१।५८ ) सूत्रस्थभाष्यप्रामाण्यादिति स्वेनैव शब्देन्दुशेखरे उक्तत्वेन पदसंज्ञाशास्त्रेऽपि भसंज्ञाया उपस्थानात् कार्यकालेऽपि न दोष इत्याहुः।

**पदेति**। पदसंज्ञा त्वत्र भसंज्ञासाहचर्यात् समानावधिका "स्वादिषु" ( १।४।१७ ) इत्यनेन विहितैव गृह्यते, न तु "सुप्तिङन्तम्" ( १।४।१४ ) इत्यनेन विहिता पदसंज्ञापि। तेन तद्विषये[1] तु कार्यकालोऽस्त्येव। अत एव

---

१. 'सुप्तिङन्तम्' इत्यस्य विषये तु इत्यर्थः।

'रामावित्यादौ इति वक्ष्यमाणो ग्रन्थः सङ्गच्छत इति केचित्, तन्न, सुबन्तात्तद्धितोत्पत्तेः सिद्धान्तितत्वेन राजन्य इत्यत्र नलोपापत्तेः। 'सुप्तिङन्तम्' इत्यस्य नलोपैकवाक्यतापन्नत्वेनासिद्धत्वेन भसंज्ञया तस्याबाधाच्च। भपदादीत्यत्रादिनाऽपादानादिसंज्ञापरामर्शः। **यथोद्देशपक्ष एवेति।** एवकारेण कार्यकालव्यवच्छेदः। प्रमाणन्त्वत्राकडाराधिकारे पाठ एवैतासामेकत्रैकसंज्ञार्थमेव तदधिकारे पाठः। अन्यथा तद्विषये कार्यकालपक्षाश्रयणे तु भसंज्ञाया "अल्लोपोऽनः" (६।४।१३४) इत्यत्रोपस्थितायाः पदसंज्ञायाः "नलोपः प्रातिपदिक" (८।२।७) इत्यत्रोपस्थित्या चोभयोर्भिन्नदेशस्थत्वेन विरोधाभावेन बाधकत्वाप्राप्त्या तत्र पाठवैयर्थ्यं स्पष्टमेव। "नस्तद्धिते" (६।४।१४४) इति सूत्रमपि प्रमाणम् तद्धि अतिराज इत्यादिसिद्धचर्थम्। तत्र भसंज्ञाप्रयुक्ताल्लोपे च रूपसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। न च मेधाविनोऽपत्यं मैधाव इत्यादौ इकारलोपार्थं तदिति वाच्यम्, यस्येति लोपेन सिद्धेः। न च नलोपोऽसिद्धः, सुबादिविधावेव तन्नियमात्।

वस्तुतस्तु—अध्यात्ममित्यादौ "न संयोगाद्वमन्तात्" (६।४।१३७) इति निषेधेन "अल्लोपोऽनः" (६।४।१३४) इत्यस्याप्राप्त्या 'नस्तद्धिते' इत्यस्य चारितार्थ्याद् 'अह्लष्टखोरेव' इति ज्ञापकं सूपपादम्। तद्धि अह्नि भवम् इत्यर्थे कालाट्ठञि आह्निकमित्यत्र "नस्तद्धिते" इति टिलोपे प्राप्ते 'अह्लष्टिलोपश्चेट्टखोरेव' इति नियमेन टिलोपबाधनार्थम्। कार्यकालाश्रयणे तु 'नलोपः प्रातिपदिकान्त' इति नलोपे 'यस्येति च' इत्यत्राल्लोपे चाह्निकमित्येव भवतीति 'भक्षितेऽपि लशुने' इति न्यायेन तद्वैयर्थ्यं स्पष्टमेव। "राज्ञः क च" इत्यादिनिर्देशोऽपि प्रमाणम्। अत एव[1] 'अपादानमुत्तराणि कारकाणि बाधन्ते' 'गां दोग्धि पय' इत्यत्र परत्वात्कर्मसंज्ञा इति भाष्यं संगच्छते। कार्यकालत्वे तु कर्मसंज्ञाया अपादानसंज्ञापेक्षया परत्वेऽपि द्वितीयाविध्येकवाक्यतापन्नापेक्षया पञ्चमीविध्येकवाक्यतापन्नायाः परत्वात् पञ्चम्येव स्यादिति भाष्यासंगतिः स्यात्। "अकथितं च" (२।४।५१) इति सूत्रं त्वपादानत्वाविवक्षायां चरितार्थम्। यथोद्देशपक्षादेव सुल्वेत्यादिसिद्धिः, अन्यथा भसंज्ञाप्रयुक्तकार्याभावाद् भत्वाभावे पदत्वे "इकोऽसवर्णे" (६।१।१२६) इति प्रकृतिभावः स्यात्। न चाकडाराधिकारस्थसंज्ञासु कार्यकालपक्षास्वीकारे वाचयतीति वागित्यत्र पदत्वे कर्तव्ये णिलोपस्य स्थानिवत्त्वात् पदान्तत्वाभावात् कुत्वं न स्यात्। सिद्धान्ते तु पदसंज्ञायाः कार्यकालपक्षाश्रयेण कुत्वैकवाक्यतापन्नायां संज्ञायां 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधात् स्थानिवत्त्वाभावः। 'कौ लुप्तं न स्थानिवत्' इत्याश्रयणेनात्र निर्वाहेऽपि पटुशब्दाण्णिचि टिलोपे[2] तस्य कौ लुप्तत्वाभावात्

---

१. आकडारीयेषु कार्यकालपक्षास्वीकारादेव।

२. अस्य 'वचि' इति शेषो बोध्यः।

**'अत एव पूर्वत्रासिद्धम्' इति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालपक्षाश्रयेण समाहितमित्याहुः ।**

---

तदप्रवृत्त्या स्थानिवत्त्वात् पदत्वानापत्तौ जश्त्वं[1] न स्यात् इति चेत्, न, यत्र हि[2] तदधिकारीयसमानावधिकसंज्ञाद्वयप्रसक्तिः, तत्रैव यथोद्देशपक्षाश्रयणात् । अत्र हि आकडारसूत्रमेव मानम्, तस्य हि संज्ञाद्वयप्रसक्तावेव प्रवृत्तिरिति दिक्[3] ।

**तत्रत्येति** । स्वदेशस्येत्यर्थः । नन्वेवं पदादिसंज्ञादृष्टया त्रिपाद्या असिद्धतया राजभ्यामित्यादौ नलोपे कर्तव्ये पदसंज्ञाया अभावान्नलोपानापत्तिः ? अत आह--**पदादिपदानामिति** । तत्रः स्वदेशे । एवकारेण विधिप्रदेशे शक्तिग्रहनिरासः । अपिः सपादसप्ताध्यायीसमुच्चायकः । "ष्यङः सम्प्रसारणम्" (६।४।१३) इति सूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति भावः ।

तत्र जातशक्तिग्रहेण निर्वाहे भाष्यसम्मतिमाह--**अत एवेति** । संज्ञाशास्त्राणामुपस्थित्यभावेऽपि त्रिपाद्यां जातशक्तिग्रहेण निर्वाहादेवेत्यर्थः । एवकारेण संज्ञाव्यावृत्तिः ।

**आशङ्क्येति** । यथोद्देशे तदसिद्धत्वात् इति भावः । अन्यथा शङ्कासमाध्योः संज्ञायामपि तुल्यत्वेन विशिष्टपरिभाषायामेव तत्तदुक्त्यसांगत्यं स्पष्टमेवेति भावः । **आहुरिति** । अस्य केचित्तु--इत्यनेनान्वयः ।

**अन्ये तु**--संज्ञाशास्त्रस्य कार्यकालपक्षे स्वदेशे वाक्यार्थाबोधकत्वं न युक्तम्, पदपदार्थोपस्थित्यां सामग्र्याः सत्त्वात् । अत्याकाङ्क्षायाः तत् प्रतिबन्धकत्वमप्रामाणिकम् । संज्ञाशास्त्रस्य कार्यकालपक्षे स्वदेशस्थता, विधिदेशस्थता च । अत एव "क्ङिति च" इति सूत्रे भाष्ये कार्यकालपक्षे तस्याङ्गाधिकारस्थतोक्ता । तत्र विधिप्रदेशस्थत्वे पौर्वापर्यं मुख्यम्, विरोधप्रतिसन्धानादेस्तत्रैव सम्भवात् । तदभावे पाठकृतमपि । तेन 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इत्यादि भाष्यस्य "तस्मिन्निति" इति सूत्रस्थवक्ष्यमाणभाष्यस्य च नासंगतिः । 'भादिसंज्ञाविषये यथोद्देशपक्ष एव' इत्यपि न युक्तम्, "भस्य" इत्युपस्थितमिदं भवति "यचि भम्" इति "ष्यङः सम्प्रसारणम्" इति सूत्रस्थभाष्यासङ्गतेः । 'जातशक्तिग्रहेण' इत्याद्यपि न, तुल्ययुक्त्या गृहीतपरिभाषार्थेन त्रिपादीकार्यसंस्कारापत्तेः । "षष्ठी स्थाने योगा" इति परिभाषाया अपि शक्तिग्राहकत्वेन

---

१. षडित्यत्रेत्यर्थः ।
२. आकडाराधिकारीय इत्यर्थः ।
३. संज्ञाया विधित्वाभावात् पूर्वविधावेव स्थानिवत्त्वप्रवृत्तेरत्र तदभावान्न तन्नयाय विषय इत्यपि समाधानं वक्तुं शक्यते ।
कार्यकालपक्षाश्रयणे तु पदसंज्ञाशास्त्रस्य कुत्वजश्त्वैकवाक्यतापन्नत्वेन त्रिपादीस्थत्वेन 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधेन न स्थानिवद्भाव इति शेषो बोध्यः ।

**यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥ २ ॥**

**'कार्यकालम्' इत्यस्य च कार्येण काल्यते=स्वसन्निधिं प्राप्यत इत्यर्थः। कार्येण स्वसस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत्।**

**अत एव "पूर्वत्रासिद्धम्" इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य "यद्यपीदं तत्रासिद्धं तत्त्विह**

---

संज्ञाशास्त्रसमशीलतया त्वद्रीत्या तस्यास्त्रिपाद्यां प्रवृत्त्युपपत्तौ तदभावापादनपरेण "पूर्वत्रासिद्धम्" इति सूत्रस्थभाष्येण सह विरोधापत्तेश्चेत्याहुः[1]।

यथोद्देशपक्षस्य दुर्बलत्वशङ्कां विघटयंस्तत्र प्रमाणमाह--**यथोद्देशपक्ष इति। भाष्य इति।** तत्राग्नी इत्यत्र कार्यकालपक्षे प्रगृह्यसंज्ञायाः "अणोऽप्रगृह्यस्य" ( ८।४।५७ ) इत्येतद्देशस्थतया प्लुतं प्रत्यसिद्धतया तस्मिन् कृते द्विमात्रत्वाभावेन संज्ञाया अप्रवृत्तौ अनुनासिकः स्यादित्याशङ्क्य 'यथोद्देशं संज्ञापरिभाषम्' इति समाहितम् ॥ २ ॥

एवं प्रथमपरिभाषार्थमुक्त्वा द्वितीयार्थं वक्तुमारभते--**कार्यकालमित्यस्य चेति।** चस्त्वर्थे, ह्यर्थे वा। ननु कार्यमेव कालो यस्येत्यर्थं ककार्यकालपदेन परिभाषाया अपि विधिदेशस्थत्वं प्रतीयत इत्याशङ्क्याह--**कार्येण काल्यत इति।** कल-गताविति चुरादिण्यन्तस्येदम्।

नन्वचेतनस्य शास्त्रस्याकाङ्क्षाभावात् कथं सान्निध्यप्राप्तिः? किञ्च, पुरुषेच्छामात्रेणोपस्थितौ सर्वासां तासां सर्वत्रोपस्थितिः कुतो न? किञ्च, असिद्धे तस्मिन् कथं तदुपस्थितिः? अत आह--**कार्येण स्वसंस्काराय स्ववृत्तीति।** स्वस्मिन्=विधिशास्त्रे, वृत्तिः=स्थितिर्यस्य तत्, लिङ्गम्=चिह्नम्=औपश्लेषिकाधिकरणसप्तमीनिर्देशादिरूपम्, तेन चिह्निता याः परिभाषाः, तासामित्यर्थः। **आक्षेप इति।** अनुषङ्ग इत्यर्थः। कार्येणेत्यस्य तद्विधायकाकाङ्क्षयेत्यर्थः।

---

1. वस्तुतस्तु--पदपदार्थोपस्थित्या वाक्यार्थबोधेऽपि लक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानजनकशाब्दबोधस्य विधिभिरेकवाक्यतां विना न संभवति। 'क्ङिति च' इत्यस्य कार्यकालपक्षेऽङ्गाधिकारस्थत्वोपवर्णनपरम्, भाष्यन्तु स्वरितत्वप्रतिज्ञानुरोधेनेति विवरणे वर्णितमेवेति न किञ्चित् प्रतिकूलम्। भस्येत्युपस्थितमिदं भवति 'यचि भम्' इति, भाष्यन्त्वेकदेश्युक्तिरिति शब्देन्दुशेखर एवोक्तत्वेन तदपि न प्रकृते साधकम्। संज्ञाशास्त्राणां त्रिपादीस्थेनैकवाक्यताया अभावेऽपि यथोद्देशपदेन जातस्य दृढतरसंस्कारस्य स्मरणेनैव व्यवहारे न किमपि बाधकम्।
किञ्च, यावच्छक्तिग्रहो न भवेत्, तावत् त्रिपादीस्थानां शास्त्रत्वस्यासम्पत्त्याऽसिद्धत्वकथैव वक्तुमशक्या। असिद्धत्वञ्च शास्त्रत्वेन रूपेणैव। 'षष्ठी स्थाने' इत्यस्य शक्तिग्राहकत्वं न केनाप्यभ्युपगतम्। अन्यथा संज्ञाशास्त्रत्वापत्तिः स्यात्।
एवञ्च न 'पूर्वत्रासिद्धम्' इति सूत्रस्थभाष्येण विरोधः।

**सिद्धम्" इत्युक्त्वा तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने "कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्" इत्युक्तम् ।**

**न च कार्यकालपक्षे "ङमो ह्रस्वात्" इत्यादौ 'तस्मादित्युत्तरस्य', 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाद्वयोपस्थितौ परत्वात् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति "तस्मिन्" इति सूत्रस्थभाष्यामङ्गतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासङ्गत्यापत्तेः, स्पष्टं चेदम् "इको गुण" इत्यत्र कैयट इति वाच्यम् ? "विप्रतिषेध" सूत्रेऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । नहि कार्यकालपक्ष इत्येतावता तदपैति ? पक्षद्वयेऽपि प्रदेशेषु स्वबुद्धिजननेना-**

---

अचेतनत्वेऽप्यारोपितचेतनत्वेनैव स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इत्यत्र प्रमाणमाह—**अत एवेति** । कार्यकालपक्षे कार्येण परिभाषोपस्थानादेवेत्यर्थः । एतेन कथमसिद्धे तदुपस्थितिरिति तृतीयदोषोद्धारोऽपि स्पष्टीकृतो वेदितव्यः । तत्र=त्रिपाद्याम् । **परिभाषाणामिति** । संज्ञाशास्त्रस्य तूपजीव्यत्वादुपजीव्यमन्तरा विधेर्वाक्यार्थाभावेन स्वदेशे जातशक्तिग्रहेणैव त्रिपाद्यां व्यवहारस्योक्तत्वादिति भावः । इदम्=त्रिपादीस्थम् । तत्र=सपादसप्ताध्यायीस्थे परिभाषाशास्त्रे । तत्तु=परिभाषाशास्त्रन्तु । इह=त्रिपाद्याम् । सिद्धमित्यर्थः । **तावतापीति** । एतावत्कथनेनापीत्यर्थः । **असिद्धिरित्यभिप्रायक इति** । संस्कार्यदृष्ट्या संस्कारकस्य सिद्धत्वेऽपि संस्कारकदृष्ट्या संस्कार्यस्यासिद्धत्वेन संस्कारासम्भव इति तदाशयः । **कार्यकालमिति** । संस्कार्यदृष्ट्या संस्कारकस्य दर्शनमात्रेणादृष्टपिशाचन्यायेन[1] संस्कारसम्भव इति तदाशयः । तथा च संस्कार्यस्य संस्कारकत्वात् परिभाषायाः संस्कारकत्वेन संस्कार्यविध्यपेक्षा । तत्र सपादसप्ताध्याय्यामुभयाकाङ्क्षया सम्बन्धः, त्रिपाद्यां तु तदीयाकाङ्क्षयैवेति[2] विशेषः । एवञ्च पक्षद्वयसाधारण उभयाकाङ्क्षयैव सम्बन्ध इत्याशयकः पूर्वपक्षः । कार्यकालाश्रयणेनान्यतराकाङ्क्षयापि सम्बन्ध इत्युत्तराशयः । तथा च परिभाषाणां कार्यार्थतया कार्यकालत्वमेव युक्तमिति सिद्धम् ।

परिभाषाविषये तत्तद्देशस्थत्वं वारयतीति पूर्वोक्तां व्यवस्थामजानन् शङ्कते—**न चेति** । अधिकं वक्तुमियं शङ्केति न पौनरुक्त्यदोषः । आदिना "ङसि" इत्यादिपरिग्रहः । **परत्वादिति** । एतत्प्रकृताभिप्रायकम् । कैयटसम्मता परिभाषा तु न तद्रहिता । **कैयट इति** । तत्र क्रोष्ट्रीयसम्मतविप्रतिषेधखण्डके 'नैष युक्तो विप्रतिषेधः' इति भाष्यप्रतीके 'यथोद्देशे परिभाषयोः पौर्वापर्य्यम्, न तु कार्यकालतायाम्' इति तेनोक्तम् । **पाठकृतेति** । परिभाषास्थले इति शेषः । परिभाषाणामत्र पक्षेऽपि स्वदेशे वाक्यार्थबोधोऽस्त्येवेति भावः । ननु विधिवाक्येनैकवाक्यत्वादन्यत्र गतौ स्वदेशत्यागात् क्व पाठकृतपरत्वसम्भव इत्यत आह—

---

**१. यथा स्वयमदृष्टा अपि पिचाशा अपरान् पश्यन्ति, तथैव ।**

**२. संस्कार्याकाङ्क्षयैवेत्यर्थः ।**

**विशेषात् । नहि तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं सम्भवति। नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति । अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम् । अत एव "तस्मिन" इति सूत्रे कैयटः—'सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वम्' इति । "इको गुण" इति सूत्रस्थकैयटस्तु चिन्त्य एव । अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोग-**

---

**नहीति । इत्येतावतेति ।** कार्यकाल इति शब्देनैवेत्यर्थः । तत्=पाठकृतपरत्वम्, स्वदेशीयत्वं वा । **प्रदेशेष्विति ।** इयं विषयसप्तमी, न तु तद्देशपरिग्रहः; यथोद्देशे विधिशास्त्राणामिहैवोपस्थितेः । **स्वबुद्धीति ।** स्वम्=परिभाषाशास्त्रम्, तद्बुद्धिः=विशिष्टवाक्यार्थबोधः, तज्जननम्=निष्पत्तिरनेनेत्यर्थः । **अविशेषादिति ।** विधिवाक्यैकवाक्यतायाः पक्षद्वयेऽप्यविशेषादित्यर्थः । तथा च परिभाषाणां तद्दशेन स्वदेशत्यागे विधिशास्त्राणामपि यथोद्देशे स्वदेशत्यागः स्यादिति तेषां परत्वं व्याहन्येत । तस्मान्न प्रदेशैकवाक्यत्वेन स्वदेशत्याग इति भङ्ग्यन्तरेणानुवदति—**नहि तत्पक्ष इति ।** तत्पक्षे=कार्यकालपक्षे, अपिना यथोद्देशपक्षे । आद्ये, शास्त्रस्य=परिभाषाशास्त्रस्य, अन्त्ये, विधिशास्त्रस्येत्यर्थः । एवञ्चाचेतनत्वाच्छास्त्राणां स्वदेशत्यागासम्भवः । तद्देशगमनं त्वनुषङ्गमात्रमेवेति भावः ।

ननु शास्त्राणां स्वतस्तद्देशाभावेऽपि व्याख्यायकपुरुषबोधसिद्धः स्वदेशत्यागः, तत्पुरुषाणां यद्देशे विशिष्टबोधः, तद्देशीयत्वम्, न तु स्वदेशीयत्वमिति तदाह—**अस्मदादिबुद्धिजननेति ।** प्रदेश एव वाक्यैकवाक्यतयेत्यर्थः । तद्देशेऽस्य वाक्यार्थबोध एव स्वदेशत्यागे हेतुः, न तु तद्देशैकवाक्यतांशे । इदं च परिभाषास्थले, संज्ञास्थले तु 'आयादिभ्यः परैव प्रगृह्यसंज्ञा' इत्युक्तभाष्यबलात् स्वदेशत्यागः स्वीक्रियत एवेति भावः । अत्रार्थे भाष्यसम्मतिमाह—**अत एवेति ।** स्वदेशत्यागाभावादेवेत्यर्थः । तत्त्याग एकदेशस्थता न स्यादिति भावः । स्वोक्तार्थे कैयटोक्तिमुपष्टम्भयति—**अत एवेति ।** स्वदेशत्यागाभावादेवेत्यर्थः । ननु कैयटसम्मतिस्वीकारे "इको गुण" इति सूत्रीयकैयटविरोधाद्विपरीतापत्तिरत आह—**इको गुणेति । चिन्त्य एवेति ।** 'तस्मिन्निति' इति सूत्रस्थभाष्यविरोधात् स्वग्रन्थविरोधाच्चेति भावः । स्वग्रन्थश्च "तस्मिन्निति" सूत्रभाष्यव्याख्यानम् । विपक्षे बाधकमप्याह—**अन्यथेति ।** तत्र स्वबुद्धिजननमात्रेण तद्देशीयस्थत्व इत्यर्थः । **न स्यादिति ।** तथा च विप्रतिषेधशास्त्रासङ्गतिरेव स्यादिति भावः । ननु विप्रतिषेधशास्त्रासङ्गतिभयात् प्रयोगरूपोद्देशो न गृह्यत इत्यत आह—**किञ्चेति । सूत्रस्थेति ।** 'प्रधानान्यात्म' इत्याद्युक्तकैयटेत्यर्थः । **तेषामिति ।** तेषामपीत्यर्थः ।

नन्विष्टापत्तिरत आह-**एवञ्चेति ।** तेषामपि परत्वस्य व्याहनने चेत्यर्थः । **उच्छिद्येतेति ।** तस्मात् परिभाषाणां स्वदेशेत्यागो न भवति । परा.( तत्र ? )

**रूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात्। किञ्च, "क्ङिति च" इति सूत्रस्थ-कैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे सन्निधानेन तेषां परत्वं व्याहन्येत।**

**एवञ्च वृक्षेभ्य इत्यत्र "सुपि च" इत्यतः परत्वाद् "बहुवचने झल्येत्" इत्येत्त्वमिष्याद्युच्छ्येतेत्यलम् ॥ ३ ॥**

---

परत्वे स्वदेशीयत्वं प्रयोजकम्, असिद्धत्वे उपस्थितिदेशीयत्वमिति विवेकः। प्रमाणं त्वत्रोक्तमिति शिवम्।

अत्रायं मतनिष्कर्षः–यथोद्देशपक्षे संज्ञाशास्त्राणां विधिशास्त्रैकवाक्यतां विनैव स्वदेशे वाक्यार्थः। तत्र जातशक्तिग्रहेणैव सपादसप्ताध्यायीस्थविधेस्त्रिपादीस्थविधेश्चोपकारकत्वमिति। सञ्ज्ञाशास्त्राणामेतत्पक्षस्वीकारफलन्तु 'अग्नी ३' इत्यत्रानुनासिकत्वप्रतिबन्धरूपमुक्तमेव प्राक्। अग्नी३ इतीत्यादावप्लुतवद्भावात् प्लुताश्रयप्रकृतिभावाप्रसक्त्या प्रगृह्यत्वाश्रयप्रकृतिभावसिद्धिश्च यथोद्देशपक्षे। परिभाषाशास्त्राणां तु सपादसप्ताध्यायीस्थविधीनामपकर्षणेन स्वदेश एव तैः पदैकवाक्यतया वाक्यार्थः। न च संज्ञाशास्त्रवत् परिभाषाणामपि यथोद्देशपक्षे गृहीतपरिभाषार्थेन त्रिपादीस्थविधिसंस्कारकत्वमस्त्विति वाच्यम्, तस्यासिद्धत्वात् परिभाषाशास्त्रमन्तरापि त्रिपादीस्थशास्त्रस्य वाक्यार्थबोधसम्भवात्। संज्ञानान्तूपजीव्यत्वात्तामन्तरा त्रिपादीस्थविधीनां वाक्यार्थबोधसम्भवादत्याकाङ्क्षया गृहीतशक्त्या त्रिपादीस्थविधिसंस्कारत्वस्वीकार इत्याशयात्[1]। परिभाषाणां यथोद्देशपक्षस्वीकारफलं तु "अनुदात्तं पदमेकवर्जम्" (६।१।१५८) इत्यस्य, तथा विप्रतिषेधसूत्रस्य, तथा 'असिद्धं बहिरङ्गम्' इत्यस्य च त्रिपाद्यामप्रवृत्त्या राज्ञ इत्यादौ श्चुत्वादिसिद्धिः। अन्यथा श्चुत्वशास्त्रैकवाक्यतापन्नासिद्धपरिभाषयाऽल्लोपस्यासिद्धत्वेन श्चुत्वाप्रवृत्तिः स्यात्, कार्यकालपक्षे संज्ञाशास्त्राणां स्वदेशे वाक्यार्थं विनैव विधिदेश एव तैः सह वाक्यैकवाक्यतया वाक्यार्थः।

अत एव विधिदेशदेशीयत्वं कार्यकाले सञ्ज्ञाशास्त्राणाम्। एतत्पक्षफलन्तु 'अमू आसाते' इत्यादावयादिभ्यः परत्वात् प्रगृह्यसंज्ञया प्रकृतिभावसिद्धिः। कार्यकालानङ्गीकारे तु 'अमू आसाते' इत्यादौ परत्वादायादयो दुर्वाराः स्युः। "अदसो मात्" इति सूत्र तु 'अमू' इत्यत्रानुनासिकत्वनिवृत्त्या चरितार्थमेव। परिभाषाशास्त्राणां स्वदेशे सामान्यतो वाक्यार्थः। ततो विधिदेशे विधिस्थितलिङ्गेनोपस्थितानां तासां तैः सह पदैकवाक्यतया वाक्यार्थः। आसां तु स्वदेशस्थतैव, न तु विधिदेशस्थता। आसामेतत्पक्षस्वीकारफलन्तु त्रिपाद्यां प्रवृत्तिरूपमित्युक्तमेव प्राक्।

---

१. वस्तुतो यथोद्देशपक्षेऽपि संस्कारकपरिभाषाणां प्रवृत्तिर्भवत्येवेति प्रागुक्तमवश्यमवधेयम्।

**इत्संज्ञका अनुबन्धाः, तेऽवयवा अनवयवा वेति सन्देह आह—**

**अनेकान्ता अनुबन्धा इति ॥ ४ ॥**

**अनेकान्ता अनवयवा इत्यर्थः। यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव, अयं तु न तथा; तदर्थभूते विधेये कदाप्यदर्शनात्।**

---

अत्र प्राचां मते यथोद्देशे केवलस्यैव परिभाषाशास्त्रस्यैव स्वदेशे वाक्यार्थः, न तु विधिभिरेकवाक्यता, प्रधानेन गुणापकर्षणेऽपि गुणेन प्रधानापकर्षणस्यायुक्तत्वात्। कथञ्चिदाग्रहे त्वेकस्योपस्थानेनाकाङ्क्षाशान्तौ सर्वेषामुपस्थाने प्रमाणाभावात्। नहि "इको यणचि" इत्यस्य किमुदाहरणमिति प्रश्ने यावन्त्युदाहरणान्युदाह्रियन्ते, तस्मान्नापकर्षो न चैकवाक्यता। तद्वाक्यार्थस्मरणेनैव सिद्धकाण्डस्थविधिशास्त्रोपकारकत्वम्। कार्यकाले तु संज्ञाशास्त्रवत् परिभाषाणामपि[1] स्वदेशे वाक्यार्थं[2] विनैव प्रदेशदेशे तैः सह पदैकवाक्यता। अत एवासां विधिदेशदेशीयत्वमस्मिन् पक्षे। **'एकदेशस्थः'** इति भाष्यं तु यथोद्देशपक्षाभिप्रायमिति भाव.।

नन्वेवं तर्हि "न च कार्यकालपक्षे ङमो ह्रस्वात्" इत्यादिमूलग्रन्थासङ्गतिरिति चेत्, न; तत्र संस्कारकाकाङ्क्षायां विप्रतिषेधसूत्रबलादेकस्य एवोपस्थानात्। अत्र पक्षे संज्ञाशास्त्रस्यापि प्रदेशे विधिभिः सह पदैकवाक्यता। तत्रैकवृद्ध्यादिपदानामानर्थक्यन्तु न, उपस्थापकतया चारितार्थ्यात्। तत्र [च] पाठकृतं परत्वम्। परिभाषासु[3] संज्ञासु तूपस्थितिकृतं तदिति यदुक्तम्, तदन्यमतरीत्या, न तु स्वमतरीत्या। अत एव केचित्तु—इति[4]। अन्यथा परे तु—इत्येवावोचत्। अत एव परिभाषाणामिव संज्ञानामपि कार्यकाले पाठकृतं परत्वमेव नियामकम्[5]। परैव प्रगृह्यसंज्ञेत्यत्र संज्ञापदेन तत्कार्यं प्रकृतिभावो वा विवक्ष्यत इत्याशयानभिज्ञस्याग्रे प्रश्नः **कथमिति**। एकदेश्युत्तरम्—**कार्यकालमित्यादीति**। एवञ्च न तद्विरोध इत्येकरूपता संज्ञापरिभाषयोः सिद्धा।

एवञ्च संज्ञाशास्त्रस्यापि कार्यकालपक्षे वाक्यार्थबोधः स्वदेशे यथोद्देशवत्, पदपदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धकाभावात्। लक्ष्यसंस्कारकत्वमपि तस्य तुल्यम्। अत एव भाष्ये संज्ञापरिभाषयोरविशेषेणैकदेशत्वमुक्तम्। 'कश्चित् परिभाषारूपः' इति कैयटोक्तं तु न युक्तम्; परार्थत्वेन परिभाषाणामिव

---

१. उपेक्षाबुद्ध्या इति शेषः।

२. वाक्यार्थबोधमित्यर्थः।

३. अत्रैवं योजना—संज्ञासु तूपस्थितिदेशकृतपरत्वम्, परिभाषासु तु पाठकृतमिति यदुक्तम्, तदन्यमतरीत्या, अन्यथा ग्रन्थासङ्गतिः स्यात्।

४. 'उक्तम्' इति शेषः।

५. विप्रतिषेधसूत्रप्रवृत्ताविति शेषः।

संज्ञानामपि तुल्यत्वात्। एतेनाकडाराधिकारस्थभपदादिसंज्ञासु स्वेच्छया व्यवहारः। एवञ्च संज्ञापरिभाषयोरैक्यरूप्यमेव फलितमित्येतद्ध्वनयन्नुपपन्नमिति। वस्तुतः संज्ञासु कार्यकालत्वस्य प्रयोजनाभावः, त्रिपाद्यामिव सर्वत्रैव जातशक्तिग्रहेणैव निर्वाहाद्। 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इति भाष्यसंगतिस्तूक्तैवेति भावः।

नन्वेवं तर्हि यथोद्देशसंज्ञापरिभाषं कार्यकालपरिभाषा इत्येव ब्रूयादिति चेत्, सत्यम्, "वृद्धिरादैच्" इत्यादौ गुरुणा बोधितस्यार्थस्य "मृजेर्वृद्धिः" इत्यादौ विस्मृतस्य पुनर्बोधनमात्रेणापि सज्ञायां कार्यकालो [लांशो] पपत्तेरिति दिक्॥ ३॥

संज्ञाप्रस्तावाद्विशेषभूतेत्संज्ञाविषयिणीं परिभाषां वक्तुमुपक्रमते—**इत्संज्ञका** इति। इत्संज्ञायोग्या इत्यर्थः। [1]अनुबन्धत्वञ्च—इत्संज्ञाप्रयुक्तस्य लोपान्यकार्यजनकत्वम्। अवयवेत्यस्य प्रकृत्यादीत्यादिः। **सन्देह इति**। तत्र तेषां यदि प्रकृत्यवयवत्वं स्वीक्रियते, तदा "उदोचां माङः" इति सानुबन्धकस्यात्वभूतस्य निर्देशासङ्गतिः, मेङित्यवस्थायां ङकारसत्त्वे "आदेच उपदेशे" इत्यात्वाप्राप्तेः। किञ्च, अवदातं मुखमित्यत्र दैपः पकारसत्त्वेऽनेजन्तत्वादात्वाप्राप्त्या 'अदाप्' इति प्रतिषेधानापत्तेश्च। किञ्च, "उपदेशेऽजनुनासिक" इत्यत्रोपदेशग्रहणस्य वैयर्थ्यापत्तेः। तद्धि 'अभ्र आँ अटित' इत्यादौ "आङोऽनुनासिकः" इत्यनेन विहितस्यानुनासिकस्येत्वनिवृत्त्यर्थम्। सत्यां च तस्याम्, "आदितश्च" इत्येनेड्निषेधः स्यादित्युपदेशग्रहणं कर्तव्यमिति भाष्यकृता तत्प्रयोजनं दत्तम्। अवयवत्वस्वीकारे त्वङ्धातोराङोऽनवयवत्वेनैतद्भाष्यासङ्गतिः स्पष्टैवेत्येवमवयवत्वे सन्देहः। अनुबन्धविनिर्मुक्तस्य वाचकत्वस्वीकारे तु शितिकदित्यादौ बहुव्रीहिरनुपपन्नः स्यात्, स इत् यस्य, क इत् यस्येत्यवयवषष्ठयर्थाघटनात्, प्रकृतेऽवयवत्वसम्बन्धातिरिक्तसम्बन्धस्य षष्ठ्यर्थत्वासम्भवाच्च। किञ्च, घुडादावनुबन्धविशिष्टाद्विभक्तिनिर्देशदर्शनमप्यसङ्गतं स्यादित्येवमनवयवत्वे सन्देहः। एवं सन्देहादाह—**अनेकान्ता इति। अनवयवा इत्यर्थ इति**। एकान्तशब्दस्यावयववाचित्वादिति भावः। अनवयवत्वं च व्यतिरेकमुखेनोपपादयति—**यो हीति**। तत्र=बोध्ये, अयन्तु=अनुबन्धत्वावच्छिन्नस्तु, न तथा=नावयवः। **तदर्थेति**। तद्घटितार्थे इत्यर्थः। **विधेय इति**। अनुबन्धविनिर्मुक्तपदार्थोपस्थितिरिति भावः। ननूपस्थाप्येऽनवयवत्वं साध्यते, उत उपस्थापके? नाद्यः, उपस्थाप्येऽनुबन्धस्यासत्त्वेनावयवानवयवत्वशङ्कानुदयात्।

किञ्च, "हलन्त्यम्" इत्यत्र लक्षणाया निर्बीजतापत्तेश्च। नान्त्योऽपि, उपस्थापकसन्शब्दादौ सनादिशब्दावयवनकारादेरनवयवत्वस्य वक्तुमशक्यत्वात्, घटादिशब्दस्य टकारादिवत्। किञ्च, 'विधेये कदाप्यदर्शनात्' इति

१. अनु पश्चात्, अप्राधान्येन बध्यन्त इत्यनुबन्धत्वम्। अप्राधान्यं विधेयाटघकतया।

**शित्किदित्यादौ समीपेऽवयवत्वारोपेण समासो बोध्यः ।**

**वुञ्छण्कठेत्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णयम् । हलन्त्यमित्यत्रान्त्यशब्दः परसमीपबोधकः ।। ४ ।।**

---

हेतोरसङ्गत्यापत्तेश्च । नहि शरीरावयवस्य हस्तादेर्वृक्षादावदर्शनेनानवयवत्वं शक्यते वक्तुमिति चेत्, न; प्रायो भ्यामादावुपस्थापके दृष्टस्यावयवस्योपस्थाप्येऽपि दर्शनवत् । प्रकृते तदभावे न तस्योपस्थापकानवयवत्वमित्याशयात् । यथान्यत्र "जराया जरस्" इत्यादौ स्वरूपावच्छिन्नस्य वाचकता वाच्यता च सम्भवति, तथा प्रकृते स्वरूपावच्छिन्नस्य वाच्यत्वाभावदर्शनात् स्वरूपावच्छिन्नस्य वाचकतापि नास्तीति भावः ।

नन्वनवयवत्वेऽवयवावयविभावरूपसम्बन्धाभावेन सामीप्यस्य षष्ठ्यर्थत्वाभावेन च बहुव्रीहेरनुपपत्तिरित्याह—**शित्किदिति** । विशिष्टाद्विभक्तिस्तु सौत्री । **अवयवत्वारोपेणेति** । शिदादिपदम् इत्संज्ञकशकारादिर्यस्य समीपे तद्बोधनपरम् । प्रमाणं त्वत्र 'अभ्र आं अटितः' इत्यत्र "आदितश्च" इत्येतत्प्रवृत्त्या "उपदेशेऽज्" इत्युपदेशग्रहणप्रयोजनदानपरं भाष्यं ज्ञेयम् । समीपवर्तिन्यवयवत्वारोपमङ्गीकृत्यैव "आदितश्च" इत्येतत्प्रवृत्तिः स्वीकृता भाष्यकृतेति भावः । सामीप्यञ्च स्वोच्चारणाव्यवहितोच्चारणविषयत्वम् ।

नन्वेवं णिदित्यादावपि तथा सत्त्वेन "वुञ्छण्कठ" इत्यादौ णकारस्य छकएतदुभयसमीपवर्तित्वसम्भवात् छवत् कप्रत्ययस्यापि णित्त्वेन ऋश्यक इत्यत्र वृद्धौ आर्श्यक इत्यानिष्टमापद्येतेत्यत आह—**वुञ्छण्कठेत्यादाविति** । **पूर्वस्यैवेति** । पूर्वस्यैवेत्यत्र पूर्वसम्बन्धिन एवेत्यर्थः । आदिशब्देन 'क्त्वाणमुलौ' इत्यादौ परस्यैवेत्यस्य संग्रहः । व्याख्यानत[1] इति । यदुपदेशप्रयुक्ता यस्येत्संज्ञा तत्प्रयुक्तं कार्यं तस्यैवेति प्रत्यासत्तिरूपादित्यर्थः । एतच्च ज्ञापकस्याप्युपलक्षणम् । ज्ञापकं चात्र "प्रमाणे द्वयसज्दघ्नंच्" इत्यत्र द्वयसचश्चित्त्वेनैव दघ्नचश्चित्त्वे सिद्धे दघ्नचश्चित्करणमेव । एवं "तव्यत्तव्यानीयरः" इत्यत्र तव्यग्रहणमपि ज्ञेयम् । नन्वेवमपि "हलन्त्यम्" इत्यत्रान्त्यशब्दस्यावयववाचकत्वेन "अइउण्" इत्यादौ णादीनामन्त्यावयवत्वाभावात् "हलन्त्यम्" इतीत्संज्ञानापत्तिरिति मूले एव कुठारः, अत आह—**"हलन्त्यम्" इत्यत्रेति** । परसमीपेति कर्मधारयः । तथा चोपदेशस्य परसमीपवर्तिमो हल इत्संज्ञेत्यर्थः । एवम् "आदिर्ञिटुडवः" इत्यत्रादिशब्दः पूर्वसमीपबोधक इत्यवधेयम् ।

---

१. व्याख्यानत इति । स्वघटितं यत्पदं पदान्तराघटकं तादृशपदघटकनिरूपितानुबन्धकार्यं स्वघटितपदस्यैवेत्येवंरूपादिति भावः । स्वपदेन तत्तदनुबन्धो ग्राह्यः । पदान्तराघटकमित्यस्याभावेन "वुञ्छण" इत्यादौ स्वपदं विशिष्टमपि भवतीति दोषवारणाय । तेन पूर्वस्येत्युक्त्वा 'क्त्वाणमुलादौ दोषः' इति न शङ्कनीयम्—इत्यधिकः पाठो दाक्षिणात्यपुस्तके ।

**वस्तुतस्तु—**

**एकान्ताः ॥ ५ ॥**

**इत्येव न्याय्यम् । शास्त्रे तत्रोपलम्भात् अन्यत्रानुपलम्भाच्च ।**

**अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषु लभ्यते, नैवमयम् ।**

---

एवञ्चानुवन्धविनिर्मुक्तस्यैव वाचकत्वमिति सिद्धम्। अत एव "अर्वणस्त्रसौ" इति सूत्रविहितत्रादेशस्य सर्वादेशत्वं न, "नानुवन्ध" इत्यादि-वक्ष्यमाणपरिभाषात्रयस्यानारम्भणे लाघवमप्यस्मिन् पक्षेऽस्तीति ज्ञेयम् ॥ ४ ॥

ननु यद्यप्यस्मिन् पक्षे तिसृणां वचनरूपाणां परिभाषाणामनारम्भरूपं लाघवम्, तथाऽप्यर्थवतो विभक्त्यनुत्पत्तिः सौत्री, अनर्थकविशिष्टाच्च तस्माद्विभक्त्युत्पत्तिः सौत्री, शित्किदित्यादौ[1] समीपवर्तिन्यवयवत्वारोपः, अन्त्यशब्दः परसमीपबोधकः, इत्याद्यनेकगौरवग्रस्तत्वादरुचेः सिद्धान्तमाह—**वस्तुतस्त्विति । एकान्ता इति**। वाचकस्येति शेषः। ननु तदभाववाचकहेतोरुक्तत्वात् कथं तत्त्वमत आह—**शास्त्रे इति**। **तत्रेति**। वाचकत्वाभिप्रेताणादिशब्दे इत्यर्थः। **अन्यत्रेति**। वाच्ये इत्यर्थः। औपगवादिशब्दघटकाकारप्रत्ययरूपे इति यावत्।

एतेन, विधेयेऽनुपलम्भेऽपि क्षत्यभावः सूचितः। एवञ्चानुबन्धा अवयवाः, अवयवावयविसम्बन्धित्वेनान्यत्राप्रतीतत्वावच्छिन्नशाखावदित्यनुमानमस्मिन्नपि पक्षे सम्भवतीति प्रागुक्तस्यानवयवत्वसाधकहेतोः सत्प्रतिपक्षत्वं च बोधितम्। एवं हेत्वन्तरेणाप्यवयवत्वं सिध्यतीत्याह–**अनवयवो हीति**। एकजातीयसम्बन्धेन संयोगसम्बन्धेन नैवमयमिति। यथा काकादिः संयोगसम्बधेन गृहे उपलभ्यते, तत उत्थानेऽपि वृक्षादिषु संयोगसम्बन्धेनैवोपलभ्यते। अतः काकादेर्गृहवृक्षाद्यनवयवत्वम्, तथा नानुबन्धानामनवयवत्वम्, तेषामनेकाधिकरण एकजातीयसम्वन्धेनोपलभ्यमानत्वाभावात्। अपि तु, अवयवत्वं सूत्रे स्वघटकसमुदायान्त्यादिवृत्तित्वसम्बन्धेन लक्ष्ये स्वघटकसमुदायोपस्थाप्यसम्वन्धेन स्वप्रतियोगिकाभावत्वसम्बन्धेन चोपलभ्यमानत्वादिति भावः।

न च लोपेन लुप्यमानस्यानुबन्धस्य तत्रासत्त्वात् कथमुपलब्धिविषयत्वमिति वाच्यम्, लौकिकसन्निकर्षजन्यज्ञानविषयत्वाभावेऽपि घटाभाववद्भूतलमित्यत्र भूतलवृत्त्यभावावच्छेदेन प्रकारतया भासमानस्य घटस्यालौकिकसन्निकर्षजन्यज्ञानविषयत्वस्य तद्विषयत्वे बाधकाभावात्। तथा चानुबन्धा

---

१. आदिशब्देन निषादस्थपत्यधिकरणविरोधो ग्राह्यः। किञ्च, अस्य हेतोर्व्यभिचारश्च "आनङ् ऋतो द्वन्द्वे" इति विहितस्यानङो नकारस्यानवयवत्वस्य दृष्टत्वाच्च—इत्यधिकः पाठो दाक्षिणात्यपुस्तके।

**एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः। अन्त्यादिशब्दे लक्षणा च न। किञ्चानवयवत्वे णशकप्रत्ययादौ णादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावाद् दघ्नचश्चकारस्य वैयर्थ्यापत्तिश्च। इदं च "तस्य लोपः" इत्यत्र भाष्ये स्पष्टम्। तत्र ह्युक्तम्—"एकान्ता अनुबन्धाः" इत्येव न्याय्यमिति दिक्॥ ५॥**

---

वाचकावयवा वाचके येन सम्बन्धेनोपलभ्यन्ते, तेन सम्बन्धेनान्यत्र वाच्येऽनुपलभ्यमानत्वावच्छिन्नशाखावदित्यनुमानेनावयवत्वमेव न्याय्यमिति भावः।

एतेनापि पूर्वोक्तस्यानवयव[ त्व ]साधकहेतोः सत्प्रतिपक्षत्वं बोधितम्। एतावता बन्धेन प्रागुक्तहेतोर्दुष्टत्वं प्रसाध्यावयवत्वे साधकान्तरमप्याह—**एवं हीति**। यतोऽवयवत्वे इत्यर्थः। न्यायत औचित्येनारोपं विनेति यावत्। **अन्त्यशब्द** इति। प्राथमिकशक्तिग्रहेणैव हलन्त्यसूत्रजन्यशाब्दबोधोपपत्तौ लक्षणाकल्पनं गौरवग्रस्तमिति भावः।

नन्वनयोः पक्षयोर्विनिगमनाविरहात् पूर्वोक्तगतिरेव गृह्यते, अत आह—किञ्चेति। तत्पक्षस्वीकारे आदिशब्दस्याद्यावयवबोधकत्वम् "हलादिः शेषः" इत्यादौ दृष्टम्। अनुबन्धस्यातथात्वे णादिप्रत्ययावयवादेरित्त्वानापत्तौ "चुटू" इत्यादिशास्त्राणामसङ्गत्यापत्तिरिति भावः। नन्वित एवानुपपत्तेस्तत्रापि लक्षणं वदाम इति चेत्, तत्राह—दघ्नचश्चेति। एवञ्च दघ्नच्प्रत्यये चकारोच्चारणमेकान्तत्वपक्षे ज्ञापकमपीति ज्ञेयम्। यदुपदेशप्रयुक्तेत्येतदपेक्षया एकान्तत्वज्ञापकस्य युक्तत्वादिति भावः। इदं चेति। प्रागुक्तं सर्वं चेत्यर्थः। तदेवाह—**तत्र हीति**। एकान्तत्वानेकान्तत्वेत्युत्तरमिदमुक्तम्। तत्र=भाष्ये इत्यर्थः।

ननु यदि णशयोरित्त्वं न स्यात्, तदा द्वयोरसरूपत्वादेव विकल्पे सिद्धेऽपि "श्याद्व्यध" इति सूत्रविहितस्य नित्याभिप्रायकम्। "ददातिदधात्योः" इति सूत्रे विभाषाग्रहणं व्यर्थमिति तत्सामर्थ्यादेव तयोरित्संज्ञा भविष्यतीत्यरुचेराह—कादेरिति। वस्तुतस्तु कादे[1]रित्यपपाठ एव णादेरिति शब्देन्दुशेखरोक्तिविरोधापत्तेः, अन्त्यशब्दवदादिशब्देऽपि लक्षणयैवोपपत्तेरुक्तत्वाच्च। किञ्च, "हलन्त्यम्" इत्येतच्छास्त्रविषयेऽनुबन्धविनिर्मुक्तोपस्थितेरप्रामाणिकत्वेन 'विधेये कदाऽप्यदर्शनात्' इत्यनेकान्तसाधकहेतोस्तत्राभावेन णादेरेकान्तत्वमेवेति।

**दिगिति**। लक्षणारोपाद्यभावप्रयुक्तलाघवेन "उपदेशेऽजनुनासिक इत्" इत्यत्रोपदेशग्रहणाकरणरूपलाघवेन च पूर्वोक्तहेतुनैकान्तत्वस्यैव सिद्धेरिति भावः। न च 'नानुबन्धकृतमनेकाल्त्वम्' इत्यादिवचनत्रयस्य करणमस्मिन् पक्षे गौरवमिति वाच्यम्, अनेकविषयकज्ञानजनकमनोव्यापाररूपगौरवापेक्षया

---

१. साम्प्रतिकेषु मुद्रितपुस्तकेषु तु 'णादेः' इत्येव पाठो दृश्यते।

**नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसिद्ध्याऽनेकाल्सूत्रे शिद्ग्रहणं व्यर्थम्, अत आह—**

**नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥**

---

वचनत्रयविषयकवर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवादस्य न्याय्यत्वादेकान्तत्वस्यैव न्यायसिद्धत्वादिति भावः। किञ्चैतद् वचनत्रयमपि न कार्यम्। अनुबन्धानामविद्यमानवद्भाव इत्येकेनैव वचनेनोपपत्तेरित्यतीव लाघवमिति दिक् ॥ ५ ॥

अवयवत्वपक्षे भाष्याद्युक्तदोषत्रयं तदुक्तरीत्यैव तत्क्रमेणोद्धर्तुं पूर्वसंगतिमाह—**नन्वेकान्तत्वे** इति। **शिद्ग्रहणं व्यर्थमिति**। नन्वित्संज्ञालोपयोरन्तरङ्गत्वेनात्र पक्षेऽप्यनुबन्धविनिर्मुक्तपदार्थोपस्थितेरौशादौ क्वानेकाल्त्वम्, येन सर्वादेशः स्यादिति चेत्? न; शकारोच्चारणसामर्थ्येन 'सूत्रे निर्दिष्टो योऽनेकाल्' इति "अनेकाल् शित्" इति सूत्रार्थात्[1]। न चैवम् "तासस्त्योर्लोपः" इत्यादौ सर्वादेशत्वापत्तिरिति वाच्यम्, आनुपूर्व्यवच्छिन्नविधेयताको य आदेशः स सर्वस्येति तदर्थात्। प्रमाणं त्वत्र "ध्वसोः" इति सूत्रे लोपग्रहणम्। तद्धि "लोपो यि" इत्यनुवर्तमाने पुनर्लोपग्रहणं सर्वादेशार्थम्। सामान्यतः सूत्रे योऽनेकाल् इत्यर्थे तु अनुवृत्त्यैव सर्वादेशत्वसिद्ध्या तद्वैयर्थ्यं स्पष्टमेव। किञ्च—विधीयमानो योऽनेकालित्यर्थे तु शकारोच्चारणसामर्थ्यादेव भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वसिद्धेः। "लोपो यि" इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात् "ध्वसोः" इति लोपस्य सर्वादेशत्वसिद्धेर्न तदर्थमपि शिद्ग्रहणम्; उपसञ्जातविरोधन्यायेनोत्तरत्रैवालोऽन्त्यपरिभाषाबाधसम्भवात्।

**एतज्ज्ञापकमिति**। ननु ज्ञापितेऽपि औशादौ शकारोच्चारणसामर्थ्यादनेकाल्त्वारोपादेवेष्टसिद्धेः शिद्ग्रहणस्य स्वांशे चारितार्थ्याभाव इति चेत्, न; "विभाषा ङिश्योः", "शि सर्वनामस्थानम्" इत्यादौ विशेषणार्थतया "जसः शी", 'जश्शसोः शिः' इत्यत्र शित्त्वस्य चारितार्थ्येन तत्र शकारोच्चारणविरहेण शित्त्वादेव सर्वादेशत्वस्य वक्तव्यतया औशादावेतत्परिभाषाया बाधापेक्षया शित्त्वादेव सर्वादेश उचित इति स्वांशे चारितार्थ्यसम्भवात्।

---

१. औशादीनामौश्त्वादिरूपेण विधानाद् अनेकाल्त्ववृत्तिधर्मावच्छिन्नविधेयताक आदेश इत्यर्थकरणाद् वा।

यद्वा, "न ल्यपि" इति लिङ्गात् 'अनल्विधौ' इति निषेधेऽनुबन्धभिन्नस्यैव ग्रहणं स्यात्। तथाऽत्र प्रकृते स्थानिवद्भावादनेकाल्त्वमिति तात्पर्याद् वा इत्यपि हेतुः। तथा चाशिद्ग्रहणादनल्विधावित्यत्र न सामान्यतोऽनुबन्धभिन्नत्वेन संकोचः; किन्तु अनुबन्धघटिताल्वृत्तिधर्मभिन्नत्वेन संकोचः। तेनानेकाल्त्वहलन्तत्वादिधर्मभिन्नस्य शित्त्वादेरेव आदेश इत्युत्तरम्। इत्येव परिभाषार्थ इति केचित्—इत्यधिकः पाठः ख. पु०।

**शिद्ग्रहणमेवैतज्ज्ञापकम्, तेन "अर्वणस्तृ इत्यादेर्न सर्वादेशत्वम्। डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनानपूर्व्यात् सिद्धम् ।। ६ ।।**

---

किञ्च– उच्चारणसामर्थ्यादनेकाल्त्वारोपः, परिभाषाबाधश्चेति कल्पनाद्वयी, एतदपेक्षया लाघवादित्संज्ञाशास्त्रस्यैव बाधापत्तेः। **तेन "अर्वणस्त्रसौ" इत्यादेर्नेति**। न च तृङ्रुङादिन्यासेन सिद्धेरियं व्यथति वाच्यम्, अनेकत्र ङकारपाठे गौरवात्।

**अत्र केचित्**—'भाव्यमानोऽप्युकारः' इति परिभाषया ग्राह्यस्य लघोर्दीर्घ इति प्राप्तस्य च वारणाय "दिव उत्", 'स्मृदृत्वर' इत्यादितपरकरणास्यावश्यकत्वेन तत्र सर्वादेशत्ववारणायास्या आवश्यकत्वात्। वस्तुतः "दिव उत्" इत्यादेरनेकाल्त्वमेव नास्ति, क्व सर्वादेशत्वप्राप्तिः? तथा हि—'उत्' इत्येव उकारस्य संज्ञा, तया प्रत्यायित उकारस्तु विधीयते। तथा च संज्ञाया लोपवदनेकाल्त्वेऽपि संज्ञिनोऽनेकाल्त्वाभाव एव। एवञ्च "तित् स्वरितम्" इति सूत्रे भाष्यवार्त्तिकग्रन्थोऽभ्युपेत्यवाद एवेति न परिभाषायाः "दिव उत्" इत्यादि प्रयोजनमिति सहृदयैराकलनीयम्।

किञ्च– शिद्ग्रहणेन न 'नानुबन्ध' इति परिभाषा ज्ञाप्यते, किन्त्वनुबन्धघटितनिमित्तककार्यातिरिक्ते कार्ये कर्तव्येऽनुबन्धानामविद्यमानत्वम्, अल्त्वव्यवहाराविषयत्वं वा ज्ञाप्यते। तेन प्रदीव्येत्यादावनल्विधाविति निषेधाप्रवृत्त्या स्थानिवद्भावेन कित्त्वातिदेशे "क्ङिति" इति गुणनिषेधः। अत एव "न ल्यपि" इति चरितार्थम्, अन्यथा अनल्विधाविति निषेधेनैव स्थानिवत्सूत्राप्रवृत्त्या कित्त्वातिदेशाभावेन इत्त्वाप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव। न चैवं प्रपठ्येत्यादौ वलादिलक्षण इट् स्यादिति वाच्यम्, अनुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तयेऽनुबन्धानामल्त्वव्यवहाराभावज्ञापनात्, अत्रानुबन्धनिमित्तककार्याभावात्।

**यद्वा**, तत्र ककारस्यातिदेशेऽपि तस्य वल्त्वस्याप्यल्त्वव्याप्यधर्मवत्त्वाद् वल्त्वव्यवहाराभावात्। शित्किदित्यादौ तूच्चारणसामर्थ्यान्न दोषः।

यद्वा[1], अल्त्वव्यवहारो नास्तीत्यस्य प्रत्याहारग्रहणेन ग्रहणं नास्तीत्यर्थाश्रयणान्न दोषः। नत्वेवं तर्हि "डः सि धुट्" इत्यादौ हल्ङ्यादिलोपानापत्तिरिति चेत्, न; साधुशब्दानुशासनं कुर्वता भगवता पाणिनिना सुलोपं कृत्वैवोच्चारितमिति "डः सि धुट्" इत्यदोषादिति दिक्।

तत्रानुबन्धपदमनुबन्धयोग्यपरं ज्ञेयम्। तदभिप्रायेण परिभाषायामनेकाल्त्वपदमपि योज्यम्। तथा चैतत्परिभाषात्रयं न कर्तव्यम्, तिसृणामप्येकस्मिन्नेवार्थे तात्पर्य्यादिति भावः।

---

१. 'यद्वा' इत्यारभ्य 'न दोषः' इति ख० पु० नास्ति।

**नन्वेवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्वे कृतेऽदाप् इति घुसंज्ञा-**

---

**डादिविषये त्विति।** आदिना "जसः शी" इत्यस्य "सुपाम्" इति सूत्रस्थ 'शे' इत्यस्य च संग्रहः, न तु णलः; तस्य प्रत्ययाधिकारे पाठात् स्वतः प्रत्ययत्वात्। न च डादिविषये आनुपूर्व्यात् सर्वादेशत्वस्वीकारे सर्वादेश-सम्पादकतया डकारोच्चारणस्य चरितार्थतया 'डित्त्वसामर्थ्यादभस्यापि टेर्लोपः' इत्यस्यासंगतिरिति वाच्यम्, डः इत्यस्य स्थाने केति सिद्धे डकारोच्चारणमेत-दर्थमित्याशयात्।

**सर्वादेशत्वं विनेति।** आदौ सर्वादेशता, तत आतिदेशिकं प्रत्ययत्वम्, तत इत्संज्ञेति, पूर्वं तदभावात्। ड आ इत्यानुपूर्व्या अनेकाल्त्वात् सर्वादेशसिद्धि-रित्यर्थः। णलादौ तु 'ण अ' इत्यकारप्रश्लेषेणैवेष्टसिद्धिर्ज्ञेया। यदि त्वित्-संज्ञायोग्यत्वमनुबन्धत्वमिति डकारस्य सर्वादेशत्वात् प्रागित्संज्ञाभावेऽप्यने-काल्त्वं न भविष्यतीत्युच्यते, तदा णल इव 'डा आ' इत्याकारप्रश्लेषेणैव सर्वादेशत्वं बोध्यम्। "जसः शी" इत्यादौ शित्त्वादेव। मूलग्रन्थस्तु प्राचीन-रीत्यावगन्तव्यः। अत एवारुचिबोधकः 'तु' शब्दः।

परमार्थतस्तु डादिविषये सर्वादेशत्वं त्वनुबन्धत्वस्यैवाभावेन विना अभावार्थकोऽयं 'विना' शब्दः, तथा चाभावाभावस्य प्रतियोगिरूपतयाऽनु-बन्धत्वयोग्य[त्व]सत्त्वेऽप्यानुपूर्व्यात्='आ आ' इत्यानुपूर्व्यात् सिद्धमिति बोध्यम्॥ ६॥

ननु सर्वादेशे परिहृतेऽप्यवदातं मुखमित्यत्रोपदेशे एजन्तानामात्वमुच्य-मानं दैपो न प्राप्नोतीति अदाविति घुसंज्ञाप्रतिषेधो न स्यात्, अत आह— **नन्वेवमपीति**[1]। उक्तदोषस्योक्तरीत्योद्धारेऽपि। **पलोपोत्तरमात्व** इति।

---

१. ननु स्वमते नकारेत्संज्ञकः सो भवतीति व्याख्यानस्य सत्त्वात् 'अदाप्' इत्यत्रापीत्संज्ञक-पकाराव्यवहितपूर्ववृत्तिदाशब्दं विना इत्येवार्थो भविष्यति। तथा च 'दाप्' इत्यस्य पलोपे कृतेऽपि पकारं स्मृत्वा तत्पूर्वत्वेन चानुसन्धानं कृत्वा दाशब्दस्य यथा निषेधः। एवं प्रकृतेऽपीति सुतरां दोषाभावात् कथं शङ्कते इति चेत्, न; स्वमतेऽपि सनित्यादौ तादृशार्थकरणे मानाभावात्। सन्त्वेन रूपेणैव सनादीनां विधानमिति तात्पर्येण शङ्का-करणात्। न चैवं दाशब्दे दाप्त्वं दुर्लभम् (प्रकृते न स्यात्)। तथा हि—'दैप्' इत्यस्य स्थाने तस्य लोपशास्त्रे दै इत्यादेशे कृते ततो दै इत्यस्य दा इति। तथा च स्थानिनि दात्वमेव वर्तते, न दाप्त्वमिति वाच्यम्; दा इति शब्दस्य बोधकं यत् 'दैप्' इति, तादृशबोधकशब्दस्यैव माङ इति ज्ञापकाद् दात्वम्, न तु तद्बोध्ये बोधकस्यैव दाबूरूपत्वात्। बोध्ये दाशब्दे दाप्त्वस्य सुलभत्वात्। नन्वेव सति दैप्शब्दस्य तदवस्थायामात्वे कृते 'दाप्' इति जाते एतद्बोध्यम् 'दै' इत्येव स्यात्, न 'दा' इति। 'दैप्' इत्यत्र आदौ बोधकताया दृष्टत्वात्। तद्बोध्यता च दैशब्द एव, न तु दाशब्दे; आत्वं च बोधकस्यैव, न तु बोध्यस्येति 'दा' इति रूपं दुर्लभमिति चेत्, न; अशिति

**प्रतिषेधो न स्याद्; दैपः पकारसत्त्वेऽनेजन्तत्वादात्वाप्राप्त्या, पलोपोत्तरं पकाराभावेनास्य दाप्त्वाभावाद् ? अत आह—**

**नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥**

**"उदीचां माङः" इति निर्देशोऽस्या ज्ञापकः। "आदेच उपदेशे" इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते ङकारसत्त्वे त्वेजन्तत्वाभावादात्वा-प्राप्तेस्तस्यासङ्गतिः।**

**न चास्यामवस्थायां तस्य धातुत्वाभावात् कथमात्वमिति वाच्यम् ? तत्र 'धातोः, इत्यस्य निवृत्तेरित्यन्यत्र विस्तरः।**

---

अन्यथाऽनेजन्तत्वादात्वं न स्यादिति भावः। तथा च 'दो दद्धोः' इति स्यादिति भावः। **पकारसत्त्वेऽनेजन्तत्वादिति।** पकारसत्त्वे एजन्तस्यानुपदिश्यमानत्वा-दात्वाप्राप्त्येत्यर्थः। यथाश्रुतार्थस्वीकारे तु पकारविशिष्ट एजन्तत्वातिदेशापत्तौ पकारस्यैवात्वं स्यादिति भावः। **आत्वाप्राप्त्येति।** अस्य दाप्त्वाभावा-दित्यत्रान्वयः।

ननु पलोपोत्तरमात्वं भविष्यतीत्यत आह—**पकाराभावेनेति। यद्वा**— पलोपोत्तरमात्वे कृते अदाबिति घुसंज्ञाप्रतिषेधो न स्यात्, पलोपोत्तरं पकारा-भावेनास्य दाप्त्वाभावादित्येको वाक्यार्थः, पकारसत्त्वेऽनेजन्तत्वादात्वा-प्राप्त्याऽस्य दाप्त्वाभावादिति द्वितीयवाक्यार्थः। पकारसत्त्वे आत्वाप्राप्तिः, पकाराभावेऽदाबिति प्रतिषेधाप्राप्तिरिति परमार्थः। अस्य=उक्तप्रयोगस्येत्यर्थः।

**इति निर्देश** इति। मेङः सानुबन्धकस्यात्वभूतस्य माङ् इति निर्देश इत्यर्थः। अस्मादेव ज्ञापकपरभाष्यप्रामाण्यात् 'माङ् माने' इत्यस्य व्यतीहारे शक्त्यभावोऽनुमीयत इति बोध्यम्।

ज्ञापकं विवृणोति—**आदेचइति। उपदिश्यमानस्येति।** उपदेशपदे कर्मणि घञ्, षष्ठ्यर्थे सप्तमीत्यभिप्रायेणेदम्। **एजन्तत्वाभावादिति।** ङकारसत्त्वे मेमात्रस्योपदिश्यमानत्वाभावादित्यर्थः।

'लिटि धातोः' इत्यतो धातोरित्यनुवृत्तिमादाय शङ्कते—**न चेति।** अस्याम्=मेङ् इत्यवस्थायाम्, तस्य='मे' इत्यस्य अनुबन्धलोप एव धातुत्वेऽपीत्य-र्थस्य "न धातुलोप" सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति भावः। तत्र हि धातुग्रहणं किम् ? लूञ् लविता, पूञ् पवितेति प्रत्युदाहृतम्। तच्चानुबन्ध-विनिर्मुक्तस्य धातुत्वे संगच्छते इति भावः। **तत्रेति।** "आदेच" इति सूत्रे इत्यर्थः। **इत्यन्यत्रेति।** "आदेचः" इति सूत्रे **शब्देन्दुशेखरे** इत्यर्थः। तत्र हि

---

पर्युदासात्। शित्परत्वाभावयोग्यविषयकबोधजनकत्वेन तात्पर्यविषयता। दाप्शब्दे तत्परत्वयोग्यविषयकबोधजनकत्वेन तात्पर्यविषयता। दैप्शब्दे इति तात्पर्यद्वयकल्पनेना-दोषादिति ख० पु० अधिका पाठः।

**स्पष्टं चेदम् "दाधाघ्वदाप्" इति सूत्रे भाष्ये ॥ ७ ॥**

**नन्वेवमपि 'वाऽसरूप' सूत्रेण कविषयेऽणोऽप्यापत्तिरित्यत आह—**

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

**"ददातिदधात्योर्विभाषा" इति णबाधकशस्य विकल्पविधायकमस्यां ज्ञापकम् । तेन गोद इत्यादौ नाणिति 'वाऽसरूप' सूत्रे भाष्ये स्पष्टम् ॥ ८ ॥**

---

धातुग्रहणाभावे गवादिप्रातिपदिकेष्वात्वमाशङ्क्य तेषामुणादित्वेनाव्युत्पन्नत्वादुपदेशत्वाभावेन समाहितम् । तथा हि—गवादिप्रातिपदिकानामुद्देशः, न तूपदेशः, उणादीनामव्युत्पन्नत्वात् । उपदेशपदेन शास्त्रमुच्यते । तथा च शास्त्रे पठिता ये एजन्ताः, तेषामात्वं विधीयत इति गोभ्याम्, नौभ्यामित्यादौ नात्वम् । न च रेप्रभृतीनामुपदेश एजन्तत्वादात्वव्यावृत्तये धातोरित्यावश्यकमिति वाच्यम्; शित्परत्वयोग्यानामेवात्वमिति प्रत्यासत्त्या तद्व्यावृत्तेः सुलभत्वात्, एकारोच्चारणसामर्थ्याच्च । कर्मव्युत्पन्नोपदेशशब्देन समुदायस्योपदिश्यमानत्वम्[1], न तु तदवयवस्य, तदुपदेशे तात्पर्याभावात् । अतो ढौकितेत्यादावपि न दोषः । अत एव माङिति निर्देशस्य एतत्परिभाषायां ज्ञापकत्वं युक्तम् । अन्यथा धातोरित्यनुवृत्तौ पूर्वोक्तदिशानुबन्धविनिर्मुक्तस्यैव धातुत्वेन माङ इत्यत्रात्वानापत्त्या तदयुक्तं स्यात् । **भाष्य इति ।** तत्र हि—"नौ द्व्यचः" इत्यादावात्वमाशङ्क्य "गोतो णित्" इति णित्त्वातिदेशाज्ज्ञापकात्तदभावः साधितः । न ह्यात्वे कृते गोशब्दस्यास्ति प्रयोजनं णित्त्वस्येत्युक्तमित्यर्थः । तस्माद्धातोरित्यस्यानुवृत्तौ न प्रयोजनम्, नाप्यननुवृत्तौ दूषणमिति नात्रानुवर्तत इति सिद्धम् ।

**भाष्ये तु** दैपः पित्त्वसामर्थ्याच्छ्रुतं दाशब्दस्मृतं पकारं चादाय दाप्त्वस्यार्थसमाजग्रस्तत्वान्न दोषः । अथवा दैबित्यस्य स्थाने दिवादिगणे दाप् इत्यस्यापि सुपठत्वाददोषः । धातोरेकाच्त्वेन धातुस्वरे, नित्स्वरे वा न विशेष इत्युपायान्तरमुक्तम् ॥ ७ ॥

तृतीयदोषमुद्धर्तुमाह—**एवमपीति ।** पूर्वोक्तदोषवारणेऽपीत्यर्थः **णबाधक [श] स्येति ।** "श्याद्व्यध" इति सूत्रप्राप्तो यो णः, तस्य बाधको यः शः, तस्येत्यर्थः । अत्र "वाऽसरूप" सूत्रे असरूपशब्देन भिन्नरूप एव गृह्यते, न तु रूपानुत्पत्तिः । तद्यद्यौपदेशिकं गृह्यते चेत् [?], तदा तत्र सर्वेषामप्यसरूपत्वेन व्यावर्त्याभावात् सूत्रेऽसरूपग्रहणानर्थक्यमेव स्यात् । अतः प्रायोगिकमेवासारूप्यं

---

१. **"उपदिश्यमानत्वं च अज्ञातस्य स्वरूपज्ञापकोच्चारणतात्पर्यविषयवर्णसमुदायत्वविशिष्टाल्पत्वविशिष्टं ग्राह्यम् । अल्पत्वे समुदायवैशिष्ट्यं च—स्वाश्रययावद्वर्णप्रागभावाधिकरणकालावृत्तित्वसम्बन्धेन । तेन ढौकृ इत्यादौ अवयवानतिरिक्तत्वात् समुदायस्य अवयवे उपदेश्यत्वसत्त्वेऽपि न क्षतिरिति ख० पु० अधिकः पाठः ।**

**ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात् प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः' इति न्यायात् ।**

---

गृह्यते, तथा च काणोरुभयोरपि सरूपत्वाद् [ एवञ्च अ ] सरूपग्रहणेनैव कादिविषये णादेरप्रवृत्त्युपपत्तेर्व्यर्थैवैषा परिभाषा ।

**केचित्तु**—प्रायोगिकमेवासारूप्यं ग्राह्यमित्यत्र प्रमाणाभावादुपस्थितिनिष्ठमसारूप्यं गृह्यते । तथा च कविषये विधानात् प्रागित्संज्ञाया एवाभावात् कस्य कत्वेनोपस्थितिरणस्त्वत्वेनेति असारूप्याद् वासरूपसूत्रेण कविषयेऽणोऽप्यापत्तौ तद्व्यावृत्तयेऽवश्यं स्वीकर्तव्यैषा परिभाषा । परिभाषायामनुवन्धपदमनुबन्धयोग्यपरमित्याहुः ।

**विकल्पविधायकमिति** । विकल्पविधायकसूत्रस्थं विभाषाग्रहणमित्यर्थः । **"वासरुप" सूत्र इति** । "तस्य लोपः" इति सूत्रस्याप्युपलक्षणं तदित्यवधेयम्[1] ॥ ८ ॥

अथ संज्ञाप्रसङ्गात् संज्ञाविशेषे विचार इति पूर्वसङ्गतिं ध्वनयितुमाह—**ननु संख्येति** । प्रकरणस्य=भोजनादिप्रकरणस्य । अभिधानियामकत्वम्=तात्पर्यसंकोचकत्वम् । यथा नानार्थे शक्तस्यापि सैन्धवपदस्य भोजनरूपप्रकरणेन लवणरूपेऽर्थे तात्पर्यनिर्णयः, तद्वत्[2] ।

**कृत्रिमेति** । ननु कृत्रिमाकृत्रिमयोरित्यस्य[3] कृत्रिमशब्दः कृतिप्रयोज्यो-

---

१. वस्तुतः 'असरूप' इत्यनेन रूपस्यैव प्रथमत उपस्थितेः । असति बाधके उद्देश्यतावच्छेदकावच्छेदेनान्वयस्य न्याय्यत्वात् । प्रवृत्तिरूपासामान्य अभाववत एव ग्रहणाद् णशकादीनां णत्वादिरूपाभावेऽपि सरूपत्वात् । इयं परिभाषा व्यर्थैवेत्यरुचिः । ननु अनुबन्धकृतसारूप्याभावे असरूपपदस्य किमुदाहरणमिति चेत् ? कुम्भकार इत्यादौ अणा अचो नित्यं बाधो यथा स्यात् । एवं मुक्तधनः 'हनश्च वध' इत्यत्र घञपोश्च नित्यं बाधः । वासरूपमान्ते इति 'तस्य लोपः' इति सूत्रस्याप्युपलक्षणमेतदित्यवधेयम् इत्यधिकः पाठः ख० पु० ।

२. यद्वा, आलङ्कारिकरीत्या शक्तेरेव संकोचः । तथा हि—यदि सैन्धवादिशब्दैरश्वादिवाच्योऽर्थो न स्यात्, तर्हि सैन्धवादिशब्दैरश्वो बोद्धव्य इतीश्वरेच्छाया नैरर्थक्यमेव स्यात् । तस्माद् यस्मात् सैन्धवशब्दादश्वादीनां बोधः, स एवाश्वे शक्तः, नान्यसैन्धवशब्दः । केचन सैन्धवशब्दा अश्वादिषु शक्ताः, केचन न शक्ता इति हि तेषां मतम् । तथात्र शक्तेरेव संकोचः । भोजनकाले सैन्धवपदोच्चारणे इदं सैन्धवपदमश्वे न शक्तम्; किन्तु सैन्धव इत्यालङ्कारिकाः ।

३. ईश्वरेच्छायां सैन्धवत्वेन रूपेणैव सैन्धवशब्दानां केषाञ्चिन्निवेशः । बोधजनकताऽत्र फलोपधायकतारूपनिष्ठा, न तु सामान्यतो जनकत्वरूपा । अश्वस्योपस्थितिस्तु सैन्धववाचकपदसजातीयसैन्धवपदवाच्यत्वरूपलक्षणाज्ञानेन, न तु शक्त्येत्यपि बोध्यम् । इत्यधिकः पाठः ख० ।

**अस्ति च प्रकृते बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम् न तु लोकप्रसिद्धैकद्व्यादीनामित्यत आह—**

**उभयगतिरिह भवति ॥ ६ ॥**

**इह=शास्त्रे । "संख्याया अतिशदन्तायाः" इति निषेधोऽस्या ज्ञापकः ।**

**नहि कृत्रिमा संख्या त्यन्ता शदन्ता वास्ति । तेन "कर्तरि कर्मव्यतिहारे" 'कण्वमेघेभ्यः करणे', 'विप्रतिषिद्धं चानधिकरणे' इत्यादौ लौकिकक्रियाद्रव्याद्यवगतिः ।**

**तत्र क्वोभयगतिः, क्वाकृत्रिमस्यैव, क्व कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम् । अत एवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहणम्, न तु द्विस्त्रिर्घुष्टमात्रस्य ।**

**स्पष्टं चेदं संख्यासंज्ञासूत्रे भाष्ये ।**

---

त्पत्याश्रयः[२] । एवञ्च घटाद्यर्थवत्, कृत्रिमत्वं संज्ञाया एव, न तु संज्ञिन इत्यनुपपत्तिः, कृत्या निर्वृत्तमिति विग्रहादिति चेत्, न; शब्दार्थयोस्तादात्म्यादेवैतादृशव्यवहारात् ।

ननु लोके सैन्धवमानयेत्यादौ यथा स्वाव्यवहितपूर्वोपक्रान्तत्वरूपभोजनगमनादिकं प्रकरणम्, तथेह शास्त्रे किम्, येन तात्पर्यनिर्णयः स्यात् ? अत आह--**अस्ति** चेति ।

ज्ञापकमुपपादयति-**नहीति । त्यन्तेति** । अर्थवत्त्यन्तेत्यर्थः । तेन कृतीत्यस्य सत्त्वेऽपि न दोषः[१] । **लौकिकेति** । तत्त्वञ्च शास्त्रीयसांकेतिकार्थभिन्नत्वेन विदितत्वम् । आद्ययोः क्रियावगतिः, अन्त्ये द्रव्यावगतिरिति विवेकः, न तु कारकस्येति भावः[२] ।

नन्वकृत्रिमस्यैव ग्रहणमित्यर्थं एव ज्ञाप्यतामिति चेत्, न, आम्रेडितादौ दोषापत्तेः, संज्ञाकरणवैयर्थ्यापत्तेश्चाकृत्रिमस्यापोत्येव ज्ञापनस्य युक्तत्वात् । ननूभयगतिरिति प्रतिज्ञाय "कर्तरि कर्म" इत्यादौ फलकथनमयुक्तम्, तत्रोभयग्रहणासम्भवात् । संख्याग्रहस्थले चोभयग्रहणसम्भवात् तथा फलं वक्तुं युक्तमिति चेत्, न, उभयगतिरित्यस्योभयोः=कृत्रिमाकृत्रिमयोः, व्यस्तयोस्समस्तयोश्च विषयभेदेनैकैकत्र विषयेऽवगतिः=ग्रहणमित्यर्थेन त्रितयलाभात् तत्रेति । तेषां

---

१. शास्त्रकृतिप्रयोज्योत्पत्त्याश्रयः—क० ।
२. वस्तुतस्तु 'कृत्रिमशब्दस्य कर्कृतप्रयोज्योत्पत्त्याश्रयत्वमर्थः, इति पाठः साधुः ।
३. ननु कतिशब्दोऽस्ति त्यन्तः संख्यासंज्ञकश्चेति न वैयर्थ्यं त्यन्तेत्यस्य । न च 'अर्थवद्ग्रहण' परिभाषया तद्व्यावृत्तिः, अर्थवतोऽनर्थकस्य च सम्भवे तस्याः प्रवृत्तेः, इत्यत आह शदन्तेति । इत्यधिकः पाठः ख० पु० ।

**यत्तु संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनैत एवेति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजमिति, तन्न; तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति नियमत्वायोगात्। 'सर्वे सर्वार्थवाचकाः' इत्यभ्युपगमोऽपि योगिदृष्टचा, न त्वस्मद् दृष्टचा, विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात्। सामान्यज्ञानं तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ६ ॥**

---

त्रयाणां मध्ये इत्यर्थः। **व्याख्यानमिति**। भाष्यकृदादीनाम्। **अत एवेति**। व्याख्यानस्य शरणत्वादेव। **कृत्रिमस्यैवेति**। तत्र तैस्तथैव व्याख्यानात्। अन्यथा तदसङ्गतिः स्वष्टैवेति भावः। एवञ्च सर्वत्रोभयोर्गतिरित्यर्थः। अत एव शास्त्रे इत्येतदर्थक इह इति पदं सार्थकम्। **स्पष्टञ्चेदमिति**। प्रागुक्तं सर्वमित्यर्थः।

प्राचामुक्तिं खण्डयति–**यत्त्विति**। **नियमार्थत्वमिसि**। यद्यपि सर्वेषां शब्दानां सर्वार्थबोधकत्वम्, तथपि मच्छास्त्रे वृद्धयादिपदेनादैचामेव ग्रहणम्, न तु वर्द्धनरूपाद्यर्थानामिति वृद्धयादिपदानां नियमार्थत्वम्, न तु विधित्वम्, अपूर्वबोध्यत्वाभावादिति भावः। **तन्नेति**। सति हि नियामकत्वे न्यायमूलकत्वं भवेन्नाम, तदेव तु न सम्भवतीत्यर्थः। **तेषामिति**। संज्ञासूत्राणामित्यर्थः। **अगृहीतेति** शास्त्रं तावदस्मदाद्युद्देशेन प्रवृत्तम्। न ह्यस्मदादीनां वृद्धयादिपदस्यादैजादिषु शक्तिग्रहः। तथा चास्मदादीनामगृहीतशक्तिग्राहकत्वेन तेषां विधित्वे सम्भवति सति स्वरूपसच्छक्तिग्रहकत्वेन नियामकत्वकल्पनायोगादिति भावः।

ननु सर्वेषां सर्वार्थवाचकत्वमिति पक्षे गृहीतशक्तिग्राहकत्वमेव तेषाम्? अत आह–सर्वेति। **सर्वशब्दार्थज्ञानस्येति**। शब्दश्चार्थश्च शब्दार्थौ, सर्वौ च तौ शब्दार्थौ च सर्वशब्दार्थौ, तयोर्ज्ञानम्, तस्येत्यर्थः। तथा च तादृशसिद्धान्तानुरोधेन सामान्यशक्तिग्रहेऽपि विशिष्य तत्तच्छब्दार्थज्ञानाभावेन विशेषतस्तदर्थे शक्तेरगृहीतत्वाद्विधित्वमेव सम्भवति, न तु नियामकत्वमिति भावः। ननु सामान्यज्ञानमादायैव नियामकत्वं कुतो नेति चेत्? [अति] आह–**सामान्यज्ञानन्त्विति**। शब्दत्वेनार्थत्वेन सामान्यरूपेणेत्यर्थः। यथा सामान्यज्ञानसत्वेऽपि घटशब्देन नीलघटप्रतीतिर्न भवतीति। न चैवम्;

'व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्[1]।'

इत्यादिहरिग्रन्थासङ्गतिरिति वाच्यम्, तस्य तत्र संकेते गृहीते सत्तत्संज्ञके तज्ज्ञानरूपप्रकरणवशात् तस्यैवात्रोपस्थितिः, नान्यस्येति फलितनियमपरत्वात्। **न बोधोपयोगीति**। द्रव्यत्वप्रकारकं द्रव्यविशेष्यकं सामान्यं ज्ञानं घटत्वप्रकारकं घटविशेष्यकं विशेषज्ञानं प्रति न कारणमित्यर्थः।

यद्यपि सकलादिशब्दानां सामान्यरूपेण शक्तिग्रहादेव शाब्दबोधः, विशिष्य सकलज्ञानस्यासम्भवात्, तथापि हर्यादिपदवद् विशेषरूपेणानेकार्थ–

---

१. वा० प० २।३६३।

**नन्वध्येता शयितेत्यादाविङ्शीङोर्ङित्वाद् गुणनिषेधः स्यादत आह—**

**कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥**

**'स्थण्डिलाच्छयितरि इति निर्देशाश्चास्यां ज्ञापकः ।**

---

बोधकस्य वृद्धयादिशब्दस्य विशेषरूपेणानेकेषु शक्तिग्रहादेव तस्य तथा शाब्दबोधोपयोगिशक्तिग्रहशाब्दबोधयोः समानप्रकारकत्वेनैव कार्यकारणभावाङ्गीकारादिति न कश्चिद् दोषः ॥ ९ ॥

इदानीं सिंहावलोकनन्यायेनेत्संज्ञकविशेषोद्देश्यकविधौ विचार इति ध्वनयन्नाह—**नन्वध्येतेति** । **शयितेति** । तृजन्तः पाठः, क्तान्तस्य तु "निष्ठा शीङ्" इति निषेधादेव गुणसिद्धेः । **निषेधः स्यादिति** । क्ङितीति सती सप्तमीति भावः, 'तन्निमित्तग्रहणं कर्तव्यम्' इति वार्तिकात् । न चैवम् "निष्ठा शीङ्" इति व्यर्थम्, तेन तावन्मात्रवारणापेक्षया परिभाषाज्ञापनौचित्यात् । तथा च यज्ज्ञानं कार्यप्रयोजकं तत्तस्य निमित्तमिति सूत्रार्थप्रविष्टनिमित्तपदं कारणमात्रपरमित्यभिप्रायेणेङ्शीङोरिकारस्याप्युद्देश्यत्वेन कारणत्वात् "क्ङिति" इति निषेधः स्यात्, इत्याशङ्केत्यर्थः ।

यद्यपि शयिता, अरिरिषतीत्यादौ कार्यानुभवितृत्वमिकारादेः, निमित्तत्वं तु समुदायस्य, तथापि अनया घटकतया निमित्तत्वस्य निषेधान्न दोषः । यथाऽत्र समुदायद्वाराऽवयवस्य निमित्तत्वं तथा ऊर्णुनविषतीत्यत्रापि समुदायद्वाराऽवयवस्य प्राप्तकार्यित्ववारणाय **कार्यमनुभवन्निति** । द्वित्वविधौ हि सन्यङोरिति षष्ठी, न तु सप्तमी । अन्यथा प्रतीषिषतीत्यत्र सनो द्वित्वं न स्यादिति बोध्यम् । अर्थवत्येव स्थान्यादेशभाव इति सिद्धान्तात् शी इत्यस्य स्थाने शे इत्यानुमानिकस्थान्यादेशभावेन विशिष्टस्यापि कार्यित्वसम्भवान्न दोष इति । ऊर्णुनविषतीत्यादावानुमानिकादेशकल्पनेनोर्णुनु इत्यादेशोऽपि सनः कार्यित्वादित्याहुः ।

**कार्यीति** । मत्वर्थीयेनेनिनातिशयितो यस्य कार्ययोगः स कार्यी । एतत्फलितमाह—**कार्यमनुभवन्निति** । 'कार्यीत्यस्य तु कार्यसम्बन्धित्वेन प्रसक्तमित्यर्थः ।

**स्थण्डिलादिति** । न च निर्देशः सौत्रः, तत्रासत्यन्यत्र प्रयोगो न स्यादिति भावः । चेन "निष्ठा शीङ्" इति निषेधस्य समुच्चयः । अन्यथा शीङो ङित्त्वात् "क्ङिति च" इत्यनेन निषेधः स्यादेव, किं निषेधेनापि[2] ?

---

१. कार्येण सम्बन्धे इत्यर्थः । कार्यं च स्थानित्वपर्याप्तं ग्राह्यम् तेन श्रायसावित्यादौ विभक्त्यादीनामौकारादिरूपकार्यभावत्वेऽपि निमित्तत्वेन ग्रहणात्, स्थानिवद्भावेन नुमभावः सिद्ध इति केचिदित्यधिकः पाठः ख० पु० ।

२. 'निष्ठा शीङ्' इति निषेधेनापीत्यर्थः ।

**ऊर्णुनविषतीत्यादिसिद्धये कार्यमनुभवन्निति । अत्र हि "द्विर्वचनेऽचि" इति नुशब्दस्य द्वित्वम् । अन्यथा "सन्यङोः" इत्यस्य षष्ठ्यन्तत्वात् सन्नन्तस्य कार्यित्वेनेसो द्वित्वनिमित्तत्वाभावात् तत्प्रवृत्तिर्न स्यात् ।**

**वस्तुतः समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या । अत एव हिः प्रयुक्तः । स हि**

---

यत्तु 'दीधीवेव्योर्गुणप्रतिषेधः, कुटादौ कुङ्पाठश्चास्या ज्ञापकः' इति । तत्, न, भाष्ये "दीधीवेवीटाम्" इत्यस्य प्रत्याख्यातत्वात् । सूत्रकाररीत्यापि न ज्ञापकत्वम्, आदीध्यक इत्यत्रानिग्लक्षणवृद्धिवारकतया साफल्यात्, कुङ्पाठस्याशोकवनिकान्यायेन चारितार्थ्यात्, तत्रान्यत्र पाठे लाघवविरहादिति ।

कार्यमनुभवन्नित्यर्थकरणस्य फलं दर्शयति—**ऊर्णोति**[1] । एकाच्त्वावच्छिन्नोद्देश्यकविधेयतापर्याप्त्यधिकरणनुशब्दस्यैव द्वित्वरूपकार्यसम्बन्धितया प्रसक्तेरिसः कार्यित्वाभावेन निमित्ततयाश्रयणे "द्विर्वचनेऽचि" इति निषेधप्रवृत्तिः सुलभेति भावः । तदेवोपपादयति—**अत्र हीति । अन्यथेति** । तद्विशेषणाभाव इत्यर्थः । सन्नन्तस्य कार्यित्वम्, न तदवयवस्येसः कार्यित्वं सुतराम् । तथा चेसः कार्यित्वेन निमित्ततयाऽनाश्रयणात् "द्विर्वचनेऽचि" इत्येतत्प्रवृत्तिर्न स्यात् । तथा चाध्येता, शयिता, अरिरिषतीत्यादित ऊर्णुनविषतीत्यत्र वैलक्षण्यं स्पष्टमेव ।

सिद्धान्तमाह—**वस्तुत इति । समवायीति** द्रव्यस्यैव समवायिकारणत्वमिति नियमाच्छब्दस्य तत्त्वं कल्पितं बोध्यम्[2] ।

वस्तुतश्चिन्त्यमिदम् , कालयोगं प्रति कालस्याद्वैतनये जगत्प्रति ब्रह्मणस्तदुभयदर्शनात् । **तन्त्रेति** । न्यायशास्त्रादीत्यर्थः । तस्य=समवायिकारणस्य, तत्त्वेन=निकित्तकारणत्वेन, एकत्र समवायिकारणतया श्रितस्यापरत्र निमित्तकारणत्वेनाश्रयणे तु न बाधकम्, यथा दण्डस्य स्वं रूपं प्रति समवायिकारणतया श्रितस्य घटं प्रतिनिमित्तत्वेनाश्रयणं भवत्येवेति ।

ननु समवायिकारणनिमित्तकारणयोः सकललोकतन्त्रप्रसिद्धभेदस्य सत्त्वेऽपीह व्याकरणे तयोर्भेदो नाश्रीयते, सिद्धप्रयोगानुशासनेऽस्मिन् वस्तुतोऽसत्त्वेन सर्वस्य व्यवहारस्य कल्पितत्वात् । अत आह—**अत एवेति** । ज्ञापकसाध्यत्वा-

---

१. ननु धातोरवयवस्योद्देश्यत्वात् इस इत्यस्यानुद्देश्यत्वात् कथं कार्यमनुभवन्निति पदस्य चारितार्थ्यमिति चेत्, न, धातोरेवोद्देश्यसमर्पकत्वम् । तथा च धातोर्द्वे इत्येवार्थः, प्रथमस्यैकाच इत्याद्युक्तेः प्रथमैकाच्त्वावच्छेदेन धातोर्द्वे इत्यर्थकरणाददोषः । यदि धातोरित्यवयवषष्ठ्येव । तथा चोद्देश्यसमर्पकत्वं चैकाच स्यादेवेत्युच्यते, तदा कार्यमनुभवन्निति न कार्यमेवेति बोध्यम्, इत्यधिकः ख० पु० ।

२. यद्वा,सकलपदस्य तन्त्रेणान्वयः, न लोकेन । तथा च लोकतन्त्राणां न्यायादीनामेव ग्रहणं न वैदिकवेदान्तस्येति न दोषः इत्यधिकः ख० पु० ।

**तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्वम्। "द्विर्वचनेऽचि" इत्यत्र भाष्ये ध्वनितैषा ॥ १० ॥**

---

भावादेवेत्यर्थः। **हिः प्रयुक्त इति**। परिभाषायामिति यावत्। **स ह्येति**। हिशब्दो हीत्यर्थः। **तत्त्वेनानाश्रयणे** इति। कार्यिणो निमित्तत्वेनानाश्रयणे इति यावत्।

हेतोरिति। सकललोकतन्त्रप्रसिद्धभेदवत्त्वस्येत्यर्थः। तथा चास्य कल्पितत्वेऽप्युत्तरमीमांसकरीत्या कल्पितव्यवहारमादायैव सर्वव्यवस्थाया लक्ष्यसिद्धयर्थत्वेन भाष्यकारैरप्यङ्गीकृतत्वात् तस्याश्रयणे न किञ्चिद्बाधकमिति भावः। इत्थं च कार्यी निमित्ततया नाश्रीयत इत्यत्र समवायेन कार्यमस्मिन्नस्तीति मत्वर्थीयेनेनिना कार्यी शब्दः समवायिकारणपर इति सिद्धम्।

वस्तुतस्तु कार्यानुभवतो निमित्ततया पर्य्याप्तिसम्बन्धेन निमित्तघटकतया वाश्रयणं नेति परिभाषार्थः। यदि तु क्ङितीत्यधिकरणसप्तमी, कारकविभक्तेर्बलवत्त्वात्, क्नोः कित्त्वेनैकवर्णव्यवधानं सह्यमिति भिन्नमित्यादौ न दोषः। "द्विर्वचनेऽचि" इत्यत्रापि द्विरुच्यतेऽस्मिन्निति व्युत्पत्त्या अरिरिषतीत्यत्र न दोषः। तत्र नहीकारे परे द्विरुच्यते; किन्तु तस्यैव ऊर्णुनविषतीत्यत्र तु इकारे परे द्वित्वमुच्यते इति भवत्येव स्थानिवत्त्वमित्युच्यते ! तदेषा निष्फलेति बोध्यम्।

**ध्वनितेति**[1]। तत्र हि—अचीति किम्? जेघ्रीयते, देध्मीयते इति। तस्यायमाशयः—"द्विर्वचनेऽचि" इति सूत्रे अज्ग्रहणं न कर्तव्यम्, द्विरुच्यते तस्मिन्निति व्युत्पत्त्या द्वित्वनिमित्ते परत आदेशः स्थानिवत्स्यादित्यर्थकं द्विर्वचने इत्येव सूत्रं कर्तव्यम्। एवं क्रियमाणे घ्राध्माधात्वोर्यङि परत्वात् "ईघ्राध्मोः" इत्यनेनेत्वोत्तरम् "द्विर्वचने" इत्यनेन कार्यातिदेशे घ्राध्माबुद्धावपि द्वित्वं घ्रीध्मीशब्दस्यैवेति जेघ्रीयते, देध्मीयत इत्यत्रेष्टसिद्धावपि चक्रतुरित्यत्र कृधातोरतुसि परत्वाद्यणि अनच्त्वेन द्वित्वाप्राप्तौ अनेन द्वित्वरूपकार्यातिदेशे कृबुद्धावपि यण्-

---

१. तत्र हि 'आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनं प्राप्नोति। तत्र को दोषः? अभ्यासरूपं न सिद्धयति चक्रतुः, चक्रुरिति। अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य। कथं कृत्वा ज्ञापकम्? अज्ग्रहणस्य एतत् प्रयोजनमिह मा भूत—जेघ्रीयते देध्मीयते। यदि रूपं स्थानिवत् ततोऽज्ग्रहणमर्थवत्। अथ हि कार्यं स्थानिवत्, नार्थोऽज्ग्रहणेन, भवत्येवात्र द्विर्वचनम्। तत्र गाङः प्रतिषेधः, अधिजगे, इवर्णाभ्यासता प्राप्नोतीति न वक्तव्यः। 'गाङ्लिटि' इति द्विलकारको निर्देशः। कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिद्धयति—अचिकीर्तत्, जग्ले, दुद्यूषति, द्विर्वचन···परसप्तमी; किन्तु सति सप्तमी, अत एव अधिजगे इत्यादौ··· द्वित्वे कृतेऽपि न दोषः। अन्यथा अचो द्वित्वनिमित्ते ऐकारादौ परे अजादेशः स्थानिवद्रूपं लभेत। तथा च अजादिद्वित्वनिमित्तकानिमित्ताजादेशः स्थानिवदित्यर्थे अरिरिषतीत्यत्र दोषात्। ध्वनितेयं परिभाषा, ततो द्वित्वभाग्भिन्नं यद् द्वित्वनिमित्तं तन्निमित्तकेत्याद्युक्त्या न दोषः। दुद्यूषतीत्यादौ उस इत्यत्र द्वित्वनिमित्तताख्यविषयतायाः केनाप्यबोधितत्वान्न दोषः, इत्यधिकः ख० पु०।

विशिष्टस्यैव द्वित्वं स्यात्। तथा चाभ्यासेऽकारस्य श्रवणं न स्यात्। तदर्थं रूपातिदेशः स्वीकृतो भाष्यकृता। तेनात्रेष्टसिद्धावपि घ्राध्माधात्वोर्यङि ईत्वोत्तरमपि रूपातिदेशेन घ्राध्माशब्दस्य द्वित्वेऽनिष्टापत्तावचीति ग्रहणं कर्तव्यम्। तेन यङोऽजादिद्वित्वनिमित्तत्वाभावात् सर्वेष्टसिद्धिरित्युक्तम्। तथा चाज्ग्रहणे रूपातिदेशे ज्ञापकत्वमुक्तमित्यवगन्तव्यम्। एवं कृतेऽप्यज्ग्रहणे अरिरिषतीत्यादौ गुणस्येस्निमित्तकस्य स्थानिवद्भावेनेस्शब्दस्य द्वित्वं दुर्वारमेवेति कथं सर्वेष्टसिद्धिरित्युक्तेरसंगतिः स्यात्? तस्मात्तथोक्त्यानुमीयतेऽरिरिषतीत्यादिसिद्धयर्थमस्तीयं परिभाषेति। ध्वनितायां त्वस्यामिसः कार्यितया निमित्तत्वाभावेन "द्विर्वचनेऽचि" इत्येतदप्रवृत्त्या नेसोर्द्वित्वमिति सर्वेष्टसिद्धौ भाष्यं समञ्जसं भवतीति भावः।

वस्तुतस्तु नैषा ध्वनिता, प्रत्युत तद्विरुद्धा। तथा हि—सत्यामस्यां परिभाषायां नटभार्यावद्वचञ्जनानि भवन्तीति षाष्ठभाष्यसिद्धान्तादेकाज्द्विर्वचनमिति न्यायात् घ्राय ध्माय इति द्वितीयाजत्रधिकस्यैव द्वित्वप्राप्त्या यङः कार्यितया तया परिभाषया द्वित्वनिमित्तत्वाभावात् "द्विर्वचनेऽचि" इत्यस्याप्रवृत्त्या रूपातिदेशेन तत्प्रवृत्तिपरभाष्यस्यासंगत्यापत्तेः। अस्मिन् शास्त्रे स्वरान्तरे व्यञ्जनान्युत्तरस्येति। प्रातिशाख्यानुसरणन्त्वप्रामाणिकमेव, फलाभावात्। अरिरिषतीत्यादिप्रयोगस्य साधुत्वे तु संदेह एव, भाष्येऽदर्शनात्, लक्ष्यानुरोधेन वचनकल्पनाया अन्याय्यत्वात्, अन्यासां परिभाषाणां ज्ञापकादियत्नस्य वैयर्थ्यापत्तेश्च। यदि त्वरिरिषतीत्यादिप्रयोगः प्रामाणिक एवेत्याग्रहः चेत्, [?] तर्हि द्विरुच्यतेऽस्मिन्निति व्युत्पत्त्या यस्मिन्नजादौ परतो द्वित्वम्, तस्मिन्नेवाजादौ परतो प्राप्ताजादेशस्यैव प्रत्यासत्त्या "द्विर्वचनेऽचि" इत्यनेन निषेधात् तत्सिद्धिः सुलभा, सर्वेष्टसिद्धिरित्युक्तिसंगतिश्च। तथा चेयं नावश्यकीति दिक्[1]॥ १०॥

---

१. एवं तर्हि प्रत्यय इति वक्ष्यामि, प्रत्यय इति चेत्, दिवादय एके परिहृताः। एवं तर्हि द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवदिति वक्ष्यामि। अथवा अकारो मत्वर्थीयः, द्विर्वचनमस्मिन्निति द्विर्वचन इत्याद्युक्त्या एकशेषनिर्देशोऽयं द्विर्वचने कर्तव्ये द्विर्वचनेऽचि प्रत्यय इति सिद्धान्तः कृतः। तदापि णावपि स्थानिवद्भावस्य अः पुयणजीति ज्ञापकमुक्त्वा ततः कानि पुनरेतस्येति प्रश्ने पपतुः, तक्षतुः, जग्मतुः, आटिटत्, चक्रतुरित्यादीनि लक्ष्याणि दर्शितानि। ततो नैतानि सन्ति पूर्वविप्रतिषेधस्यैतानि। सिद्धान्ते कथं वक्ष्यत्याचार्यः 'द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः' इत्युक्त्वा पूर्वविप्रतिषेधगौरवमेव दत्तम्, न लक्ष्यदोषः। तथा च अरिरिषतीति साध्ये वा वार्तिके गुणपाठाभावात्।

तथा च द्वित्वनिमित्तो यः प्रत्ययस्तत्र विद्यमानो योऽच् तद्वाचकपदप्रयोज्यनिमित्तताकोऽजादेशः स्थानिवदित्यर्थः सम्पन्नः। जग्मतुरित्यादौ 'गमहन' इति सूत्रे अचीति विशेषणेन लोपनिमित्तत्वस्य बोधितत्वात्। स्थानिवत्त्वं चक्रतुरित्यत्र साक्षा-

**ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह—**

संज्ञाप्रसङ्गात् संज्ञाकर्मकसंज्ञिविशेष्यकविधौ विचार इति सूचयन्नाह-- **नन्विति। दापेर्न स्यादिति।** असत्यां च तस्याम् "नेर्गद" इति णत्वं न स्यादिति भावः। न च यदागमपरिभाषायाः प्रागागमविशिष्टस्यार्थवत्त्वाभावेन पुकः प्राग्वर्तिनो दाशब्दस्यैवार्थवत्त्वाद् घुत्वमक्षतमेवेति वाच्यम्, परिभाषाऽभावेऽपि लोके विशिष्टादेवार्थप्रतीतेर्दूषणस्य तदवस्थत्वात्।

किञ्च, आनुमानिकस्थान्यादेशभावकल्पनेन दाप्रसङ्गेऽर्थबोधनाय दाप्-शब्दः प्रयोक्तव्य इत्यर्थेन तत्र दाशब्दस्यार्थवत्त्वाभावात्। ननु 'पूर्वं धातुरुप-सर्गेण युज्यते' इति पक्षाश्रयणेनात्र णत्वं सुलभम्। किञ्च, 'साधनेन युज्यते' इति पक्षाश्रयणेऽपि साधनकार्योत्तरं यथोद्देशे प्रकृतघुसंज्ञायाः सत्त्वात् तत्त्वं सुलभमिति चेत्, न, 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्षस्यैतद्ग्रन्थकर्तुरनभि-मतत्वात्। किञ्च, पूर्वं धातोरुपसर्गयोगेऽपि सपादसप्ताध्यायीस्थकार्यप्रवृत्ति-योग्यतायां पूर्वं त्रैपादिककार्यस्याप्रवृत्तेरिति न्यायेन पुगादेः पूर्वं णत्वस्याप्रवृत्तेः। 'साधनेन युज्यते' इति पक्षेऽपि साधनकार्योत्तरं केवलस्य घुसंज्ञकदाशब्दस्य

---

देव निमित्तता बोधिता। "इको यणचि" इति निमित्तता च प्रत्ययावयववर्तिन्येव। तेन दुद्यूषतीत्यत्रापि न दोषः। जेघ्रीयते इत्यादौ तु "ई घ्राध्मो": इति सूत्रे अज्वाचकपदप्रयोज्यविषयताया अभावाद् न दोषः। अधिजगे इत्यादावपि तथैवेति न दोषः। अरिरिषतीत्यादावपि न दोषः। "सार्वधातुक" इति सूत्रे तादृशविषयताया अभावादिति बोध्यम्। यद्वा, द्वित्वनिमित्तप्रत्ययवृत्त्यजनिमित्तकादेशो नेत्यर्थो वा इति।

परिभाषाया ध्वनने न मानं लाभाख्यद्विर्वचननिमित्त इति वक्ष्यामीत्यादि-भाष्याद्, अध्वनितत्वाच्च। तथा हि प्रथमं द्विर्वचने कर्तव्ये अज्निमित्तक आदेशो स्थानिवदित्यर्थं ज्ञात्वा गाङः प्रतिषेध इत्युक्तम्। ततो लकारादाविति समाहितम्। तथाप्युद्देश्यस्यापि निमित्तपदेन ग्रहणे जेघ्रीयते, अधिजगे इत्यत्र अज्निमित्तकत्वस्य सत्त्वात्तत्रैव दोषतादवस्थ्ये कृत्येजन्तेति दोषदानमसङ्गतं स्यात्। तत उद्देश्यस्य निमित्तपदेन न ग्रहणमिति तात्पर्यम्। तथा च ध्वनितेति पूर्वभाष्यादेव ध्वननम्। तत एव स्वीकृतेऽपि कृत्येजन्तेत्यादौ दोषादुत्तरभाष्यप्रवृत्तिः। तत्र च प्रत्यय इति वक्ष्यामीत्युक्तम्।

द्वित्वे कर्तव्ये अजादिप्रत्ययनिमित्त इत्यर्थः सम्पन्नः, तथापि केवलदिवादयः परिहृताः। ततो द्विर्वचननिमित्त इति वक्ष्यामीत्युक्तम्। तथा च द्वित्वनिमित्ते प्रत्यये विद्यमानो योऽच्, तद्वाचकपदप्रयोज्यतन्निष्ठनिमित्तताक आदेशः स्थानिवदित्यर्थः सिद्धान्तितः। तद्वाचकत्वं च अच्कृतव्याप्यधर्मपुरस्कारेण तेन सार्वधातुकपदादिभ्यः सार्वधातुकत्वेन रूपेण अचो वाच्यत्वेऽपि न दोषः। तथा च सिद्धान्तितेऽर्थे अरिरिषतीत्यादौ दोषाभावान्न ध्वनितेति गुरवः, इत्यधिकः ख० पु०।

**यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥**

**यमुद्दिश्यागमो विहितः, स तद्गुणीभूतः=शास्त्रेण तदवयवत्वेन बोधितः, अतस्तद्ग्रहणेन=तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते=बोध्यत इत्यर्थः।**

---

क्रियावाचकत्वाभावेन तन्निरूपितोपसर्गसंज्ञाया अप्रवृत्त्या णत्वाप्राप्तेः[1]। न चाग्नी इत्यादौ लुप्तेऽनुनासिकप्रतिबन्धकप्रगृह्यत्ववदन्तरङ्गायां घुसंज्ञायां कर्तव्यायां बहिरङ्गस्य पुकोऽसिद्धत्वेन दाशब्दबुद्धया प्रवृत्तया घुसंज्ञया णत्वं सुलभमिति वाच्यम्, संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वस्य सिद्धान्ते इष्यमाणत्वेनात्रोपसर्गत्वनिमित्तकत्वेन घुसंज्ञाया अपि बहिरङ्गत्वस्य तुल्यत्वात्, प्रत्युत पुक एवैकपदत्वेनान्तरङ्गत्वाच्च। संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वमिति स्वीकारे किं मानमिति चेत् ? 'तस्मै हितम्', "तस्मादित्युत्तरस्य", "तस्मिन्निति निर्दिष्टे'' इत्यादिषु पररूपकरणमेव मानमित्यवेहि। फलन्तु यः, सः इत्यादौ "अदेङ्गुणः" इत्येतद्दृष्टया परनिमित्तस्याप्यत्वस्य नासिद्धत्वम्, "अतो गुणे" इत्यादिविधिनिमित्तकत्वेन संज्ञाया अपि परनिमित्तकत्वेनासिद्धत्वाप्रवृत्तेः। नन्वेवमपि बहिर्भूतविभक्तिसापेक्षत्वेनात्वस्य बहिरङ्गत्वमस्त्येवेति [ चेत्, न, ] 'नाजानन्तर्ये' इति निषेधेनान्तरङ्गपरिभाषाया अप्रवृत्तेः। किञ्च, कार्यकाले संज्ञाशास्त्रस्य णत्वविधिवाक्यैकवाक्यतया तद्देशीयस्थत्वेन त्रिपादीस्थतयाऽसिद्धत्वात् तद्दृष्टया पुकोऽसिद्धत्वाभावात्। तथा च पक्षद्वयेऽपि तदसिद्धिरिति सिद्धम्।

एतेन मुख्यकार्यकालपक्षे इदमित्यपास्तम्। अत्रादाविति निषेधस्तु न, वार्त्तिककृता "दाधाध्वापत्" इति न्यासकरणात् पकारेत्संज्ञकदाशब्द एव निषेधप्रवृत्तेः, सूत्रे चर्त्वेन निर्देश इति भाष्यकृता तत्प्रत्याख्यातत्वाच्च।

**यदागमा इति**। अत्र बहुवचनं तत्तदागमव्यक्त्यभिप्रायेण। तथा च संग्राहकवाक्येऽत्र बहुवचनसत्त्वेऽपि प्रत्येकमेव लक्ष्यसंस्कारो लक्षणेनेति संस्कारकवाक्ये तदनुपयोगात्। तदाह--**यमिति**। यदागमा इत्यत्रोक्तविधेयभावरूपसम्बन्धः षठ्यर्थोऽभिप्रेतस्तदाह--**उद्दिश्येति**। सम्बन्धसामान्यार्थकत्वं तु वक्ष्यमाणदोषापत्तिरिति भावः। आगम इत्यस्य य इत्यादिः, तद्गुणीभूता इत्यस्य

---

१. उपसर्गत्वञ्च स्वोत्तरधातुजन्यबोधविषयक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्रधानतमत्वमिति लक्षणादित्यधिकः पाठः ख० पु०।

२. आगमत्वं च अवयवत्वावच्छिन्नविधेयताश्रयत्वम्। तथा च यन्निष्ठोद्देश्यतानिरूपिता अवयवत्वावच्छिन्ना या विधेयता तच्छालिनस्तन्निरूपितावयवत्वप्रकारकज्ञानविशेष्याः। अत्र तद्ग्रहणेन गृह्यन्त इति अक्षरार्थः मूलोक्तः। शास्त्रेणेत्यादिस्तु, नाक्षरार्थ इति बोध्यम्। यदागमा इत्यत्र उद्देश्यविधेयभावरूपसम्बन्धः षष्ठ्यर्थोऽभिप्रेतः। तदाह—यमुद्दिश्येति—इत्यधिकः पाठः ख० पु०।

**तत्र तद्गुणीभूता इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते।**

**यमुद्दिश्य विहित इत्युक्तेः प्रनिदारयतीत्यादौ न दारित्यस्य घुत्वम्।**

---

यत इत्यादिः, गुणशब्दोऽवयवपरश्च। **शास्त्रेणेति**। 'आद्यन्तौ टकितौ' इत्यादिनेत्यर्थः।

ननु ग्रहणम्=ज्ञानम्, उच्चारणम्, वा। नहि तस्य ग्रहणं सम्भवतीत्यत आह--**तद्ग्राहकेणेति**। ननु तद्ग्राहकेण श्रोत्रेण ग्रहणेऽपि प्रकृते इष्टासिद्धिरत आह--**तद्बोधकेनेति**। ननु तेन तस्योच्चारणसम्भवोऽत आह--**बोध्यत इति**। समुदाय इति शेषः।

**तत्रेति**। परिभाषायामित्यर्थः। **बीजकथनमिति**। लोकन्यायसिद्धैवेयम्, न त्वपूर्ववचनरूपेत्यर्थः। **लोकेऽपीत्यत्रापिशब्दः** शास्त्रसमुच्चायकः।

**वस्तुतस्तद्गुणीभूत** इत्यंशो न बीजकथनम्, गुणशब्दस्यावयववाचकत्वाभावात्, किन्तु यदागमा इत्यागमशब्दस्यावयववाचकत्वात्। एवञ्च यस्यावयवा ये, ते तद्गुणीभूता नाम तद्धर्मविशिष्टा इति व्याख्यातुमुचितम्। यदागमा इत्यत्र सम्बन्धसामान्यस्य [1]षष्ठ्यर्थत्वस्वीकारे दोषमुपपादयति--**यमुद्दिश्येति**।

**घुत्वमिति**। रेफस्य घुसंज्ञासूत्रोपात्तदाशब्दमुद्दिश्याविधानात्। अपि तु "उरण् रपरः" इत्यणमुद्दिश्य रेफो विहितोऽतो न नेर्णत्वमित्यर्थः। अन्यथा रेफस्य शास्त्रेणाकारावयवत्वबोधनेऽपि अवयवावयवस्य समुदायावयवत्वस्य लोकसिद्धत्वेन दावयवत्वस्य रेफे सत्त्वेन तत्त्वापत्तिरिति भावः।

वस्तुतोऽत्रोक्तरीत्यावयवत्वस्यैव षष्ठ्यर्थत्वं युक्तम्। 'अवयवावयवः समुदायावयवः'इति न्यायस्त्वागमात् पूर्वं दृष्टो यः समुदायावयवः, तदवयवस्यैव समुदायावयवत्वमित्येतद्विषयकः। यथा 'शेरते' इत्यादौ। तत्रात्मनेपदावयवाच्छब्द आगमात् पूर्वोऽस्तीति। प्रकृते तु रेफस्याकारावयवत्वप्रतिपत्तिकाले नाकारस्य दाशब्दावयवत्वस्य प्रतिपत्तिरिति भावः। अत एव ट्युट्युलोष्टित्त्वं चरितार्थम्। यमुद्दिश्येति मूलग्रन्थस्तु फलितार्थपरतया नेयः।

ननु दाशब्दत्वं दाशब्दोत्तरमात्त्वम्, तच्च यमुद्दिश्येप्युक्तावप्यकारस्यावयवो यो रेफस्तस्याकारस्य ग्रहणेन रेफविशिष्टस्यापि ग्रहणाद् आरशब्दे यदागमेति परिभाषया आत्वं वर्तत एवेति दाशब्दत्वमार्थसमाजग्रस्तमिति घुत्वं दुर्वारमेवेति चेत्, न, दात्वधर्मस्याखण्डत्वेनोक्तदात्वस्य दारशब्देऽप्यदोषात्।

यद्वा दाशब्दत्वं दशब्दोत्तरमनतिदिष्टाकारत्वमित्यदोषात्। ननु लोकसिद्धन्यायस्य शास्त्रेऽनाश्रयणम्, फलाभावादिति चेत्, न, शेरत इत्यादिफलानां जागरूकत्वात्। अन्यथा आत्मनेपदावयवः 'अत्' इति तदवयवो रुट्,

---

१. नास्ति–क०।

· **"आने मुक्" इति मुग्विधानसामर्थ्यादेषाऽनित्या। अन्यथा पचमान**

तद्विशिष्टस्य सार्वधातुकत्वाभावेन 'शीङः सार्वधातुके' इति गुणो न स्यात्[1]। न च परत्वाद्रुटः पूर्वमेव गुण इति शङ्क्यम्,एतन्न्यायाश्रयणे रुटि सार्वधातुकत्वाभावेन गुणाप्राप्त्या नित्यत्वात् पूर्वं रुट एव प्रवृत्तेः, 'शीङोरत्' इति कृत्वा रदादेशकरणेन 'शेरते' इत्यस्य सिद्धिः।

**यद्वा**, परत्वादेव गुणसिद्धिः। न चोक्तरीत्या रुटो नित्यत्वं शङ्क्यम्, शब्दान्तरात् प्राप्नुवतश्चानित्यत्वमिति न्यायेन रुटो नित्यत्वाभावात्। तस्मादुदाहरणान्तरं मृग्यम्।

**यत्तु**, दधिच्छादयतीत्यादौ "तिङ्ङतिङः" इति निघातसिद्धिरस्याः फलमिति। तन्न, वृदित्यादौ ह्रस्वस्य तुकि यथा प्रत्ययलक्षणेन कृदन्तत्वं वृदित्यस्य तदादित्व स्वतः सत्त्वेन प्रातिपदिकसञ्ज्ञा, तद्वद् 'दधि' इत्यस्य प्रत्ययलक्षणेन सुबन्तत्वेन पदत्वात्।

यदपि बाणेनच्छिनत्तीत्यादौ 'अवयवावयवः समुदायस्य' इति न्यायस्य "तिङ्ङतिङः" इति निघातार्थप्रयोजनमस्तीति केचिद्वदन्ति। तदपि न, पूर्वोत्तरपदनिमित्त' इति परिभाषायामेकादेशपदस्य संहिताधिकारे विहितकार्योपक्षणत्वस्य रात्रिमट इत्याद्यर्थमवश्य स्वीकार्यत्वेन तवैव तुकः पूर्वं निघातसिद्धेः।

ननु 'दिदीये' इत्यादावनया परिभाषया युड्विशिष्टस्यैकारग्रहणेन ग्रहणाद् यण् स्यात्। जहारेत्यादौ "आत औ णलः" इत्यौकारादेशापत्तिः। किञ्च, न्यायसिद्धस्यैतद्वचनस्यातिव्याप्तिग्रस्तत्वेन शास्त्रे तदाश्रयणमयुक्तं स्यात्, अत आह—**आने मुगिति। अन्यथेति।** अनित्यत्वानङ्गीकार इत्यर्थः। **अकारस्य मुगिति।** अत्र यद्यपि "आने मुक्" इत्यस्याङ्गाधिकारस्थत्वेनादन्ताङ्गस्योद्देश्यता, तथापि पचमान इत्यादौ "तास्यनुदात्त" इति स्वरार्थम् अङ्गस्यातो मुगित्यर्थेनाकारोद्देशेन मुग्विधानादिति भावः। **विशिष्टस्य सवर्णदीर्घ इति।** अमोऽक्त्वेन ग्रहणादकारेण सहेति शेषः।

ननु सवर्णदीर्घं बाधित्वाऽपवादत्वात् "आतो ङितः" इतीयादेश एव प्राप्नोति, कथं सवर्णदीर्घप्राप्तिरिति चेत्, न, इयः प्रवृत्त्युत्तरमपि तस्य स्थानिवत्त्वेन आत्वान्मुकः प्राप्तेर्मुका तक्रकौडिन्यन्यायेनेयादेशबाधे पुनर्मुग्विषये इयादेशाप्रवृत्तेः।

यत्तु, मुकि कृते नेयादेशः 'अत' इति तपरकरणादिति। तन्न, पचमान इत्यत्रादुपदेशप्रयुक्तस्वरसाधकपरभाष्यप्रामाण्येन यदागमलब्धस्य तपरत्वेनाव्यावृत्तेः। सवर्णदीर्घे तु सवर्णदीर्घोत्तरं मुकोऽप्राप्त्या मुकः सर्वथा निरवकाश-

१. किञ्च, प्रकृते 'दा' इत्येतन्निरूपितमवयवत्वमपेक्ष्यते, तच्च न; नहि रेफः 'दा' इत्येतन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयः; किन्तु अण्सम्बन्धीति यमुद्दिश्येत्यस्य फलमिति हेतोरित्यपि बोध्यम्—इत्यधिकः पाठः ख० पु०।

**इत्यादावकारस्य मुकि अनया परिभाषया विशिष्टस्य सवर्णदीघ कृते तद्वैयर्थ्यं स्पष्टमेव।**

**तेन दिदीय इत्यादौ यणादि न, जहारेत्यादौ "आत औ णलः" इति च न।**

---

तस्य बाधात्, रमायामित्यादाविव मुग्विषये तत्प्रवृत्तेरक्षतत्वात्। न चैवमपि अम्शब्दस्य कण्ठयोष्ठयस्थानिकत्वेन सवर्णत्वाभावात् कथमेतत् प्रवृत्तिरिति वाच्यम्, अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वेन मुग्विशिष्टेऽत्वातिदेशेन तद्विरुद्धस्यामृत्वस्याव्यवहारात्, आगमिनः कण्ठयत्वेन सवर्णसंज्ञाया अव्याहतत्वात्।

एतेन मुकि आन्तरतम्यादनुनासिकौकारादिः प्राप्नोति, अकृते तु मुकि निरनुनासिकाकार एव प्राप्नोति इति फलभेदात् कथं मुग्विधानस्य वैयर्थ्यमित्यपास्तम्। न च निर्दिश्यमानपरिभाषया नात्र दीर्घसम्भव इति वाच्यम्, सवर्णदीर्घसूत्रे 'अकः' इत्यस्य पञ्चम्यन्तत्वेन निर्दिश्यमानपरिभाषाया अप्रवृत्तेः। **वैयर्थ्यमिति।** न च मुकि सवर्णदीर्घप्राप्तिः, तदभावे सवर्णदीर्घं बाधित्वा इयादेश एव स्यात्। तद्बाधनेनैव मुकश्चारितार्थ्यात् कथमेतदिति वाच्यम्, मुक इयादेशमात्रबाधफलकत्वे "अकः सवर्णे" इति सूत्रानन्तरम् 'आने' इति न्यासेन विशिष्य दीर्घविधानात् तद्बाधसिद्धेः। एतेन "आतो ङितः" इत्यनन्तरम् 'नानस्य' इत्यादिन्यासकल्पनं गौरवग्रस्तत्वादयुक्तमिति। ननु मुग्विधानसामर्थ्यान्मुग्विषय एव यदागमपरिभाषाया बाध एवास्तु, अनित्यत्वज्ञापने किं मानमिति चेत्, न, बाधकल्पनापेक्षया ज्ञापकत्वस्य लघुत्वबहुफलसाधकत्वाभ्यामुचितत्वात्।

वस्तुतः 'सम्भवति सामानाधिकरण्ये' इति न्यायेनादन्ताङ्गस्य मुगित्यर्थं उचितः, करिष्यमाण इत्यादौ स्वरसिद्धये उपदेशपदविशेषणेनैकतदन्तविधेरावश्यकत्वात्। पुनः सार्वधातुकप्रत्ययेनोपस्थिततदादिविशेषणेन द्वितीयतदन्तविधेर्दुर्वारत्वेनादन्तोपदिश्यमानात्तदादेः परं यत् सार्वधातुकमित्यर्थेनादन्तोपदिश्यमानानां तत्तदादिग्रहणेन मुग्विशिष्टस्य ग्रहणात् पचमान इत्यादौ स्वरसिद्धिः सुलभा। अदुपदेशभक्तस्तद्ग्रहणेति भाष्यं तु फलितार्थपरतया नेयम्। एवं स्थिते अङ्गग्रहणेन मुका ग्रहणेऽप्यक्ग्रहणेनाग्रहणान्नेदं यदागमेतिपरिभाषाया अनित्यत्वे ज्ञापकम्। तदनित्यत्वज्ञापकन्तु 'न पदान्ताट्टोः' इति 'अनाम्' ग्रहणम्। यदागमपरिभाषाया नित्यत्वे षण्णामित्यत्र "यचि भम्" इति भत्वेन जश्त्वाप्रवृत्त्या ष्टुत्वप्राप्तिश्च दूरापास्तैवेति किन्तेनेति दिक्।

परिभाषाया अनित्यत्वज्ञापनेन तदप्रवृत्तियोग्यं स्थलं दर्शयति—**तेनेति।** अनित्यत्वेनेत्यर्थः। **दिदीय इति।** अत्रायं प्रक्रियाक्रमो बोध्यः—दी ए इत्यवस्थायां द्वित्वेयङ्युट्सु प्राप्तेषु द्वित्वात्परत्वाद्युटि कर्तव्ये "द्विर्वचनेऽचि" इति निषेधाप्रवृत्त्या इयङोऽपि प्राप्तिरस्त्येवेति। तक्रकौण्डिन्यन्यायेनेयङं बाधित्वा

**न चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम्? वचनेनावयवत्व-बोधनात्। तस्य चावयवत्वसादृश्ये पर्यवसानं बोध्यम्।**

---

युट्, ततो द्वित्वे यदागमपरिभाषया युड्विशिष्टस्याच्त्वेन "एरनेकाचः" इति प्राप्तो यण् नेत्यर्थः। द्वित्वोत्तरमियङस्तु न प्राप्तिः, तस्य स्वोद्देश्यतावच्छेद-कावच्छिन्नातिरिक्तत्वेन युटा संकोचात्। अत एव वार्तिककृता यणि कर्तव्य एव युटः सिद्धत्वमुक्तमिति। एतेन 'वुग्युटो' इति वार्तिके यण्पदमियङोऽप्युप-लक्षणम्, यणादिनेत्यत्रत्यादिना यङः संग्रह इत्यपास्तम्।

न च युटोऽपवादत्वादेव युड्विषये इयङ्वत् "एरनेकाचः" इत्यस्याप्राप्ति-रिति वाच्यम्, "एरनेकाचः" इत्यस्याप्राप्तियोग्ये घञर्थे के दोय इत्यादौ युट-श्चारितार्थ्यात्, दिदीय इत्यत्रापि युट्प्रवृत्तिकाले यणोऽप्राप्तेरुक्तत्वाच्च। इयङ्प्राप्तेस्तु सर्वत्र सत्त्वाद्युक्तं तक्रन्यायेन युटा इयङो बाधः। न चात्रापि युड्विधानसामर्थ्येनैव यणभावे सिद्धे नेदमनित्यत्वफलमिति वाच्यम्, दीय इत्यादौ इयङभावसम्पादनेन युटश्चारितार्थ्यस्योक्तत्वात्। नन्वेवमपि युटि कृते तस्याभीयतयाऽसिद्धत्वेन यणि प्राप्ते तदभावाय 'वुग्युटौ' इति वार्तिकारम्भ-सामर्थ्येनैव परिभाषाया अप्रवृत्तिकल्पनायां नानित्यत्वज्ञापनस्येदं फलं युक्त-मित्यरुचेराह—**जहारेति**। यदागमन्यायलब्धस्य तपरत्वेन न व्यावृत्तिरिति कृदन्तप्रकरणे शेखरे उक्तत्वात्। दारयतीत्यतोऽत्रायं विशेषः—तत्राणमुद्दिश्य रेफस्य विधानेऽपि दोद्देशेनाविधानान्न दाग्रहणेन रेफविशिष्टस्य ग्रहणम्। अत्र त्वणमुद्दिश्य रेफस्य विधानेऽपि विधावाकारस्यैव निमित्तत्वेनाश्रयणादा-कारग्रहणेन रेफविशिष्टस्य ग्रहणमिति।

नन्वादन्ताङ्गात् परस्य णल इत्यर्थे रेफविशिष्टस्य प्रनिदारयतोत्यत्रेव नादन्ताङ्गत्वमिति कथम् "आतः" इत्यस्य प्राप्तिरिति वाच्यम्, भाष्यरीत्या आतः परस्याङ्गसंज्ञानिमित्तस्य णल इत्यर्थस्यैव सत्त्वात्, आरिति रेफविशिष्टे आत्वस्य सुलभत्वेन विशिष्टे आदन्ताङ्गत्वस्य सुवचत्वात्। नन्वेवमपि णलोऽ-कारात्मकस्य सन्निपातेनारित्यस्य सिद्धिरिति पुनस्तस्य स्थाने आदेशो न, उपजीव्यविरोधादित्यत आह—अदाविरत्यवतारयन्ति **केचित्**। तत्, न, "आत औ णलः" इत्येतद्विषये सन्निपातपरिभाषाया अनित्यत्वेनाप्रवृत्तेस्तैरेव वक्तव्य-त्वात्। अन्यथा मीधातोर्णलि एज्निमित्तप्रत्ययसन्निपातेन जातस्य "मिनाति-मिनोति" इत्यात्वस्य औकारादेशं प्रति निमित्तत्वानापत्तेः। आदिना भवेयुरि-त्यादीनां संग्रहः। अत्र हि परस्मैपदरूपोसोऽवयवस्य यासुट इयादेशे उस्ग्रहणे-नेय्विशिष्टस्याग्रहणात् शप अकारमादाय न "उस्यपदान्तात्" इत्यस्य प्रवृत्ति-रिति बोध्यम्।

एतेनापि वर्णग्रहण एव यदागमपरिभाषा न प्रवर्तत इति प्राचोक्तम-युक्तम्। दिदीये इत्यादिस्थले शङ्कते—**कथमिति**। अङ्गुल्योः परस्परमवयवा-

**न चोक्तज्ञापकाद् वर्णग्रहणेऽस्या अप्रवृत्तिरिति वाच्यम् ? "आने मुक्" इति सूत्रभाष्येऽकारस्याङ्गावयवस्य मुगित्यर्थे पचमान इत्यत्र 'तास्यनुदात्तेत्' इति स्वरो न स्यादित्याशङ्क्याऽदुपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत इत्युक्तेरसङ्गत्यापत्तेः ।**

**किञ्च, ङमन्तपदावयवस्य ह्रस्वात् परस्य ङमो ङमुडित्यर्थे कुर्वन्नास्ते**

---

वयविभावादर्शनादिति भावः । **वचनेनेति** । "आद्यन्तौ" इत्यनेनेत्यर्थः । ननु शशशृङ्गादिवदसिद्धस्य पदार्थस्य वचनसहस्रेणापि बोधनं दुर्वचमत आह--**तस्येति** । अवयवस्येवेत्यर्थः ।

सामान्यतो नानित्यत्वम्; किन्तु वर्णग्रहणे उक्तन्यायाप्रवृत्तावेव मुग्विधानं ज्ञापकमिति वादिमतं निरस्यति--**न चेति । वर्णग्रहण इति** । तद्वृत्तिधर्मातिदेशे तद्घटितधर्मातिदेशे चेत्यर्थः । यत्रागमी विशेष्यतया विशेषणतया वा वर्णबोधकः, तत्रेयं न प्रवर्तत इति यावत् । अत एव हुझल्भ्यः" इति सूत्रे भाष्ये रुदिहीत्यादौ घित्वव्यावृत्तये हलीत्यनुवर्त्य हलादेर्हेरिति व्याख्यातम् । अन्यथाऽनया हलादित्वातिदेशेन तदसङ्गतिः स्पष्टैव । **इत्यर्थे** इति । सिद्धान्तात्मक इत्यर्थः । **इत्यत्रेति** । इत्यादावित्यर्थः--**अदुपदेशभक्त इति** । अदुपदेशोऽस्यासावदुपदेशः, तस्य भक्तः=अवयव इत्यर्थः । यतस्तद्भक्तः, अतस्तद्बोधकशब्देन तद्विशिष्टसमुदायो ग्रहीष्यते, यदागमपरिभाषयेति शेषः ।

**असङ्गत्यापत्तेरिति** । अत्रायमाशयः--यदि विशेषणतया वर्णग्रहणेऽस्या अप्रवृत्तिरित्युच्यते, तदा पचमान इत्यादावङ्गावयवीभूतस्याकारस्य मुगिति "आने मुक्" इति सूत्रार्थे "तास्यनुदात्तेत्" इत्यनेन आन इति सार्वधातुकस्य सिद्धान्तेऽनुदात्तत्व भवति । इदानीं मुगागमे कृतेऽदुपदेशात् परत्वाभावात् तन्न स्यादित्याशङ्किते यदागमपरिभाषया अदुपदेशभक्तस्तत्ग्रहणेन ग्रहीष्यत इति तदाशङ्कानिराकरणपरम् "आने मुक" इति सूत्रस्थं भाष्यमयुक्तं स्यात् । अस्ति च प्रकृते विशेषणतया वर्णग्रहणमुपदेशे अदस्यासाविति व्यपदेशिवद्भावेनेति । नन्वेवमदुपदेश इत्यत्र बहुव्रीहिस्वीकाराद् हतो हथः इत्यत्र तस्थसारनुदात्तस्वरापत्तिः । किञ्च, अच्चासौ उपदेशश्चेति कर्मधारयाङ्गीकारे भविष्यति, वक्ष्यमाणेत्यत्र तिङानोरनुदात्तस्वरानापत्तिरिति चेत्, न, कर्मसाधनोपदेशशब्दस्याकारेण विशेषणात्तदन्तविधिनाकारान्तादुपदिश्यमानात् परं लस्थानिकं यत् सार्वधातुकं तदनुदात्तं स्यादिति सूत्रार्थस्यावश्यकत्वात् । एतत्सूत्रस्थशेखरेऽप्येवमेवोक्तत्वात् ।

शबादावकारे तु व्यपदेशिवद्भावेनाकारस्यैवाकारान्तत्वं बोध्यमित्येतावता ग्रन्थेन वर्णस्य विशेषणतया ग्रहणेऽपि परिभाषाया अप्रवृत्तौ दोषमुक्त्वा धर्मिग्राहकमानेन विशेष्यतया ग्रहणेऽपि तदप्रवृत्तौ दोषमाह--**किञ्चेति** । वस्तुतोऽपरनिमित्तकत्वेनान्तरङ्गत्वान्मुकः पूर्वमेव स्वरस्य सिद्धत्वात् परिभाषाया

**इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य 'यदागमाः' इति न्यायेनाद्यनस्यापि पदान्तग्रहणेन ग्रहणात् "पदान्तस्य" इति निषेध इत्यनया परिभाषया 'आगमानामागमिधर्मवैशिष्ट्यमपि बोध्यते' इत्याशयकङमुट्सूत्रस्थभाष्यासङ्गतेः।**

---

विषय एव प्रकृते नास्तीति तत्त्वम्। वार्णपरिभाषाज्ञापकस्यासिद्धपरिभाषाया अनित्यत्वे एव ज्ञापकत्वस्य सम्भवेन वार्णपरिभाषाया एवाभावात्।

**यद्वा**, समानकार्यित्वे एव वार्णपरिभाषायाः प्रवृत्तेरङ्गीकारान्न दोष इति भावः। अदुपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत इति भाष्यन्तु पूर्वपक्ष्युक्त्यर्थभिप्रायेण भाष्ये एवान्तरङ्गत्वेन मुकः पूर्वं स्वरस्योक्तत्वादिति दिक्।

ननु "ङमुट्" सूत्रे ङम इत्यस्य पञ्चम्यन्तत्वे पदस्येत्युपस्थितेन समानाधिकरण्यं न स्यात्, अतः 'ङमः' इति षष्ठचन्तम्। किञ्च, पदस्येत्यस्य सम्बन्धार्थकषष्ठचन्तत्वे 'ङमन्तपदस्य ह्रस्वात्परस्य ङमुट्' इत्यर्थेन 'अत्र कुर्वन्नास्ते' इत्यत्रैव ककाराद्यवयव एवं ङमुट् स्यात्, इष्टस्थले च न स्यादतोऽवयवार्थकषष्ठचन्तम्, तथापि ह्रस्वात् परस्य पदावयवस्य ङमो ङमुडित्यर्थेन दण्डिनेत्यत्र स्यात्, अतो ङम इत्यस्यावृत्तिस्तदाह--**ङमन्तपदावयवस्येति**। यदि तु "उञि च पदे" इत्यतः पदे इत्यनुवर्त्य पदावयवस्य ह्रस्वात् परस्य ङमो ङमुडजादौ पदे इत्यर्थः, तदा ङमन्तेति फलितार्थपरतया नेयम्। एतेनावृत्तिकरणे गौरवेणास्य भाष्यस्यैकदेश्युक्तित्वमित्यपास्तम्। पूर्वं तत्त्वकथनेनैकदेश्युक्तित्वमित्यन्यदेतत्।

**इत्यर्थे** इति। असिद्धान्तभूत इत्यर्थः। आदिना कृषन्नास्ते इत्यादिपरिग्रहः। ङमुडागमे णत्वेति। नुडागमनकारे णत्वेत्यर्थः। तस्यान्त्यनकारात् पूर्वत्वेनापदान्तत्वेन पदान्तस्येति निषेधाप्रवृत्तिरिति भावः। **आद्यनस्यापीति** आगमनकारस्यापीत्यर्थः। ननु भाष्ये पदान्तभक्तः पदान्तग्रहणेन ग्रहीष्यत इत्युक्तम्, तदयुक्तम्; यदागमा इत्यनयोक्तरीत्यागमविशिष्टसमुदायस्य पदान्तत्वातिदेशोऽपि केवलागमनकारस्य पदान्तत्वाभावादपदान्तत्वं तदवस्थमेवेत्यत आह--अनयेति।

**आगमानामागमिधर्मवैशिष्ट्यमपि बोध्यत** इति। अपिर्भिन्नक्रमः, आगमानामित्यत्र योज्यः, तेन समुदायसमुच्चयः। यद्यपीदं परिभाषान्तरम्, तथापि एतत्--परिभाषामूलकमेव ज्ञेयम्। तथा हि--परिभाषायां गृह्यते इति पदं यदागमा इत्यत्रापि युज्यते। अपीति शेषश्च। तथा चागमोऽपि तद्ग्रहणेन=आगमिग्राहकधर्मेण गृह्यते=ज्ञानविषयीक्रियते। यमुद्दिश्य विहिताः अतस्तद्गुणीभूताः, अतस्तेऽपि गृह्यन्ते। अपिना तद्विशिष्टा अपीत्यक्षरार्थः। एवञ्चागमीयधर्मप्रकारकज्ञानविषयो भवति। धर्मप्रकारकज्ञानविषय आगमोऽपि भवतीति फलितम्।

वस्तुतस्तु चिन्त्यमिदम्, आगमानामागमिधर्मवैशिष्ट्ये मानाभावात्,

किञ्च, गुणादे रपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्यम्। अन्यथा 'ऋकारस्य

फलाभावाच्च। प्रत्युत, रामाणामित्यादौ नुटः सुप्त्वेन नान्तस्य पदत्वेन "पदान्तस्य" इति णत्वनिषेधापत्त्या एतस्याप्यनित्यत्वाश्रयणे महान् क्लेशः।

प्रकृतभाष्यस्य चायमर्थः--यदागमन्यायेन "अट्कुप्वाङ्नुम्" इति सूत्रे नस्येत्यनेन ङमुट्सहितस्यैव ग्रहणेन कुर्वन्नास्ते इत्यत्र द्वयोर्नयोर्णत्वं प्राप्तं पदान्तस्येत्यनेन वार्यते, द्वयोर्नयोः पदान्तत्वेन ङमोऽपि पदान्तत्वेन तावन्मात्रस्यापि न णत्वम्, पदान्तस्येत्यत्र पदान्तत्वपर्य्याप्त्यधिकरणस्येत्यर्थे तु न मानम्, फलाभावश्च। नस्येत्यस्य पदान्तविशेषणतया नकारपर्याप्तपदान्तत्वाश्रयस्य णत्वनिषेधान्न रामाणामित्यादौ निषेधः। तथा च वर्णग्रहणे एष एव यदागमन्यायो भाष्याभिप्रेत इति **केचित्**।

**अन्ये** तु भाष्ये पदान्तभक्तः=पदान्तनत्वभक्तः पदान्तनत्वग्रहणेन ग्राहिष्यत इत्यर्थः। अयं भावः--उभयनकारे नत्वं नास्ति, उभयघटे घटत्वाभाववत्; किन्तु प्रत्येकमेव तत्। अतो यदागमपरिभाषयाऽऽगमविशिष्टे नत्वमतिदिश्यते। नत्वं न पर्याप्त्यधिकरणसम्बन्धेन; किन्त्वाश्रयतासम्बन्धेन। एवञ्च नत्वाश्रयः पूर्वोऽपि भवत्येवेति पदान्तस्येति निषेधसिद्धिरिति। न च पदान्तत्वमेवाश्रयतया गृह्यताम्, तेन च प्रकृतभाष्यस्य संगतिरिति वाच्यम्, रामेणेत्यादावपि पदान्तत्वमेनशब्दे तदाश्रयत्वमेनशब्दावयवनकारे इति "पदान्तस्य" इति निषेधापत्तेः। अस्य युक्तायुक्तत्वं सूरिभिरेवावगन्तव्यम्, कृतं परदोषाविष्करणमित्याहुरिति दिक्।

नन्वस्मिन् पक्षे ङम इत्यस्यावृत्तिकल्पने गौरवात् ह्रस्वात्परपदावयवङमः परस्याजादेः पदस्य ङमुडिति व्याख्यानस्यैव सिद्धान्तितत्वात्। किञ्च, "आद्यन्तौ" इत्यतोऽन्त्यशब्दानुवृत्त्या 'मिदचोऽन्त्यात्परः' इति सूत्रस्थमितः परादिवद्भावे द्विषच्छब्दोपपदात् तपेः खशि द्विषच्छब्दात्तकारात्पूर्वं मुमि अपदान्तत्वात् "मोऽनुस्वारः" इति न प्राप्नोतीति भाष्यविरोधेन प्रकृतपरिभाषाद्वारा तादृशार्थान्तरस्य कर्तुमशक्यत्वेन कुर्वन्नास्ते इत्यादौ णत्वस्य दुर्वारत्वेन प्रकृतभाष्यस्यैकदेश्युक्तित्वात्। किञ्च, वर्णमात्रवृत्तिधर्मातिदेशे परिभाषाया अप्रवृत्तेरङ्गीकारात् पदान्तत्वस्य वर्णमात्रवृत्तिधर्मत्वाभावात्। एवञ्च पदान्तभक्तस्तद्ग्रहणेन ग्रहीष्यत इति "ङमो ह्रस्वादचि" इति सूत्रस्थभाष्यासङ्गत्या यत्र विशेष्यतया वर्णस्याश्रयणम्, तत्रेयं न प्रवर्तत इति द्वितीयपक्षस्य निराकरणसम्भवादित्यरुचेराह--**किञ्चेति**। वस्तुतः "मिदचोऽन्त्यात्" इत्यत्रत्यद्विषन्तप इत्युदाहरणपरभाष्यस्यैवैकदेश्युक्तित्वम्। द्विषन्तप इत्यत्र परादिवद्भावेऽपि तकारस्य संयोगान्तलोपे एकदेशविकृतन्यायेन मकारस्य पदान्तत्वसौलभ्यादनुस्वारसिद्धेः। अत एव मकारस्य परादित्वे दोषत्वेनोपन्यस्तं परन्तप इति भाष्ये।

**गुणवृद्धी अरारावेव' इति नियमो न स्यात। तच्च वर्णग्रहण एतदप्रवृत्तौ न सङ्गच्छते। अत एव "रदाभ्याम्" इति सूत्रे भाष्ये 'गुणो भवति, वृद्धिर्भवति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते' इति।**

**अत एव "नेटि" "णेरनिटि" इत्यादि चरितार्थम्।**

**'अनागमकानां सागमका आदेशाः' इत्यस्य त्वयमर्थः—आर्धधातुकस्ये-**

---

एष्टव्यमिति। रेफविशिष्टयोरकाराकारयोर्गुणवृद्धिशब्दाभ्यां ग्रहणस्यावश्यकत्वादित्यर्थः। **अन्यथेति**। रेफविशिष्टयोस्तयोस्ताभ्यां ग्रहणाभावे इत्यर्थः। **न संगच्छत** इति। यतो न संगच्छते, अतो वर्णग्रहणेऽपि यदागमपरिभाषया विशिष्टस्य तत्त्वं सुलभमिति भावः। **अत एवेति**। यदागमन्यायप्रवृत्त्या गुणवृद्धिशब्दाभ्यां रेफविशिष्टयोरकाराकारयोर्ग्रहणादेवेत्यर्थः। **भाष्यमिति**। संगच्छत इति शेषः। तत्र हि कार्तिरित्यत्र रेफात्परत्वेन "रदाभ्याम्" इति तकारस्य नत्वमाशङ्क्य वृद्धिर्निमित्तं यस्य तस्मात् परस्य प्रतिषेध इत्यर्थकेन 'वृद्धिनिमित्तात् प्रतिषेधः' इति वार्तिकेन समाहितम्। किञ्च, रेफशिरा गुणवृद्धिसंज्ञक इत्युपसंहृतम्। तथा चैवं भाष्यकारस्य कथनेन वर्णग्रहणे यदागमन्यायस्य प्रवृत्तिः स्फुटैवेति भावः अभिनिर्वर्तते=उत्पद्यते इत्यर्थः। ननु "स्वं रूपम्" इति शास्त्रेण दारूपस्यैव संज्ञित्वं बोधितम्। लोकन्यायसिद्धयानया परिभाषया पुग्विशिष्टस्य संज्ञित्वं बोधितम्। तथा चानया विरोधाच्छास्त्रेणैव व्यवस्था स्यात्, अत आह--अत एवेति केचित्।

**अन्ये तु**, नन्वन्तादिशब्दस्यावयववाचकत्वे लौकिकन्यायसिद्धेयं भवेत्, तदेव न सिध्यति, तद्वाचकत्वे वर्णस्य वर्णान्तरावयववत्वं वाच्यम्, तच्च विरुद्धम्। अत आरोपितावयवत्वमवयवसादृश्यबोधनं वा वक्तव्यम्, तदपेक्षया पूर्वपरमात्रबोधकत्वमेवान्तादिशब्दयोर्युक्तमित्याशङ्क्य समाधत्ते-**अत एव**।

अनिटीति। लोकन्यायसिद्धपरिभाषाङ्गीकारादेवेत्यर्थः। अन्यथा अपटीत्, कारयितव्यमित्यादाविटा व्यवधानेन वृद्धिणिलोपयोरप्राप्तौ निषेधस्य वैयर्थ्यापत्तेरिति भावः। एतेन "नेटि" इति ज्ञापकमात्रसिद्धेयं परिभाषेति केषाञ्चित् प्रवादः परास्तः।

ननु शब्दानित्यत्वभिया 'अनागमकानां सागमका आदेशाः' इति सिद्धान्तात् स्थानिवद्भावेन प्राप्तवृद्ध्यादिनिषेधार्थतया "नेटि" इत्यादेः साफल्यमिति कथमेतज्ज्ञापकत्वं तस्य।

किञ्च, समुदाये तत्त्वस्य स्थानिवद्भावेनैव सिद्धत्वाद् व्यर्थेयं यदागमपरिभाषेत्यत आह--**अनागमकानामिति**। **अयमर्थ** इति। इडित्यत्र बहुव्रीहिणा आर्धधातुकस्येत्यस्य स्थानषष्ठ्यन्तताश्रयणपरम् "आद्यन्तौ" इति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिरिति भावः।

**अनुपपत्त्येति**। प्रकृत्यादित्वादभेदार्थिकेयं तृतीया। तथा च तदभिन्ना

**डागम इत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानुपपत्त्यार्थापत्तिमूलकवाक्यान्तर-कल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति । एवं चादेशेष्विवात्रापि बुद्धि-विपरिणाम इति न नित्यत्वहानिः । "स्थानिवत्" सूत्रे च नेदृशादेशग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् ।**

**किञ्चैवं सति स्थानिबुद्धचैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्य इति**

---

या अर्थापत्तिः, तन्मूलकेत्यर्थः । 'अनुपपत्त्यर्थापत्तिः' इति पाठस्तु सुगमः । यद्वा, कल्पनायां तस्यां हेतुत्वेनान्वय इति यथाश्रुतमपि साधु । अर्थापत्तीति कल्पक-प्रमाणोपन्यासः । वाक्यान्तरकल्पनेनेति हेताविय तृतीया । यथा 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यत्र भोजनमन्तरा पीनत्वानुपपत्तिरूपाऽर्थापत्तिः, तन्मूलकं रात्रौ भोजनं कल्प्यते, तथा प्रकृते आगमादिविधानेन शब्दानां नित्य-त्वानुपपत्तिरूपार्थापत्तिः, तन्मूलकम् 'इड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्या' इत्येवं बुद्धिविपरिणामेन वाक्यान्तरं कल्प्यत् इति भावः । वस्तुतः इदं चिन्त्यम् वाक्यान्तरकल्पनेन शव्दानित्यत्वपरिहारेऽपि ऋषिवाक्यानुपपत्तेस्तादवस्थ्यात् । किञ्च, कल्पितवाक्यान्तरेण साधुत्वे मानाभावात् । तस्मान्नित्येष्वागमविधा-नानुपपत्त्या पाणिनितात्पर्यकल्पनस्यैवौचित्यम् । एवञ्चायमप्यष्टाध्यायी बोधित एव । एतेन 'स्थानिवत्' सूत्रे नेदृश इत्यादि चिन्त्यमेव । 'किञ्चैवं सति' इत्यादिना दोषकथनमपि तादृशमेव, सूत्रीयतत्पदजन्यप्राथमिकोपस्थि-तिविषयो यः, तत्समभिव्याहृतो यस्स्त्रीप्रत्ययातिरिक्तः, तदघटितत्वे सति तत्पदजन्यप्रतीतिविषयत्वमित्यर्थस्य सिद्धान्तयिष्यमाणत्वेन अपिबदित्यत्रा-दोषात् । सूत्रीयपदं पापदम्, तज्जन्यप्राथमिकोपस्थितिविषयः पाशब्दः तत्समो-पोच्चारितोऽपिबदित्यत्राऽकारः स स्त्रीप्रत्ययातिरिक्तोऽपि भवति, तदघटितः पेत्येव अपेति तु तद्घटित एवेति लक्षणसमन्वयः । उक्तलक्षणपदकृत्यं तत्परि-भाषाव्याख्यानावसरे निरूपयिष्यामः । तिसृणामित्यत्र सकृद्गतिन्यायेन समा-धानपरं भाष्यमप्यनुकूलमेव उक्तनिर्दिश्यमानत्वस्य तत्र सत्त्वात् । एवं स्थिते यदागमा इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तमिति नव्यानां कथ-नन्तु तेषामेव शोभत इति भाष्यस्वरसोऽपि मदुक्तार्थं एव गुरुचरणलीना वदन्तीत्यलम् ।

एवञ्चेति । बुद्धिविपरिणामस्वीकारे चेत्यर्थः । **अत्रापीति** । आगमेष्व-पीत्यर्थः । विपरिणाम इत्यस्य तन्मात्रमित्यर्थः । नन्वेतावताप्यादेशेष्विवात्रा-प्यानुमानिकस्थान्यादेशभावस्य सुस्थत्वाद् दोषस्तदवस्थ एवेत्य आह—**स्थानि-वदिति । साक्षादिति** । 'हनो वध' इत्यादाविति भावः ।

ननु 'स्थानिवत्' सूत्रस्य साक्षादष्टाध्यायीपठितस्थान्यादेशभावे चारि-तार्थ्येऽपि तत्सूत्रे आदेशग्रहणसामर्थ्यादानुमानिकस्थान्यादेशभावग्रहणं भवति । स च बुद्धिविपरिणामरूप एव । तस्य चात्रापि सत्त्वादविशेषः, अत आह—

**परिभाषाया अप्राप्त्याऽडागमसहितस्य पिबाद्यादेशापत्त्या 'लावस्थायामट्' इति भाष्योक्तसिद्धान्तसङ्गतिः ।**

**स्थानिवद्भावविषये निर्दिश्यमानस्येति परिभाषायाः प्रवृत्तौ तिसृणा-**

---

**किञ्चैवं सतीति** । आनुनानिकादेशवदस्यापि स्थानिवत्सूत्रे आदेशग्रहणे सतीत्यर्थः । 'स्थानिबुद्ध्यैव कार्यप्रवृत्त्या' इति परिभाषाया अप्राप्तौ हेतुः । यत्र निर्दिश्यमानस्यानिर्दिश्यमानस्य च कार्यप्राप्तिः, तत्रैव निर्दिश्यमानत्वम् । तत्रानयैकदेस्य जरसादेशः । प्रकृते तु स्थानिबुद्ध्यैवादेशस्य कार्यकरणेऽतिदिश्यमानधर्मविरुद्धस्वाश्रयप्रयुक्तकार्याभावतया निर्दिश्यमानस्यैव जायमानत्वे फलाभावात् स्थानिवद्भावविषये निर्दिश्यमानपरिभाषाया अप्राप्तिरिति भावः । **पिबाद्यादेशपत्त्येति** ।

वस्तुतः एतावत्पर्यन्तानुधावनं व्यर्थम्, उदस्थादित्यादावेव पूर्वसवर्णापत्तेः । **सिद्धान्तासङ्गतेरिति** । तत्र हि 'आसन्' इत्यत्रास्तेः 'श्नसोरल्लोपः' इत्यल्लोपत्तरमनजादित्वादड् न प्राप्नोति । एवमासन्नित्यत्राप्यन्तरङ्गत्वादिणो यणि अनजादित्वात् स न प्राप्नोति । अतः सूत्रकृता सूत्रमारब्धम् 'असिद्धवदत्राभात्' इति । भाष्यकृता तु 'लुङ्लृङ्' इति द्विलकारको निर्देश इति लावस्थायामेवाटमङ्गीकृत्यासिद्धवदिति सूत्रं प्रत्याख्यातमिति सिद्धान्तानुपपत्तेरिति भावः । तथा च आदेशवदागमस्थलेऽपि स्थानिबुद्ध्या कार्यकरणे 'पा' इत्यादेर्धातोर्लङ् लावस्थायामेवाडागमे कृतेऽड्रहितपा इत्यादेरट्सहितपा इत्यादेशे स्थानिवद्भावेन पात्वादिबुद्ध्या निर्दिश्यमानस्येति परिभाषाया अप्राप्त्या अडागमसहितस्य पिबाद्यादेशो 'अपिबत्' इत्याद्यसिद्ध्या 'लावस्थायामट्' इति 'असिद्धवत्' सूत्रस्थभाष्योक्तसिद्धान्त व्याकोपः । स्थानिवसूत्रस्थादेशग्रहणेनैतस्या ग्रहणे तु लावस्थायां कृतेऽप्यडागमे 'यदागमपरिभाषया' अटस्तदवयवत्वेऽपि निर्दिश्यमानपरिभाषया पेत्यादेरेव पिबाद्यादेशे 'अपिबत्' इत्यादिसिद्ध्या न भाष्योक्तसिद्धान्तव्याकोप इति निष्कृष्टार्थः ।

नन्वेमवपि भाष्यासङ्गतिः, लावस्थायामडागमेऽट्सहितस्यैवार्थत्त्वम्, न तु तद्रहितस्येत्यर्थवद्ग्रहणे परिभाषया अड्रहितस्यादेशो न प्राप्नोतीति चेत्, न; आदेशविधावङ्गाधिकारसत्त्वेनार्थवत्पाशब्दान्तं यदङ्गं तदवयस्य निर्दिश्यमानस्येत्यर्थाश्रयणात् । प्रकृते तदन्तत्वं तु व्यपदेशिवद्भावेन बोध्यम् ।

आदेशो स्थानिवद्भावेन स्थानिबुद्धिर्यत्र, तत्र निर्दिश्यमानभिन्नत्वबुद्ध्यभावे भाष्यं ज्ञापकमाह—**स्थानिवदिति परिभाषायाः** प्रवृत्ताविति । परिभाषया कार्यप्रवृत्तिवारणे इत्यर्थः । नातो जरायाः इत्यत्र-शेखरविरोधः । तथा च न केवलं भाष्यविरोध एव; किन्तु लक्ष्यासिद्धिरपीति भाव । **परित्वादिति** । त्रयादेशापेक्षयेत्यर्थः । भाष्यासङ्गतिरिति । स्थानिवद्भावेन तत्त्वबुद्धा-

**मित्यत्र परत्वात् तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासङ्गतिः ।**

**एरुरित्यादौ स्थानषष्ठीनिर्देशात् तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात् तस्य स्थानिवत्सूत्रेग्रहणेन न दोषः । आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति अच परस्मिन् इत्यादेर्नासङ्गतिः ।**

---

वपि स्वरूपसन्निर्दिश्यमानत्वाभावमादाय निर्दिश्यमानपरिभाषायाः प्रवृत्तौ तु तिसृणामित्यत्र त्रयादेशशङ्कैव नोदेति ।

अत्रायम्भावः—एतद्भाष्याददतिदिश्यमानधर्मविरुद्धस्वाश्रयप्रयुक्तकार्याभावो नाङ्गीक्रियते चेत् ! स्थानिवद्भावस्य बाधिकैवेयं स्यादिति तत्त्वबुद्धिरिति । यदि त्वेतत्परिभाषामजानतस्तदा शङ्का, तदा निर्दिश्यमानपरिभाषयैव समाधानमुचितम् । 'सकृद्गति'न्यायेन समाधानान्तरं भाष्योक्तमयुक्तं स्यादिति भावः । वस्तुतस्तु स्थानषष्ठीवोधितो यत्र स्थान्यादेशभावः, तत्रैव निर्दिश्यमानपरिभाप्रवृत्त्यभावः, तिसृणामित्यत्रत्यभाष्यात् । 'अनागमकानां यत्र सागमका आदेशाः, तत्र लावस्थायाम्' इति भाष्यान्निर्दिश्यमानपरिभाषाप्रवृत्तिकल्पनेन दोषलेशाभावादिति चिन्त्योऽयं ग्रन्थः ।

ननु यत्र न साक्षादष्टाध्यायीबोधितः स्थान्यादेशभावः, किन्तुत्वानुमानिक एव, तत्र स्थानिवद्भावाप्रवृत्तौ 'पचतु' इत्यादौ 'तु' शब्दे तिङ्त्वाभावेन समुदायस्य पदत्वं न स्यात्, अत आह–**एरुरित्यादाविति** । **तदन्तेति** । नित्यत्वसंरक्षणायेति भावः । **पठितवाक्यस्यैवेति** । एरुरित्यादेरेवेत्यर्थः । एतेनापठितागमस्थलीयानुमानिकवाक्यस्य व्यावृत्तिः । **समुदायादेशपरत्वेनेति** । लक्षणयेति भावः । **आदेशग्रहणेति** । स्थानिवदित्युक्त्यैव सम्बन्धिशब्दमहिम्ना आदेशाक्षेपे सिद्धे पुनरादेशग्रहणसामर्थ्यादित्यर्थः । तस्य तादृशसमुदायादेशस्य । तथा च श्रौतस्थान्यादेशभावे शब्दानां नित्यत्वानुपपत्तिमूलकतया कल्प्यमानतादृशस्थान्यादेशभावे च **तत्प्रवृत्तिः**, न त्वागमस्थलीये तत्रेति फलितम् । तथा च साक्षादष्टाध्यायीबोधितो यः स्थान्यादेशभावः, तस्यादेशग्रहणसामर्थ्याद् ग्रहणेन न दोष इति भावः ।

ननु वर्णमात्रस्य यत्र स्थानित्वम्, तत्र सर्वत्रानुमानिकस्य तस्य कल्पने 'अनल्विधौ' इत्यस्य 'अचः परस्मिन' इत्यस्य चासङ्गतिः स्यात्, अत आह— **आनुमानिकेति** । न त्याग इति । आवृत्त्या 'अतो लोपः' इत्यादौ द्विविधोऽपि स्थान्यादेशभावो विवक्षित इतिः भाव । यथा गणयतीत्यादाविति **केचित्** ।

वस्तुतः इकारघटितस्य प्रसङ्गे इत्येक एव वाक्यार्थः । परन्तु बोधें इकारघटितो भ्रमप्रमासाधारणो व्यपदेशिवद्भावातिदिष्टानतिदिष्टसाधारणश्चेत्यत्र प्रमाणम् 'अचः परस्मिन्' इत्यादिः, तथा चेकारघटितो भ्रमविषयतिशब्दस्य

**एतेन 'यदागमाः' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् । एतत्सर्वं 'दाधाघ्वदाप' इति सूत्रे भाष्ये, स्पष्टम् ॥ ११ ॥**

**नन्वेवमुदस्थादित्यादौ 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिः, अत आह—**

**निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥**

---

प्रसङ्गे उकारघटितो भ्रमविषयस्तु शब्दोऽपि भवति। तेन 'पचतु' इत्यत्र स्थानिवद्भावेन तिङ्त्वातिदेशे 'तिङिचोदात्तवति' इत्यादिप्रवृत्तिरूह्या। न च तिशब्मप्रसङ्गे तुशब्दबोधः भ्रमेति वाच्यम्, शब्दानित्यत्वस्य तावन्मात्रेणापरिहारात्। एतेन 'षष्ठीस्थाने' इति सूत्रस्थशब्देन्दुशेखरे 'किञ्चेकारबुद्धिप्रसङ्गे' पकारबुद्धिरित्यर्थं इति यदुक्तम्, तद्भ्रान्त्यैवेति दिक्।

तथा च 'दाधाघु' इति सूत्रे भाष्यकृता आगमानामादेशत्वाभ्युपगमेऽपि पूर्वोक्तयुक्त्या स्थानिवत्सूत्रस्थादेशग्रहणेन ग्रहणं नेति सिद्धम्, तत्फलमाह—**एतेनेति। अनागमकानामित्यादिग्रन्थेनेत्यर्थः। एतत्सर्वमिति।** परिभाषा, तद्व्याख्यानम्, अनागमकानामित्यादि सर्वं चेत्यर्थः।

तत्र हि 'प्रनिदारयति' इत्यादौ तदभावाय 'कृतं समानशब्दप्रतिषेधः' इति वार्त्तिकमर्थवत्परिभाषया खण्डयित्वा 'प्रणिदापयति' इत्यत्र तथैवाव्याप्तिमाशङ्क्य न वा 'अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते' इत्याद्युक्त्वा, नित्येष्वागमशासनमयुक्तमित्याशङ्क्य नित्येष्वादेशशासनं यथा बुद्धिविपरिणामेन, तथात्रापीत्याशयेनादेशास्तर्हीमे भविष्यन्ति अनागमकानां सागमकाः। तत् कथं सर्वे सर्वपदेत्याद्युक्तम् ? आदेशा इत्यादेरिमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशास्तत्सदृशा भविष्यन्तीत्यर्थं इति बोध्यम् ॥ ११ ॥

यदागमपरिभाषापवादसङ्गतिं सूचयन्नाह—**निर्दिश्यमानस्येति।** परिभाषामवतारयति—**नन्वेवमिति।** यदागमा इत्यङ्गीकारे इत्यर्थः। **पूर्वसवर्णापत्तिरिति।** पूर्वस्य तकारस्य सवर्णः प्रथमोपस्थितस्तकारोऽकारस्य स्थाने स्यादित्यर्थः।

ननु पूर्वं यदागमपरिभाषायां यमुद्दिश्येत्यर्थस्य व्याख्यातत्वेनाडागमविधायकेऽङ्गस्योद्देश्यत्वेनाङ्गत्वस्य तया अतिदेशेऽपि स्थात्वस्य तयानतिदेशादुदःस्थादित्यत्र पूर्वसवर्णापादनमयुक्तमिति चेत्, उद्देश्यतावच्छेदकीभूतधर्मसमानाधिकरणयावद्धर्माणां कार्यप्रयोजकानां कार्यार्थतया तयातिदेशात् स्थात्वस्याप्यतिदेशेन तदापत्तेर्दुर्वारत्वात्। अन्यथा 'प्रणिदापयति' इत्यादावदन्तोद्देशेन 'अर्तिह्री' इति विधीयमाने पुकि आदन्तत्वस्यातिदेशेऽपि दात्वस्यानतिदेशाद् घुसंज्ञानापत्तिरिति तदसङ्गतिः स्पष्टैव।

**'षष्ठी स्थानेयोगा' इति सूत्रमावर्तते। तत्र द्वितीयस्यायमर्थः--षष्ठ्यन्तं निर्दिश्यमानम् उच्चार्यमाणमुच्चार्यमाणसजातीयमेव, निर्दिश्यमानावयवरूप-**

---

पूर्वोक्तपरिभाषावन्नेयं ज्ञापकलोकन्यायसिद्धाः किन्तु सूत्रार्थभूतेत्याह— षष्ठी स्थान इति। यद्यपि 'षष्ठी स्थानेयोगा' इति सूत्रं प्रसिद्धार्थकं नापेक्षितम् तं विनैवान्तरङ्गत्वादिना सर्वत्र स्थानसम्बन्धलाभात्। तथा चानर्थक्यात्तस्यै-वायमर्थ इति भाष्ये उक्तम्। तथाप्यबुद्धबोधनाय सूत्रमतावलम्बेनाह—आव-र्तत इति। तत्रैकस्य प्रसिद्धार्थत्वादाह—तत्रेति। तयोर्मध्य इत्यर्थः। अयमिति। वक्ष्यमाण इत्यर्थः। तमेवाह षष्ट्यन्तमित्यादीत्यन्तेन। 'प्रत्ययग्रहणे' इति परि-भाषया सूत्रे षष्ठीपदेन तदन्तग्रहादाह—षष्ठ्यन्तमिति।

वस्तुतस्तु षष्ठ्यन्तस्यादेशासंभवात् तत्सूत्रे षष्ठीपदेन लक्षणया षष्ठी-प्रकृतिर्गृह्यते, षष्ठ्यन्तरं स्थानेन युज्यते, यतः षष्ठ्युच्चारितेति भाष्यात्। भाष्ये षष्ठ्यन्तमित्यत्रान्तशब्दः समीपवर्तिप्रकृतिवचन इति भावः। निर्दिश्य-मानमित्यध्याहारलभ्यम्। तदर्थमाह—उच्चार्यमाणमिति।

ननु सूत्रोच्चार्यमाणस्य न तत्सम्बन्धः, किन्तु प्रयोगस्थस्य, अत आह— उच्चार्यमाणसजातीयमेवेति। आनुपूर्वीकृतञ्च साजात्यं विवक्षितम्। न चैवं तर्हि निर्दिश्यमानपदाध्याहारक्लेशो व्यर्थ एवेति चेत्, न; यत आवृत्तस्य वाच्योऽयमर्थः, अतो निर्दिश्यमानस्यादेशा भवन्तीत्यर्थस्य फलितार्थत्वात्।

वस्तुतस्तु सूत्रस्थजराशब्दनिरूपितलक्ष्यस्थजराशब्दस्य जराशब्दान्तस्य च बोध्यमानात्तदर्थमावश्यकोऽध्याहार इति तत्त्वम्। नन्वेवमपि सुपदः, उद-स्थादित्यादिसिद्धावपि 'अतिस्यः' इत्यादौ 'तदोः सः सौ' इत्यत्र त्यदादीना-मित्यस्य सम्बन्धे अङ्गस्येत्यस्य च तद्विशेषणेन तदन्तविधौ त्यदाद्यन्ताना-मङ्गानां तकारदकारयोः सः स्यादित्यर्थेनातेस्तकारस्य सत्त्वादेशापत्तिः। त्यदादीनामित्यस्यावयवषष्ठीत्वेन निर्दिश्यमानपरिभाषया वारणासंभवादत आह—निर्दिश्यमानावयवरूपमेवेति। निर्दिश्यमानसजातीयावयवरूपमित्यर्थः। तथा च साक्षात् परम्परया वा स्थानेयोगत्वं विवक्षितमिति भावः। वस्तुतः इदमेव युक्तम्। उच्चार्यमाणसजातीयमिति न वक्तव्यम् 'सुपदः' इत्यादौ व्यपदेशिवद्भावेन तत्त्वं बोध्यम्। यद्यपि 'अतिस्यः' इत्यत्र 'अन्त्यबाधेऽन्त्यस-देशस्य' इत्येव सिद्धम्। तत्रेतराव्यवधानं च ज्ञापकस्य सजातीयविषयत्वादच्-कृतं न हल्कृतम्। कृते इतरपकारव्यवधानसत्त्वेऽप्यन्त्यसदेशत्वस्यातत्त्वेन न दोषः। अत एव 'हंसशिरांसि' इत्यादौ न दोषः। तथापि 'अतिवयम्, विश्वौहः, विदुषी' इत्यादौ द्वितीयार्थस्य फलं बोध्यम।

वस्तुतः सर्वादिसूत्रभाष्यतो योग्येतरान्विते स्वार्थे पदानां शक्तिलाभेन 'स्वं रूपम' इति शास्त्रातिरिक्तग्राहकशास्त्राननुसन्धानकालिकोपस्थितिविषय-त्वस्यैव निर्दिश्यमानत्वेन च तदोरित्यतस्तदन्तविधितश्च पूर्वं त्यदाद्यवयववत् तदोरेवोपस्थितत्वात् तयोरेवनिर्दिश्यमानत्वात् 'नातिस्यः' इत्यादौ दोष इति बोध्यमिति केचित्।

**मेव वा स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते, न तु प्रतीयमानमित्यर्थः। तेनेदं सिद्धम्।**

**न च 'अस्य च्वौ' इत्यादौ दीर्घाणामादेशानापत्तिः, तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्, जातिपक्षे दोषाभावात्।**

**किञ्च, 'न भूसुधियोः' इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमान-**

---

ननु स्थानरूपसम्बन्धस्याभावः, अत आह—**स्थानेनेति**। निवर्त्यनिवर्तकभावरूपसम्बन्धेनेति भावः। यथा 'इको यणचि' इत्यादौ निवर्तको यण् भवति प्रसङ्गे सतीत्यर्थः। स चार्थात् तस्यैवेति बोध्यम्। योगेति कर्मणि घञ् इत्याह—युज्यत इति। प्रतीयमानमिति, 'स्वं रूपम्' इति शास्त्रातिरिक्तशास्त्रान्तरसहकारेण बोध्यमित्यर्थः। यथा 'येन विधिः' इति शास्त्रसहकारेण तदन्तं प्रतीयमानमिति। तथा च प्रथमोपस्थितविषयीभूतं स्थानेन युज्यत् इति सिद्धम्। तेनेदमिति। पूर्वोक्तसूत्रार्थेन निर्दिश्यमानस्येति वचनं सिद्धमित्यर्थः।

नन्वेवं तर्हि "अस्य च्वौ" इत्यादौ शुक्लीभवतीत्यादावीत्वेऽपि मालीभवतीत्यादीनां च न स्यात्, सवर्णग्राहकशास्त्रसहकारितया दीर्घादीनां निर्दिश्यमानत्वाभावादिति व्यक्तिपक्षमादाय शङ्कते—न चेति। व्यक्तिपक्षे तथा सत्त्वेऽपि जातिपक्षेऽत्वादिजात्याक्रान्तानां सर्वेषां निर्दिश्यमानत्वान्न दोष इति जातिपक्षमादाय समाधत्ते—जातिपक्षे इति। जातेः स्वतो निर्दिश्यमानत्वेऽपि नान्तरीयकतया तत्तात्पर्य्योच्चारितव्यक्तिद्वारकं तदस्त्येवेति भावः।

नन्वेवमपि व्यक्तिपक्षे दोषस्तदवस्थ एवात आह—**किञ्चेति**।

वस्तुतश्चिन्त्यमिदम्—ह्रस्वत्वसमानाधिकरणाया अत्वजात्या दीर्घप्लुतयोः संग्रहासंभवात्, विभिन्नकालिकानामेकजात्यवच्छिन्नत्वाननुभवात्। अन्यथा भिन्नस्थानिकानामिकारादीनामपि तज्जात्यवच्छिन्नत्वापत्तेः।

अयं भावः—अणादिसञ्ज्ञादिभिश्चतुर्दशसूत्र्यामुच्चारितानामेवोपस्थितिः। अतोऽण्पदेन "अस्य च्वौ" इत्यत्रत्याकारस्याग्रहणात् सवर्णग्राहकशास्त्राप्रवृत्त्या तेन दीर्घस्य ग्रहणं न स्यात्। तदर्थं वार्त्तिककृता वार्त्तिकमारब्धम्—'अण् सवर्णान् गृह्णाति' इति। तच्च भाष्यकृता जातिपक्षाश्रयणेन प्रत्याख्यातम्—'सवर्णेऽण्ग्रहणमपरिभाष्यम्' इति। तथा च चतुर्दशसूत्र्यामकारादयोऽत्वादिजातिपराः, तादृशजात्यवच्छिन्नत्वेन "अस्य च्वौ" इत्यत्रत्याकारस्याप्यण्त्वेन सवर्णग्राहकशास्त्रप्राप्त्या दीर्घादीनां संग्रह इति।

एतदर्थकादस्माद् भाष्याज्जातिपक्षेऽपि दीर्घादीनामत्वजात्यवच्छिन्नत्वाल्लाभाद् दोषताद्वस्थ्यात्। इत एवारुचेर्वाऽऽह—किञ्चेति। निषेधेनेति। "एरनेकाचः" इत्यनेन, "ओः सुपि" इत्यनेन [च] प्राप्तस्य यणोऽयं निषेधः। तत्रान्त्यस्यैव निर्दिश्यमानत्वाद् दीर्घस्य यणोऽप्राप्त्या "न भूसुधियोः" इति निषेधस्य वैयर्थ्यापत्तेरिति भावः। ग्रहणकशास्त्रेति। ग्राहकशास्त्राणुदित्सूत्रे-

**मानकार्यबोधनान्न दोषः। इयङुवङोर्ङित्त्वं तु 'इवर्णोवर्णान्तश्नुधातुभ्रुवाम्' इत्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय, रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमेव।**

---

त्यर्थः। कार्यबोधनादिति। कार्यभवनबोधनादित्यर्थः। न च 'ओस्सुपि' इत्यस्य ह्रस्वांशे चारितार्थ्याभावः, क्विपि तुका, विचि गुणेन च यणोऽप्राप्ते-रिति वाच्यम्, कुङ्गतावित्यस्मात् कुटादेर्विचो ङित्वेन गुणाप्रसक्त्या चरणेन कवतीति चरणकुः चरणक्वावित्यादौ चारितार्थ्यात्।

यत्तु, पटुमन्तमाचष्टे णिचि मतुब्लोपः, ततः क्विप् पटुः, पट्वावित्यादौ चारितार्थ्यादिति बालम्भट्टाः, तन्न; पटुमच्छब्दात् णिचि क्विपि मतुपो लुकि णिज्निमित्तकवृद्धौ तुकि वा, उक्तरूपस्य दुर्लभत्वात् 'विव्यतुः' इत्यादौ 'एरनेकाचः' इत्यस्य सावकाशत्वं बोध्यम्। न दोष इति। 'इको यण्' इति यण्निषेधेन न तत्सार्थक्यम्, इयङा बाधेन तदप्रवृत्तेः। ननु दीर्घस्येयङादिरपि कथमिति चेत्! न; 'न भूसुधियोः' इति निर्देशेन य्वोरिति दीर्घस्यापि निर्दिश्यमानत्वबोधनात्। नन्वेवमपीयङुवङोर्ङित्त्वं व्यर्थम्, य्वोरित्युक्त्याऽनया तयोरेव भवनात्। अत आह—इयङिति। इह य्वोरिति संभवतीति न्यायेन धातोरेव समानाधिकरणं विशेषणम्, नान्ययोरव्यभिचारात्, तदाह—इवर्णो वर्णान्तेति।

वस्तुतः श्नुभ्रुवोरपि विशेषणम्, णिजादौ टिलोपे 'आश्नवानि' इत्यादौ परत्वाद् गुणेऽव्यभिचारसंभवात्। इत्यर्थेनेति। 'अचि श्नुधातु०' इत्यस्येति शेषः। धात्वादीनामिति। आदिना 'स्त्रियाः' परिग्रहः। तस्य हि स्त्रीशब्दान्तं यदङ्गम्, तदवयवस्य निर्दिश्यमानस्येत्यर्थः स्यात्। तथा च समुदायादेशत्वा-पत्तिरिति। इयङोर्ङित्वमिति। अपिर्वर्णसमुच्चायकः। धातुश्नुभ्रुवामिति पाठः। सर्वमूलत्वेनाभ्यर्हितत्वाद् धातोरित्यस्य पूर्वनिपातः। अत एवाग्रे धात्वादीनामित्युक्तिस्संगच्छते। सूत्रे तु सौत्रत्वात् तदविवक्षयाल्पाच्तरत्वेन तथा प्रयोग इति बोध्यम्।

**रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमेवेति।** नन्वङ्गस्यापि धात्वादीनामिव निर्दि-श्यमानत्वादन्त्यादेशाय ङित्वमिति चेत्! न; यत्र यत्षष्ठीप्रकृतिबोध्यस्य निर्दिश्यमानस्यानिर्दिश्यमानस्य च स्थानेन सम्बन्धः प्राप्तः, तत्र तत्षष्ठी-प्रकृतिबोध्यस्यःनिर्दिश्यमानस्यैव स्थानसम्बन्ध इति परिभाषया बोधनेनाङ्गस्य तथात्वाभावात्। अन्यथा 'विसर्जनीयस्य सः' इत्यादौ सकारवत् पदस्यापि निर्दिश्यमानत्वेन पदस्यादेशवारणायायोगवाहानामलसु पाठस्यावश्यकत्वाद् नैतदस्ति प्रयोजनम्, निर्दिश्यमानस्येत्येव सिद्धेरिति 'हयवरट्' सूत्रस्य भाष्यवि-रोधापत्तेः। मम तु पदस्येति षष्ठी, तत्प्रकृतिबोध्यस्य सर्वत्र निर्दिश्यमानस्यैव सत्त्वेन तत्र प्रकृतिपरिभाषायाः अप्रवृत्त्योक्तभाष्यसङ्गतिः स्पष्टैव। अत एव

**एतेनेदं ङित्वं 'वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकम्' इत्यापास्तम्। 'हयवरट्' सूत्रस्थेनायोगवाहानामुपदेशेऽलोन्त्यविधिः प्रयोजनम्—वृक्षस्तत्र। नैतदस्ति प्रयोजनम्, निर्दिश्यमानस्येत्येव सिद्धमिति भाष्येण विरोधात्।**

---

'जराया जरस्' इत्यादावङ्गस्य निर्दिश्यमानत्वमादाय नातिप्रसङ्ग इति दिक्।

अङ्गनिमित्ते परे ऋत इत्यर्थे भाष्यसम्मतेऽङ्गस्य तथात्वाभावाच्चेति भावः। एतेन फलान्तरव्यवच्छेदः। तमेवाह—**एतेनेति**। हयवरडित्यादिवक्ष्यमाणदोषेणेत्यर्थः। **इदं ङित्वमिति**। रीङ्रिङोर्ङित्वमित्यर्थः। निर्दिश्यमानपरिभाषाया अप्रवृत्तौ तु अनेकाल्त्वाद्रीङादिः समुदायादेशः स्यादिति ङित्वं सफलं स्यादित्याशयः। **वृक्षस्तत्रेति**। अलोऽन्त्यस्येत्यनेन विसर्जनीयान्तपदान्तस्य सत्वसिद्धिः। अस्तु तेषामुपदेशमन्तरा तेषामनल्त्वेन 'अलोऽन्त्यस्य' इत्यस्य प्रवृत्तिर्दुर्लभेति भावः। **विरोधादिति**। तत्रापि वर्णग्रहणेन त्वद्रीत्या तदप्रवृत्त्यापत्तेरिति भावः।

वस्तुतस्तु 'वर्णग्रहणे' इत्यत्र वर्णपदमल्पदपरम्। तथा च नैतदस्ति प्रयोजनमित्यनेन प्रयोजनाभावादयोगवाहानामल्सूपदेशाभावबोधनेन तेषामनल्वाद् वर्णग्रहणाभावाद् वर्णग्रहणेऽस्या अप्रवृत्तौ फलाभावाच्च क्व विरोध इति चिन्त्योऽयं ग्रन्थः।

ननूचार्य्यमाणसजातीयत्वं निर्दिश्यमानत्वम्। तथा च विसर्गस्य बिन्दुद्वयरूपस्योच्चार्यमाणसजातीयत्वाभावात् कथं निर्दिश्यमानपरिभाषायाः प्रवृत्तिरिति चेत्! न; यदागमेति न्यायस्य 'येन विधिः' इति सूत्रस्य चासहकारेणोच्चार्यमाणपदबोध्यत्वम्, **निर्दिश्यमानत्वमिति** तदर्थात्। अत एवानया परिभाषया 'येन विधिः' इति सूत्रबोधिततदन्तस्य यदागमपरिभाषया लब्धस्य च स्थानिवत्त्वाभावबोधनमित्युत्तरग्रन्थे द्वयोरेवोपादानं सङ्गच्छते। 'भिन्धकि' इत्युदाहरणपरम् 'हुझल्भ्यः' इति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिः। तत्र हि 'भिन्द हि' इत्यवस्थायां 'तिङश्च' इत्यकच् प्राप्तः, 'हुझल्भ्यः' इति धिश्च प्राप्तः। तत्राकचि कृते धित्वं न प्राप्नोति, निर्दिश्यमानस्य व्यवधानादित्युक्तम्। तन्मध्येति न्यायेनाकजविशिष्टस्य धित्वेऽकचः श्रवणं न प्राप्नोतीत्याशयानभिज्ञस्य प्रश्ने परत्वाद् धित्वमिति समाधानम्। तत्राकचि कृते धित्वं न प्रप्नोतीत्याशङ्कापरं भाष्यमेकदेश्युक्तिरिति भावः। तन्मध्यपतितन्यायबोधितस्य निर्दिश्यमानत्वस्येष्टत्वात्। अत एव 'वसुस्रंसु०' इति सूत्रे 'ससजुषोरुः' इत्यतः सपदानुवृत्तिश्चरितार्था।

अन्यथा 'विद्वान्' इत्यादौ निर्दिश्यमानपरिभाषयैव तद्वारणसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। अकचीति भाष्यस्यैकदेश्युक्तित्वमवश्यमभ्युपेयम्। तत्त्वे त्वकचि हित्वं न प्राप्नोतीति स वदेत्। अत एवाकज्विषये नायं न्याय इत्युत्तरग्रन्थः संगच्छते।

**अनया परिभाषया 'येन विधि' इति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनम्, 'यदागमाः' इति लब्धस्य च। तेन सुपद उदस्थादित्यादिसिद्धिः।**

---

यद्वा षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयो यः तत्समभिव्याहृतो यः स्त्रीप्रत्ययातिरिक्तः, तदघटितत्वे सति षष्ठीप्रकृतिजन्योपस्थितिविषयत्वं तत्त्वम्। यथा 'निर्जरसौ इत्यादौ षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयो जराशब्दः, तत्समभिव्याहृतो निरिति, स च स्त्रीप्रत्ययातिरिक्तोऽपि भवति। तदघटितो जरशब्दः। निर्जरशब्दस्तु तदघटित एवेति जरशब्दस्य निर्दिश्यमानत्वं निर्जरशब्दस्यानिर्दिश्यमानत्वमिति लक्षणसमन्वयः। सत्यन्तविशेषणन्तु ग्राहकसूत्रगृहीतस्य स्थानिवद्भावबोधितस्य तन्मध्यन्यायबोधितस्य निर्दिश्यमानत्वलाभाय, न तु 'आन्महतः' इति सूत्रस्थमहच्छब्दजन्यप्राथमिकोपस्थितिविषयो महच्छब्दः तत्समीपोच्चारितो ङीप ईकारः, तदघटितो महच्छब्द एव, न महतीशब्द इति। महतीशब्दस्यात्वमाशङ्क्य महदात्वे लिङ्गविशिष्टपरिभाषा न प्रवर्तते इति समाधानपरम् 'ङ्याप्' सूत्रस्थं भाष्यं विरुध्येत, अत उक्तलक्षणे स्त्रीप्रत्ययातिरिक्तेरिति विशेषणम्। प्राथमिकोपस्थितिविषयो यस्तत्समीपोच्चारितो निरादिः, तदघटितो रामादिः, तस्य निर्दिश्यमानत्ववारणाय विशेष्यदलम्। उक्तलक्षणे सत्यन्तविशेषणे मानन्तु 'स्नन्तस्य स्थानिवद्भावप्रतिषेधः' इति वार्त्तिकम्, तत्प्रत्याख्यानाय सकृद्गतिन्यायस्वीकारपरं भाष्यञ्च, 'वसुस्रंसु०' इति सूत्रे 'ससजुषोरुः' इत्यन्तः सकारानुवृत्तिपरं भाष्यञ्च, 'न भूसुधियोः' इति यण्निषेधसूत्रञ्च, इम इत्येव सिद्धे 'किमः कः' इति गुरुकरणञ्चेत्यनुपदमेव निरूपयिष्यते।

उक्तलक्षणे स्त्रीप्रत्ययातिरिक्तनिवेशे मानन्तु 'महदात्वे लिङ्गविशिष्टपरिभाषा न प्रवर्तते' इति भाष्यमेव। तत्र हि महाप्रियादिषु आत्वपुवद्भावयोः प्राप्तयोः परत्वादात्वे पश्चात्पुवद्भावेऽपि 'लक्ष्ये लक्षणम्' इति न्यायेन पुनरात्वाप्रप्त्या तदसिद्धिमुक्त्वा लिङ्गविशिष्टपरिभाषाया अनित्यत्वेनात्वस्य पूर्वमप्रवृत्त्या पुंवद्भावे तत आत्वे च तत्सिद्धिरुक्ता। लिङ्गविशिष्टपरिभाषाबोधितस्यानिर्दिश्यमानत्वे तु महती प्रियेत्यवस्थायामात्वाप्राप्त्या महदात्वे लिङ्गविशिष्टपरिभाषा चिन्त्येति परिगणनेन समाधानपरभाष्यासङ्गतिः स्पष्टैव। अनया बोधितस्य तत्त्वे फलन्तु देवीमञ्चतीति देवद्रचङित्यद्र्यादेशसिद्धिः।

नन्वस्याः परिभाषाया अवतरणे यदागमन्यायमात्रलब्धविशिष्टस्य स्थानित्वबाधकत्वं हि लभ्यते। तथा च सुपद इत्याद्यसिद्धिप्रसङ्गः। न च सामान्यतः सर्वबाधकत्वमेव कुतो नेति वाच्यम्, 'अस्य च्वौ' इत्याद्युक्तग्रन्थविरोधात्। अतः पर्यवसितार्थमाह—**अनयेति**। एवञ्चैतदुभयलब्धविशिष्टमेव प्रतीयमानत्वेन विवक्षितम्। तद्भिन्नं तु प्रागुक्तरीत्योच्चार्यमाणत्वेनैव विवक्षितमिति न कश्चिद् दोषः। तथा चोपस्थितत्वात् तथोक्तावपि तस्याप्युपल-

**अनया च स्वस्वनिमित्तसन्निधापितानाम् 'अलोऽन्त्यस्य' इत्यादीनां समावेश एव, न बाध्यबाधकभावः, विरोधाभावात् ।**

**नाप्येतयोरङ्गाङ्गिभावः, उभयोरपि परार्थत्वेन तदयोगात् । 'अनेकाल्शित्' इति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते ।**

**यत्तु, 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येतावेव तद्बाधकाविति, तन्नः**

---

क्षणमिति भावः । अनेनैव क्रमेणानयोरुदाहरणे आह—**तेनेति** । अस्य वचनस्यैतदुभयबाधकत्वस्येत्यर्थः ।

'अलोऽन्त्यस्य' इत्यादीनां निर्दिश्यमानपरिभाषायाः बाधकत्वमिति केषाञ्चिदभिमतं खण्डयितुं स्वसिद्धान्तमाह—अनयेति । सहेति शेषः । निमित्तं लक्ष्यस्थं षष्ठीनिर्देशादि लिङ्गम् । तेन सन्निधापितानाम् 'अलोऽन्त्यस्य' इत्यादीनामित्यर्थः । आदिना 'आदेः परस्य' इत्यस्य बहुवचनेन 'अनेकाल्शित्सर्वस्य' च परिग्रहः । **समावेश एवेति** । तथा हि 'त्यदादीनामः' इत्यादीनामङ्गाधिकारे पाठेन तदन्तविधौ निर्दिश्यमानत्यदाद्यन्तस्याकार इति सूत्रार्थे बाधकाभावात् 'निर्दिश्यमानस्य' 'अलोऽन्त्यस्य' इत्यनयोः समावेशः सम्भवति । एवञ्च वृद्धत्वनिमित्तकछसन्नियोगेन विधीयमानः 'राज्ञः क च' इति कादेशोऽपि । निर्दिश्यमानान्त्यस्य कादेश इत्यर्थेन तूभयोः समावेशो बोध्यः । तथैव 'द्व्यन्तरुपसर्गेभ्योऽप इत्' द्व्यादिभ्यः परस्य निर्दिश्यमानस्याप आदेरीदादेश इत्यर्थेन 'निर्दिश्यमानस्य' 'आदेः परस्य' इत्यनयोरपि समावेशः । एवम् 'उदःस्थास्तम्भोः' इत्यत्रापि बोध्यम् । एवमेव 'पादः पत्' इति निर्दिश्यमानस्य सर्वस्य पाच्छब्दस्यानेकालादेशःइत्यर्थेन 'निर्दिश्यमानस्य' 'अनेकाल्' इत्यनयोरपि समावेश एवेति भावः ।

एवकारव्यवच्छेद्यमाह—**न बाध्यबाधकभाव** इति । तद्बीजन्तु परत्वम्, तच्च सने भवति ( प्रकृते ) कुतो नेत्यत आह—**विरोधाभावादिति** । युगपत्प्राप्त्यभावादित्यर्थः । निर्दिश्यमानपरिभाषा प्रकृत्यर्थनिर्णायिका, 'आदेः परस्य' इत्यादीनां वाक्यार्थोत्तरं प्रवृत्तिरिति युगपत्प्राप्त्यभावो बोध्यः । तथा च युगपत्प्राप्त्यभावो बोध्यः । तथा च युगपत्प्राप्त्यभावेन विरोधाभावान्न विप्रतिषेधशास्त्रप्रवृत्तिरिति भावः ।

नन्वेमङ्गाङ्गिभावः स्यात् । तथा चैकस्याप्रवृत्तावियमपि न प्रवर्तेतेत्यत आह—**नापीति । परार्थत्वेनेति** । विध्युपकारकत्वेनेत्यर्थः । 'गुणानाञ्च परार्थत्वात्' इति न्यायात् । विधीनामङ्गाङ्गिभावेऽपि स्वातन्त्र्येण तयोर्न सः । तेन परस्य नैरपेक्ष्येण तयोः प्रवृत्तिसिद्धिः । **एतत्परिभाषाभावबोधित एवेति** । तेन 'सुपदौ, निर्जरसौ' इत्यादिसिद्धिः । तथा चानेनापि समावेश ऐवेति भावः । पूर्वोक्तबाध्यबाधकभावस्यैव प्रपञ्चो बोध्यः । एतेन 'येन' इति सूत्रबोधितस्य यदागमन्यायबोधितस्य च व्यावृत्तिः ।

**'उदस्थात्' इति सूत्रविषयेऽस्याः पादः पत् इति सूत्रे भाष्ये सञ्चारितत्वात्।**

**नाप्येतयोरियं बाधिका एतयोर्निर्विषयत्वप्रसङ्गादिति तिविंशतेः इति सूत्रे कैयटः।**

---

कस्यचिदुक्तिमनुवदति—**यत्त्विति। बाधकाविति।** बाधबीजन्तु निर्दिश्यमानपरिभाषाप्रवृत्त्युत्तरं चारितार्थ्ये तदप्राप्तियोग्ये चारितार्थ्याभावः। तथा च तक्रन्यायेन तद्विषये निर्दिश्यमानपरिभाषाया अप्रवृत्तिरिति भावः।

**केचित्तु**, भाष्ये सुपद इत्यादौ 'अनेकाल्शित्' इति सूत्रविहितसर्वादेशेन समावेशस्य कथनात् तत्रास्याश्चारितार्थ्यात् 'आदेः परस्य' इत्यस्य 'अलोऽन्त्यस्य' इत्यस्य च 'तास्यनुदात्तेत्' इत्यत्र 'संयोगान्तस्य लोपः' इत्यत्र च चारितार्थ्यात् परत्वादेतद्बाधकावित्याहुः। तत्र विरोधाभावादिति पूर्वग्रन्थेन तयोर्निर्विषयत्वापत्तेरित्युत्तरग्रन्थेन च विप्रतिषेधशास्त्रप्रवृत्तेर्निराकरणात्। किञ्च, दर्शितसूत्रद्वयविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तेर्दुर्वारत्वाच्च। सति हि बाधकत्वे 'उदस्थात्' इत्यत्र निर्दिश्यमानपरिभाषाया अप्रवृत्त्या यदागमन्यायेनाड्विशिष्टस्य पूर्वसवर्णापत्तिः स्यात्। एवं 'सोमसुतौ' इत्यत्र तुग्विशिष्टस्य 'ओः सुपि' इति यणापत्तिश्च स्यादिति भावः।

अबाधेनैवोपपत्तौ बाधकल्पनायामनुचितत्वादित्याशयेन परिहरति—**तन्नेति।** तत्रैव प्रमाणमाह—'उदःस्था' इति 'पादः पत' इति सूत्रभाष्ये एतत्परिभाषाप्रयोजनगणनावसरे 'उदःस्था' इति सूत्रविषयीभूते उदस्थादिति लक्ष्ये 'आदेः' इति सूत्रविषयेऽस्यास्सञ्चारितत्वादित्यर्थः। इदमुपलक्षणं पूर्वोक्तरीत्या युगपत्प्राप्त्याभावादित्यस्यापि। तत्सूत्रे 'ति विंशतेः' इति सूत्रे चालोऽन्त्यपरिभाषाविषयेऽस्याः सञ्चारितत्वादित्यस्यापि बोध्यम्।

**एतयोः**=पूर्वोक्तयोः, **इयम्**=प्रकृतपरिभाषा। **बाधिकेति** अन्तरङ्गत्वादित्यर्थः। सूत्रोच्चारिताच्छब्दात् प्रथमं स्वस्वरूपोपस्थितिः। तत् आद्यान्तयोः परामर्शादिति भावः। तत्र हेतुमाह—**एतयोर्निर्विषयत्वप्रसङ्गादिति।** निर्दिश्यमानपरिभाषाया अप्राप्तियोग्ये तयोश्चारितार्थ्याभावादिति भावः।

यत्तु 'तास्यनुदात्तेत्' इत्यत्र 'संयोगान्तस्य लोपः' इत्यत्र च केवलयोरेतयोश्चारितार्थ्येऽपि उद स्थादित्यत्र 'आदेः परस्य' इत्यस्य, 'समःसुटि' इत्यत्र 'अलोऽन्त्स्य'इत्यस्य च समावेशस्य तत्र तत्रकरे प्रदर्शनेन तद्विषयताकत्वमपि तयोरिति तत्तद्विषयताकत्वविशिष्टयोस्तयोश्चारितार्थ्याभावप्रसङ्गादित्यथ इति। तत्, न; 'तास्यनुदात्तेत्' 'संयोगान्तस्य लोपः' इत्यत्रापि निर्दिश्यमानपरिभाषायाः प्रवृत्तेः सत्त्वेन प्रतिलक्ष्यं लक्षणोपप्लवे 'उदःस्थास्तम्भोः' इत्यादिविषयकस्य 'आदेः परस्य' इत्यादेश्चारितार्थ्याभावादित्यस्य युक्तत्वात्। स्वोक्तविषये 'ति विंशतेः' इति सूत्रस्थकैयटसम्मतिमाप-कैयट इति। विंशतिस्त्वपपाठ एव। तत्र हि भाष्यम्—तिग्रहणं किमर्थम्, न विंशतेर्डिति लोप इत्ये-

**अकज्विषये नायं न्यायः, स्थानिवद्भावेनैव तन्मध्यपतित' न्यायेन तद्बुद्ध्यैव कार्यजननात् ।**

---

वोच्येत ? नैवंशङ्क्यम्, 'विंशतेर्डिति लोपः' इतीयत्युच्यमानेऽन्त्यस्य प्रसज्येत । सिद्धोऽन्त्यस्य 'यस्य' इति लोपेनैव । तत्रारम्भसामर्थ्यात्तिशब्दस्य भविष्यति । कुतो नु खल्वेतत् अनन्त्यार्थे आरम्भेतिशब्दस्य भविष्यति, न पुनरङ्गस्येति तस्मात् तिग्रहणं कर्तव्यम् । अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति ? 'निर्दिश्यमानस्यादेशा भवन्ति' इति न भविष्यतीति ।

अत्र **कैयटः**–'निर्दिश्यमानस्यादेशा भवन्तीति' नानेन परिभाषाया व्यापारः कथ्यते, नहि निर्दिश्यमानपरिभाषा 'अलोऽन्त्यस्य', 'आदेः परस्य' इत्यनयोर्बाधिका, एतयोर्निर्विषयत्वप्रसङ्गात् । तस्मात् तिग्रहणसामर्थ्यात् 'अलोऽन्त्यस्य' इत्यस्यास्थाने सर्वस्य तेर्लोपो भवतीत्ययमस्य भाष्यस्यार्थं इति ।

अत्रायं भावः 'विंशतेर्डिति' इत्येव सूत्रे क्रियमाणे 'अलोऽन्त्यस्य' इत्येव लोपादेशः स्यात् । स तु 'यस्य' इति लोपेनैव सिद्धः । अत आरम्भसामर्थ्यादलोऽन्त्यपरिभाषाया अप्रवृत्त्या सर्वस्याङ्गस्य लोपादेशः स्यात्, अतस्तिग्रहणम् । कृतेऽपि तिग्रहणे कुतो नान्त्यस्य लोप इति शङ्कायां निर्दिश्यमानपरिभाषया समाधाम् । तत्रानेन समाधानपरभाष्येणात्र परिभाषाप्रवृत्तिरिति न भ्रमितव्यम् । किन्तु तेरारम्भसामर्थ्यात् 'अलोऽन्त्यस्याप्रवृत्तौ सर्वस्यार्थालिलोपः' इति भाष्याकूतमिति कैयटेनोक्तमिति ।

यदुक्तं पूर्वम्—'अनया परिभाषया 'येन विधिः' इति सूत्राबोधिततदन्तस्य स्थानित्वाभावबोधनम्, यदागमा इति लब्धस्य च' इति । तस्य व्यावर्त्यमाह–अकज्विषये इति । अनेन न्यायेन साकचकस्य स्थानित्वाभावबोधनं नेत्यर्थः । अकज्विशिष्टस्यापि निर्दिश्यमानत्वमेवेति भावः । उपलक्षणमिदमकज्विषये इति 'तन्मध्यपतित' न्यायविषये इत्यस्य । तथा च 'तन्मध्यपतित' न्यायबोधितस्य निर्दिश्यमानत्वमेवेति तत्त्वम् । तेन 'वृक्षवन्तौ, परिषिञ्चति' इत्यादौ नुम्विशिष्टस्यापि निर्दिश्यमानत्वेन वत्वषत्वादिसिद्धिः । तत्रैतन्न्याप्रवृत्तौ बीजमाह –स्थानीति । स्थानिवद्भावे सति यथाऽऽदेशे न निर्दिश्यमानभिन्नत्वबुद्धिः, तथा 'तन्मध्यपतित' न्यायस्थलेऽपि तत्त्वबुद्धिरेव । गङ्गायमुनाप्रविष्टा नद्योः यथा गङ्गायमुनाग्रहणेन गृह्यन्ते, तद्वदिति भावः ।

ननु तथापि 'किञ्चैवं सति' इत्यादिग्रन्थेन स्थानिवद्भावविषये एतस्या अप्रवृत्तौ यथा मानमुपन्यस्तम्, तथात्राप्येतदप्रवृत्तौ मानं किमिति चेत्, न; 'किमः कि' इति सूत्रमित्यवेहि । तथा हि 'तद्धिकः' इत्यादिसिध्यर्थं तत्र 'इमः' इति न्यासेन सिद्धे विशिष्टं व्यर्थं सद् ज्ञापयति—तन्मध्यपतितन्यायबोधितस्यापि निर्दिश्यमानत्वमिति । एतस्मिन्नर्थे ज्ञापिते तु 'इमः' इति न्यासेऽकज्विशिष्टस्य 'ककः' इत्यादिरूपापत्तिः । अतः 'किमः कः' इति विधानम् । अन्यथाऽकज्वि-

शिष्टे 'इमः' इत्यस्य 'किमः कः' इत्यस्य चाप्राप्त्या विशिष्टविधानवैयर्थ्यं स्पष्टमेव। अत एव 'किमः कः' इति सूत्रवैयर्थ्याभिप्रायकं कादेशविधानं साकच्कार्थमिति भाष्यं सङ्गच्छते। न च तिमष्टिमधातोः कर्तृक्विबन्तात् सुपि 'इमः' इत्यनेनाकारादेशापत्तिरिति वाच्यम्, त्यदादीनामित्यस्यापि 'इमः' इत्यत्रानुवृत्तेः।

नन्वेवमिमावित्यादावतिव्याप्तिरिति चेत्, न; इमन्तं यदङ्गमित्यर्थे परादिवद्भावेन विभक्तिपरत्वे 'इम' इत्यस्यैकदेशन्यायेनाङ्गत्वेऽपि 'अचः परस्मिन्' इत्येकादेशस्य स्थानिवद्भावेन इमन्ताङ्गस्याव्यवहितविभक्तिपरकत्वाभावात्। न च 'इमः' इति न्यासे 'अलोऽन्त्यस्य' इत्यनेन किम्शब्दे मकारस्याकारादेशे 'क्य' इत्यादिरूपापत्तिरिति वाच्यम्, नानर्थक इति निषेधात्। तत्प्रत्याख्याने तु किंशब्दं द्वेः प्राक् पठित्वा 'त्यदादीनामः' इत्यनेनान्त्यस्य सिद्धेः 'इमः' इत्यारम्भसामर्थ्यादलोऽन्त्यपरिभाषाया अप्रवृत्तेः। 'किम्' शब्दस्य द्वेः प्राक्पाठे द्विपर्यन्तानामित्यस्य त्यागाभावः।

'किंसर्वनाम' इति सूत्रे किंशब्दाकरणमपि च लाघवम्। न चैवम् 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्यनेन त्वञ्च कश्च कौ इत्यादौ किम्शब्दशेषो न स्यादिति। एवं क्वचित् पूर्वशेषोऽपि दृश्यत इति भाष्योक्तेः।

नन्वेवमपि 'कुतिहोः' क्वाति' इत्यर्थं किम् इत्यावश्यकमिपि चेत्, न; तत्रापि 'इम' इत्यनुवृत्त्या 'उशतिहोर्वाति' इति न्यासेनेष्टसिद्धेः। एवं विद्वानित्यादौ नुम्विशिष्टे दत्वाप्रवृत्तये 'वसुस्रंसु॰' इति सूत्रे सकारानुवृत्तिः स्वीकृता। यदि तु तन्मध्येति न्यायबोधितस्य न निर्दिश्यानत्वम्, तदा निर्दिश्यमानपरिभाषयैव तत्सिद्धौ तद्वैयर्थ्यं स्पष्टमेवेत्यपि बोध्यम्। एवं 'कोः कत्' इत्यनुवृत्तस्य कुशब्दस्य स्थाने, 'अ पथ्यक्षयोः' इति न्यासेनाकारविधानेनापि कापथ इत्यादिसिद्धौ 'का पथ्यक्षयोः' इति कादेशविधानवैयर्थ्यं स्पष्टमेवेत्नम्।

**केचित्तु**, साकच्कानपहारकादेशविधौ नायं न्यायः। अत्र मानन्तु 'अनाप्यकः' इत्यत्राक इति प्रतिषेधः। फलन्तु 'युवकाभ्याम्' इत्यादौ युवादिसिद्धिः। तदपहारके तूपतिष्ठत एवायं न्यायः। यथा 'हुझल्भ्यः' इति सूत्रे भिन्धकि' इत्यादौ अकचि हित्वाभावान्न धित्वमित्याशङ्कितम्। कादेशस्त्वावृत्त्या पुनर्विधानसामर्थ्यात् साकच्केऽपि प्रवर्तत इत्याहुः। तत्, न सम्यक्; आवृत्तौ प्रमाणाभावत्, कादेशविधानं साकच्कार्थमिति भाष्यात् सामान्यतः 'तन्मध्य' इति न्यायबोधितस्य निर्दिश्यमानत्वप्रतीतेश्च। न च 'इमः' इत्येव सिद्धेः 'किमः कः' इति विशिष्टविधानमेवावृत्तौ मानमिति वाच्यम्, 'इमः' इति न्यासे साकच्कानपहारकस्य त्वदुक्तरीत्या निर्दिश्यमानत्वेन ककिम्शब्दस्याकारादेशापत्त्या 'कक' इति रूपापत्तिः। 'किमः कः' इति न्यासे तु साकच्कापहारकत्वेन निर्दिश्यमानत्वाभावात् ककिम्शब्दस्यादेशाप्राप्त्या ककिमिति रूपापत्तिरिति फलभेदात्। अत एव 'नलोपो नञः' इत्यत्रत्यशेखरग्रन्थः सङ्गच्छते।

**इयं चावयवषष्ठीविषयेऽपि । अत एव 'तदोः सः सौ' इति 'सत्वम्, अतिस्य' इत्यत्रोपसर्गतकारस्य न । निर्दिश्यमानयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयः, न त्वतियूयमित्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम् ।**

**'पादः पत' इति सूत्रे 'षष्ठी स्थाने' इति सूत्रे च भाष्ये स्पष्टैषा ।।१२।।**

---

तत्र हि 'नञ्रनेञ् इति सिद्धे लोपवचनं साकच्कार्थम् । तेनाकब्राह्मण इत्यादि सिद्धमित्युक्तम् । त्वद्रीत्या तु अशः साकच्कापहारकत्वेनास्य न्यायस्य प्रवृत्त्या साक्चकस्याप्राप्त्या तद्विरोधः स्पष्ट एवेति दिक् ।

नन्वेवमपि 'षष्ठीस्थाने' इत्यस्या अनिर्धारितसम्बन्धविशेष एव प्रवृत्त्या तदर्थकत्वेनास्या अपि तत्रैव प्रवृत्तिः स्यादिति प्रथमार्थ एव प्रागुक्तो युक्तः, न द्वितीय इत्यतिस्य इत्याद्यसिद्धिरेव । अत आह-**इयञ्चेति** । तथा च स्थानपदार्थ-निरूपितसम्बन्धेनान्वय्यन्वयी स्थानपदार्थनिरूपितसंवन्धेन युज्यत इत्यर्थः । प्रकृते स्थानपदार्थनिरूपितसम्बन्धेनान्वयी तदोरिति, तदन्वयी त्यदादीनामिति, तदपि स्थानेन युज्यत इति भावः ।

चो हेत्वर्थकहिशब्दपरः । यतोऽस्या 'अतियूयम्' इत्याद्युदाहरणदानपर-भाष्यादिति भावः । तदेव दर्शयति—**अत एवेति** । अवयवषष्ठीविषयेऽपि प्रवृत्ति-स्वीकारादेवेत्यर्थः । 'अतिस्यः' इत्यत्र पूजार्थकेनातिना कर्मधारयो बोध्यः । **तकारस्य नेति** । अन्यथाङ्गाधिकारात् तदन्तविधौ त्यदाद्यन्तामङ्गानामवयव-वयोस्तदोरित्यर्थे उपसर्गावयववस्य तस्य सः स्यादिति भावः ।

वस्तुतो नात्र दोषः, 'अन्त्यबाधे' इति परिभाषयैवेष्टसिद्धेः । अतः फला-न्तरमाह—**निर्दीति** । तथा च युष्मदस्मच्छब्दावयवमपर्यन्तस्य युवावौ स्तः इत्यर्थो विवक्षितः इति भावः । अन्यथा 'अतियूयम्' इत्यादौ युष्मदाद्यन्ताङ्गा-वयवमपर्यन्तस्येत्यर्थेन सोपसर्गस्य यूयाद्यादेशापत्तिः स्यात् । सैवेतेन व्यावर्तयति—**न त्वतीति** । 'अतियूयम्' इत्यत्र 'अत्यादयः' इति समासः । वस्तुतो निर्दिश्य-मानशब्दो निर्दिश्यमानावयवे लाक्षणिकः । एवञ्च 'तदोस्सः' इत्यातौ मुख्यं निर्दिश्यमानावयवत्वम् । 'जरायाः' इत्यादौ **व्यपदेशिवद्भावेनेति** । अत एव निर्दिश्यमानावयवरूपमेवेत्युक्तम्, न तु तदपीत्युक्तम् । एवञ्च निर्दिश्यमानावयव इत्येव परिभाषार्थः स्वीकरणीयः, न तूभयमिति बोध्यम् ।

अस्यां परिभाषायां मानमाह—**पादः पदिति** । तत्र हि पाद उपधाह्रस्वत्वं वक्तव्यम् । आदेशे हि 'द्विपदः पश्य' इत्यादो 'येन विधिः' इति सहकारेण सर्वस्य द्विपाच्छब्दस्यादेशः प्रसज्येतेत्याशङ्क्यः निर्दिश्यमानपरिभाषया समाहितमिति ।

नन्वस्याः 'पादः पत्' इति सूत्रस्थत्वेऽपि प्राथमिकत्यागो निर्बीजः । अत आह—**षष्ठीति** । तत्र ह्येकशतं षष्ठ्यर्थाः । तथा च 'अस्तेर्भूः' इत्यादौ संदेहः—स्थाने, अनन्तरे, समीपे इति' इत्याशङ्किते सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्टते—**व्याख्यानत इति** । स्थाने इति व्याख्यास्याम् इति ।

**ननु चेतेत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारोऽपि स्यात्, अत आह—**

**यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥१३॥**

**अनेकविधम्=स्थानार्थगुणप्रमाणकृतम्।**

**अत्र मानं 'षष्ठी स्थाने' इत्यत एकदेशानुवृत्त्या स्थाने ग्रहणेऽनुवर्त-**

---

तदा शङ्कां निराकृत्य न तर्हीदानीमयं योगो वक्तव्य इत्युक्त्वा, वक्तव्यश्च, किं प्रयोजनम्? षष्ठ्यन्तं स्थानेन युज्यते, यतः षष्ठ्युच्चारिता, किं कृतं भवति? निर्दिश्यमानपरिभाषा न कर्तव्या भवतीत्युक्तमिति। यद्यपि 'उदःस्था' इति सूत्रे सकारप्रश्लेषावयवषष्ठीभ्याम्, उदःपरयोस्स्थास्तम्भोरवयवसकारस्य पूर्वसवर्ण इत्यर्थे उदस्थादित्यत्राडव्यवधानेनोदः परत्वाभावान्न दोषः। एवमङ्ग-संज्ञानिमित्तप्रत्ययपरस्य पाच्छब्दस्य पदादेश इत्यर्थेन, सुपाच्छब्दावयवपाच्छब्द-स्येति व्यधिकरणान्वयेन वा 'सुपदः' इत्यादौ न दोषः, तथापि सकारप्रश्लेषे मानाभावात्, 'पादः पत्' इति सूत्रस्थभाष्यविरोधाच्च।

किञ्चैतस्या अभावे 'समासेऽनञ् पूर्वे' इत्यत्र समासे क्त्वो ल्यबित्यर्थे समासान्तःपातिक्त्वो ल्यबादेशापत्त्या क्त्वान्तसमासस्येत्यर्थस्यावश्यकत्वेन क्त्वान्तसमासस्य ल्यबादेशापत्तिः। तथैव प्रत्ययग्रहणपरिभाषया क्त्वान्तस्य धातोर्वा तदापत्तिः। तस्मादवश्यं कर्त्तव्येयमिति दिक् ॥१२॥

स्थान्यादेशानां प्रक्रमात् तदुपयोगिनीं परिभाषां वक्तुं भूमिकामारचयति-**नन्विति। अकारोऽपीति।** अपिना पक्षे स्थानतः प्राप्त्यैकारस्य समुच्चयः, उभयोस्तुल्यबलत्वादिति भावः।

**यत्रेति।** लक्ष्ये इत्यर्थः। **आन्तर्यमिति।** सादृश्यमित्यर्थः। सदृशवाच-कादन्तरशब्दाद् भावे ष्यञ्प्रत्ययाभ्युपगमादिति भावः। तच्च स्थानिभिः सहा-देशानामिति ध्येयम्।

**अनेकविधमिति।** स्थानकृतं तदन्यकृतञ्चेत्यर्थः। तदेवानुगतधर्मेण दर्श-यति—**अनेकविधमिति।** तेन वर्णत्वादीनां व्यावृत्तिः। मानन्त्वत्र 'स्थानेऽन्तर-तमः' इति सूत्रारम्भ एव। अन्यथाऽव्यावर्तकेन वर्णत्वादिना सादृश्यग्रहणे 'इको यणचि' इत्यादाविकारस्य स्थाने तद्धर्मत्वेन यकारवकारादीनां प्राप्त्या 'स्थानेऽ-न्तरतमः' इत्यस्य वैयर्थ्यं स्पष्टमेव। बाह्यप्रयत्नानां साक्षाद् वर्णवृत्तित्वाभावेऽ-प्यौपचारिकं तत्त्वमादाय गुणत्वं तेषां बोध्यम्।

परिभाषायां प्रमाणं दर्शयति-**अत्र मानमित्यादिना।** 'षष्ठी स्थानेयोगा' इत्यस्यानन्तरम् 'अन्तरतमः' इत्येको योगः, तदनन्तरम् 'स्थाने' इति द्वितीयो योगः। तत्र पूर्वयोगस्यायमर्थः—'षष्ठी स्थानेयोगा' इत्यत्र एकदेशे स्वरितत्व-प्रतिज्ञानादनुवृत्तस्य स्थानेशब्दस्य प्रसङ्गार्थकत्वात् प्रसङ्गे जायमान आदेशोऽन्त-रतमो भवतीति। द्वितीययोगस्थम् 'स्थाने' इति पदन्तु ताल्वादिस्थानपरम्, न तु [ प्रसङ्] गार्थम् 'अन्तरतमः' इति पूर्वयोगेनैव सिद्धेरेतदारम्भात्।

**माने पुनः 'स्थानेऽन्तरतमः' इति सूत्रे स्थाने ग्रहणमेव। तद्धि तृतीयया विपरिणम्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम्।**

**तमब्ग्रहणमेवानेकविधान्तर्यसत्तागमकम्। स्थानतः=स्थानेनेत्यर्थं। तत्र स्थानत आन्तर्यम् 'इको यणचि' इत्यादौ प्रसिद्धमेव।**

---

अत्र 'षष्ठी' इति सूत्रात् 'स्थाने' इति पदम् 'अन्तरतमः' इति सूत्रञ्चानुवर्तते। एवञ्च योऽर्थः संपन्नः, स मूले एव स्फुटः 'सति सम्भवे' इत्यादिना। **तद्धीति**। स्थाने ग्रहण हीत्यर्थः। **तृतीययेति**। तृतीयान्तेनेत्यर्थः। तृतीयार्थे सप्तमीति तत्त्वम्। विपरिणमय्येत्यस्य सूचितेनेति शेषः। अन्यथा ल्यवनुपपत्तिः स्पष्टैव। **सति सम्भवे इति**। असति सम्भवे तु पूर्वयोगेनैवेष्टसिद्धिरिति भावः। यथा वाग्घरिरित्यादौ।

नन्वनुवृत्तस्य स्थानेपदस्य प्रसङ्गार्थकत्वादत्रत्यस्थानेपदं तात्वादिस्थानपरम्। एवञ्च प्रसङ्गे जायमानः स्थानेनान्तरतम इत्येक एवार्थोऽस्तु, योगविभागेनानेकविधसादृश्यसत्ताबोधने किं मानमित्याशङ्कायामाह—**तमब्ग्रहणमेवेति**।

अयं भावः—एकं स्थानकृतमेवान्तर्य्यं स्यात्, तदा 'स्थानेऽन्तर' इत्यनेनैवेष्टसिद्धौ वाग्घरिरित्यादौ स्थानिवृत्तिसम्भावितयावद्गुणविशिष्टश्चतुर्थ एव यथा स्यात्, यत्किञ्चिद्गुणविशिष्टौ द्वितीयतृतीयौ मा भूतामित्येतदर्थकतमब्ग्रहणस्यैव वैयर्थ्यं स्पष्टमेव। **किञ्च** वाग्घरिरित्यादावव्यवस्थापत्तिश्चेत्यतो योगविभागेनानेकविधान्तर्यसत्तायामेव तमब्ग्रहणं सफलं भवतीति।

नन्वेकयोगेऽनेकविधान्तर्याभावेऽपि 'हरीणाम्' इत्यादावन्यूनानतिरिक्तस्थानिकेकार एव यथा स्यात्, यत्किञ्चित् स्थानसादृश्यादेदैतो मा भूताम्; तथा लाकृतिरित्यादौ लकार एव यथा स्यात्, वकारो मा भूदिति स्थानकृतान्तर्यं एवातिशयित्वलाभार्थतया तमब्ग्रहणस्य चारितार्थ्यात् कथं योगविभागे ज्ञापकत्वं तस्येति चेत्? न; स स्थान इत्येव सिद्धेऽन्तरग्रहणसामर्थ्यादेवान्यूनानतिरिक्तस्थानिकादेशलाभसिद्धौ तमब्ग्रहणवैयर्थ्यस्य तादवस्थ्यात्।

ननु तत्र 'स्थाने' इत्यस्य तृतीयान्तार्थकत्वेऽपि परिभाषायाम् 'स्थानतः' इति पञ्चम्यन्तसत्त्वेनार्थभेदापत्तिः, अत आह—**स्थानेनेति**। आद्यादित्वात्तसिरिति भावः।

'सति सम्भवे' इति विशेषणसाफल्याय चतुर्णां क्रमेणोदाहरणान्याह—**तत्रेति**। चतुर्णां मध्ये इत्यर्थः।

ननु 'पद्दन्नो' इत्यादौ स्थानिनामेवानुपादानात् कथं तत्त्वमत आह—**स्थान्यर्थेति**। **सिद्धान्तादिति**। यो हि लोके यस्य स्थाने भवति, स करोति तत्कार्यम्, तन्मूलकोऽयं सिद्धान्त इति भावः। 'स्थानेऽन्तरतमः' इत्यनेनाप्ये-

**अर्थतः 'पद्दन्नो' इत्यादौ स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्ताद् यदर्थाभिधानसमर्थो यः, स तस्यादेश इति तत्समानार्थतत्समानवर्णपादादीनां ते।**

**'तृज्वत्क्रोष्टुः' इति च। गुणतो वाग्घरिरित्यादौ। प्रमाणतः 'अदसोऽसेरिः' इत्यादौ। 'स्थानेऽन्तरतम' सूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥**

---

तल्लब्धम्। **तत्समानवर्णेति**। आदेशसमानवर्णेत्यर्थः तदपि यथा कथञ्चित्. न तु सर्वांशेन, स्थानत अन्तर्यादिति भावः। तेन रात्रिशब्दस्य निसादेशः न। सति हि तस्मिन्नहर्निश इत्यादौ 'रूपरात्रि' इति रुः स्यात्।

यत्तु, चरणशब्दस्य पदादेशवारणार्थं समानवर्णेति तत्, न; तत्र क्लीवत्वस्यापि भानेन समानार्थकत्वेनैव वारणात्। **पदादीनां त इति**। ननु 'पद्दन्नो' इति सूत्रस्य न स्थान्यादेशभावबोधकत्वम्, किन्तु प्रयोगव्यवस्थापकत्वमिति स्वेनैव 'पद्दन्नो' इति सूत्रे सिद्धान्तितत्वात्। किञ्च, 'स्थानेऽन्तरतमः' इति सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेन प्रथमान्तपाठस्य विसदृशादेशनिवृत्तिमात्रार्थकत्वेऽपि विसदृशस्थानिनिवृत्त्यर्थकत्वाभावेन पादादीनामेव पदादय इत्यर्थालाभाच्च।

किञ्च, 'पदार्थाभिधान' इति सिद्धान्तेनैव पदादीनां लाभात्। अतोऽर्थत इत्यस्य नेदमुदाहरणं युक्तमित्यरुचेराह—**तृज्वदिति**।

ननु स्थान्यादेशभावसत्त्वे 'स्थानेन्तरतमः' इति प्रथमान्तपाठेन 'क्रोष्टु' शब्दस्थाने पक्त्रादीनां विसदृशानामादेशानां वारणमिति वक्तुमुचितम्, प्रकृते तु तृज्भाव एव 'पदन्नो' इतिवदस्यापि प्रयोगव्यवस्थापकत्वात्। क्रोष्टुरित्यस्य प्रथमान्तत्वेन स्थानषष्ट्यभावाच्च।

यत्तु, 'अस्थिदधिसक्थ्यक्ष्णाम्' इत्यादाविवात्रापि स्वस्मिन् तृज्वत्त्वप्रवृत्त्या क्रोष्टुरित्यस्य स्थाने षष्ठीत्वमिति, तत्, न; वतेर्वैयर्थ्यापत्तेरित्यत आह—**चेति**। तेन 'वातण्डयुवतिः' इत्यस्य संग्रहः। तथा हि वतण्डशब्दाद् गोत्रे 'वतण्डाच्च' इति यञि, तस्य 'लुक्, ततः शार्ङ्गरवादित्वाद् ङीनि 'वतण्डी' इति रूपम्। तेन युवतिशब्दस्य कर्मधारये स्त्र्यपत्यवाचक 'वतण्डी' शब्दस्य स्थाने पुमपत्यवाचक 'वातण्ड शब्दादेश एव, न तु तदितरो वतण्डपुंवाचक इति प्रमाणतः 'अदसोऽसेः' इति। अत्र प्रमाणत आन्तरतमः स्यात्। ह्रस्व-, व्यञ्जनयोर्ह्रस्वः दीर्घस्य दीर्घ इति भावः।

ननु हलामर्धमात्रित्वम् ह्रस्वस्यैकमात्रिकत्वम्। तत्र प्रमाणतः सादृश्यमनुपपन्नमिति चेत्! न; आक्षरसमाम्नायिकत्वेन ह्रस्वव्यञ्जनयोः सादृश्याद् दीर्घस्य त्वाक्षरसमाम्नायिकत्वं नास्तीति भावः॥ १३ ॥

अर्थकृतान्तरतमस्य प्रतिपादनेनोपस्थितामर्थवत्परिभाषामवतारयति—नन्विति। भाष्यमते परिभाषायां मानमाह—विशिष्टेति अर्थबोधकतावच्छेद-

**ननु 'प्रोढवान्' इत्यत्र प्रादूहोढ' इति वृद्धिः स्यात्, अत आह—**

**अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥**

**विशिष्टरूपोपादाने। उपस्थितार्थस्य शब्दं प्रति विशेषणतयान्वयसम्भव त्यागे मानाभावोऽस्या मूलम्।**

**अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यत इति 'संख्यायाः' इति सूत्रे भाष्ये स्पष्टम्।**

---

कानुपूर्वीविशिष्टरूपोपादान इत्यर्थः। लौकिक (व्युत्पत्त्या) विशेष्यतोपस्थितेऽर्थे कार्यस्य बाधात् तदनुपपत्त्या शब्दस्वरूपस्य विशेष्यतयोपस्थितौ कार्यबाधाभावात् तत्तत्प्रकृत्यवधिकतत्तत्प्रत्ययविधानरूपं कार्यमुपपन्नं भवति, तथाप्युपस्थितस्यार्थस्योपात्तशब्दरूपं प्रति विशेषणतयान्वयसंभवे तत्त्यागे मानाभाव इत्ययमेवास्या मूलम्। अतो भाष्ये 'स्वरूपं' सूत्रस्य प्रत्याख्यानेऽपि न दोष इति भावः।

नन्वेवमप्यप्रसिद्धत्वाल्लौकिकार्थस्यैव ग्रहणम्, स च वाक्ये पदे वा। एवञ्च 'प्रोढवान्, जातीयाय' इत्यादावनया कथमतिव्याप्तिवारणम्? अत आह—**अत्रेति**। परिभाषायामित्यर्थः। अन्वयव्यतिरेकयोरपि लोके वस्तुतोऽसत्त्वादाह—**कल्पितेति**। कल्पितौ यावन्वयव्यतिरेकौ, ताभ्यां कल्पित इत्यर्थः। तौ च यत्सत्त्वे यत्सत्त्वम्, यदभावे यदभाव इत्येवंरूपौ, ताभ्यां कल्पितः पदवाक्यादिबोध्यो लौकिकोऽर्थः, प्रकृतिप्रत्ययादिबोध्यः शास्त्रीयश्चार्थो गृह्यत इति भावः।

**यत्तु**, शास्त्रीय इत्यन्तमेकं वाक्यम्, अपिना लौकिकस्य समुच्चय इति। तदयुक्तम्; शास्त्रीये कल्पितान्वयव्तिरेककल्पित इति विशेषणस्य वैयर्थ्यात्। 'आर्थिका' इत्यादौ स्वार्थिकस्य कल्पितान्वयव्यतिरेककल्पितत्वाभावाद् 'अर्हेण' इत्यादौ तस्याग्रहणापत्तेश्च।

**'संख्याया अति' इति सूत्रे भाष्ये** इति। तत्र हि अतीति पर्युदासः कतिभिः क्रीतम् 'कतिकम्' इत्यत्र कन्न स्यादित्याशङ्क्य, 'डतेश्च' इति वार्त्तिकमारब्धम्, तच्चानया खण्डितम्। तदवसरे उक्तं नैषा प्रकृतेः शक्या विज्ञातुम्, कुतः? नहि केवलेन प्रत्ययेनार्थो गम्यते, केन तर्हि? सप्रकृतिकेनेत्युक्त्वा केवलेनापि प्रत्ययेनार्थो गम्यते। कथम्? उक्तम्-अन्वयव्यतिरेकाभ्यामिति। यदुक्तं विशिष्टरूपोपादान इति तस्य फलमाह—इयं वर्णेति। तेन 'उपेन्द्र' इत्यादौ 'आद्गुण' इत्यादेः 'हरये' इत्यादौ 'एचोऽयवायावः' इत्यादेश्च प्रवृत्तिसिद्धिः। अन्यथा 'औपगवे, रामे इत्यादावेव, अयति इत्यादावेव च स्यादिति भावः। **लस्येति सूत्रे भाष्ये** इति। तत्र हि 'लुनाति लभते इत्यादौ लादेशमाशङ्क्यार्थवद्ग्रहणात् सिद्धमिति तत्समाहिते न चैतद्वर्णग्रहणे प्रवर्तते इत्याशङ्क्य धातोरिति वर्तते इति समाहितमिति। अत एवेति। वर्णग्रहणे एतदप्रवर्तनादेवेत्यर्थः।

**इयं वर्णग्रहणेषु नेति 'लस्य' इत्यत्र भाष्ये स्पष्टम्। अत एव 'एषा विशिष्टरूपोपादानविषया' इति वृद्धाः।**

**एतन्मूलकमेव 'येन विधिः' इत्यत्र भाष्ये पठ्यते 'अलैवानर्थकेन' तदन्तविधिः' इति।**

**किञ्च, 'स्वं रूपम्' इति शास्त्रे स्वशब्देनात्मीयवाचिनाऽर्थो गृह्यते रूपशब्देन स्वरूपम्। एवं च तदुभयं शब्दस्य संज्ञीति तदर्थः।**

---

ननु वर्णग्रहणेऽस्या अप्रवर्तनादेवार्थवता अनर्थकेन चालाभात् तदन्तविधेः प्राप्तौ सत्यां तदर्थकालै वानर्थकेति वार्त्तिकारम्भो निष्फलः, अतआह—**एतन्मूलकमेवेति**। वर्णग्रहणे तदप्रवृत्तिमूलकमेवेत्यर्थः। वार्त्तिकमिति शेषः। एवेन वाचनिकत्वव्यावृत्तिः। एषा विशिष्टरूपोपादानविषयेति वृद्धोक्तेरसङ्गत्यापत्तेः। अत एव 'तस्मादित्युत्तरस्य' इत्यादौ कृतयणादेशादिनिर्देशा अपि सङ्गच्छन्ते। वार्त्तिकस्थ एवकारस्तु नियमार्थकः-अनर्थकेन तदन्तविधिः, तर्ह्यलैवेति। यद्वा अप्यर्थकः, स चानर्थकेनेत्यस्याग्रे योज्यः। तथा चार्थवता अनर्थकेन चाला तदन्तविधिरिति सिद्धम्। 'एरच्' इत्यादावनर्थकेनाला तदन्तविधौ च य इत्यादिसिद्धिः। अर्थवतैवाला तदन्तविधौ तु अयम् इत्यादिसिद्धिरेव स्यादिति भावः। एवञ्च समुदायेन चेत् तदन्तविधिः, तर्ह्यर्थवतैवेति फलितम्। तेन 'प्लीहानौ' इत्यादौ 'इन्हन्' इति नियमादीनामप्रवृत्या दीर्घादिसिद्धिः।

ननु नानार्थक 'गो' शब्दादीनामत्रोपादानम्। तत्र यावदर्थस्योपस्थितावपि यादृशार्थतात्पर्येणोच्चारितः, तादृशार्थविशिष्टस्यैवं ग्रहणमुचितम्, न तावद्यावदर्थविशिष्टस्य, सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायविरोधात्, तन्त्रावृत्तिं विना अनेकार्थबोधासम्भवाच्च। भाष्यमते यावदर्थविशिष्ट 'गो'शब्दादेः 'गोतो णित्' इत्यादौ ग्रहणं न स्यात्। अतः सूत्रकारमतमाह—**किञ्चेति स्वशब्देनेति**। स्वशब्दोपादानेन यावदर्थस्य संज्ञित्वबोधनान्नासकृदुच्चरितन्यायविरोधः, नापि तन्त्रावृत्याश्रयणरूपं गौरवमिति भावः। **स्वरूपमिति**। शब्दस्वरूपमित्यर्थः। एवञ्चेति। उभयग्रहणे चेत्यर्थः।

अत्रायं भावः-'स्वं रूपम्' इति सूत्रं तु 'अग्नेर्ढक्'इत्यादौ लौकिकव्युत्पत्योपस्थितस्यार्थस्य प्रत्ययेन पौर्वापर्यासम्भवात्, प्रातिपदिकादित्यनेनान्वयासम्भवाच्च। तदर्थकशब्दमात्रग्रहणे प्राप्ते अर्थः शब्दस्वरूपं चेत्येतदुभयं विशिष्टमेव संज्ञि स्यादिति नियमार्थम्। तत्र स्वशब्दस्यात्मीयत्वेनार्थपरत्वाद् रूपशब्दस्य च शब्दस्वरूपपरत्वात्। तथा च सति तदर्थत इयं सिद्धेति। तेन शब्दस्वरूपमात्रग्रहणे रूपग्रहणेनैव तस्य सिद्धत्वाद् व्यर्थमेव तत् स्यादिति भावः।

**तेनैषेति**। तथा तदर्थेन सूत्रेणेत्यर्थः। **सिद्धेति भाष्य इति**। इत्यादिभाष्ये स्पष्टमित्यर्थः। अत्र 'व्रश्च०' इति सूत्रे राजेः पृथग्भ्राजिग्रहणमपि ज्ञापकमिति सीरदेवादयः।

**तत्रार्थो न विशेष्यः, तत्र शास्त्रीयकार्यासम्भवात्, किन्तु शब्दविशेषणम्। एवं चार्थविशिष्टः शब्दः संज्ञेति फलितम्। तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम्॥ १४॥**

**नन्वेवमपि 'महद्भूतश्चन्द्रमाः' इत्यत्र 'आन्महतः' इत्यात्वापत्तिः, अत आह—**

**गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः॥ १५॥**

**गुणादागतो गौणः। यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः।**

---

ननु राजिसाहचर्येण फणादेरेव भ्राजेर्ग्रहणं यथा स्यात् तद्बहिर्भूतस्य भ्राजेः षत्वमनेन मा भूत्, किन्तु कुत्वमेव यथा स्यादित्येतदर्थकतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत्? तेषामयं भावः—फणादिबहिर्भूतस्य भ्राजेर्धातुपाठे सत्वे मानाभावः। अत एव 'भ्राजभ्रास०' इति सूत्रे भ्राजग्रहणं चारितार्थम्। अन्यथैकत्र ऋकारानुबन्धकरणेनापरत्राकारानुबन्धकरणेन रूपद्वयस्य सिद्धत्वात् तद्वैयर्थ्यं स्पष्टमेव। अत एव कविकल्पद्रुमवृत्तौ भ्राजि पृथङ् नोक्तः। एवञ्च राजिग्रहणेन सिद्धेः भ्राजिग्रहणं व्यर्थं सद् ज्ञापकमेव।

न च व्रश्चादिसाहचर्येण धातोरेव राजेर्ग्रहणाद् भ्राजन्तर्गतराजेर्धातुत्वाभावात् षत्वाप्राप्तौ तदर्थं भ्राजिग्रहणस्य चारितार्थ्येन कथं ज्ञापकत्वमिति वाच्यम्, व्रश्चादिसूत्रे छशोरग्रे राजेः पाठकरणेन ज्ञापकत्वसंभवात्। न च परमभ्राट्छब्दात् प्रातिपदिकाण्णिचि टिलोपे कर्तरि क्विपि परमभ्रशब्दे षत्वार्थं भ्राजिग्रहणमिति वाच्यम्, छादिसाहचर्येण झलन्तस्यैव भ्राजेर्ग्रहणात्। तथा च भ्राजिग्रहणं व्यर्थम्, भ्राजिधातोर्विभ्राडिति, भ्राजृधातोर्विभ्रागिति रूपद्वयसिद्धिरित्यपास्तम्। उक्तरीत्या रूपद्वयस्यानिष्टत्वादित्यलम॥ १४॥

सूत्रकारमते स्वशब्देनोपस्थितो योऽर्थः, भाष्यमते विशेषणतयोपस्थितो योऽर्थः, स चावसरप्राप्तः सति सम्भवे मुख्य एव गृह्यते, न तु गौण इत्यवसरसङ्गत्या गौणमुख्ययोरिति परिभाषामवतारयति—नन्वेवमपीति। अर्थवत्परिभाषयोपस्थितार्थविशिष्टशब्दस्य ग्रहणेनानर्थकेन वारणेऽपीत्यर्थः। अमहान् महान् सम्पद्यते, तथाभूतो महद्भूतः, समानाधिकरणेन कर्त्रर्थक्तान्तेन 'भूत'-शब्देन 'कुगति०' इत्यनेन च्व्यन्तस्य महच्छब्दस्य 'ऊर्यादि' इत्यनेन गतिसंज्ञकस्य समासः। अमहति चन्द्रमसि महत्त्वारोपेणात्र महच्छब्दस्य प्रयोगः, अतोऽयं गौणः। गौणार्थबोधकत्वेन शब्दस्यापि तत्त्वमिति भावः।

**आत्वापत्तिरिति**। मुख्यस्यैव ग्रहणमित्यत्र मानाभावादिति भावः।

**गुणादागत** इति। तत आगत इत्यणन्तोऽयं गौणशब्दः स्वशक्यार्थनिष्ठगुणसजातीयगुणहेतुकारोपविषयधर्मनिमित्तकप्रवृत्त्याश्रय इत्यर्थः। एतमेवार्थं दृष्टान्तयति—यथेति। गोनिष्ठजाड्यादिगुणसजातीयगुणहेतुकारोपविषयगोत्वादिनिमित्तको वाहीकरूपोऽर्थ इत्यर्थः।

**अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वात् मुख्यः प्रथम इत्यर्थः।**

**गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्त्तते। एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्। तेन 'प्रियत्रयाणाम्' इत्यादौ त्रयादेशो भवत्येव, तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात्। किञ्चायं न्यायो न प्रातिपदिककार्ये, किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र,**

---

**अभिव्यक्तेति**। संग्रहायाह—अप्रसिद्धश्चेति। संज्ञाबोध्य इत्यर्थः। एतमेवार्थं स्पष्टयति—**संज्ञादिरपीति**। अत्र कर्मणि 'आतश्चोपसर्गे' इति अङ्, आदिनानुकरणपरिग्रहः। अत एव 'युष्मद्युपपदे' इत्यादौ 'त्वमावेकवचने' इत्यादि न भवति।

**यद्वा,** संज्ञा आदिः प्रथमबोधको यस्य स संज्ञीत्यर्थः। अत्र पक्षे 'अपिः' अनुकरणसमुच्चायको बोध्यः। अस्य गौणत्वे हेतुमाह—**तद्गुणारोपादेवेति**। यत इत्यादिः। यद्वाचकशब्दप्रयोगस्तदीयगुणारोपपूर्वकतद्धर्मारोपादेवेत्यर्थः। इदानीमवशिष्टमुख्यपदार्थमाह-मुखमिवेति। सादृश्ये हेतुमाह-प्रधानत्वञ्च वाच्यार्थातिरिक्तार्थानपेक्षप्रतीतिकत्वरूपम्। उपमेयमाह—**प्रथम** इति। प्राथमिकशक्तिजन्यबोधविषय इत्यर्थः। मुख्य इत्यत्र शाखादित्वाद्यः। मुख्यार्थबोधकत्वाच्छब्दस्यापि मुख्यत्वं बोध्यम्।

मुख्यार्थारोपेण गौणेऽर्थे प्रयुज्यमानेन शब्देन मुख्यार्थस्य प्रथमोपस्थानेन तादृशप्राथमिकोपस्थितिविषयार्थमादाय कृतार्थस्य शास्त्रस्य गौणार्थमादाय प्रवृत्तिकल्पने प्रमाणाभाव एवास्या बीजमुद्घाटयन्नाह—**गौणे हीति**। आरोपाय पूर्वं तदुपस्थितिरावश्यकीति भावः। **मुख्यार्थेति**। मुख्यार्थप्रवृत्तिनिमित्तारोपेणेत्यर्थः। आरोपितगोत्ववान् वाहीकसमभिव्याहारे गोशब्दार्थ इति भावः।

फलितमाह—**एवं चेति**। अप्रसिद्धसंज्ञादेर्गौणलाक्षणिकस्य चोभयोर्गुणयोगाद् गौणत्वे सतीत्यर्थः। **अत्रेति**। परिभाषायामित्यर्थः। एतेनान्यत्र नैवमिति सूचितम्। ईदृशव्याख्यानस्य फलमाह—**तेनेति**। उभयविधगौणत्वातिरिक्तवृत्तावर्थान्तरोपसंक्रान्तत्वरूपगौणत्वस्याग्रहेणेत्यर्थः। तदर्थमाह—**तत्रेति**। 'प्रियत्रयाणाम्' इत्यत्रेत्यर्थः। **इतरेति**। अन्यपदार्थे इत्यर्थः। **उक्तरीत्येति**। द्विविधेत्यर्थः। तेन शुद्धलाक्षणिकस्य व्यावृत्तिः।

नन्वेतादृशस्य गौणत्वस्य ग्रहणेऽपि गौर्वाहीक इत्याद्यसिद्धिरेव, तस्य गौणलाक्षणिकत्वेन 'गोतो णित्' इत्यस्याप्रवृत्तेः, अत आह—**किञ्चेति**।

यत्तूपसर्जनत्ववत्यपि गौणत्वव्यवहर्तृणां मते 'प्रियत्रयाणाम्' इत्यादौ दोषस्तदवस्थ एव, अत आह-किञ्चेत्यवतारितम्, तन्मन्दम्; तत्र दोषोद्धारेऽपि 'महाबाहुः' इत्यादौ दोषतादवस्थ्यात्। तथा चोपसर्जनरूपगौणत्वं नादरणीयमस्यामिति भावः। प्रातिपदिककार्यत्वञ्च पदकार्यभिन्नकार्यत्वम्। पदकार्यत्वं

**तादृशपदकार्य एव । परिनिष्ठितस्य पदान्तरसम्बन्धे हि 'गौर्वाहीकः' इत्यादौ गौणत्वप्रतीतिः, न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाद् जातसंस्कार-**

---

तु स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकप्राकृतिकप्रत्ययमात्रानिमित्तकत्वम् । स्थूलगुणयोगाद् 'नागी स्त्री' इत्यादौ प्रयुज्यमानान्नागशब्दात् 'जानपद' इति ङीष्सिद्धये सत्यन्तं विशेषणम् । अन्यथोक्तपदकार्यत्वस्य जानपदेत्यत्रापि सत्त्वेन गौणमुख्यन्यायप्रवृत्तावुक्तस्थले 'जानपद' इति ङीष् न स्यात् । सूत्र तु 'जातेर-स्त्रीविषयात्' इति जातिवाचकनागशब्दात् सर्वत्र प्राप्तस्य ङीषः स्थौल्ये नियामकमेव स्यात् । तथा च 'नागी हस्तिनी' इत्यत्रैव स्यात्, 'नागी सर्पिणी' इत्यत्र न स्यात् । 'नागी स्त्री' इत्यपि न स्यात् । सत्यन्तविशेषणे मानं तु 'शूद्रा च' इति वार्त्तिके जातिग्रहणम् । तद्धि शूद्रस्य स्त्री 'शूद्री' इत्यादौ टाब् मा भूदित्येतदर्थम् । विशेषणाभावे तूक्तपदकार्यत्वस्यात्रापि सत्त्वेन गौणमुख्यन्याये-नैव टापोऽप्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेवेति । 'भूरिवाचचार बुभाव, भूरिवाचारीत्, अभावीत्' इत्यादौ गौणप्रयोगेऽपि गौणमुख्यन्यायस्य प्रवृत्तये प्रत्यये प्रातिपदिक-प्रवृत्तिकेति विशेषणम् । अन्यथा 'भवतेरः' इत्यस्य 'गातिस्थाः' इत्यस्य च प्रत्ययनिमित्तकत्वेन पदकार्यत्वाभावेनोक्तन्यायाप्रवृत्तावुक्तप्रयोगे तयोः प्रवृत्तिः स्यादिति । 'हरितादिभ्योऽञः' इत्यस्यापि पदकार्यत्वसिद्धये मात्रपदनिवेशः । अन्यथा समुदायान्तर्गतस्याञोऽपि निमित्तत्वेन पदकार्यत्वाभावेनोक्तन्यायाप्रवृत्तौ हरितसदृशस्य गोत्रापत्यमित्याद्यर्थकेभ्योऽपि तेभ्यः 'हरितादिभ्योऽञः' इति फग् दुर्निवारः स्यादिति दिक् ।

ननूक्तपदकार्यत्वस्य 'अत इञ्' इत्यादावपि सत्त्वाल्लाक्षणिकश्वशुरशब्दा-दिञपि न स्यात्, अत आह—**कीन्त्विति । विशिष्टरूपोपादानमिति ।** तत्त्वञ्च स्ववृत्त्यानुपूर्वीप्रकारकबोधजनकत्वम् । अर्थवत्परिभाषामूलकत्वादस्या अपि विशिष्टरूपोपादानविषये एव प्रवृत्तिरिति भावः । उपात्तं विशिष्यार्थोपस्थाक-मिति तु स्पष्टार्थमेव, तादृशस्यैव विशिष्टरूपाभ्युपगमात् । यत्रेति । यथा 'राज-श्वशुरात्' इत्यादावित्यर्थः । **पदकार्य एवेति ।** तत्त्वञ्चोक्तमेव प्राक् ।

यत्तु, पदोद्देश्यकत्वं पदकार्यत्वमिति, तन्न; तद्धितविधावनुपस्थाना-पत्तेः । तेषां वस्तुतः सुबन्तात् प्रवृत्तावपि तदनुद्देश्यकत्वात्, नापि वस्तुतः पदसम्बन्धित्वमिति, 'गौर्वाहीकः' इत्यादौ णित्वादीनामपि तथात्वात् । त्वद्भ्-वतीत्यादौ त्वदादेशाद्यनापत्तेश्च । यद्यपि प्रत्ययानिमित्तकत्वं विभक्त्यनिमित्त-कत्वं तत्त्वं वेति, तदपि न; आद्ये 'बुभाव अभावीत्' इत्यादौ दोषस्य तादव-स्थ्यात् ।

अन्त्ये, त्वद्भवतीत्यादौ च्विप्रत्ययस्य विभक्तिभिन्नत्वेन तन्निमित्तक 'प्रत्ययोत्तरपदयोश्च' इत्यनेन त्वदादेशाद्यनापत्तेः । एतेनाङ्गसंज्ञाया अनिमित्तत्वे सति वस्तुतः पदसम्बन्धित्वं प्रत्ययानिमित्तत्वं वेत्यपास्तम् ।

**बाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादावत इञः सिद्धये उपात्तमित्यादि ।**

**न च प्रातिपदिकपदं तादृशमिति वाच्यम्, तेन हि प्रातिपदिकपद कत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके 'ओत्' इत्यादावेतत्प्रवृत्त्या गोऽभवदित्यादौ दोषो न ।**

---

**केचित्तु** पदमात्रवृत्त्युद्देश्यतावच्छेदककार्यत्वं तत्त्वम् । तथा च 'प्रत्ययोत्तरपदयोश्च' इत्यनेन 'त्वदीयः' इत्यादौ भसंज्ञकस्यापि त्वादेशविधानान्न तस्य पदमात्र-वृत्त्युद्देश्यताकत्वम् । 'श्वाशुर्य्यं' इत्यादौ तु यतः प्राक् पदत्वेन 'राजश्वशुराद्यत्' इत्यस्य पदमात्रवृत्त्युद्देश्यताकत्वमित्याहुः, तदपि न; 'बुभाव, अभावीत्' इत्यादौ 'भवतेरः' इत्यस्य 'गातिस्थाः' इत्यस्य च प्रवृत्तिर्दुर्निवारत्वापत्तेः । अनयोः पदमात्रवृत्त्युद्देश्यताकत्वाभावेन पदकार्यत्वाभावात्, गौणमुख्यन्यायाप्रवृत्तेरिति दिक् ।

**यदुक्तम्,** प्रातिपदिककार्येऽयं न्यायो नेति, तद्बीजमाह—**परिनिष्ठितस्य' इत्यादिना ।** स्वार्थे परिपूर्णं पदम्पदान्तरमाकाङ्क्षत [ति] इति न्यायादिति भावः । हिर्यतः इत्यर्थे, बीजमित्यत्रास्यान्वयः । **प्रातिपदिकसंस्कारवेलायामिति ।** सुप्सन्निधानसाध्यसाधुत्वरूपसंस्कारकाल इत्यर्थः । **बाधायोग** इति । उत्तरकालप्रतीतिनिमित्तकगौणत्वहेतुकप्रवृत्तिकगौणमुख्यन्यायेन बहिरङ्गेणेति भावः ।

ननु 'श्वाशुरिः' इत्यादौ 'अत इञ्' इत्यस्य विशिष्टरूपत्वाभावेऽपि अधिकारानुहृतप्रातिपदिकपदस्य तत्त्वमाशङ्कते—**न चेति । तादृशमिति ।** विशिष्टार्थोपस्थापकमित्यर्थः । **अभावादिति ।** प्रातिपदिकपदस्य सङ्केतसम्बन्धेन प्रातिपदिकपदवत्त्वेनार्थवत्त्वेन सामान्यतो घटादीनामुपस्थापकत्वेऽपि घटत्वादिना घटादीनामनुपस्थापकत्वादित्यर्थः । प्रातिपदिकपदस्य नानाशक्तिस्वीकारे गौरवादिति भावः । प्रातिपदिकेति पदं स्वरूपातिरिक्ततत्तद्धर्मावच्छिन्नशक्तताव‌च्छेदकधर्मविशिष्टं नेति यावत् ।

नन्वेवम् 'ओत्' इति सूत्रे भाष्ये ओदन्तो निपातः प्रगृह्यः स्यादित्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः, अनदः-अदोऽभवत्=अदोऽभवत्, तिरोभवदिति 'ओतश्च्विप्रतिषेधः' इति वार्त्तिकं व्याख्याय न वक्तव्यः, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति न भविष्यतीति तत्प्रत्याख्यानान्तरम्-एवमपि—अगौर्गौस्सम्पद्यत गोऽभवदत्र प्राप्नोतीति वार्त्तिककृत आशङ्कामुपस्थाप्य, एवन्तर्हि 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति समाहितं भगवता भाष्यकृता । तच्च विरुद्धं चेत, पदकार्यत्वेऽपि प्रातिपदिकवदनुवृत्तस्य निपातपदस्यापि संज्ञाशब्दत्वेन विशिष्यार्थोपस्थापकत्वाभावात् परिभाषायाः प्रवृत्तेरसम्भवादित्यत आह—**निपातपदं त्विति ।** अस्मादेव भाष्यप्रामाण्याद् निपातपदस्य नानार्थकत्वरूपगौरवं सह्यत इति भावः ।

**'अग्नीषोमौ माणवकौ' इत्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽप्यन्तरङ्गत्वादीत्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमपदयो-द्वन्द्वे तन्नामकावित्यर्थके च नेत्वषत्वे, आद्ये गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात्। अत एव 'अग्निसोमौ माणवकौ' इत्यत्र गौणमुख्यन्यायेन षत्ववारणपरम् 'अग्नेः स्तुत्स्तोमसोमाः' इति सूत्रस्थं भाष्यं संगच्छते।**

**'गां पाठय' इत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासम्भवेन विभक्त्यु-**

---

तथा च सर्वत्र विधौ निपातपदस्य च-वा-हेत्यादिशब्दपरकत्वेन विशि-ष्टार्थोपस्थापकत्वात् तदुद्देश्यकविधौ एतत्प्रवृत्तौ बाधकाभावान्न विरोध इति प्रातिपदिकपदान्निपातपदवैलक्षण्यमपि प्रयोजकम्। तथा हि प्रातिपदिकसञ्ज्ञा-प्रदर्शकसूत्रे संज्ञितावच्छेदकवत्तद्धर्मानुपादानान्निपातसंज्ञाप्रदर्शकसूत्रे तु स्वादय इत्यस्योपादानम्।

किञ्च, निपतन्ति आख्यातार्थं प्रति विशेषणीभवन्तीति व्युत्पत्त्या निपा-तपदस्य चादिषु योगरूढत्वम्, प्रातिपादिकपदं तु रूढम्। किञ्च, अनुगतव्यक्ति-कानां व्यक्तिरेव प्रवृत्तिनिमित्तम्। अनुगतानां तु शब्द एवेति युक्तं निपातप्राति-पदिकयोर्वैषम्यमिति। **कार्येति**। प्रगृह्यसंज्ञेत्यर्थः। **एतदिति**। गौणमुख्यन्याये-त्यर्थः। **गोऽभवदिति**। गोभिन्नकर्तृकस्य गोसदृशरूपेण भवनस्य प्रतीतेस्त्र गौणत्वम्। यत्र च योगीश्वरशापादिना मुख्यगोरूपप्राप्तिः, तत्र च्विर्नेष्यत इति भावः। **दोषो नेति**। प्रगृह्यसंज्ञाप्रयोज्यप्रकृतिभावाद् यो दोषः, स नेत्यर्थः।

एतन्न्यायस्वीकारे लक्ष्यासिद्धिमुपद्रवं परिहरति—**अग्नीषोमाविति**। द्वन्द्व-वेलायामग्नीषोमपदस्य मुख्यत्वात् तदैवान्तरङ्गत्वादीत्वषत्वयोः कृतयोरनन्तरं माणवकसम्बन्धेन तयोस्तत्सदृशपरत्वाद् लाक्षणिकत्वेऽपि न दोष इति भावः। अत आह—**तादृशेति**। द्वन्द्व इत्युभयान्वयी। उक्तार्थे भाष्यमुपष्टम्भकमाह—**अत एवेति**। सदृशलाक्षणिकयोस्तन्नामकयोर्वा द्वन्द्वे ईत्वषत्वाभावादेवेत्यर्थः।

नन्वेवं भाष्यविरोध इत्यत आह—**भाष्यमिति**। तत्र हि—अग्नेर्दीर्घात् सोमस्येति वक्तव्यम्, अग्नीषोमौ, इतरथा ह्यनिष्टप्रसङ्गः—अग्निसोमौ माणव-काविति। तर्हि वक्तव्यम्! न वक्तव्यम्, गौणमुख्ययोर्मुख्ये सम्प्रतिपत्तिरिति।

ननु पदकार्ये एव गौणमुख्यन्यायस्य प्रवृत्तौ यदुक्तं बीजं परिनिष्ठित-स्येत्यादि, तदयुक्तम्; तेन 'गौर्वाहीकः' इत्यादाविष्टसिद्धावपि 'गां पाठय' इत्यादौ दोषस्तदवस्थ एव। तथा हि—'विभक्त्यर्थस्य क्रियाकारकसम्बन्ध-रूपत्वेन तयोः श्रुतिकृतस्सम्भवबोधः' इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमान्तयोरन्वयबोधः। तथा च प्रकृते पाठनक्रियासम्बन्धमन्तरा द्वितीयाया पूर्वमेव गोशब्दस्य गौणत्वप्रतीतौ 'औतोऽम्शसोः' इत्यनेनापत्तेः। अत आह—**गां पाठयेत्यादि**। ननु 'औतोऽम्शसोः' इत्यस्य विशिष्टरूपोपादानत्वाभावादेव गोशब्दस्य गौणत्वेऽपि स्यादेवात्वमिति। पदस्यैव गौणार्थकत्वमिति तु यदा

त्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेण 'अत्वं त्वं संपद्यते, अमहान् महान् भूतः, त्वद्भवति इत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम्। अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः।

किञ्च, 'शुक्लामित्युक्ते कर्म निर्दिष्टम्, कर्त्ता क्रिया चानिर्दिष्टे' इत्याद्युक्त्वेहेदानीम् 'गामभ्याज कृष्णां देवदत्त' इत्यादौ सर्वं निर्दिष्टम्, गामेव कर्म, देवदत्त एव कर्त्ता, अभ्याजेव क्रिया—इत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाद्यध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां

---

'पाठय' इत्यस्य प्रयोगोपपत्तये व्युत्पाद्यते तदर्थमिति चेत्, न; वृद्धिणिद्वद्भावयोर्बाधनार्थम् 'गोत इति वक्तव्यम्' इति वार्त्तिकस्यावश्यंवक्तव्यतया विशिष्टरूपोपादानस्याक्षतत्वात्। अन्यथा गोशब्दातिरिक्त ओकारान्तस्थले 'औतोऽम्०' इत्यस्य चारिर्य्यादत्र परत्वात् तावेव स्यातामिति भावः। **वेलायामिति**। तत्प्राग्वेलायामित्यर्थः। बोद्धुः पदस्यैव गौणार्थकत्वग्रहमिति नियमे भाष्यमुपष्टम्भकमाह—**अत्वं त्वामिति**। आदिना 'महद्भवति' इत्यादिपरिग्रहः। **अन्यथेति**। अस्य पदकार्यविषयत्वमेवेति नियमाभावे इत्यर्थः। **वाक्यसंस्कारपक्ष इति**। वस्तुतो नेदं सम्यक्, भाष्यस्य संकोचापेक्षया पदकार्य एतत्प्रवृत्तौ ज्ञापकत्वमेवोचितमिति। तेष्विति। 'गां पाठय' इत्यादिष्वित्यर्थः। तदनापत्तिरिति। आत्वानापत्तिरिति भावः। भाष्यप्रयोगेऽपीदं बोध्यम्। इदम्प्रयोक्तृणां तदा गौणार्थकत्वप्रतीतिमभ्युपेत्य।

वस्तुतस्तस्यापि नेत्याशयेनाह—**किञ्चेति**। आदिना देवदत्त इत्युक्ते कर्ता निर्दिष्टः, कर्मक्रिये चानिर्दिष्टे; अभ्याज इत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणीचानिर्दिष्टे इत्यस्य परिग्रहः। सर्वं निर्दिष्टमित्युक्तेनेति शेषः। अन्यथा इत्यर्थकेनेत्यस्यासङ्गतिः स्पष्टैव। गामिति शब्दवाच्यमेव कर्मेत्यादिक्रमेणार्थः। एवकारास्तदन्यव्यवच्छेदकाः। आदिभ्यां क्रियाकारकयोः परिग्रहः। सामान्यत इति। क्रियात्वेनेत्यर्थः। मात्रपदेन विशेषव्यावृत्तिः। तदादिविवक्षायामित्यर्थः अत एवाग्रिमादिसङ्गतिः। **अन्वाख्यानमिति**। 'कर्मणि' इत्यादिसूत्रेणेति शेषः। विशेषक्रियान्वये आह—पाठनेति। **गौणात्वप्रतीतिरिति**। 'शेषे विभाषा' इति विकल्पेन नियमाप्रवृत्तिपक्षे कर्तृकर्मेत्युभयत्र षष्ठ्याम्, 'कर्मणि च' इति निषेधावृत्या समास इति भावः।

'अभिव्यक्त' इति न्यायान्तरम्। तथा च प्रातिपदिककार्येऽपि तस्य प्रवृत्तिरिति केषाञ्चिन्मतम्। तन्न युक्तमित्याह—**एवमिति**। एतन्मूलकमित्यनेनैतस्यान्यत्वं निरस्तम्। श्लोकशब्देन कल्पितत्वञ्च सूचितम्। उक्तन्यायस्य पदकार्यविषयत्वमित्यत्र मानान्तरमप्याह—**ध्वनितञ्चेदमिति**। अत्र चोऽप्यर्थे।

साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि ।

एवमेतन्मूलकः 'अभिव्यक्तपदार्था ये इति श्लोकोऽपि पदकार्यविषयकः। ध्वनितं चेदम् 'सर्वादीनि०' इति सूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्त्तिककृता, 'पूर्वपरा०' इति सूत्रे 'असंज्ञायाम्' इति वदता सूत्रकृता, अन्वर्थसंज्ञया तत्प्रत्याख्यानं भाष्यकृता च ।

अर्थाश्रय एतदेवं भवति, शब्दाश्रये च वृद्ध्यात्त्वे इति ओत्सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायः। तद्रहितशब्दाश्रये च ते इत्यर्थः। 'गोतः' इति तथा यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैवैतस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १५ ॥

---

वदता सूत्रकृतेति। इदञ्चिन्त्यम्—कुरुषूत्तरशब्दसङ्केतस्य सर्वविदितत्वेनाप्रसिद्धत्वात्। तत्प्रत्येति। तदुभयप्रत्याख्यानमित्यर्थः।

यदि तु प्रातिपदिककार्येऽपि न्यायस्य प्रवृत्तिः स्यात्, तदा न्यायेनैव सिद्धे उक्तत्रितयासङ्गतिः स्यादिति भावः।

ननु उक्तपरिष्कृतपदकार्यत्वस्वीकार एतन्मुख्यन्यायेनैव संज्ञाभूतानां व्यावृत्तिसिद्धिरिति चेत्! न; संज्ञाया विधिनिमित्तकत्वस्योक्तेन सर्वनामसंज्ञायाः प्रत्ययनिमित्तकत्वादुक्तपदकार्यत्वस्य तस्याभावत्।

ननु 'ओत्' सूत्रे भाष्ये गौणमुख्यन्यायप्रदर्शनोत्तरं 'गौर्वाहीकः, गां पाठय' इत्यत्र गौणमुख्यन्यायेन वृद्ध्यात्वे न प्राप्नुत इति शङ्कायाः 'अर्थाश्रय एतदेवं भवति' इत्यादिना प्रकारान्तरेण वारणं कृतम्। तत्तु पदकार्यत्वाभावेऽपि वृद्ध्यात्वविषये गौणमुख्यन्यायप्रदर्शनम्। अतो नैषा कल्पना भाष्यकाराभिप्रेतेत्यत आह—अर्थाश्रय इति। वास्तविकलौकिकार्थवत्त्वस्य वाक्य एव सत्त्वादाह—योग्येति। अर्थं पदस्य लक्षणेति भावः।

एतदेवमित्यस्यार्थमाह—एष न्याय इति। तद्रहिते सामानाधिकरण्यसम्बन्धेन लौकिकार्थवत्त्वाद् विशिष्टपदत्वरहिते इत्यर्थः। मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये इति यावत्। पदव्यपदेशरहितस्य तत्र निमित्तत्वेनाश्रयणमिति भावः। ते इति। वृद्ध्यात्वे इत्यर्थः।

नन्वर्थवत्परिभाषामूलकत्वादस्य न्यायस्यार्थवत्येव प्रवृत्त्या तत्त्वस्य च विशिष्टरूपोपादान एव सत्त्वेन प्रकृते 'अत इञ्' इतिवत् 'ओन्निमित्तकणिद्धावात्वयोर्विशिष्टरूपोपादानत्वाभावेनार्थरहितवर्णमात्राश्रयत्वेन गौणमुख्यन्यायस्य प्रवृत्तिः सुलभा इत्येवास्य भाष्यस्यार्थः कुतो नाङ्गीक्रियते? अर्थपदस्य लौकिकार्थवति लक्षणया पदकार्य एव गौणमुख्यन्यायस्य प्रवृत्तिरित्येतदर्थकपरत्वाङ्गीकारे गौरवाच्चेत्यत आह—गोत इति।

तथा चात्रापि विशिष्टरूपोपादानस्याविशिष्टत्वेन तथैवास्य भाष्यस्यार्थकल्पनमुचितमिति भावः। यथाश्रुतेति। गकाराविवक्षायामसत्यामिति भावः।

**अर्थवद्ग्रहणे इत्यस्यापवादमाह—**

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च**
**तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥**

**'येन विधिः' इत्यत्र भाष्ये वचनरूपेण पठितैषा। तेन 'राज्ञा, साम्ना' इत्यादावल्लोपः, 'दण्डी, वाग्मी' इत्यादौ 'इन्हन्०' इति नियमः, 'सुपयाः,**

---

ननु 'गोतो णित्' इत्यस्य तथात्वेऽपि 'औतोऽम्शसोः' इत्यस्य कथं तत्त्वमिति चेत्, शृणु; 'आ गोतोऽम्शसोः' इत्यस्यैव भाष्यसम्मतसूत्रपाठत्वात्। अत एव गामित्यत्र परत्वाण्णिद्वद्भावेन वृद्धिमाशङ्क्यानवकाशत्वादात्वमित्युक्तम्। 'औतोऽम्' इति पाठे तु गोशब्दभिन्नौकारान्तस्थले तस्य सावकाशत्वेनानवकाशत्वादात्वमित्यस्यासङ्गतिः स्पष्टैवेति भावः। 'ओतोणित्' इति त्वयुक्तमेव। तत्त्वं च 'ओतो णित' इति प्रतीकस्थशब्देन्दुशेखरादवसेयमिति दिक्।

व्याख्येयत्वादिति। एतत्पाठस्यैव सिद्धान्तितत्वादिति भावः।

यत्तु गौणार्थस्य विलम्बोपस्थितिकत्वेन लाक्षणिकत्वाद् लक्षणप्रतिपदोक्तपरिभाषयैव निर्वाहे व्यर्थेयमिति। तत्, न; तस्यां साक्षात्तत्तच्छब्दानुवादेन विहितस्यैव प्रतिपदोक्तपदेन ग्रहणात् प्रकृतपरिभाषाया विषयाभावात्। अत एव 'शालीयः, पुत्रीयः' इत्यादिसिद्धिः। अन्यथा शालीयप्रयोगसिद्ध्यर्थं प्रथमं या वृद्धसंज्ञा, तस्या एव 'वृद्धाच्छः' इत्यादौ ग्रहणं स्यात्, न तु द्वितीयवृद्धस्य शालीयपुत्रस्येत्यस्येति बोध्यम्। वस्तुतः परिभाषा तु वाचनिक्येव ॥ १५ ॥

अर्थवत्परिभाषाङ्गत्वेन गौणमुख्यन्यायस्य सिद्धत्वेनैतदतिरिक्तत्वात् तं पूर्वमुक्त्वा अर्थवद्ग्रहणपरिभाषापवादभूताम् 'अनिन्' इति परिभाषामवतारयति—अर्थवदिति। ग्रहणानीति। अनिनस्मनां ग्रहणं यैस्तानि अनिनस्मन्ग्रहणानि, 'अल्लोपो नः' इत्यादौ अनादिपदानीत्यर्थः। अर्थवता चानर्थकेन चेति। तदन्तविधिबोधकसूत्रघटकं यत्तृतीयान्तं येनेति पदम्, तस्य विशेषणमित्यभिप्रेतम्। अतोऽत्र 'अनर्थकेन च' इत्यनन्तरं विशेषणेनेति शेषो बोध्यः। वचनरूपेणेति वार्त्तिकरूपेणेत्यर्थः।

वस्तुतस्त्वेकदेशानुमत्या ज्ञापकसिद्धैवेयमिति बोध्यम्। ज्ञापकं त्वत्र 'कार्मस्ताच्छील्ये' 'ब्राह्मोऽजातौ' इत्यादि टिलोपनिपातनमेव। तद्धि 'अन्' इति प्रकृतिभावबाधनार्थम्। यदि त्वर्थवत्परिभाषया अर्थवत एवानो ग्रहणम्, तदा मनिनन्तयोः कर्मन्ब्रह्मन्शब्दयोरवयवस्यानो निरर्थकत्वेन 'अन्' इत्यस्य प्रवृत्त्या प्रकृतिभावाप्राप्तौ 'नस्तद्धिते' इति टिलोपेनैव सिद्धेर्निपातानर्थक्यं स्पष्टमेव। तथा च निर्देशा अपि 'तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः' 'जातिनाम्नः कन्' 'अन्तर्बहिर्भ्याञ्च लोम्नः' 'स्थाम्नोऽकारादयः' बोध्याः।

परिभाषाया क्रमेणोदाहरणान्याह-राज्ञा, साम्नेत्यादि। अल्लोप इत्यादिसर्वेषां प्रथमान्तानां सिद्ध इत्यत्रान्वयः। 'अल्लोपोऽनः' इत्यस्याल्लोप इती-

सुस्रोताः' इत्यादौ 'अत्वसन्तस्य' इति दीर्घः, 'सुशर्म्मा, सुप्रथिमा' इत्यादौ 'मनः' इति ङीब्निषेधश्च सिद्धः।

अन्ये तु 'परिवेविषीध्वम्' इत्यत्र ढत्वव्यावृत्तये क्रियमाणात् 'इणः षीध्वम्' इत्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या। तन्मूलकमिदमित्याहुः।

---

त्यादिः। 'दण्डिनौ, वाग्मिनौ' इत्यस्योपलक्षणमिदम्। दण्डी, वाग्मीति। अत्र 'सौ च' इति दीर्घविधानान्नियमस्यानुपयुक्तत्वात्। सुस्रोता इति। अत्र 'स्रुविभ्यां तुड् वा' इति सूत्रेण असुन्प्रत्यये तुडागमे च रूपसिद्धिः। आगमसमभिव्याहारे विशिष्टस्यैवार्थवत्त्वनियमेनासोऽत्रानर्थकत्वमिति भावः।

ननु नेदमुदाहरणं युक्तम्, एकदेशस्यानर्थकत्वेऽपि यदागमपरिभाषया अस्ग्रहणेन विशिष्टस्यैव ग्रहणात्, तस्य चार्थवत्त्वेनैव सिद्धत्वात्। न च निर्दिश्यमानस्येत्यस्यावयवषष्ठ्यामपि प्रवृत्त्याऽर्थवन्निर्दिश्यमानास उपधाया अचो दीर्घ इत्यर्थेन प्रकृतेऽसो निरर्थकत्वेन युक्तमेवेदमुदाहरणमिति वाच्यम्, ,अपिवत्' इत्यादावनर्थकनिर्दिश्यमानस्य पिबाद्यादेशसिद्धयेऽर्थवदित्यस्य निर्दिश्यमानांशे वैयधिकरण्येनान्वयेनार्थवदवयवस्य निर्दिश्यमानस्येत्यर्थस्यैव स्वीकारादिति चेत् न; औणादिकतसिप्रत्ययान्तस्यापि तस्य सत्त्वात्। अत एव भाष्योक्तमपीदमुदाहरणं संगच्छते। न चोणादीनामव्युत्पन्नत्वादेवेष्टसिद्धिरिति वाच्यम्, 'सुपयाः' इत्यस्यासिद्धेः। यद्वा निर्दक्षिणता इत्युदाहरणमवधेयम्। इदञ्च 'अत्वसन्तस्य' इति सूत्रेऽन्तग्रहणं व्यर्थमित्यभिप्रेत्य।

वस्तुतस्तु सूत्रेऽन्तग्रहणसत्त्वात्तदन्त एवार्थवत्परिभाषायाः प्रवृत्त्या तदवयवेऽसंशे चाप्रवृत्त्या अनिनस्मन्परिभाषाघटकास्ग्रहणस्य 'अत्वसन्तस्य' इति सूत्रविषयकोदाहरणमेवायुक्तम्। परिभाषाघटकास्ग्रहणोदाहरणं तु यशस्वी, निर्दक्षिणतस्वीतीति बोध्यम्। अत्र 'अस्मायामेधा' इत्यनेनार्थवतोऽनर्थकाच्चसो विनिसिद्धिरिति दिक्।

सुप्रथिमा इति। इदमप्युदाहरणं चिन्त्यम्, कर्मधारये स्त्रीत्वानुपपत्तेः। बहुव्रीहौ तु 'अनो बहुव्रीहेः' इत्यनेनैव ङीब्निषेधसिद्धेः। एवञ्च 'निष्प्रथिमा, अतिप्रथिमा' इत्युदाहरणं सुवचमित्यवधेयम्।

परिवेविषीध्वमिति। परीत्युपसर्गपूर्वाद्विषधातोर्विधिलिङि, सीयुटः सकारलोपे च, शपि, श्लौ च, द्वित्वे, 'निजां त्रयाणाम्' इत्यभ्यासस्य गुणे च रूपमिदम्। तत्राङ्गग्रहणाभावे वेवीतीणः परत्वात् षीध्वमित्यस्य 'इणः षीध्वम्' इत्यनेन मूर्धन्यादेशः स्यात्। तद्वारणाय तस्मिन् सूत्रेऽङ्गादिति। सति हि तस्मिन् इणन्तादङ्गादित्यर्थे वेवीत्यंशस्येणन्ताङ्गत्वाभावान्न मूर्धन्यादेशः। अर्थवत्परिभाषायाः सार्वत्रिकत्वे त्वस्य षीध्वमोऽनर्थकत्वेनानयैव ढत्ववारणसम्भवादङ्गादित्यनर्थकं भवेत्। तदन्यथानुपपत्त्या अर्थवत्परिभाषाया असार्वत्रिकत्वम् तन्मूलमेवेदं वचनम्, न त्वपूर्वमिति प्राचामाशय इति भावः।

**'विभाषेटः' इत्यत्रानर्थकस्यैव षीध्वमः सम्भवादत्रापि तस्यैव ग्रहणमिति भ्रमवारणाय 'अङ्गात्' इति परे ।। १६ ।।**

---

ननु व्यतिपूर्वकादस्धातोर्विधिलिङि, सीयुटस्सलोपे, 'श्नसोरल्लोपः' इति धातोरकारलोपे च व्यतिषीध्वमिति रूपम् । तत्र प्रकृतिप्रत्ययविशिष्टेऽर्थवति षीध्वमिति शब्दे ढत्वव्यावृत्तयेऽङ्गादित्यस्यावश्यकत्वेन कथमर्थवद्ग्रहणपरिभाषाया अनित्यत्वेन तद्ज्ञापकमिति चेत्, न; 'इणः षीध्वम्' इति सूत्रदृष्टया 'उपसर्गप्रादुर्भ्याम्' इति सूत्रविहितषत्वस्यासिद्धत्वेन 'व्यतिषीध्वम्' इत्यत्र षीध्वम् एवाभावात् । 'इणः षीध्वम्' इति सूत्रं तु 'आदेशप्रत्यययोः' इति विहितसिद्धषत्वविषये चरितार्थमिति भावः । तन्मूलकमिति । तदनित्यत्वमूलकमित्यर्थः ।

आहुरित्यनेन सूचितामरुचिं प्रकटयति—विभाषेट इति । आगमसन्निधौ विशिष्टस्यैवार्थवत्त्वेनेटि सति विभाषेटः' इत्युत्तरसूत्रेऽनर्थकस्यैव षीध्वमः सम्भावादर्थाधिकारानुरोधात् 'इणः षीध्वम्' इति पूर्वसूत्रेऽपि अनर्थकस्यैव तस्य ग्रहणं स्यात् । अतोऽत्राङ्गाग्रहणं कर्तव्यमिति भावः । एवं चास्या अपूर्वत्वमेवेति सिद्धम् ।

वस्तुतोऽङ्गग्रहणस्य ज्ञापकत्वमेवोचितम्, उत्तरसूत्रेऽपि यदागमपरिभाषयाऽर्थवत एव षीध्वमस्सम्भवात् । तत्र हि इट इति धकारस्य विशेषणम्, न तु षीध्वमः; इट्समभिव्याहारे षीध्वंशब्देनेट्सहितस्यैव तस्य ग्रहणादिटः परस्य षीध्वमोऽसम्भवात् । न चेटः परस्य षीध्वंसम्बन्धिधकारस्यासंभव इति शङ्क्यम् 'येन नाव्यवधानम्' इति न्यायेन षीशब्दव्यवधाने वचनप्रामाण्यात् प्रवृत्तेः स्वीकारात् । तथा चेणः परो य इट्, ततः परस्य षीध्वंसम्बन्धिधकारस्य ढो भवतीति तदर्थं इति सिद्धम् ।

ननु 'अनिनस्मन्' इति परिभाषाविषये अर्थवद्ग्रहणपरिभाषाया अप्रवृत्त्यानर्थकेन तदन्तविधावपि तदितरपरिभाषाणां प्रवृत्त्यां सत्यामप्यस्यां परिभाषायामुक्तोदाहरणेषु तदन्तविधेरनुपपत्तिरेव । तथा च लक्षणप्रतिपदोक्तपरिभाषया विनिप्रत्यये 'वाग्मिनौ' इत्यत्र 'इन्हन्' इति नियमो न स्यात्, 'अग्निनौ' इत्यत्रैव स स्यात् । किञ्च, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' इति परिभाषया वाग्मिनावित्यत्रैव स स्यात्, ग्मिनस्सानुबन्धकत्वेऽपि तदेकदेशस्येनो निरनुबन्धकत्वाद् 'दण्डिनौ' इत्यादौ सानुबन्धकत्वेन स्यात् सः ।

किञ्च, 'ग्रहणवता प्रातिपदिकेन' इति परिभाषया 'अस्मायामेधा' इति सूत्रघटकासित्यस्य प्रातिपदिकत्वेन तदन्तविध्यभावे यशस्वीत्यादौ विनिर्न स्यात्, किन्तु 'अस गतिदीप्त्यादानेषु' इत्यस्यात् कर्तृक्विबन्ताद् विनिप्रत्यये अस्वीत्यादावेव स स्यात् । एवञ्च लक्ष्यासिद्धिस्तदवस्थैवेति चेत्, न; 'अनिनस्मन्' इति परिभाषाया वर्णमात्रत्वातिदेशे[श]परकत्वेन वर्णग्रहणे च सर्वा-

**ननु 'उश्च' इत्यत्र 'लिङ्सिचौ' इत्यतः 'आत्मनेपदेषु' इत्येव सम्बध्येत, अनन्तरत्वात् । अत आह —**

## एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिः ॥ १७ ॥

**वाशब्द एवार्थे । परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इत्यर्थः । एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः ।**

---

सामप्येतासामप्रवृत्त्या सर्वेष्टसिद्धेः सूपपादत्वात् । अत एव 'अन्‍कारः, अस्‍कारः' इत्यादिभाष्यप्रयोगाः संगच्छन्ते । अन्यथा 'अन्' इत्यादिसमुदायात् 'वर्णात्कारः' इति कारप्रत्ययानुपपत्तिः । न च 'अल्लोपोऽनः' इत्यत्र 'अत्' इति तपरकरणं व्यर्थं स्यादिति वाच्यम्, अन्धातोः क्विपि शसि 'अनुनासिकस्य क्वौ' इत्युपधादीर्घे आन इत्यादावनयाऽनो वर्णत्वातिदेशेऽप्यल्त्वस्यानतिदेशात् 'अनल्विधौ' इति निषेधस्याप्रवृत्त्या स्थानिवद्भावेनान्त्वाल्लोपवारणाय तपरकरणस्यावश्यकत्वादित्यलम् ॥ १६ ॥

'विभाषेटः' इत्यत्र षीध्वीम [ध्वमः] सम्बन्धस्यावश्यकताप्रसङ्गेनोपस्थिताम् 'एकयोगनिर्दिष्टानाम्' इति परिभाषामवतारयति — ननु 'उश्च' इति **अनन्तरत्वादिति** । तत्पदस्यैवाव्यवहितत्वादित्यर्थः ।

**एकयोगनिर्दिष्टानामिति** । एकेन योगेन=सम्बन्धेन, निर्दिष्टानामित्यर्थः । एककार्यघटकतयोच्चारितानां पदानामिति यावत् । योगपदस्य सूत्रपरत्वे हि वक्ष्यमाणदोषापत्तिः स्यादिति भावः ।

कि [वि] कल्पान्वयासम्भवादाह — **वा शब्द** इति । जातावेकवचनम् । वाशब्दावित्यर्थः, 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति [1]कोशादिति भावः ।

परिभाषायाः फलितार्थमाह — **परस्परेति** । एतेनानन्वितानामेकसूत्रनिर्दिष्टानां सहानुवृत्त्याद्यभावेऽपि क्षत्यभावः सूचितः । किञ्च, अनेकसूत्रनिर्दिष्टानामपि परस्परान्वितानां सहैवानुवृत्तिनिवृत्ती इत्यपि । अत एव 'चिण् ते पदः' इत्यतोऽनुवृत्तस्य चिण्पदस्य 'न रुधः' इति सूत्रे नकारसम्बन्धितया प्रतीतत्वेन नकारस्याननुवृत्तेश्चिणोऽप्यनुवृत्तिर्न स्यादिति 'चिण्भावकर्मणोः' इति सूत्रे पुनश्चिण्ग्रहणं क्रियते । **सहैवेति** । न त्वन्यतरस्येत्यर्थः । **लोके** इत्यनेनास्य लोकन्यायसिद्धत्वमिति सूचितम् ।

वस्तुतः 'लिङ्सिचौ' इत्यतः सिजित्यनुवर्तमाने 'हनः सिच्' इति सिज्ग्रहणेन 'सुबामन्त्रिते' इत्यतः सुबित्यनुवर्तमाने 'सुप्प्रतिना' इति पुनः सुब्ग्रहणेन च ज्ञापकसिद्धत्वमित्यवधेयम् ।

---

१. 'उपमायां विकल्पे वा' इति कोशानुपूर्वी ।

**यत्तु—अत्र ज्ञापकम् 'नेड्वशि' इत्यत इडित्यनुवर्त्तमाने 'आर्द्धधातुकस्येड्' इत्यत्र पुनरिड्ग्रहणम्। तद्धि नेत्यस्यासम्बन्धार्थमिति। तत्, न; 'दीधीवेवीटाम्' इति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणस्यटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरोधात्। नञो निवृत्तिस्तु 'क्वचिदेकदेशोऽप्यनुवर्त्तते' इति न्यायेन सिद्धा।**

**वस्तुतस्तु 'दीधीवेवीटाम्' इति सूत्रस्थभाष्यमेकदेश्युक्तिः, 'आर्द्धधातुकस्य' इति सूत्रस्थेड्ग्रहणस्य 'नेड्वशि' इति सूत्रे भाष्ये प्रत्याख्यानात्, तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥**

---

भ्रान्तोक्तिं खण्डयति—**यत्त्विति**। **अत्रेति**। प्रकृतपरिभाषायामित्यर्थः। तत्त्वमुपपादयति—**तद्धीति**। पुनरिड्ग्रहणं हीत्यर्थः। **तत्रत्येति**। 'दीधीवेवी' इति सूत्रस्थेत्यर्थः। विकारान्तरस्येष्टत्वादाह—**गुणरूपेति**। **तद्विरोधादिति**। [यदि ?] नञोऽसम्बन्धार्थमेव 'आर्धधातुक' इति सूत्रस्थेड्ग्रहणस्य चारितार्थ्यसम्भवादिति भावः।

नन्वेतद्भाष्यविरोधपर्यन्तानुधावनक्लेशापेक्षया 'आर्धधातुक' इति सूत्रे नञोऽनुवृत्त्यसम्भवादेव ज्ञापकत्वस्यासम्भव इत्येव कुतो नोच्यते ? तथा हि—यदि 'आर्धधातुक' इति सूत्रे नञोऽपि सम्बन्धः स्यात्, तदेड्विधायकशास्त्राभावेन निषेधशास्त्रस्य निर्विषयत्वापत्तिः स्यात्, निषेध्याभावादिति चेत् ? न; बलादेरार्धधातुकस्येण् न भवतीति निषेधेनैव टकि लोप इव सामान्यतो धातुविहितप्रत्ययमात्रस्येड् भवतीति विधेरनुमानात्। 'आर्धधातुकस्य' इति सूत्रेण कृतामार्धधातुकानां यदीण्निषेधः, तर्हि वशादीनामेवेति 'नेड् वशि' इति सूत्रस्य नियमार्थत्वसम्भवात्। इत्थं भाष्यविरोधादस्य ज्ञापकत्वासम्भवेन लोकन्यायसिद्धैवेयमिति सिद्धम्।

नन्वेवं परिभाषा यदि लोकसिद्धा, तदाऽनयैव नञ्सम्बन्धस्य तत्रावश्यकत्वेनेड्ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणं गुणाभावार्थमिति कथनं विरुध्येतेत्यत आह—**नञो निवृत्तिस्तु**। इष्टानुरोधादेतन्न्यायस्य वक्ष्यमाणन्यायान्तरेण बाध इति भावः। एवञ्च प्रकृतपरिभाषाया विषय एव प्रकृते नास्तीति प्रकृतभाष्यमपि युक्तिमद्भवेत्।

भाष्यविरोधस्येष्टापत्तिं बोधयितुमाह—**वस्तुतस्त्विति**। **प्रत्याख्यानादिति**। नञो निवृत्तेरुक्तरीत्यैव सिद्धत्वात्। एवञ्च ज्ञापकत्वादिमते भाष्यविरोधः स्पष्ट एवेति भावः। **तत्करणेनेति**। 'आर्धधातुकस्य' इति सूत्रे इट्शब्दस्य करणेनेत्यर्थः। **गुरुतरयत्नमिति**। 'आर्धधातुकस्य' इति सूत्रे इट्करण पुनस्तस्येडेवेडिति विकारान्तरव्यावृत्त्यर्थं नियमार्थत्वस्य स्वीकरणं तत्। 'ग्रहीता, आतीत्' इत्यादौ दीर्घरूपविकारस्येष्टत्वाय 'ग्रहोऽलिटि दीर्घः' 'सिज्लोप एकादेशे' इत्यादिवचनसामर्थ्यस्वीकरणम्, 'पिपठीः' इत्यादौ 'र्वोः' इति दीर्घस्येडे-

ननु 'अलुगधिकारः प्रागानङः, 'उत्तरपदाधिकारः प्रागङ्गाधिकारात्' इत्यनुपपन्नम्, एकयोगनिर्दिष्टत्वात् । तथा 'दामहायनान्ताच्च' इत्यादौ 'संख्याव्ययादेः' इत्यतः संख्यादेरित्यनुवर्तते, अव्ययादेरिति निवृत्तमिति चानुपपन्नम्, अत आह—

**क्वचिदेकदेशोऽप्यनुवर्त्तते ॥ १८ ॥**

एकत्रार्थे योगः संबन्धः, तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति 'पक्षात्तिः' इति सूत्रे कैयटः ।

---

वेडिति नियमदृष्टयाऽसिद्धत्वेन व्यावृत्तिस्वीकरणमित्यादीत्यर्थः । अयुक्तत्वादिति । एवम्भूतगुरुतरयत्नमाश्रित्य 'आर्धधातुक' इति सूत्रे इट्करणं तदपेक्षया लघुतरयत्नमाश्रित्य 'दीधीवेवी' इति सूत्र एवेट्करणं युक्तम् । एवञ्च 'आर्धधातुक' इति सूत्रस्थेड्ग्रहणस्यैव प्रत्याख्यानं युक्तमिति भावः ॥ १७ ॥

एतत्परिभाषाया—अपवादसङ्गत्या परिभाषान्तरमवतारयति-नन्विति । एवमिति । सहैव प्रवृत्तिनिवृत्ती इत्यङ्गीक्रियमाण इत्यर्थः । एकयोगेति । इदमनुवृत्तिलब्धम् ।

अपिरुक्तार्थसमुच्चायकः । तथा च विरोधान्नैकत्रोभयम्, किन्तु क्वचित् तथा, क्वचिदेवं लक्ष्यानुरोधादिति फलितम् । तदेतदाह—क्वचिदेकदेशोऽप्यनुवर्तत इति ।

परिभाषाघटकैकदेशपदोपादानस्वारस्यसिद्धं कैयटप्रदर्शितं परिभाषार्थमाह—एकत्रार्थं इति । द्वन्द्वनिर्दिष्टयोरिति । यथा 'संख्याव्ययादेः' इत्यत्राव्ययपदम् ।

ननु द्वन्द्वस्य तदर्थस्य चैकत्वादेकदेशानुवृत्तिरनुपपन्नेति चेत्, सत्यम्; अर्थाधिकारपक्षेऽर्थस्यैकत्वाद् विच्छेदाभावान्न स्यादेकदेशानुवृत्तिः, तथापि शब्दाधिकारपक्षे द्वन्द्वस्यैकत्वेऽपि तदेकदेशमात्रे स्वरितत्वप्रतिज्ञासामर्थ्यात् तत्सदृशशब्दान्तरसन्निधानस्य योगान्तरे प्रतीत्या दोषाभावात् । कैयट इत्यभिधानमरुचिबोधनाय । यदि द्वन्द्वनिर्देशस्थल एवास्याः प्रवृत्तिः, तदा 'अलुगधिकारः प्रागनङः' इति प्रागुक्तव्यवस्थाया असङ्गतिरेव । किञ्च, 'औतोऽम्शसोः' इति सूत्रस्थभाष्यासङ्गतिश्च । तत्र हि 'वा सुपि' इत्यतः 'सुपीत्यनुवर्तते, वेति निवृत्तम्, अनेन न्यायेनेत्युक्तम् । किञ्च, अस्या असमासेऽपि प्रवृत्तिस्वीकारादेव 'आर्धधातुक' इति सूत्रस्थेड्ग्रहणप्रत्याख्यानपरभाष्यस्योपपत्तिः । एवञ्च पूर्वपरिभाषाघटकैकयोगपदवदेवैतत्परिभाषाघटकयोगपदस्यार्थो बोध्यः । एकदेशपदञ्च समुदायावयवैकशब्दपरमिति ।

परिभाषायां साधकमाह—तावन्मात्रांश इति । अनेनोभयपरिभाषायामपीदं बीजमिति सूचितम् ।

**तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम्। स्पष्टा चेयम् 'दामहायनान्ताच्च' इति सूत्रे 'ओतोऽम्शसोः' इति सूत्रे च भाष्ये पूर्वा च ॥ १८ ॥**

**ननु 'त्यदादीनामः' इत्यादिनेममित्यादावनुनासिकः स्यात्, अत आह—**

---

वस्तुतः कैयटोक्तिरपि प्रकृतार्थानुकूलैवेत्यवगन्तव्यम्। तथाहि—'पक्षात्तिः' इति सूत्रे भाष्ये 'कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तते, एकदेशो न'[1] इत्युक्तम्। एकसूत्रनिर्दिष्टानां पदानाम् 'उपदेशेऽजनुनासिकः' इत्यतोऽनुवृत्तिदर्शनेन 'अर्थवद्धातुः' इत्यतोऽर्थवत्पदानुवृत्तिदर्शनेन च यथाश्रुतभाष्यप्रमानुपपत्त्या समासनिर्दिष्टानामित्येव तदर्थो वाच्यः, न तु परस्परान्वितानामिति। समासे हि वृत्तिस्वभावाद् राजपुरुष इत्येतद्घटकराजपुरुषपदयोरपि राजसम्बन्धवत् पुरुष इत्यर्थे शक्तिरिति निर्विवादः। अत एव 'नामैकदेशे नामग्रहणम्' इत्युद्घोषः। एवञ्च 'पाकमूल' इत्येतद्घटकमूलपदस्य पाकानुकूलार्थकस्यार्थरहितस्य कथमनुवृत्तिः, अर्थाधिकारादिति प्रश्नः। एकत्रार्थे एकोपस्थितिरूपे युज्यमानसम्बन्धं यत् पदम्, तेन निर्दिष्टानां पदानां मध्ये एकदेशोऽर्थरहितोऽप्यनुवर्तते अनुमीयते, शब्दाधिकाराश्रयणादित्युत्तरम्। समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरिति तु प्रकृताभिप्रायेण पूर्वपक्षभाष्यव्याख्यानपरं बोध्यम्। तथा चैतस्येदं तत्त्वं समासेऽपि, तथानुवृत्तौ किमु वक्तव्यमसमास इति दिक् ॥ १८ ॥

ननु 'दीधीवेवी' इति सूत्रस्येड्ग्रहणप्रत्याख्यानस्य गुरुभूतत्वेनैकदेशयुक्तिस्वीकारेण भवितेत्यादाविटो गुणरूपविकारनिवृत्तावपि ग्रहणकशास्त्रप्राप्तदीर्घादिविकारान्तरव्यावृत्त्यर्थमिडेवेडिति नियमस्यावश्यकतया लघुभूतत्वेऽपि 'आर्धधातुकस्य' इति सूत्रस्थेड्ग्रहणप्रत्याख्यानपरभाष्यस्यैकदेशयुक्तित्वं युक्तमिति भ्रमरूपशङ्कायाः परिहारसङ्गत्या 'भाव्यमान' इति परिभाषामवतारयति नन्विति। इयमिति। प्रथमोपस्थितिकत्वादिभाविति तु नोक्तम्। तत्र सत्यप्यनुनासिके वृद्ध्या निरनुनासिके औकादेऽविशेषात्। एतद्ग्रन्थकर्तुर्मतेऽनुनासिकेचामभावादिति भावः। अनुनासिक इति। ग्रहणकसूत्रादिना तस्य ग्रहणे 'स्थानेऽन्तर०' इत्यनेनेति भावः। दीर्घस्तु नोक्तः, तस्य मकारात्यन्तविसदृशत्वात्।

**भाव्यमानेति।** भाव्यमानसमर्पकोक्तेरित्यर्थः।

नेयमपूर्वा, किन्तु सूत्रार्थसिद्धेत्याह—'अणुदित्' इति। अप्रत्यय इत्यनेनान्वयः। सामर्थ्यादिति। 'अप्रत्ययः' इत्यस्यारम्भबलादित्यर्थः।

ननु केन प्राप्तं निषिध्यत इति चेदाह—**सूत्रेति।** 'अणुदित्' इति सूत्रेणेत्यर्थः। इदम् 'व्यक्तिः पदार्थः' इति पक्षे। जातिपक्षे त्वाह—**जातीति।** व्यक्तिपक्ष एवानणसाधारण्येनाह—**गुणेति** च। **प्राप्तमिति।** प्राप्तं चेत्यर्थः। सवर्णानां

---

1. **'कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तेत, एकदेशो वा निवर्तेत' इति भाष्यानुपूर्वी।**

**भाव्यमानेन सवर्णानां ग्रहणं न ॥ १६ ॥**

**'अणुदित्० सूत्रेऽप्रत्यय इत्यनेन सामर्थ्यात् सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः। अत एवाणुदित्सूत्रे प्रत्ययादेशागमेषु सवर्णग्रहणाभावं प्रकारान्तरेणोक्त्वैवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञापयति भवत्येषा परिभाषा 'भाव्यमानेन सवर्णानां ग्रहणं न' इति।**

**किञ्च, 'ज्याद ईयस' इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादादिति दीर्घोच्चारणमस्या ज्ञापकम्।**

**अणुदित्सूत्रे 'ज्यादात्' इति सूत्रे च भाष्ये स्पष्टैषा।**

---

ग्रहणमिति भावः। 'अणुदित्' सूत्रेऽप्रत्यय इत्येतत्सामर्थ्येनैकदेशानुमत्या प्रत्ययागमादेशेषु त्रिधा सवर्णानां ग्रहणं प्राप्तं नेति यावत्।

वस्तुतो गुणाभेदकत्वेन प्राप्तमनया न निषिध्यते। तच्च 'गुणाभेदकाः' इति परिभाषाव्याख्यावसर एवोपपादयिष्यामः। ननु'अप्रत्ययः'इत्यनेन प्रत्ययस्य सवर्णाग्राहकत्वमित्यर्थस्यैव लाभादेकदेशानुमत्या परिभाषाया ज्ञापकत्वे किं मानमिति चेत्, तदाह—**अत एवेति**। एकदेशानुमत्या परिभाषायां ज्ञापकत्वस्वीकारादेवेत्यर्थः। **प्रकारान्तरेणेति**। प्रत्ययस्थले प्रत्ययस्यान्वर्थसंज्ञयैव सवर्णग्रहणव्यावृत्तिः। यथा 'जिगमिषुः' इत्यादौ प्रत्ययसंज्ञकेन ह्रस्वेनैव कर्त्रर्थावगतिः, न तु दीर्घेणेति भावः।

आगमस्थले यदि सवर्णानां ग्रहणं भवेत्, तर्हि 'आर्धधातुक' इतीड्विधायकेनैव 'वरिता, वरीता' इति रूपसिद्धौ 'वृतो वा' इत्यस्य वैयर्थ्यं स्यात्। तथा च तत्रानेन वैकल्पिकदीर्घविधानेनैव सवर्णग्रहणव्यावृत्तिः, आदेशस्थले यदि सवर्णानां ग्रहणं स्यात्, तर्हि 'ई हल्यघोः' इति दीर्घनिर्देशस्य वैयर्थ्यापत्तिः, तत्र 'श्नाभ्यस्तयोरातः' इत्यतोनुवृत्तस्यातः स्थाने 'अन्तरतम' परिभाषयैव दीर्घसिद्धेः, इत्येवम्भूतेन प्रकारान्तरेणेत्यर्थः। एवञ्च 'अप्रत्यय' ग्रहणं व्यर्थमेवेति भावः। सिद्धे इति। सूत्रमतेऽपि सिद्धे इत्यर्थः।

ननु प्रकारान्तरेणैवेष्टसिद्धौ 'अप्रत्यय' ग्रहणबोधित 'भाव्यमानेन' इति परिभाषाश्रयणक्लेशो व्यर्थ इति चेत्, न; तवेद्ज्ञापकाद्याश्रयणस्य गुरुभूतत्वेन लाघवात् 'अप्रत्यय' ग्रहणबोधितवचनाश्रयणस्यैव युक्तत्वात्, अत आह—**यदप्रत्यय** इति। **ज्ञापयतीति**। एवङ्कथनेन अप्रत्ययस्येत्येकदेशानुमतिद्वारोक्तपरिभाषां वोधयतीत्यर्थः। प्रत्ययशब्दस्य च प्रत्ययसंज्ञकपरत्वमेवेति ध्वनितम्। एवञ्चैतदर्थबोधकत्वेनैवाप्रत्ययग्रहणस्य सार्थक्यमिति नान्यत्रेव ज्ञापकत्वमिति भावः। 'नेति' इत्यस्येत्युक्तभाष्ये उक्तमिति शेषः।

ज्ञापकसिद्धत्वमप्यस्या अस्तीति तदेवाह—**किञ्चेति**। **आन्तर्यत** इति।

**'चोः कुः' इत्यादौ भाव्यमानेनापि सवर्णग्रहणम्, विधेये उदिदुच्चारणसामर्थ्यात्। एतदेवाभिप्रेत्य भाव्यमानोऽण् सवर्णान्न गृह्णातीति नव्याः पठन्ति ॥ १९ ॥**

**नन्वेवम् 'अदसोऽसेः' इत्यादिना 'अमू' इत्यादौ दीर्घविधानं न स्यात्, अत आह—**

**भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥ २० ॥**

**'दिव उत्' 'ऋत उत्' इति तपरकरणमस्या ज्ञापकम्। 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टैषा ॥ २० ॥**

---

प्रमाणत इत्यर्थः। **ज्ञापकमिति।** ननु ज्ञापितेऽपि स्वांशे चारितार्थ्याभावः, 'बहोर्लोपः' इत्यतोऽनुवृत्तेन लोपेनैव ह्रस्वाकारविधानसाध्य'ज्यायान्' इति रूपसिद्धेर्ह्रस्वाकारविधानसामर्थ्यादेव रूपं बाधित्वा सवर्णदीर्घेण रूपसिद्धेरिति चेत्, न; लोपे सति 'अकृत्सार्वधातुकयोः' इत्यस्य प्रवृत्त्या 'ज्यायान्' इति रूपम्, ह्रस्वाकारविधाने तु 'ज्ययान्' इति रूपमिति फलभेदेन ह्रस्वाकारविधानसामर्थ्याभावादिति भावः। न च लोपेऽपि 'अङ्गवृत्त' परिभाषया 'अकृत्सार्वधातुकयोः' इत्यस्याप्रवृत्त्या ह्रस्वाकारविधानसामर्थ्येनैवेष्टसिद्धौ दीर्घविधानस्य स्वांशे चारितार्थ्याभावरूपदोषस्तदवस्थ एवेति वाच्यम्, 'भाव्यमान' परिभाषाज्ञापनोत्तरमेव अङ्गवृत्तपरिभाषाया ज्ञापकत्वमित्याशयात्। 'अङ्गवृत्तपरिभाषाज्ञापनोत्तरं भाव्यमानपरिभाषाज्ञापकत्वे तु दीर्घग्रहस्य स्वांशे चारितार्थ्यं दुर्वचमेवेति बोध्यम्।

वस्तुतः 'अङ्गवृत्त'परिभाषाया नव्यसिद्धान्ते असत्त्वादाद्ग्रहणस्यस्पष्टार्थतया ज्ञापकत्वासम्भवात् 'ई हल्यघोः' इत्यत्र दीर्घोच्चारणस्य ज्ञापकत्वं बोध्यम्। 'चोः कुः' इति उदिदुच्चारणसामर्थ्यान्नात्र परिभाषाप्रवृत्तिरिति भावः॥ १९ ॥

एतत्परिभाषापवादसङ्गत्या परिभाषान्तरमवतारयति—**नन्वेवमिति।** तादृशेऽपि सर्वथा निषेध इत्यर्थः। ननु 'अदसोऽसेः' इति सूत्रे 'उ' इति समाहारद्वन्द्वेनैव निर्वाहे परिभाषाश्रयणमयुक्तमिति चेत्, न; 'उस् ऊस्' इति समाहारद्वन्द्वे सुलोपे ध्यन्तत्वाद् ह्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्याऽनित्यत्वेन नित्यत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वे, ततः सवर्णदीर्घेण 'उ' इति रूपासिद्धेः।

अस्यां ज्ञापकमाह—**दिव उदिति।** ननु तपरत्वाभावेऽप्यर्धमात्रिकस्य वकारस्येषत्सादृश्येनैकमात्रिक एवोकारो 'द्युभ्याम्' त्यादौ भविष्यतीत्यतः स्वांशे चारितार्थ्याभावान्नेदं ज्ञापकं युक्तमिति चेत्, न; 'व्रश्च०; इति सूत्रे छग्रहणाकरणलाघवाय 'छ्वोः शूड्०' इति सूत्रे किद्ग्रहणाननुवृत्तिपक्षे 'द्युयानम्' इत्यादौ झलादिप्रत्ययपरत्वाभावेन 'छ्वोः शूड' इत्यास्याप्राप्त्या 'दिव उत्'

इत्यस्य चारितार्थ्येन 'अक्षद्यूः इत्यादौ दिवः सानुबन्धकत्वेन 'दिव उत्' इत्यस्याप्राप्त्या 'छ्वोः शूड्' इत्यस्यचारितार्थ्येन च द्युभ्याम् इत्यत्रोभयोः प्राप्तयोः परत्वादाङ्गत्वाच्चोठि कृतेऽपि 'पुनः प्रसङ्गविज्ञान' न्यायेन द्विमात्रिकस्याप्येकमात्रिक एवादेशो यथा स्यादिति चारितार्थ्यसंभवात्।

किञ्च, किद्ग्रहणानुवृत्तिपक्षेऽपि दिवयतेः क्विपि अल्लोपयलोपरूठिभ्यामि द्युभ्यामित्यादौ चारितार्थ्यसंभवात्। न चाल्लोपस्य स्थानिवद्भावेनोठ् न स्यादिति वाच्यम्, क्वौ विधिम्प्रति तन्निषेधात्। न चाल्लोपस्य स्थानिवद्भावेन पदत्वाभावात् 'दिव उत्' इत्यस्याप्राप्तिरिति वाच्यम्, 'दिव उत्' इति कर्तव्ये ऊठः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात् स्थानिवद्भावाप्रवृत्तेः।

ज्ञापकान्तरप्याह—ऋत उदिति। अत्रान्तरतभ्याद् ऋकाराकारयोः स्थाने प्राप्तदीर्घव्यावृत्त्या तपरकरणं चरितार्थमिति भावः। न च 'पितू राज्यम्' इत्यादौ 'ढ्रलोपे' इति दीर्घबाधनार्थं तपरत्वमिति वाच्यम्, 'सवितू रश्मयो यथा, इति रामायणप्रयोगविरोधात्, 'उरण् रपरः' इति सूत्रेण ग्रहणाभावे ऊरपर इति भाष्यविरोधाच्च।

नन्वेवम् 'उदुपधाया गुहः' इत्येव सिद्धे। 'ऊदुपधाया गोहः' इति दीर्घोच्चारणं विकृतनिर्देशश्च व्यर्थं इति चेत्, न; अन्त्ये 'तक्रकौण्डिन्य'न्यायेन गुणोत्तर चारितार्थेन उत्वेन गुणं बाधित्वोकारादेशे 'गूहति' इत्याद्यसिद्धेः। न च 'क्ङिति च' इति निषेधेन गुणा प्राप्तियोग्ये 'जुगहतुः' इत्यादावुकारादेशस्य चारितार्थ्यात् कथम् 'तक्रकौण्डिन्य'न्यायेन बाध इति वाच्यम्, तत्र उकारादेशस्य ······[फलाभावेन] तदर्थं तस्यानारम्भात्। किञ्च, निषेधेनापि तत्प्राप्तियोग्यतानपायात्। तेनापि न स इत्यन्यदेतत्।

अत एव सम्बुद्धौ नलोपनिषेधेन रुत्वस्य चारितार्थ्येऽप्यपवादो रुर्नलोपं बाधिष्यत इति भाष्यसङ्गतिः। न च वैयर्थ्यम्, गुणबाधेन कृतार्थत्वात्। न च तावत् प्रयोजकत्वे 'दीधीवेवी' इत्यनन्तरं पाठेनैव सिद्धाविह पाठकरण व्यर्थमेवेति वाच्यम्, लाघवाभावात्, पाठस्याशोकवनिकान्यायेन चारितार्थ्याच्च। किञ्च, 'गोह्यम्' इत्यादौ हलादावपि गुणनिषेधापत्तेः।

आद्ये गुहेर्हेतुमणण्यन्ताच्चङि द्वित्वबाधकह्रस्वादण्यन्तरङ्गत्वेन गुणे ऊत्वे च 'णौ चङि' इति ह्रस्वनिवृत्त्या चारितार्थ्यात्। कुरुत इत्यत्र उदिति परत्वेन गुणाप्रवृत्तिवत्। अत एव 'ऊदुपधायाः' इति सूत्रे 'उ ऊ' इति प्रश्लेषेण 'गोहः' इति विकृतनिर्देशो भाष्ये प्रत्याख्यातः। अजुगूहदित्यर्थे प्रश्लेषस्यावश्यकत्वात्। न च उत्वदृष्ट्या 'णौ चङि' इति ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वेन बाधासंभव इति वाच्यम्, ऊदिति दीर्घोच्चारणसामर्थ्येनोक्तभाष्यबलेन बहिरङ्गस्याप्युपधात्वनिमित्तकस्य ह्रस्वस्य बाधकल्पनादिति केचित्। तत्, न; 'ऊ' इति दीर्घो-

च्चारणेन बहिरङ्गस्याप्युपधाह्रस्व [स्य] बाधापेक्षयोक्तपरिभाषाया अभाव-कल्पनात्। उक्तपरिभाषायाः फलस्याप्यन्यथासिद्धिरग्रे वक्ष्यते। किञ्च, 'गोहः, दोषः' इति विकृतनिर्देशस्य प्रश्लेषेण प्रत्याख्यानाय दीर्घोच्चारणस्यावश्य-कत्वात्।

धर्मिग्राहकमानादादेशविषयैवेयम्। तेन 'सनाशंसभिक्ष उः' 'तनादिकृ-ञ्भ्य उः' इत्यादौ न दोषः। यद्यपि दीर्घेणार्थस्याभिधानं नास्ति, सिद्धाना-मेव शब्दानामन्वाख्यानमिति 'अणुदित्' सूत्रभाष्यान्न दोषः, तथापि लक्षणैक-चक्षुष्कानस्मान् प्रति प्रवृत्तं शास्त्रमिति बोध्यम्।

वस्तुतस्तु 'अदसोऽसेः' इति सूत्रे 'उ' इति समाहारद्वन्द्वनिर्देशेनैवेष्टसिद्धौ व्यर्थेयं परिभाषा, फलान्तरानुपलब्धेश्च। न च पूर्वोक्तरीत्या समाहारद्वन्द्वे 'उ' इति रूपासिद्धिरिति वाच्यम्, 'ह्रस्वो नपुंसके' इति सूत्रे प्रातिपदिकग्रहणसाम-र्थ्यादेतद्विहितह्रस्वविषये 'लक्ष्ये लक्षणस्य' इति न्यायाप्रवृत्तिः। तद्धि 'श्रीपम्' इत्यादौ सत्त्वप्रधानकप्रातिपदिकस्यैव ह्रस्वो यथा स्यात्। 'काण्डे तिष्ठति' इत्यादावादेशस्य पूर्वान्तवद्भावेन प्रातिपदिकत्वेऽपि कारकप्रधानकत्वेन सत्त्व-प्रधानकत्वाभावाद् ह्रस्वो मा भूदित्येतदर्थम्।

यदि तु नपुंसकह्रस्वविषये 'लक्ष्ये लक्षणस्य' इति न्यायस्य प्रवृत्तिः, तदाऽनेनैव न्यायेन 'काण्डे' इत्यादौ पुनर्ह्रस्वाप्रवृत्तौ प्रातिपदिकग्रहणस्य वैयर्थ्यं स्पष्टमेव। न च समाहारद्वन्द्वनिर्देशे प्रमाणाभाव इति वाच्यम्, 'अदसो मात्' इति सूत्रस्यैव प्रमाणत्वात्। न च 'अदसो मात्' इति ईकारस्य प्रगृह्यसंज्ञार्थमेव स्यादिति वाच्यम्, तथा सति 'अदस ईत्' इत्येव सिद्धे उकारसंग्राहक 'मात्' इति गुरुनिर्देशासङ्गतेः। न चैवम् 'अमू' इत्यादौ स्थान्यनुरूपोदात्तादिगुणविशि-ष्टोकारविधानं न स्यात् 'भाव्यमानेन' इति निषेधादिति वाच्यम्, गुणाभेद-कत्वेन प्राप्तस्य स्वरस्य 'भाव्यमान' इत्यनेन निषेधाभावात्। किञ्च, उक्त-ज्ञापकेन 'अदसोऽसेः' इत्यत्रैवोकारः सवर्णान् गृह्णातीति विशेषवचनज्ञापनेना-दोषात्। 'तित्स्वरितम्' इति सूत्रस्थं भाष्यन्तु यदि भाव्यमानेन सवर्णानां ग्रहणं नोच्येत, 'अदसोऽसेः' इत्यत्र न प्राप्नोतीत्याशङ्कासमाधानोपायान्तरपरतया न विरोधमावहति, उपायस्योपायान्तरादूषकत्वात्।

**तित्स्वरितमितीति**। तत्र हि 'तिति प्रत्ययग्रहणं कर्तव्यम्' इह मा भूत्— 'ॠत इद्धातोः' किरति, गिरति' इति वार्त्तिकम् 'नैष तकारः, कस्तर्हि? 'दकारः' इति प्रत्याख्याय, यदि 'दकारः' तर्ह्यन्तिर्यतो दीर्घस्य दीर्घः प्राप्नोतीत्याशङ्क्य। [ 'अस्य फलं लोटि उत्क्रामेत्यत्र परस्मैपदपरे शिति 'क्रमः' इति दीर्घः। अत्र शबनिमित्तकमङ्गं तु सिब्निमित्तकमिति बोध्यम्। तेन ] 'भाव्यमानेन सवर्णानां ग्रहणं न इत्येवं भविष्यति' इति समाधाय, पुनः, 'यदि भाव्यमानेन सवर्णानां

१. कोष्ठान्तगतः पाठः प्रकरणासम्बद्धः प्रक्षिप्त इव प्रतिभाति।

**ननु 'गवे हितं गोहितम्' इत्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिः, अत आह--**

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥**

**वर्णप्राधान्यविषयमेतत् ।**

---

ग्रहणं न' इत्युच्यते 'अदसोऽसेर्दादुदोमः' 'अमूभ्याम्' इत्यत्र न प्राप्नोति, इत्याशङ्क्य, एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति 'भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहणम्- इति यदयम् 'दिव उत्' इति उकारं तपरं करोतीति' इत्युक्तम् ॥२०॥

वर्णस्य ज्ञापकत्वप्रसङ्गादन्यामपि वर्णविषये प्रवृत्तियोग्यां परिभाषामवतारयति-**ननु गवे हितमिति**। वाक्य इव समासेऽप्यायादयः स्युरिति भावः। आदिना 'रैकुलम्' इत्यादिपरिग्रहः। न च 'न लुमता०' इति निषेधेनैवात्रेष्टसिद्धिरिति वाच्यम्, प्रत्यासत्त्या लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञोदेश्यविधावेव तत्प्रवृत्तेरङ्गीकारात्। नन्वेवमपि 'गो ङे हितम्' इत्यवस्थायाम् 'अन्तरङ्गानपि विधीन्' इति न्यायेनान्तरङ्गावपीत्संज्ञालोपौ बाधित्वा विशिष्टस्य ङे इत्यस्य लुकि प्रत्ययलक्षणेन ङे बुद्धावप्यच्परत्वाभावादेव न स्युरायादयः। न च फलाभावात् 'अन्तरङ्गानपि' इति न्यायाप्रवृत्तिरिति वाच्यम्, अयादीनां निवृत्तेरेव फलत्वादिति चेत्, न; क्विलुगुपधात्व०' इति वार्त्तिके लुग्ग्रहणसामर्थ्यात् संज्ञाकार्ये 'अन्तरङ्गानपि' इति न्यायस्याप्रवृत्तेः। तद्धि लुग्ग्रहणं 'पञ्चेन्द्रः' इत्यादौ 'लुक् तद्धितलुकि' इति लुप्तस्य स्त्रीप्रत्ययस्य ङीषः 'अचः परस्मिन्' इत्यनेन प्राप्तस्य स्थानिवद्भावस्य निषेधार्थम्। सति हि स्थानिवद्भावे ईवर्णपरत्वेन 'यस्येति च' इति इन्द्रशब्दावयवाकारस्य लोपः स्यादिति भावः। यदि त्वित्संज्ञा लोपविषयेऽपि 'अन्तरङ्गानपि' इति न्यायस्य प्रवृत्तिः, तर्हि विशिष्टस्य लुकोऽजादेशाभावादेव 'अचः परस्मिन्' इत्यस्याप्रवृत्त्या स्थानिवद्भावाप्राप्तौ तदर्थं लुग्ग्रहणस्य वैयर्थ्यं स्पष्टमेव। अत एव 'पाञ्चदेवदारवम्' इत्यादौ पञ्चदेवदारुशब्दात् 'ओरञ्' इत्यनेन अञि, तस्य 'द्विगोः' इति लुकि, 'ञितश्च' इत्यत्रादिसिद्धिः।

**वर्णाश्रये** इति। वर्णाश्रये विधौ कर्तव्ये इति शेषः। वर्णाश्रय इति बहुव्रीहिः।

नन्वेवम् 'अतृणेट्' इत्यादाविमादिर्न स्यात्, तत्र 'हलादौ पिति' इति विशेषणतया वर्णस्याश्रयणादित्यत आह--**वर्णप्राधान्येति**। तत्त्वञ्च मूल एव स्फुटम्। आर्थमेतत्। तथाहि वार्त्तिककारमतेऽनल्विधाविति निषेधे प्राप्ते विध्यर्थं प्रत्ययलक्षणसूत्रम्। यदि तु, वर्णप्राधान्येऽप्यनया तस्याप्रवृत्तिः, तर्हि प्रत्ययलक्षणसूत्रमेव निरर्थकं स्यादिति भावः।

नन्वस्याः परिभाषायाः सत्त्व एव किम्मानमिति चेदाह—**तत्त्वञ्चेति**। वर्णाश्रये प्रत्ययलक्षणाप्रवृत्तिमत्त्वञ्चेत्यर्थः। एतस्य सिद्धमित्यत्रान्वयः।

**तत्त्वं च 'प्रत्ययलोपे' इति सूत्रे 'स्थानिवत्' इत्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत् सिद्धम् ।**

---

**स्थानिवदित्यनुवृत्त्यैव सिद्धे** इति । प्रत्ययलक्षणसूत्रस्य वर्णप्राधान्याप्राधान्यसाधारणविषयकत्वे तु प्रत्ययस्य लोपे स्थानिवत्कार्यं भवतीत्यर्थेनैव सिद्धमित्यर्थः । **प्रत्ययस्येतराविशेषणत्वरूपमिति** । प्रत्ययादितरो वर्णः, तन्निरूपितं प्रत्ययस्य विशेषणत्वाभावरूपमित्यर्थः । **यत्रेति** । यस्मिन् विधावित्यर्थः । **तत्रैवेति** । तादृशप्रत्ययाश्रयविधौ कर्तव्य एवेत्यर्थः । **प्रवृत्त्यर्थमिति** । प्रत्ययलक्षणसूत्रस्येति शेषः । **इत्येतत् सिद्धमिति** । इत्येतेन सिद्धमित्यर्थः । एतेन प्रत्ययप्राधान्ये वर्णप्राधान्यं नैव सम्भवतीत्यर्थसिद्धैवेयं परिभाषेति सूचितम् ।

नन्वेवमपि 'गोहितम्' इत्यादौ दोषस्तदवस्थ एव । तत्र प्रत्ययस्येतराविशेषणत्वरूपप्राधान्यस्य सत्त्वादिति चेत्, न; 'प्रत्ययलोपे तल्लक्षणम्' इत्येव सिद्धे पुनः प्रत्ययग्रहणात् प्रत्ययत्वव्याप्यधर्मावच्छिन्नस्येतराविशेषणत्वमिति तदर्थात् । अयादौ त्वच्त्वेनाश्रयणं प्रत्ययस्य, न तु प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वेनेति न दोषः ।

**केचित्तु**—अयादौ 'तस्मिन्' इति परिभाषया पूर्वस्येत्युपस्थित्याऽचः पूर्वत्वनिरूपितविशेषणत्वेन न दोष इत्युक्त्वा, एवं हि 'सर्वनामस्थाने चासम्बुद्धौ' 'ह्रस्वस्य गुणः' इत्यादावपि प्रत्ययलक्षणसूत्राप्रवृत्त्यापत्तिः । तदर्थं सामानाधिकरण्यसम्बन्धेनेतराविशेषणत्वरूपं प्रत्ययस्य प्राधान्यमित्यर्थस्वीकारे तु 'गोहितम्' इत्यादौ दोषतादवस्थ्यात् । चित्रेत्यादौ तु 'अणो योऽकारः' इत्यर्थेऽकारं प्रति सामानाधिकरण्येनाणो विशेषणत्वाभावाच्चेत्युक्त्वा, 'सर्वनामस्थाने चासंबुद्धौ' इत्यादौ स्थानिवद्भावेन सिद्धमित्युक्त्वा, सामानाधिकरण्येन वैयधिकरण्येन वेतराविशेषणत्वमिति सिद्धान्तितम् । तेषां मते 'तृणह इम्' इत्यादौ सार्वधातुके पूर्वस्येत्यर्थेन प्रत्ययस्य विशेषणत्वाद् दोषस्य दुर्वारत्वात् । तथा चेतराविशेषणत्वमित्रेतरपदेनातिदिदिक्षितेतरनिरूपितविशेषणत्वाभाववत्त्वं गृह्यते । तेन चित्रेत्यादौ अण्द्वाराऽकारस्याप्यतिदिदिक्षितत्वात्, तं प्रत्यणादेर्विशेषणत्वाद् न दोषः । 'गोहितम्' इत्यादौ तु परिभाषया लब्धपूर्वत्वस्यानतिदिदिक्षितत्वाद् दोषाभाव इति निष्कृष्टार्थः ।

वस्तुतः प्रत्ययप्राधान्यञ्च स्वघटकनिरूपितविशेष्यत्वम् । अस्ति च 'तृणह इम्' इत्यादौ इलादौ सार्वधातुक इत्यादि । 'टिड्ढा०' इत्यादौ अण् योऽकार इति व्याख्यानात् तथा नास्तीति न प्रत्ययलक्षणम्, न च टितो योऽकार इति व्याख्याने टकारनिरूपितविशेष्यत्वं प्रत्ययस्यास्तीति हलादौ सार्वधातुक इव तत्रापि प्रत्ययलक्षणापत्तिरिति वाच्यम्, स्वघटकनिरूपितविशेषणत्वाभाववत्त्वे सति स्वघटकनिरूपितविशेष्यत्वमिति तदर्थात् । वस्तुतष्टित्प्रत्ययस्य लोपाभावात् पूर्वोक्तमेव प्रत्ययप्राधान्यं युक्तमिति दिक् ।

**वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं च। तेन 'गोहितम्' इत्यादाववादि न, 'चित्रायां जाता चित्रा' इत्यादावण्योऽकारस्तदन्तान् ङीबिति ङीप् च न।**

**इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥**

---

**वर्णस्येतरेति**। वर्णस्येतरनिरूपितविशेषणाभाववत्त्वं तत्त्वमित्यर्थः।

नन्वेवं 'गोहितम्' इत्यादिसिद्धावपि 'चित्रा' इत्यादौ ङीबापत्तिः, अकारस्य प्रातिपदिकविशेषणत्वात्। अत आह-**प्रत्ययनिरूपितेति**। 'चित्रा' इत्यत्र 'सन्धिवेलात्' इति जातार्थेऽण, तस्य 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' इति लुक्।

वस्तुतो वर्णप्राधान्यं तु वर्णस्य प्रत्ययनिरूपितविशेषणाभाववत्त्वम्। तेन 'कण्ठश्रितम्' इत्यादौ न दोषः। मूलोक्तयथाश्रुतार्थस्वीकारे तु 'मोऽनुस्वारः' इत्यादौ मकारस्य पदविशेषणत्वेन प्रत्ययलक्षणसूत्रप्रवृत्त्यानुस्वारापत्तिः स्यादिति भावः। अत एव चित्रेत्यादौ अण् योऽकारः, तदन्तात् प्रातिपदिकात् ङीबित्यर्थेऽकारस्य प्रातिपदिकनिरूपितविशेषणत्वेऽपि प्रत्ययनिरूपितविशेषणत्वाभावान्न वर्णप्राधान्यहानिः। मूलार्थस्तु यथाकथञ्चित् फलितार्थपरतया नेयः। इत्थञ्चैतत् फलितम्—यत्र प्रत्ययनिरूपितं वर्णस्य विशेषणत्वम्, तत्र प्रत्ययप्राधान्यात् प्रत्ययलक्षणं भवति; यथा 'तृणह इम्' इत्यादौ हलादौ सार्वधातुके इत्यादीति। यत्र तु प्रत्ययनिरूपितं वर्णस्याविशेषणत्वम्, तत्र वर्णप्राधान्यात् प्रत्ययलक्षणं न भवति; यथा 'एचोऽयवायावः' इत्यादौ अचीति। 'टिड्ढाणञ०' इत्यादौ अण् योऽकार इति चेति।

ननु भाष्यकारमते 'अनल्विधौ' सर्वत्र प्राप्तस्य स्थानिवद्भावस्य प्रत्ययलोपे प्रत्ययस्यासाधारणरूपाश्रयणे 'अग्निचित्' इत्यादौ 'सुप्तिङन्तम्' इति पदसंज्ञाविधावेव स्थानिवद्भावो यथा स्यात्, प्रत्ययाप्रत्ययसाधारणाश्रये सुदृषद् ब्राह्मणः' इत्यादौ 'अत्वसन्तस्य' इति दीर्घविधौ स मा भूदिति नियमार्थं प्रत्ययलक्षणसूत्रम्। तेन वर्णाश्रये प्रत्ययलक्षणस्य प्राप्तिरेव नेतीयं व्यर्थैव परिभाषेति चेत्? ओमित्यङ्गीकुर्वन्नाह--**इयमिति**।

नन्वेवं तर्हि भाष्यमते 'अतृणेट्, मित्रशीः' इत्याद्यसिद्धिरेव, 'तृण ह त्' इत्यवस्थायां परमपीमागमं बाधित्वा नित्यत्वाद् हल्ङ्यादिलोपे हल्त्वस्य वर्णमात्रवृत्ति [त्वे] नानतिदेशात् 'तृणह इम्' इत्यस्याप्रवृत्तेः। एवं शास् क्विबवयव इत्यवस्थायां परमपीदादेशं बाधित्वा नित्यत्वादन्तरङ्गत्वाच्च 'वेरपृक्तस्य' इति वलोपे पूर्वोक्तयुक्त्या 'शास इदङ्हलोः' इत्यस्याप्रवृत्तिरिति चेत्! न; 'तृणह इम्' इत्यत्र हलीत्यस्यासम्बन्धात्। न च 'तृणहानि इत्यादावजादावपीमागमापत्तिरिति वाच्यम्, 'नाभ्यस्तस्याचि' इत्यतो नाचीत्यस्यानुवृत्तेः 'शास

**ननु 'अतः कृकमि' इत्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थम्, अत आह—**

## उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

---

इदङ्हलोः' इत्यत्र 'शास इत्' इति 'अङ्' इति च योगद्वयेन शास उपधाया इत् अजादौ चेदङ्येवेति द्वितीययोगस्य नियमार्थत्वेनैवेष्टसिद्धेः। एवञ्च 'शास इत्' इति सूत्रे हल्ग्रहणाकरणं लाघवमपीति बोध्यम्।

नन्वेवं तर्हि वार्त्तिकमते 'सुदृषद् ब्राह्मणः' इत्याद्यसिद्धिरेव, असः स्थानिवद्भावेनासन्तत्वात् 'अत्वसन्तस्य' इति दीर्घापत्तेः, 'सौमंनसो' इति स्वरापत्तेश्चति चेत्! न; आद्ये, अन्तग्रहणसामर्थ्यात् श्रूयमाणासन्ते एव तत्प्रवृत्तेः। अन्तग्रहणाभावे तु 'निर्दिश्यमान' परिभाषया निर्दिश्यमानासन्तावयवस्याचो दीर्घविधानात्। स्थानिवद्भावविषये निर्दिश्यमानपरिभाषा न प्रवर्तत इत्यस्य स्थानिवद्भावातिदिष्टस्यापि निर्दिश्यमानत्वमित्येवार्थात्। अन्त्ये, 'लोमोषसो' इति पर्युदासेन श्रूयमाणासन्ते एवं तत्प्रवृत्तेः। न च 'उषस्' शब्दादाचारेऽर्थे णिचि टिलोपे, ततः क्विपि पर्युदस्यमानवाक्येऽपि न श्रूयमाणासन्तत्वमिति वाच्यम्, तत्रान्तोदात्तत्वे आद्युदात्तत्वे वा फले विशेषाभावात्। **स्पष्टं भाष्य** इति। 'प्रत्ययलक्षण' सूत्रे भाष्ये इति शेषः॥ २१॥

इदानीं प्रत्ययप्रसङ्गेनोस्थितां परिभाषामवतारयति—**नन्विति। कमिग्रहणेनेति।** 'विष्वग् देवयोः' इति सूत्रेऽप्रत्ययग्रहणेनान्यत्र धातुग्रहणे तदादिविधिरित्यस्य ज्ञापितत्वादिति भावः।

**उणादय** इति। उणाद्यन्तानीत्यर्थः। **अव्युत्पन्नानीति।** प्रकृतिप्रत्ययभागकल्पनाद्वारकशब्दसंस्काररहितानीत्यर्थः।

**इदमेवेति।** कंसग्रहणमेवेत्यर्थः।

**यत्तु**, उणाद्यन्तानां कृदन्तत्वात् 'कृत्तद्धित' इति प्रातिपदिकत्वे सिद्धे 'अर्थवत्' सूत्रमस्यां परिभाषायां ज्ञापकमिति। तत्, न; 'बहुपटवः' इत्याद्यर्थं तस्यावश्यकत्वात्। न च तावन्मात्रफलकत्वे 'बहुच्पूर्वः' इत्येव सूत्र्यतामिति वाच्यम्, मूलकेनोपदंशमित्यादावप्यतिप्रसङ्गात्। न च समासग्रहणनियमेन निर्वाहः, 'अर्थवत्' सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगात्। ननु नेदं ज्ञापकं युक्तम्, कंसेरच्यपि कंस इति सिद्धेः, अत आह—**कंसेस्त्विति। न कंस** इति। न कंसशब्द इत्यर्थः। **अनभिधानादिति।** 'कमेः स कंसः' इति भाष्योक्त्येति शेषः इत्यादावित्यादिना 'आयनेयी' इति सूत्रपरिग्रहः। 'प्रत्ययस्य लुक्' इति सूत्रे भाष्ये हि प्रत्ययग्रहणाभावे 'कंसीयपरशव्ययोः' इति सूत्रे प्रकृतेर्लुङ्निवृत्त्यर्थमवश्यम् 'छयतोः' इति वाच्यम्, यतः क्रियमाणेऽपि वै प्रत्ययग्रहणे कंसावयवस्य परशुशब्दावयवोकारस्य [च] लुग् मा भूदित्यभिधाय, अनया परि-

**इदमेवास्या ज्ञापकमिति कैयटादयः। कंसेस्तु न, कंसोऽनभिधानात्। 'प्रत्ययस्य लुक्' इत्यादौ भाष्ये स्पष्टा। 'ण्वल्तृचौ' इत्यादौ भाष्ये व्युत्पन्नानीत्यपि। इदं शाकटायनरीत्या। पाणिनेस्त्वव्युपत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम्। 'आयनेयी' इति सूत्रे भाष्ये स्फुटमेतत्।। २२।।**

---

हृतम्। 'सर्पिषा, यजुषा' इत्यादौ षत्वादिकार्यं तु कारुवाय्वादिशब्दानां व्याकरणान्तरीयरीत्या ज्ञातसाधुकानामस्मिन्नपि व्याकरणे साधुत्वाभ्यनुज्ञानार्थमारब्धे 'उणादयो बहुलम्' इति सूत्रे बहुलग्रहणेन साधनीयम्। 'अयामन्त' इति सूत्रेऽप्येतद्व्याकरणानुपात्तानामनुवादो व्याकरणान्तररीत्येति ज्ञेयम्। **ण्वल्तृचाविति।** तत्र हि तृचश्चकारस्य स्वरार्थत्वं निराकृत्य, विशेषणार्थः, तर्हि क्व विशेषणार्थेनार्थः? 'अप्तृन्तृच्' इति। तृ इत्युच्यमाने 'मातरौ, मातरः' इत्यत्रापि प्राप्नोतीति चकारग्रहणस्य प्रयोजनमापाद्य स्वसृनप्तृग्रहणं नियमार्थं भविष्यति—एतयोरेव योनिसम्बन्धयोः, नान्येषां योनिसम्बन्धानामिति तयोर्ग्रहणस्य प्रयोजनमङ्गीकृत्य निराकृतं भाष्यकृता। यदि तु 'अव्युत्पन्नानि' इत्येव सिद्धान्तः स्यात्, तर्हि तस्य तृप्रत्ययान्तत्वाभावात् तृ इत्युच्यमानेऽपि दीर्घाप्राप्त्या नियमार्थत्वमनुपपन्नं स्यादिति भावः।

वस्तुतो नायं सिद्धान्तः, अस्य भाष्यस्य मतान्तरेणापि योजनीयत्वात्। अत एव परस्परभाष्यविरोधोऽपि नेत्याह—**इदमिति।** व्युत्पन्नानीति यदुक्तं तदित्यर्थः। कः पुनः पाणिनिसंमतः पक्ष इत्यत आह—**पाणिनेस्त्विति। शब्देन्दुशेखरे इति।** 'उणादयो बहुलम्' इति सूत्र इति शेषः। पाणिनीयसिद्धान्तभूते 'अव्युत्पन्नानि' इति पक्षे 'उणादयः' इति सूत्रस्य [व्याकरणान्तरे] ये उणादिप्रत्ययान्ता व्युत्पादिताः, ते बहुलं वर्तमाने भूते वा साधवो भवन्तीति [अर्थः]।

**एतदिति।** उणादीनामव्युत्पन्नत्वमित्यर्थः। 'आयनेयी' इति सूत्रे भाष्ये हि 'शङ्खः, शण्ढः' इत्यादावुणादिप्रत्ययविषये 'आयनेयी' इति सूत्रेण प्राप्तादेशवारणाय तत्र 'उणादिप्रतिषेधः' इति वचनम्; धातोरीयङ्वचनात्; अथवा यदयम् 'ऋतेरीयङ्' इति धातोरीयङं शास्ति, तज्ज्ञापयत्याचार्यो न धातुप्रत्यया [ना] मायन्नादयो भवन्तीति। यदि हि स्युः 'ऋतेरच्छङ्' इत्येव ब्रूयादिति ज्ञापकं चान्यरीत्याश्रित्यग्रे 'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्' इत्युक्तम्।। २२।।

प्रत्ययप्रसङ्गादेवेदानीं प्रत्ययग्रहणपरिभाषायवतारयति **नन्विति। देवदत्तश्चिकीर्षति इत्यादाविति।** आनिना देवदत्तो गार्ग्यं इत्यस्य परिग्रहः। सन्नन्तत्वादीत्यादिना यञन्तत्वपरिग्रहः। धातुत्वादीत्यादिना 'देवदत्तो गार्ग्यः' इत्यत्र प्राप्तप्रातिपदिकत्वस्य संग्रहो बोध्यः। **आपत्तिरिति।** ततश्च 'सुपो धातु' इति लुगापत्तिरिति भावः। किञ्च, देवदत्तादेः सन्नन्तत्वप्रयुक्तद्वित्वापत्तिरित्यप्यवगन्तव्यम्।

**ननु 'देवदत्तश्चिकीर्षति' इत्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिः ! अत आह—**

**प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥२३॥**

**'यस्मात् प्रत्ययविधिः' इति सूत्रे यस्मात् प्रत्ययविधिस्तदादि प्रत्यय इति योगो विभज्यते। गृह्यमाण उपतिष्ठत इति शेषः। तेन तदाद्यन्तांशः सिद्धः।**

**तदन्तांशस्तु येन विधिरित्यनेन सिद्धः। स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे।**

---

परिभाषां समूलयति--**यस्मादिति**। **शेष इति**। तथा च प्रत्यये गृह्यमाणे यस्मात् प्रत्ययविधिः, तदादीत्युपतिष्ठत इति वाक्यार्थः सम्पन्नः। **तेनेति**। योगविभागेनेत्यर्थः। **तदाद्यन्तांश इति**। तदादेरित्यन्तः समुदायघटकोऽवयवः सिद्ध इत्यर्थः।

परिभाषाघटकावशिष्टभागलाभोपायमाह--**तदन्तांशस्त्विति**।

ननु प्रत्ययग्रहणे यत्र विशेष्यानुपादानम्, कथं तत्र तदन्तविधिलाभः? अत आह--**स चेति**। तदन्तविधिरित्यर्थः। **शब्दस्वरूपमिति**। यद्यपि प्रत्ययग्रहणे तदादेरित्युपस्थितविशेष्यमादाय तदन्तविधिः, अन्यत्र तु शब्दस्वरूपमिति वक्तुं युक्तम्, तथापि तदादीत्यस्याङ्गसंज्ञासूत्रे प्रत्यये परतस्तद्विधानावध्यादिरूपस्य ग्रहणेन परिभाषायामपि तद्ग्रहणस्यौचित्येन 'वनो र च' इत्यादौ तेन सामानाधिकरण्यासम्भवाच्छब्दस्वरूपं विशेष्यमादायैव तदन्तविधिरित्याशयात्। अत एव 'एङ्ह्रस्वात्' इत्यत्रोक्तं प्राचीनप्रघट्टकशेखरादि सगच्छते। अन्यथा कुलेत्यादिसिद्धये व्यधिकरणान्वयस्यावश्यकत्वेन 'एकदेशविकृत' न्यायेन 'कतरत्' इत्यादौ रेफान्ते प्रकृतित्वसत्त्वेनाकारान्ते तदादित्वलाभेन च हलो लोपापत्त्या प्राचीनोक्तरीतेरावश्ययकत्वेन तदसङ्गतिः स्पष्टैव।

वस्तुत उपस्थिततदादेरेव विशेष्यत्वं युक्तम्। हल्ङ्याादिसूत्रे शब्देन्दुशेखरे 'वहुश्रेयसी' इत्यादौ सोर्लोपसिद्धये ङ्याब्भ्यामुपस्थिततदादेर्विशेष्यत्वमादाय तदन्ततां संसाध्य पुनः सुतिसीत्येतदुपस्थितस्य यस्माद्विहितस्तदादेरित्यस्य विशेष्यत्वेन द्वितीयतदन्तविधेरुक्तत्वात्, अङ्गसंज्ञाविधायके 'प्रत्यये' इत्यस्यौपश्लेपिकाधिकरणसप्तमीत्वेन तत्र प्रत्ययप्राग्वर्तितदादित्वस्य ग्रहणेऽपि अत्र तादृशतदादित्वस्य ग्रहणे मानाभावाच्च। 'हे कतरत्' इत्यादौ लोपाभावस्तु एङ्साहचर्यात् सम्बुद्धचनवह्रस्वात् परस्यैव हलो लोप इत्यर्थेन बोध्यः।

मूलकारस्याप्ययमेवाभिप्रायः। 'स च शब्दस्वरूपं विशेष्यमादाय' इति ग्रन्थस्तु तथा [ दा ] दरित्यस्यापि शब्दस्वरूपपरत्वान्नेय इति बोध्यम्। **विशेष्यान्तरासत्त्वे इति**। सति गमके इत्यपि बोध्यम्। इदं प्रत्ययग्रहणातिरिक्तस्थलविषयकम्। यथा 'सर्वादीनि सर्वनामानि' इत्यादौ 'द्वन्द्वे च' इति

**यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात् तद्विशेषणत्वेन तदन्तविधिरिति। तत्, न; 'इयान्' इत्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासंभवात्।**

**यत्र प्रत्ययो निमित्तत्वेनाश्रीयते, तत्र तदादीत्यन्तांशमात्रोपस्थितिरिति 'अङ्गस्य' इति सूत्रे भाष्यकैयटयोः।**

---

ज्ञापकाच्छब्दस्वरूपं विशेष्यमादाय तदन्तविधिः। प्रत्ययग्रहणस्थले तु 'नित्यं समासे' इति सूत्रेऽनुत्तरपदग्रहणसामर्थ्यादुपात्तविशेष्यान्तरसत्त्वेऽपि तदादिरूपशब्दस्वरूपं विशेष्यमादाय तदन्तविधिरेकः, पुनरुपात्तविशेष्येण सह द्वितीयस्तदन्तविधिः। यथा 'वनो र च' इत्यादौ। तत्र हि प्रातिपदिकरूपविशेष्यान्तरसत्त्वेऽपि तदादिरूपशब्दस्वरूपविशेष्येणैकस्तदन्तविधिः। तेन 'धीवरी, अतिधीवरी' इत्यादिसिद्धिः। प्राच उक्तिं खण्डयति--**यत्त्वित्यादिना**। स्वम्=प्रत्ययः प्रकृतिश्च, एताववयवौ यस्य, तस्य=प्रकृतिप्रत्ययविशिष्टसमुदायस्येत्यर्थः। आक्षेपे बीजं तु प्रत्ययस्य प्रकृत्यव्यवहितोत्तरत्वनियमेन प्रत्ययज्ञानस्य तादृशसमुदायाक्षेपकत्वमित्यभिमानः। **आक्षेपासम्भवादिति**। यदि प्रत्ययः स्वप्रकृत्यव्यभिचारी स्यात्, तदा तामाक्षिपन् तत्समुदायमाक्षिपेत्? नैव सम्भवति 'इयान्' इत्यादौ स्वप्रकृतिमन्तरापि केवलस्य प्रत्ययस्य प्रयोगदर्शनात्। तस्माद् विशेष्यान्तरासत्त्वात् तदादिरूपशब्दस्वरूपविशेष्यादानमुपपन्नं भवतीति भावः।

वस्तुतस्तु प्रत्ययस्य स्वप्रकृत्यभिचारितत्वमस्त्येव। नहि 'इयान्' इत्यादावपि प्रकृतिमन्तरा उत्पन्नः सः। उत्पन्ने तस्मिन् शास्त्रवशात् तद्विघातेऽपि नहि तस्य तद्व्यभिचारित्वमिति। तस्मात् 'इयान्' इत्यादौ प्रकृतेरभावेऽपि प्रत्ययेनैव भूतपूर्वप्रकृतेरनुमानान्न व्यभिचारः।

**तस्येति। श्रूयमाणप्रत्ययस्येत्यर्थः समुदायेनेति। सहेति शेषः।**

ननु 'सुपि च' इत्यादौ सुप् चरमावयवको यस्मात् सुप्विधिः, तदाद्यवयको यः समुदायः, तत्परकः, तत् सुब्निमित्तकाङ्गसंज्ञकोऽप्रसिद्धः, अत आह— **यत्रेति**। यथा 'केऽणः' रोऽसुपि' 'लुङ्लङ्लृङ्क्षु' 'स्यतासी' इत्यादौ **अंशमात्रेति**। अनेन तदन्तांशो नोपतिष्ठत इति सूचितम्। 'हृदयस्य' इति सूत्रे लेखेत्यणन्तग्रहणेन सामान्यत एव सप्तम्यन्ततयोपात्तेन तदन्तविध्यभावकल्पनादिति भावः।

न चोभयोः सन्नियोगशिष्टत्वात् तदन्तांशानुपस्थितौ कथं तदाद्यंशमात्रोपस्थितिरिति वाच्यम्, 'येन विधिः' इति सूत्रसिद्धस्य तदन्तांशस्य प्रकृतपरिभाषाया अघटकत्वेन सन्नियोगपरिभाषाया अप्रवृत्तेः। तत्र तदाद्यंशोपस्थितिफलं तु 'केदारो लूयते' इत्यादौ 'अच कर्तृयकि' इत्यनेन के इत्यस्योदात्तत्वव्यावृत्तिः। एवम् 'अतो भिस ऐस्' इत्यादावप्यकारान्तादङ्गात् परस्य भिसन्तस्यासंभव इति तत्रापि तदादेरित्यंशमात्रस्यैवोपस्थितिरित्याह—**एवमिति**। यत्रेति। यथा 'रदाभ्यां निष्ठातो नः' 'एङ्ह्रस्वात् संबुद्धेः' इत्यादौ 'प्रत्ययग्रहणे

**एवं यत्रापि पञ्चम्यन्तात् परः प्रत्यय आश्रीयते, तत्रापि तदादीत्यन्तांशोपस्थितिः, परन्तु तत्र पञ्चम्यन्तता।**

**अत एव 'एङ्ह्रस्वात्' इति सूत्रे एङन्तादित्यर्थलाभः। अस्याः परिभाषायाः प्रयोजनान्तरं 'येन विधिः' इत्यत्र भाष्य उक्तम् 'परमगार्ग्यायणः' इति। परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययः, न विशिष्टात्।**

**निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव। अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः।**

---

ञ्चम्याः' इति। निषेधस्तु तदन्तांशमात्रस्यैवेति भावः। **आश्रीयत** इति निमित्तत्वेन, कार्यित्वेन वेत्यर्थः।

यद्यप्युभयत्रापि तदाद्यंशोपस्थितिरूपं तुल्यम्, तथापि पूर्वापेक्षया परस्मिन् किञ्चिद्विशेषोऽस्तीत्यत आह—**परन्त्विति**। **तत्रेति** 'एङ्ह्रस्वात्' इत्यादावित्यर्थः। **पञ्चम्यन्तेति**। तदादेरित्यस्येति शेषः।

अत्रायं निष्कर्षः—यत्र पञ्चम्यन्तातिरिक्तस्थले प्रत्ययो निमित्तत्वेनैवाश्रीयते, तत्र तदाद्यंशमात्रस्योपस्थितिः। प्रदेशस्तूक्त एव। उक्तोभयातिरिक्तस्थले यत्र प्रत्ययः कार्यित्वेनाश्रीयते, तदोभयांशोपस्थितिः। यथा 'कृत्तद्धितसमासाश्च' बहुगणवतुडतिसंख्या' सर्वादिपठितडतरडतमेत्यादौ। यत्र तु पञ्चम्यन्तात् परः प्रत्ययो निमित्तत्वेन, कार्यित्वेन वाश्रीयते तत्रापि तदाद्यंशमात्रस्यैवोपस्थितिरिति प्रदेशस्तूक्त एव। **अत एवेति**। पञ्चम्यन्तस्य तदादेरित्यस्योपस्थितिसत्त्वादेवेत्यथः। अन्यथा विशेष्याभावात् थता न स्यात्। कौमुद्युक्तप्रकारस्तु न युक्त इति **शेखरे** दूषितः।

**अस्या इति**। समुदिताया इत्यर्थः। 'देवदत्तश्चिकीर्षति' इत्यत्र प्रयोजनस्योक्तत्वादाह—**प्रयोजनान्तरमिति**। **भाष्ये उक्तमिति**। 'येन विधिः' इत्यस्य प्रयोजनपरिगणनावसरे 'प्रत्ययग्रहणे चापञ्चम्याः' प्रयोजनं यञिञोः फग् भवति—'गार्ग्यायणः, वात्स्यायनः' इति तत्रोक्तमित्यर्थः। **प्रत्ययग्रहण** इति वार्त्तिकार्थस्तु पञ्चम्यन्तात् परः प्रत्ययो यत्र कार्यान्तरविधानायानूद्यते, तद्भिन्नस्थले प्रत्ययग्रहण तदन्तविधिः प्रयोजनमिति। न **विशिष्टादिति**। अनया परिभाषया न परमगार्ग्येति समुदायादित्यर्थः। यदि हि विशिष्टात् फक् स्यात् तर्हि पारमगार्ग्यायण इत्यनिष्टरूपापत्तिः स्यात्। नन्वेवं परमगार्ग्यायण इति, समुदायस्य तद्धितान्तत्वाभावात् फक्सहितस्य च समासत्वाभावात् प्रातिपदिकत्वं दुर्लभमिति चेत्? न; प्रत्ययान्तभिन्नत्वेन 'अर्थवत्' सूत्रेण तत्सौलभ्यात्। न च यस्मिन् समुदाये पूर्वो भागः पदं चेत्? तर्हि समुदायस्यैवेति समासग्रहणकृतनियमेन तदप्राप्तिरिति वाच्यम्, नियमस्य सजातीयापेक्षत्वेन सुबन्ततिङन्तकृदन्तान्यतमरूपपूर्वोत्तरखण्डघटितसमुदाय एव तत्प्रवृतेः।

ननु परमगार्ग्यस्यापत्यमिति विग्रहे विशिष्टार्थस्यापत्यार्थेन सम्बन्धः, न

**प्रत्ययमात्रग्रहणे एषा, न तु प्रत्ययाप्रत्ययग्रहण इति 'उगितश्च' इति सूत्रे भाष्ये। इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ॥ २३ ॥**

---

तु केवलगार्ग्यशब्दार्थस्येति कथमत्रावयवात् प्राप्तिः ? अत आह--**निष्कृष्येति।** अत्रेति। निष्कृष्यैकार्थीभावेऽपि वृत्तिप्रवृत्तवृत्तावित्यर्थः। इदं भाष्यमेवेत्यत्रैवकारोऽप्यर्थः। तेन 'अनुपसर्जनात्'इति सूत्रे कुम्भकार्या अपत्यमित्यर्थे कारीशब्दादपि ढगापत्तिरिति शङ्कापरभाष्यमपि मानमित्यस्य लाभः। एतदेवाह—**अन्यत्रेति। शब्देन्दुशेखरे** इत्यर्थः। प्रत्ययान्तात् प्रत्यये कर्त्तव्य एवेदम्। सार्वत्रिकत्वे तु 'सौत्रनाडिः' इत्यादावपि नडशब्दात् फगापत्तिरिति बोध्यम्।

ननु प्रत्ययग्रहपरिभाषया तदादितदन्तमुदायग्रहणनियमेन 'कुरुचरी'इत्यत्र टित्त्वप्रयुक्तङीप्प्रत्ययानापत्तिः, तथा 'चरी' इत्यस्य टिदन्तत्वेऽपि समुदायस्य तत्त्वाभावादित्यत आह--**प्रत्ययमात्रेति।** अत एव 'प्राची, प्रतीची' इत्यादौ 'उगितश्च' इत्यस्य प्रवृत्तिः। अन्यथा उगिद् यस्माद्विहितः, तदादेरभावत् तत्र तदनापत्तिरिति तत्र तदाद्यंशस्यैवाप्रवृत्तिः। तदन्तांशस्तु प्रवर्तत एव। अन्यथोगितः प्रातिपदिकादित्यर्थे भवतीत्यत्रैव स्यात्, न प्रतीचीत्यादाविति भावः। मानं त्वत्र सर्वादिगणपठितभवत्वित्यस्योगित्करणम्। तद्धि 'उगितश्च' इत्यनेन ङीबर्थम् 'उगिदचाम्' इत्यनेन नुमर्थञ्च, यदि तु प्रत्ययाप्रत्ययसाधारणेऽस्याः प्रवृत्तिः स्यात्, तर्हि भवत्वित्यस्याव्युत्पन्नत्वेनोगिद्यस्माद्विहितः, तदादेरित्यस्यासंभवाद् नुम्ङीपोरप्रवृत्त्योगित्करणस्य वैयर्थ्यं स्यादिति भावः।

**भाष्ये** इति। तत्र हि विशेषणविशेष्यभावे कामचारादुगितः प्रातिपदिकात्, उगिदन्तात् प्रातिपदिकादित्यर्थयोः संभवादुभयमलम्ब्य लक्ष्याणि प्रसाध्योभयथापि प्रत्ययग्रहणपरिभाषया 'निर्यवमती, निर्गोमती' इति न सिध्यतीत्याशङ्क्य उगित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन समाहितम्।

नन्वेवं 'प्रतीषिषति' इत्यादावभ्यासान्त्यस्य 'अज्झन' इति दीर्घवारणायोत्तरखण्डस्य प्रत्ययाधिकारे पाठाभावेन तदभावस्य तत्प्रतीक एव शब्देन्दुशेखरे उक्तत्वात् सन्त्वस्य प्रत्ययाप्रत्ययसाधारण्येन देवदत्तश्चिकीर्षति' इत्यादौ दोषस्तदवस्थ एवेति चेत्, न; 'प्रतीषिषति' इत्यादौ 'अप्रत्ययात्' इत्यस्याप्रवृत्त्या, पत्तेः, 'सन्यतः' इतीत्वस्याप्रवृत्त्यापत्तेश्च। तत्पक्षस्य दुष्टत्वात् 'प्रतीषिषति' इत्यादौ दीर्घवारणं तु 'अज्झन' इति सूत्रे हनिगमिसाहचर्यात् सनोऽनवयवस्यैवाचोदीर्घ इत्यर्थेन बोध्यम्।

वस्तुतोऽत्रोत्तरखण्डस्यार्धधातुकत्वेनेदिति उपदेशे पूर्वखण्डस्यादन्तत्वेनातोऽपि अजन्ताङ्गत्वाभावात् 'अज्झनगम' इति दीर्घप्राप्तिरेव नास्तीति बोध्यम्। 'सन्यतः' इतीत्वं तु 'पिपठिषति' इत्यादौ धात्ववयवाकारे चरितार्थमिति बोध्यम्। कुत्रत्येयं परिभाषेत्याशङ्क्याह--इयमिति ॥ २३ ॥

**'येन विधिः' इति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यते—**

**प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥**

**यत्र पञ्चम्यन्तात् परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते, तत्र तदन्तविधिर्नेत्यर्थः । यथा 'रदाभ्यां निष्ठातो नः' इत्यत्र । तेन 'दृषत्तीर्णः' इत्यादौ धातुतकारस्य न नत्वम् । तदन्तेत्यंशानुपस्थितावपि तदादीत्यंशस्योपस्थितौ**

---

इदानीमपवादसङ्गत्या परिभाषान्तरमवतारयति—**येनेति** । **एतद्घटकतदन्तांशस्येति** । प्रत्ययग्रहणपरिभाषाघटकतदादिविशेष्यकतदन्तांशस्येत्यर्थः । अन्यत्र तु स्यादेव । तेन किमव्ययतिङन्तेभ्यो यो घः, तदन्तात् प्रातिपदिकादित्यर्थलाभः । एवम् 'षाद्यञश्चाब् वाच्यः' इत्यत्रापि प्रत्ययग्रहणपरिभाषालब्धतदादिविशेष्यमादाय तदन्तविधेरनया निषेधेऽपि प्रातिपदिकादिति विशेष्यमादाय तदन्तविधौ यञन्तात् प्रातिपदिकादित्यर्थलाभः ।

ननु 'प्रत्ययग्रहणे चापञ्चम्याः' इति वार्त्तिकस्वरूम् । तदर्थस्तु 'अपञ्चम्याः परमनूद्यमानं प्रत्ययग्रहणं तदन्तविधि प्रयोजयति' इत्युक्तमेवेति कथम् 'प्रत्ययग्रहणे चापञ्चम्याः' इति परिभाषा पठ्यते इत्युक्तिसङ्गतिरिति चेत् न; तथा पाठेनैतदर्थस्य फलितत्वात् तथोक्तिसाङ्गत्यात् । न च **प्रत्यासत्त्या पञ्चम्यन्तः** निर्दिष्टप्रत्ययाद् यत्र प्रत्ययविधिः, तत्र स नेत्यर्थ एव युक्तः ।

'समासप्रत्ययविधौ' इति तु सौत्रस्य निषेध इति न तेनास्य गतार्थतेति वाच्यम्, 'ञितश्च तत्प्रत्ययात्' इत्यस्य विकारावयविहितप्रत्ययादेवाञित्यर्थापत्त्योष्ट्रविकाराद् उष्ट्रकादञि वुञ एवाङ्गसंज्ञायां वृद्धिस्वरापत्तेः । तदेतद् ध्वनयन् तमेव फलितार्थमाह—**तत्रेति । कार्यान्तरेति** । अनेन विधिविषयप्रत्ययमादाय न प्रवृत्तिरिति सूचितम् । 'गर्गादिभ्यो यञ' इत्यादौ विधानात प्राक प्रत्ययत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या तत्रास्याः प्रवृत्तौ फलाभावादिति भावः ।

कार्यान्तरञ्चादेशादिरूपम । परिगृह्यते इति । अनूद्यत इत्यर्थः । नेत्यर्थ इति । अपञ्चम्या इत्यसमर्थसमासेन प्रसज्यप्रतिषेधादिति भावः । न नत्वमिति । रेफदान्तात परं निष्ठातं नुम [?] 'इत्यर्थे तु धात्वयवतकारस्य नत्वापत्तिरिति भावः ।

यद्यप्यत्र 'अनन्त्यविकारे' इति परिभाषया दोषः परिहर्तुं शक्यः, तथापि दृषत्तीर्णवान्' इत्यत्र दोषः स्यादेव, अत आह—**इत्यादाविति** । ननु 'निष्ठातः' इति समस्तावयवनिष्ठापदे तदादेरित्यस्य विशेष्यतयान्वयासंभवादेव तदन्तविधेरप्राप्त्या कथमेतदुदाहरणसङ्गतिरिति चेत ? न; एददुदाहरणपरभाष्यप्रामाण्यन्निष्ठापदस्य लुप्तषष्ठीकत्वस्वीकारात् । ननु 'रदाभ्याम' इति पञ्चम्यन्तस्य निष्ठायामन्वये 'चरितम्' इत्यादावपि नत्वापत्तिः । न च 'निर्दिश्यमान' परि-

---

१. 'निष्ठान्ततदाद्ययो यो रदाभ्यां परस्तकारः तस्य नत्वम्' इत्यर्थे तात्पर्यमवगम्यते ।

**रेफान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषः, तदंशानुपस्थितौ मानाभावात् । तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति 'दृषत्तीर्णः' इत्यादौ दोषः स्यादेव ।**

---

भाषाया तत्र तदनापत्तिरिति वाच्यम्, 'निष्ठा न' इत्येव सिद्धे तकारोच्चारण-सामर्थ्यादत्र 'निर्दिश्यमान' परिभाषा अप्रवृत्तेः । एवञ्च चरितम्' इत्यादौ नत्व-वारणाय 'रदाभ्याम्' इति तकारविशेषणमिति स्वयमेव शब्देन्दुशेखरे उक्तम् । तथा चात्र पञ्चम्यन्तात् परप्रत्ययश्रवणाभावाद् रदाभ्यां परस्य निष्ठान्ताव-यवतकारस्य न इत्यर्थेन 'दृषत्तीर्णः इत्यादौ दोषस्तदवस्थ एवेति चेत् ? न; यत्र पञ्चम्यन्तात् परः प्रत्ययः स्वः स्वावयवो वा परिगृह्यते, तत्र स्वेन तदन्तविधि-र्नेत्यर्थ इति हि परिभाषार्थात् । अत्र चैतदुदाहरणपरभाष्यमेव मानम् । अत एव 'आदेशप्रत्यययोः' इत्यत्र 'इणकुभ्याम्' इत्यस्य सकारविशेषणत्वेऽपि प्रत्ययेन तदन्तविधिर्नेति बोध्यम् ।

वस्तुतः 'येन विधिः' सूत्रस्य यदागमन्यायास्य चासहकारेणोच्चार्यमाण-पदबोध्यत्वरूपनिर्दिश्मानत्वस्यात्र सत्त्वात् तयेवेष्टसिद्धावेत्परिभाषाया एत-दुदाहरणं न युक्तम् । किन्तु 'स्वरतिसूतिसूयति' इति सूत्रमुदाहरणं बोध्यम् । एतददुदाहरणपरं भाष्यं तूपायान्तरपरतया नेयम्, सूत्रे तकारग्रहणं स्पष्टार्थमेव ।

यतु, **कैयटादिना** रेफदकाराभ्यामिति सिद्धान्ते व्याख्यातम्, तदयुक्तमिति ध्वनयितुमाह—**तदन्तेत्यंशेति** । तदन्तस्येत्यंशेत्यर्थः ।

ननु तदभावे तस्याप्यनुपस्थितिः 'सन्नियोगशिष्ट' इति न्यायात्, अत आह—**तदंशानुपस्थिताविति** । तदादेरित्यंतां (?) शे ई [?] त्यर्थ । 'गुणानाम्' इति न्यायात्, असंनियोगशिष्टत्वाच्च तदप्रवृत्तेरिति भावः । परिभाषाया अभावे दोषमुपपादयति—तदन्तांशोऽपोति । अर्थः प्राग्वत् । रेफदाभ्यां परो यस्तदादिर्निष्ठान्तः, तद्यस्य तकारस्य तत्पूर्वपदस्य च नत्वमित्यर्थस्तथा सति स्यात् । तूभयोरिति । तदाद्यंशतदन्तांशयोरित्यर्थः । **एकेति** । यत्र तदन्तत्वं तत्रैव तदादित्वमित्यर्थः । **स्यादेवेति** ।

अयं भावः पञ्चम्यन्तात् परप्रत्ययग्रहणस्थलेऽप्युभयोरंशयोरुपस्थितौ रदाभ्यां परो यो निष्ठान्तस्तदादिः, तदवयवस्येत्यर्थे न स्यादेवेति ।

नन्वेवमपि 'स्यतासी' इत्यादौ लृडन्तलुडन्ततदादावित्यर्थापत्तिः । नहि पञ्चम्यन्तात् परत्वेन लादिप्रत्ययः सूत्रे विशेष्यः, यत्त्वनुवर्तमानम् 'धातोः' इति पञ्चम्यन्तम्, तत्तु 'स्यतासी' इत्यस्य विशेषणम्, न तु लृलुटोरित्यत आह—**स्यतासीति** । आदिना 'सुपि च' 'रोः सुपि' इत्यादिपरिग्रहः । **परयोरित्यर्थे** । इति । 'तस्मिन्निति' परिभाषयेति भावः । तथा हि अनुवृत्तस्य धातोरिति पञ्चम्यन्तस्य प्रकृतस्य स्यतासीति प्रत्ययविशेषणत्वेऽपि लृलुटोः परयोरित्यर्थेन

**'स्यतासी लृलुटोः' इत्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यावधित्वेनान्वयान्न तदन्तविधिः। 'ङ्याप्भ्यः' इत्यादौ तु न दोषः, तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात्।**

---

नियमेनावध्याकाङ्क्षायामुपस्थितत्वाद् धातोरित्यस्यैव पञ्चम्यन्तस्यावधित्वेन लृलुटोरित्यत्राप्यन्वयात् तयोरपि पञ्चम्यन्तस्य विशेषणत्वसत्त्वात् प्रकृतपरिभाषाप्रवृत्तौ न तदंशे तदन्तविधिरिति।

वस्तुतस्तु लृलुङ्प्रश्लिष्टादव्यवहितपूर्वाद् धातोः स्यतासी भवत इति स्वसिद्धान्तरीत्याऽऽकाङ्क्षाया अभावाच्चिन्त्योऽयं ग्रन्थः।

नन्वेवम् 'ङ्याप्भ्यः' इत्यादावपि अवध्याकाङ्क्षायां प्रातिपदिकादित्यस्य पञ्चम्यन्तस्यावधित्वेनान्वयात् प्रकृतपरिभाषया तदन्तविधिनिषेधे ङ्यन्तादाबन्तादित्यस्य पञ्चम्यन्तस्यावधित्वेनान्वयात् प्रकृतपरिभाषया तदन्तविधिनिषेधे ङ्यन्तादाबन्तादित्याद्यर्थानापत्तिरित्यत आह—**ङ्याप्भ्य इत्यादाविति।** ङ्याबंशे इति शेषः। तथा चात्र नियमेनावध्याकाङ्क्षाया अभावेन प्रातिपदिकादित्यस्य विशेषणत्वाभावेन न प्रकृतपरिभाषया तदन्तविधिनिषेध इति भावः। सुतिसीत्यंशे तु हल्ङ्याप्भ्य इति पञ्चम्यन्तविशेष्यस्य सत्त्वात् तदन्तविधिनिषेध एवेति बोध्यम्। न दोष इति तदन्तविध्यनापत्तिरूपो यो दोषः, स नेत्यर्थः।

न चात्र तदन्तविध्यभावेऽपि ङ्याप्भ्यां परस्यापृक्तस्य हलो लोप इत्यर्थे न दोष इति वाच्यम्, अनया तदन्तांशानुपस्थितावपि तदादीत्यंशोपस्थितया तदादेः परो यो ङीत्यर्थे वृत्ते सुतिसीनामपि प्रत्ययत्वेनोपस्थिततद्विधानावधिभूततदादेर्विशेष्यतया ङ्याबन्तात् तदादेरित्यर्थापत्तौ 'बहुश्रेयसी' इत्यादौ सुलोपानापत्तेः। आदिना 'स्त्रीभ्यो ढक्' इत्यादिपरिग्रहः। **तत्रेति।** ङ्याबंश इत्यर्थः। **अभावेनेति।** परशब्दाभावादिति भावः। **पञ्चम्यन्तस्येति।** प्रातिपदिकादित्यस्येत्यर्थः। आक्षेपे, आक्षिप्तस्य शाब्दे अन्वये, च न मानम्। तथा चोक्तपरिभाषयोभयोपस्थित्या तथार्थलाभ इति भावः। अनयैव यत्र प्रत्ययो निमित्तत्वेनाश्रीयत इत्यस्य, एवं यत्रापीत्यस्य च क्रोडीकारो बोध्यः।

नन्वेवमङ्गसंज्ञासूत्रे प्रत्यये इत्यंशे पञ्चम्यन्तविशेषणाभावात् तदन्तविधेरनिषेधात् स स्यादित्यत आह—**अङ्गसंज्ञासूत्रे इति।** प्रत्यये परे इत्यर्थेनोपस्थिततदादेरिति पञ्चम्यन्तविशेषणस्य स्पष्टत्वान्न तदन्तविधिरिति भावः। तत्रैव सौत्रं निर्देशं प्रमाणयति—**अत एवेति।** तदन्तविध्यभावादेवेत्यर्थः। सति तु तदन्तविधौ उत्तमैकशब्दाभ्याङ्गत्वानापत्त्या दीर्घानापत्तिः स्यादिति भावः। न च 'सुपि च' इत्यारम्भसामर्थ्याद् नैवमिति वाच्यम्, तस्याप्यत्रैवार्थे तात्पर्यस्य वक्तुमुचितत्वात्॥ २४॥

**अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव। अत एव 'उत्तमैकाभ्याम्' इत्यादिनिर्देशाः संगच्छन्ते ॥ २४ ॥**

**नन्वेवं कुमारी ब्राह्मणिरूपा इत्यादौ 'घरूप' इति ह्रस्वापत्तिः, अत आह—**

**उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥**

---

नन्वेवं पञ्चम्यन्तात् परप्रत्ययग्रहणेन तदादिविशेष्यकतदन्तविधिवारणेऽपि 'उत्तरपदे' इति विशेष्यमादाय तदन्तर्विधौ 'कुमारी ब्राह्मणिरूपा' इत्यादौ ह्रस्वाद्यापत्तिर्दुर्वारा, अतस्तां परिहर्तुं परिभाषान्तरमवतारयति—**नन्विति**। कुमारी ब्राह्मणी रूपेति लौकिकवाक्यमिदमुपात्तं समासप्रदर्शनार्थम्। रूपं तु कुमारब्राह्मणिरूपेति कर्मधारये पुंवत्त्वविधानात्। ब्राह्मणीशब्दे तु परत्वात् 'तसिलादिषु' इति पुंवत्त्वं बाधित्वा तेन ह्रस्वत्वम्। 'घत्यागस्तु' 'संज्ञाविधौ' इति निषेधसामर्थ्यात् सिद्धो बोध्यः। कुमारी ब्राह्मणिरूपा यस्यां नगर्यामिति बहुव्रीहिः। तत्र 'जातेश्च' इति निषेधाद् पुंवत्त्वम्, तयोर्वाचकानां जातिकार्यं विकल्पेनेति युवजानिर्युवतिरेति भाष्येण बोधनाद् **इत्येके**। षष्ठीतत्पुरुष **इत्यपरे**। परन्तु 'तरप्तमपौ घः' इति सूत्रभाष्यपर्यालोचनया समानाधिकरणे उत्तरपद एव ह्रस्वप्रवृत्तेर्लाभात्। षष्ठीतत्पुरुषे ह्रस्वाप्राप्तेः पूर्वोक्तमेव युक्तम्।

**ह्रस्वापत्तिरिति**। तदादेरिति विशेष्यमादाय प्राप्तस्यापञ्चम्या इत्यनेन स्यतासिवन्निषेधेऽपि उत्तरपद इत्यादावप्राप्तस्यानिषेधात्। अत्र च लेखग्रहणज्ञापकपरं भाष्यमेव मानम्। कर्मधारये पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेनेत्युक्ते परत्वात् तदापत्तिर्बोध्या। तथा च कुमारि ब्राह्मणिरूपेति रूपापत्तिः स्यादिति भावः।

परिभाषायां ज्ञापकमाह—**हृदयस्येति**। ननु लेखशब्दस्य घञन्तस्यापि संभवेन तदन्तविधावप्यण्ग्रहणेनाग्रहणात् कथं तद्ग्रहणं ज्ञापक भवेत्? अत आह—**तत्रेति**। उक्तसूत्रे इत्यर्थः। गृह्यत इति शेषः। अत्रानभिधाने प्रमाणं चैतद् ज्ञापकपरं भाष्यमेव।

ननु लेखशब्दस्योत्तरपदविशेषणत्वेन तदन्तविधिना लेखान्त उत्तरपदे इत्यर्थेन 'हृत्परमलेखः' इत्यादौ हृदादेशसिद्धिः। लेखग्रहणाभावे त्वणंशे 'प्रत्ययग्रहण'परिभाषालब्धतदादिविशेष्यकतदन्तविधेः 'सुपि च' इत्यादाविव 'प्रत्ययग्रहणे चापञ्चम्याः' इत्यनेन निषेधात् तदभाव उत्तरपदविशेष्यकतदन्तविधिना अणन्ते उत्तरपदे इत्यर्थेन 'हृत्परमलेखः' इत्यादौ हृदादेशस्यासिद्धिरिति फलभेदात् कथं लेखग्रहणस्य ज्ञापकत्वमिति चेत्, न; 'गिलगिले च' इति ज्ञापकेनोत्तरपदे इत्यस्य प्रत्ययभिन्नस्य विशेषणत्वादुत्तरपदे इत्यस्य विशेष्यत्वे हि 'गिलेऽगिलस्य'

---

१ 'घरूपकल्पचेलड्ब्रुवगोत्र०' इति सूत्रे प्रथमोपात्तघसंज्ञकप्रत्ययान्तस्य त्यागस्त्वित्यर्थः।

**हृदयस्य हृल्लेखयदण्लासेषु इत्यत्र लेखग्रहणात् तत्र लेखेति न घञन्तम्, अनभिधानात्। इयं च 'हृदस्य' इति सूत्र एव भाष्ये स्पष्टा ॥ २५ ॥**

---

'गिले' इत्यस्योत्तरपदविशेषणत्वेन गिलान्ते उत्तरपदे इत्यर्थेन तिमिङ्गिलगिल इत्यस्य सिद्धया 'गिलगिले च' इत्यस्य वैयर्थ्यं स्पष्टमेव। न च गिलान्ते उत्तरपदे चेत्तर्हि गिलगिले एवेति नियमार्थमेव तत् कुतो नेति वाच्यम्, विधित्वे संभवति नियमत्वस्यान्याय्यत्वात्। यद्वा, 'हृदयस्य हृल्लेख' इत्यत्रत्याणि 'प्रत्ययग्रहणे चापञ्चम्याः' तदन्तविधिर्नेत्युक्तोऽयमर्थः। तदादेरित्यस्य पञ्चम्यन्तस्यैवोपस्थितिः। तथा च तदादेरित्यनेन प्रत्ययस्य विशेष्यविशेषणभावाभावेन तदन्तविध्यभाव इति बोधनेन तदादेः परो योऽण्, तदन्त उत्तरपदे इत्यर्थेन परमलेखादौ परतो हृदादेशसिद्धेः।

परे तु, 'तस्मिन्' इत्यनेन पूर्वस्योपस्थितिर्बोध्यते, किन्तु यथा पूर्वस्य कार्यं भवति, तथा बोध्यते। वस्तुतो लेखग्रहणेन 'गिलगिले च' इत्यनेन च सप्तम्यन्तमात्रग्रहणे तदन्तविध्यभावो ज्ञाप्यते, उत्तरपदाधिकारे 'प्रत्ययग्रहणे' इति विशेषणद्वयस्य निष्फलत्वात्। एवं च 'सुपि च' इत्यादौ प्रकारान्तराश्रयणक्लेशोऽपि न, तथा चेलडादावपि न दोषः। 'रात्रेः कृति' 'उपसर्गस्य घञि' 'आत्मनश्च पूरणे' इत्यादौ तु तत्तत्प्रकृतिकतत्तत्प्रत्ययासंभवेन सामर्थ्यात् तदन्तविधिः। न च 'रात्रेः कृति' इत्यत्र रात्रिशब्द (दा)चारक्विबन्तात् संभव इति वाच्यम्, गौणमुख्यन्यायेन तत्र तदप्रवृत्तेः। एतेन 'रात्रेः कृति' इत्यादौ दोषवारणाय 'उत्तरपदाधिकारे' इति परिभाषा धर्मिग्राहकमानात् तद्रूपेण प्रत्ययोपादान एव प्रवतत इत्यपास्तम्।

यत्तु, उत्तरपद इति विशेषणाभावे 'सुपि च' इत्यादाविव 'सर्वस्य सुपि' इत्यादावपि तदन्तविध्यभावापत्तिरिति। तत्, न; तत्र 'सौवर्यः सप्तम्यस्तदन्तसप्तभ्यः' इति वचनेन तदन्तविधेरङ्गीकारात्। किञ्च, सौवरसप्तमीनां षष्ठ्यर्थत्वस्यैव सौवर्यं इति वचनेन बोधनात्। अन्यथा सुबन्ते परतः सर्वशब्दादीनां कार्यं भवतीत्यर्थापत्तेरित्यलम् ॥ २५ ॥

'प्रत्ययग्रहणपरिभाषापवादसंगत्येमामवतारयति—**नन्विति। एवमिति।** प्रत्ययग्रहणपरिभाषास्वीकार इत्यर्थः। **परमकारीषगन्धीपुत्र इत्यत्रवेति।** नन्वेतद्दृष्टान्तासंगतिः, प्रत्ययग्रहणपरिभाषया कारीषगन्ध्येत्यस्य ष्यङन्तस्य पूर्वपदत्वाभावाद् विशिष्टस्य च पूर्वपदत्वेऽपि ष्यङन्तत्वाभावात् 'ष्यङः सम्प्रसारणम्' इति सम्प्रसारणाप्राप्तेरिति चेत्, न; प्रत्ययग्रहणपरिभाषया तदादिविशेष्यकतदन्तविधिना 'येन विधिः' इत्यनेन उत्तरपदाक्षिप्तपूर्वपदविशेष्यकतदन्तविधिना च ष्यङन्तान्तं यत्पूर्वपदमित्यर्थेन तत्रेवात्रापि स्यादिति तत्संगतेः सुलभत्वात्। यद्वा, 'प्रत्ययग्रहणे' इति परिभाषायां स्त्रीप्रत्यये नेत्येव 'गोस्त्रियोः' इत्यत्र भाष्ये उक्तम्। ततश्चातिकारीषगन्ध्यापुत्र इत्यत्रापि स्यादित्यर्थात्।

**नन्वेवं 'परमकारीषगन्धीपुत्रः' इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्र 'ष्यङः संप्रसारणं पुत्रपत्योः' इति स्यात् अत आह—**

**स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥**

**विषयसप्तमीयम् ।**

---

**केचित्तु**, इव शब्दो भिन्नक्रमः, स च 'अतिकारीषगन्ध्यापुत्र इत्यत्र' इत्यनन्तर द्रष्टव्यः। एवञ्चातिकारीषगन्ध्यापुत्र इत्यत्रेव अत्रापि तत् स्यादित्यर्थः। मरुवदुशीनरे जलमितिवद् यथा तत्र न जलम् तथात्रापि नेति यावदित्याहुः।

अन्ये तु, यदि तदादिनियमस्तर्हि मुख्ये न स्यात्। अथ स न, तर्हि तदनुरोधाद् गौणेऽपि स्यादिति दृष्टान्तेनेदं सूचितं व्याचक्षते। तन्मन्दम्, तदादिनियमाभावे प्रमाणाभावात्।

**स्त्रीप्रत्यये** इति। गृह्यमाण इति शेषः।

नन्वनुपसर्जनस्त्रीप्रत्यये गृह्यमाणे तदादिनियमो नेति परिभाषार्थे शास्त्रे क्वाप्युपसर्जनत्वानुपसर्जनत्वयोरभावेन लक्ष्ये उपसर्जनत्वानुपसर्जनत्वत्त्वेऽपि तदादिनियमाप्राप्तचा निषेधासंभवेन चैतस्याः परिभाषाया असंगतिरेवेत्यत आह—**विषयसप्तमीति।** अनुपसर्जन इत्यत्रेति शेषः। **स्त्रीप्रत्यये** इति तु सती सप्तम्येव, गृह्यमाणपदसम्बन्धात्। तथा चानुपसर्जनविषयकस्त्रीप्रत्ययघटितवाक्ये यः स्त्रीत्वबोधकप्रत्ययः, तेन तदादेरुपस्थितिर्नेति परिभाषार्थः।

एवञ्चैतदारम्भसामर्थ्यात् 'ष्यङः सम्प्रसारणम्' इत्यादिस्त्रीप्रत्ययघटितशास्त्राणामावृत्तिः। तत्र ष्यङादीनां स्त्रीप्रत्ययानामेकत्रोपसर्जनार्थकत्वम्। अन्यत्रानुपसर्जनार्थकत्वं च लक्षणया कल्पनीयम्। तथा चानुपसर्जनो यः ष्यङ्, तदन्तं यत् पूर्वपदम्, तस्य सम्प्रसारणमित्येकस्यार्थः। पूर्वपदं यत्, उपसर्जनष्यङ् यस्माद्विहितः, तदादि तदन्तम्, तस्य सम्प्रसारणमिति द्वितीयस्यार्थः।

न चानुपसर्जनविषयकवाक्येनैवातिकारीषगन्ध्यापुत्र इत्यादौ सम्प्रसारणनिवृत्तावुपसर्जनविषयकवाक्यस्य वैयर्थ्यापत्तिरिति वाच्यम्, आगता अरविन्दगन्ध्या यस्या इतिबहुव्रीहौ 'प्रादिभ्यो धातुजस्य' इति गतशब्दलोपे एकादेशे आरविन्दगन्ध्या, तस्याः पुत्रः अरविन्दगन्धीपुत्रः, तथा कारीषगन्ध्येव मानुषीति विग्रहे 'इवे प्रतिकृतौ' इति कनि 'लुम्मनुष्ये' इति कनो लुपि कारीषगन्ध्या, तस्याः पुत्रः कारीषगन्धीपुत्र इत्याद्यर्थं तस्यावश्यकत्वात्।

एतेन 'ष्यङः सम्प्रसारणम्' इति सूत्र एव 'अनुपसर्जनस्य' इति न्यासेन सकलेष्टसिद्धौ व्यर्थयमिति वदन्तः परास्ताः।

नन्वेवमुपसर्जनविषयकवाक्ये उपस्थिततदादिना तदन्तविधौ पुनः पूर्वपदं विशेष्यमादाय तदन्तविधौ 'अतिकारीषगन्ध्यापुत्रः' इत्यादौ दोषस्तदवस्थ

**यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह, तत्र तदादिनियमो न, यस्त्वप्राधान्येनाह, तत्र तदादिनियमोऽस्त्येवेत्यर्थः।**

**प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयम्, तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्। तेन 'अतिराजकुमारिः' इत्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वात् तदादिनियमाभावेन ह्रस्वसिद्धिः।**

**अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वम्, असंभवात्।**

---

एवेति चेत्, न; एतत्परिभाषारम्भसामर्थ्येनोपसर्जनविषयकवाक्ये आक्षिप्तस्य विशेष्यत्वाभावज्ञापनात्। अनुवृत्त्यादिलब्धस्य तु विशेष्यत्वमस्त्येव। तेन 'याडापः' इत्यादौ तदन्तविधिद्वयेनार्धखट्वायामित्यादीनां सिद्धिः। अत एवैकदेशिसमासप्रत्याख्यानपरभाष्येण न फलभेदः।

न च परमकारीषगन्धीपुत्र इत्यादावप्युत्तरदपार्थनिरूपितष्यङर्थस्य विशेषणत्वेनोपसर्जनत्वात् तदादिनियमेऽवशिष्टस्य ष्यङन्तपूर्वपदत्वाभावेन सम्प्रसारणानापत्तिरिति वाच्यम्, 'यस्य स्त्रीप्रत्ययान्तत्वमानेयम्, इत्यादिना मूल एव समाधानात्। स्वभिन्नत्वेन चिकीर्षितसमुदायनिरूपितोपसर्जनत्वाभाववद् यत्तदादि स्वम्, तदन्तमित्येकवाक्यार्थस्वीकारेण दोषाभावः। अतिकारीषगन्ध्येत्यादौ स्वभिन्नत्वेन चिकीर्षितसमुदायः=अतिकारीषगन्ध्येति, तत् समुदायनिरूपितोपसर्जनत्वाभाववद् यत् स्वं ष्यङन्तम्, तच्च न भवति। प्रकृते परमकारीषगन्धीपुत्र इत्यादावस्तीति न दोषः। कारीषगन्ध्येव कारीषगन्ध्येत्यत्र स्वभिन्नत्वेन चिकीर्षितसमुदायाभावान्न दोषः।

अत्रेदं तत्त्वम्—परिभाषायामुपसर्जनत्वं शास्त्रीयमेव। स्त्रीप्रत्ययपदेन स्त्रीप्रत्ययान्तग्रहणमस्तु। अतिकारीषगन्ध्यापुत्र इत्यत्र शास्त्रीयोपसर्जनसत्त्वात् तदादिनियमविधिः। अतिराजकुमारिरित्यत्र राजकुमारीत्यस्य स्त्रीप्रत्ययान्तत्वमानेयम्। तदर्थं प्रत्यनुपसर्जनत्वात् कुमारीशब्दस्य तदादिनियमनिषेधसिद्धिः। अत एवार्धखट्वेत्यादिस्थले अर्धा चासौ खट्वा चेति कर्मधारयसमासं स्वीकृत्य, एकदेशिसमास प्रत्याख्यातवान् भाष्यकारः। अन्यथा कर्मधारयेऽनुपसर्जनत्वात् तदादिनियमनिषेधः। एकदेशिसमासे चोपसर्जनत्वात् तदादिनियमे अत्यर्धखट्वशब्दादौ ह्रस्वतदभावयोः सतोः फलभेदः स्पष्ट एव। मम तूभयथाप्युपसर्जनत्वाद् न दोषः।

न च शास्त्रीयग्रहणे उपसर्जनपदस्य किं व्यावर्त्यमिति चेत्, 'अतिबहुश्रेयसी' इत्यादौ ह्रस्वाद्यभाव इति गृहाण।

**स्त्रीप्रत्यय** इति। **तत्रेति**। तद्विषयके। अतिप्रसङ्गनिरासायोपसर्जनस्त्रीप्रत्ययस्वरूपमाह—**यस्त्विति**।

न चात्र शास्त्रीयोपसर्जनग्रहणे परिभाषा व्यर्था, 'ष्यङः' इति सूत्रे

**अस्याः 'प्रत्ययग्रहणे' इत्यस्यापवादत्वात् तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपदसंबन्धेन स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेषग्रहणे च प्रवृत्तिः, न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे। ध्वनितञ्चेदम् 'अर्थवत्' सूत्रे भाष्ये। इयञ्च वाचनिक्येव। 'ष्यङः' इति सूत्रे भाष्ये स्पष्टा ।। २६ ।।**

**नन्वेवम् 'तरप्तमपौ घः' इत्यादिना तरबन्तादेः संज्ञा स्यात्, अत आह—**

---

अनुपसर्जनेति न्यासेन 'गोस्त्रियोः' इति सूत्रे स्त्र्यन्तस्येति न्यासेन च तदन्तविधिद्वयस्वीकारेण च सिद्धेरिति वाच्यम्, 'अतिबहुश्रेयसी' इत्यादौ ह्रस्वाद्यापत्तेरित्यलं विस्तरेण।

अनुपसर्जनस्त्रीप्रत्ययस्वरूपमाह—**प्रत्यासत्त्येति । तदर्थं प्रतीति ।** 'राजकुमारी' इत्यादि तत्समुदायार्थम् प्रतीत्यर्थम्। यादृशसमुदायस्य राजकुमारीत्यादेः स्त्रीप्रत्ययान्तत्वमानेयम्, तादृशसमुदायघटकराजादिपदनिरूपितानुपसर्जनत्वमेव कुमारीशब्दस्येत्यतो राजकुमारीशब्दस्यातिनिरूपितोपसर्जनत्वेऽपि नातिप्रसङ्ग इति भावः। अनेन तदन्तांशस्येष्टत्वं स्फुटमेवोक्तम्। एवञ्च मिथस्तौ व्यभिचरितावित्यन्तरनिषेधेऽन्यतराभावो नेति वोध्यम्। **अनुपसर्जनत्वादिति ।** स्त्रीप्रत्ययस्येति शेषः। **अत एवेति ।** प्रत्यासत्त्यङ्गीकारादेवेत्यर्थः।

**असंभवादिति ।** प्रत्यासत्त्या परिभाषाघटकस्त्रीप्रत्ययनिष्ठोपसर्जनत्वस्य शास्त्रीयोपसर्जनत्वविरुद्धत्वेनासंभवादित्यर्थः।

एतस्याः प्रवृत्तिस्थलं दर्शयति—**अस्या** इति। उत्सर्गसमानदेशा इति न्यायादिति भावः। ननु तस्य श्नमादौ व्यभिचारित्वम्, अत आह—**तदेकेति ।** वाक्यैकवाक्यतेत्यर्थः। सामान्यग्रहणं गोस्त्रियोरित्यादिः, विशेषग्रहणं ष्यङ् इत्यादिः। **न तु स्त्रीप्रत्ययस्त्रीप्रत्ययाग्रहणे** इति। तथा च 'धनेन परमकृति' इत्यादौ 'कर्त्तृकरणे कृता' इत्यादिना समासादयो न भवन्तीति भावः। स्त्रीप्रत्ययास्त्रीप्रत्ययसाधारणे एतत्परिभाषाप्रवृत्त्यभावे प्रमाणमाह—**ध्वनितञ्चेदमिति ।**

तत्र हि 'दश दाडिमानि, षडपूपाः' इत्यादावनेकस्यापि पदस्य 'अर्थवत्' सूत्रेण प्रातिपदिकसंज्ञामाशङ्क्य समासग्रहणस्य नियमार्थत्वेन निराकृतम्। एवं समासग्रहणस्य नियमार्थत्वं वदता भाष्यकृता ध्वनितम्। अन्यथा 'राजकुमारी' इत्यत्र 'राजन् ङस् कुमारी' सु इत्यलौकिकविग्रहावस्थायामन्तरङ्गत्वाद् हल्ङ्याबिना सुलोपे 'स्त्रीप्रत्यये चानुपसर्जनेन' इति तदादिनियमाभावेन तस्य समुदायस्य प्रत्ययान्तत्वात् 'अप्रत्ययः' इति निषेधेनाप्राप्तप्रातिपदिकसंज्ञाविधानार्थत्वेन समासग्रहणस्योपपत्तौ नियमार्थत्वमनुपपन्नं स्यात्। तथात्वे तु 'अर्थवत्' सूत्रे 'अप्रत्ययः' इत्यत्र निषेध्यसमर्पकप्रत्ययपदस्य स्त्रीप्रत्ययास्त्रीप्रत्ययसाधारणत्वेन एतत्परिभाषाया अप्रवृत्तौ तदादिनियमेन तत्र प्रत्ययान्तत्वाभावात् 'अप्रत्ययः' इति निषेधासंभवेन 'अर्थवत्' सूत्रेणैव प्रातिपदिकसंज्ञायाः प्राप्तौ समासग्रहणस्य नियमार्थत्वमुपपन्नं भवति। 'अन्तरङ्गानपि विधीन्' इति परिभाषा तु 'अकृतव्यूह' परिभाषायाः प्रपञ्चभूतत्वान्नास्त्येवेति तदाशयः। 'गोमत्

## संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

प्रियः' इत्यादीनां सिद्धिस्तु 'अन्तरङ्ग' परिभाषाया अनित्यत्वेन बोध्या। तदनित्यत्वे ज्ञापकं त्वेतत्परिभाषाज्ञापकमेवेति भावः। अस्या ज्ञापकसिद्धत्वं नास्तीत्यत आह—**इयञ्चेति**। तर्हि वचनरूपेण क्व पठितेत्यत आह—**ष्यङः इति सूत्रे** इति ॥ २६ ॥

प्रत्ययग्रहणपरिभाषाया अपवादसंगत्या परिभाषान्तरमवतारति—**नन्विति। तरबन्तादेरेति**। तथा च 'गौरी ब्राह्मणितरा' इत्यत्र 'घरूप' इति ह्रस्वः स्यात्, ब्राह्मणितरा' इत्यत्र च न स्यादिति भावः।

**संज्ञाविधाविति**। अत्र भावे क्तिः, संज्ञाया विधाविति कर्मषष्ठयायं समासः। न च संज्ञाकर्मकविधौ तदन्तविधिनियेधेऽपि 'घरूप' इत्यादौ विधिप्रदेशे तदन्तविधिर्दुर्वार इति वाच्यम्, 'गिलगिले च' इति ज्ञापकेन लेखग्रहणेन च सप्तम्यन्तमात्रग्रहणे तदन्तविध्यभावस्य 'उत्तरपदाधिकारे' इति परिभाषायां सिद्धान्तितत्वात्।

**नव्यास्तु**, एतन्निषेधसामर्थ्यादेव विधिप्रदेशेषु तदन्तविध्यभाव इति। ननु 'क्तक्तवतू निष्ठा' 'ईदूदेद्द्विवचनम्' इत्यादौ तदन्तविध्यभावायेयमावश्यकी, नह्येतद्विधिप्रदेशेषु 'रदाभ्यां निष्ठा' 'क्लिशः क्त्वानिष्ठयोः' 'प्लुतप्रगृह्याः' इत्यादिषु 'प्रत्ययग्रहणे चापञ्चम्याः' इति निषेधेन प्रत्ययग्रहणाभावेन च तदन्तविधेः प्राप्तिरस्ति, येन सामर्थ्यं स्यात्। अत एव निष्ठेत्यनेन निष्ठान्तस्यैव पूर्वनिपात इति चेत्, न; निष्ठासंज्ञासमकाले क्तक्तवत्वोः प्रत्ययत्वाभावेन 'प्रत्ययग्रहणपरिभाषाया' अप्रवृत्त्या क्तवत्वंशे संज्ञाविधौ' इति निषेधस्यानुपयोगात्। न च क्तान्ते तदभावार्थं सावश्यकीति वाच्यम्, क्तवतुसाहचर्येण क्तांशेऽपि तदप्रवृत्तेः। 'ईदूदेत्' इत्यादौ तदन्तविधावपि ईदूदेदित्यस्य श्रुतेन द्विवचनेन सम्बन्धादीदूदेदन्तं यद् द्विवचनम्, तदन्तमित्यर्थेऽपि क्षत्यभावात्। 'क्तक्तवतू निष्ठा' इत्यत्र 'संज्ञाविधौ' इति निषेधाप्रवृत्तेरुक्तत्वेन तद्विधिप्रदेशे निष्ठेत्यत्र तु तदन्तविधिः सुलभ एवेति बोध्यम्।

नन्वेतस्या अभावे 'तरप्तमपौ घः' इत्यत्रैकतदन्तविधिः 'घरूप' इति विधिप्रदेशे उत्तरपदेन चापरः। तथा च तरबन्तान्ते उत्तरपदे इत्यर्थे गौरी परमब्राह्मणितरा' इत्यत्रैव ह्रस्वः स्यात्, 'गौरी ब्राह्मणितरा' इत्यत्र न स्यात्। सत्यां चास्यां परिभाषायां संज्ञाविधौ तदण्तविधिनिषेधे विधिप्रदेशे एव तदन्तविधौ 'गौरी ब्राह्मणितरा' इत्यत्रैव ह्रस्वो भवतीति फलभेदात् कथमेतन्निषेधसामर्थ्याद् विधिप्रदेशे तदन्तविध्यभाव इत्युक्तिसङ्गतिरिति चेत्, मैवम्; 'गिलगिले च' इति ज्ञापकेन उभयर [ उत्तर ] पदे इत्यस्य प्रत्ययभिन्नस्य विशेषणत्वमित्यर्थस्य प्राक् सिद्धान्तितत्वादित्याहुः।

संज्ञया विधाविति करणतृतीयया तु न समासः, 'तरत्तमपौ घः' इत्यादौ

**'सुप्तिङन्तम्' इत्यन्तग्रहणमस्यां ज्ञापकम् । न च प्रत्यययोः पदसञ्ज्ञायामपि 'प्रत्यय' ग्रहणपरिभाषया तदन्तग्रहणसंभवाद् ज्ञापितेऽपि फलाभाव इति वाच्यम्, पदसंज्ञायाः 'स्वादिषु' इति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् । 'सुप्तिङन्तम्' इति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥**

---

संज्ञाया विधेयत्वे संज्ञयान्यस्य विधेरभावान्निषेधाप्रवृत्त्या तदन्तविधौ तरबन्तादीनां संज्ञायां प्रदेशेषु कुत्रापि प्रत्ययग्रहणाभावादेतन्निषेधाप्रवृत्तेः । सम्बन्धसामान्यषष्ठ्यापि न समासः । तथा सति सञ्ज्ञया च विधौ निषेधाङ्गीकारेण प्रागुक्तदोषवारणेऽपि 'कृतकृत्य' इत्यादौ निष्ठेति निष्ठान्तस्य पूर्वनिपातानापत्तेः निष्ठामात्रस्य पूर्वनिपातप्रसङ्गाच्चेति दिक् ।

परिभाषायां ज्ञापकमाह—**सुप्तिङन्तमिति** । ननु ज्ञापितायामप्यस्यामन्तग्रहणस्य स्वांशे चारितार्थ्याभावमाशङ्कते—**न चेति** । **प्रत्यययोरिति** । सुप्तिङोरित्यर्थः । **तदन्तेति** प्रदेशेष्वित्यादिः । **ज्ञापितेऽपीति** । तदन्तविध्यभावे इत्यादिः । **फलाभाव** इति । चारितार्थ्याभाव इत्यर्थः ।

अत्रायं भावः—'सुप्तिङन्तम्' इति सूत्रेऽन्तग्रहणाभावे सुप्तिङोः पदसंज्ञायामपि विधिप्रदेशे 'न लोपः प्रातिपदिकान्तस्य' इत्यादौ पदशब्देन सुप्तिङो रुपस्थितौ तत्र प्रत्ययग्रहणपरिभाषया तदन्दविधौ प्रतिबन्धकाभावात् सुबन्तस्य तिङन्तस्यैव च ग्रहणेन राजेत्यादौ नलोपादिसकलेष्टसिद्धौ ज्ञापितेऽपि स्वांशे चारितार्थ्याभाव इत्याशङ्काः 'प्रत्ययग्रहणे इत्यस्य प्रत्ययमात्रग्रहणे प्रवृत्तिः, न तु प्रत्ययाप्रत्ययसाधारणे इति 'उगितश्च' इति सूत्रे भाष्ये सिद्धान्तितत्वेन 'स्वादिषु' इति पदसंज्ञायाः प्रकृतिनिष्ठतयापि [?] पदग्रहणस्य प्रत्ययाप्रत्ययसाधारणत्वात् 'प्रत्ययग्रहणे' इति परिभाषाया अप्रवृत्त्या प्रदेशेषु तदन्तविध्यभावान्न ज्ञापितेऽपि चारितार्थ्याभाव इति समाधानमिति । परिभाषां प्रमाणयति—**सुप्तिङन्तमिति** ।

वस्तुत इयं परिभाषा निष्फला । 'तरप्तमपौ घः' इति न्यासे च कस्मात् परौ इति नियमेनावध्याकाङ्क्षायां प्रकृतेः पराविति 'प्रत्ययग्रहणे चापञ्चम्याः' इति निषेधात् तदन्तविधेरप्राप्तेः विधिप्रदेशे 'घरूप' इत्यादौ 'उत्तरपदाधिकारे' इत्यादिनिषेधात् तदन्तविधेरप्राप्तेर्न तदर्थमप्येषा । 'ईदूदेद्' इत्यत्र द्विवचनपदे सत्यपि तदन्तविधावीदूदेदन्तमिति श्रुतत्वाद् द्विवचनस्यैव विशेषणमिति कुमार्यगारादावदोषेण न तदर्थमपि सा 'क्तक्तवतू' इत्यत्र प्रत्ययग्रहणपरिभाषा [याः] प्रवृत्तेरभावस्योक्तत्वेन न तदर्थमप्येषा । 'तिङ्शित्' इत्यादौ तदन्तविध्यभावार्थमपि नैषा, सार्वधातूद्देश्यककार्य्याणामङ्गाधिकारे पाठसामर्थ्यात् । एवमन्यत्राप्यूह्यम् ।

अस्या अनावश्यकत्वादेवेदूदेदन्तं यद्द्विवचनं तदन्तं प्रगृह्यमिति पक्षः 'ईदूदेद्द्विवचनम्' इति सूत्रस्थभाष्योक्तः सङ्गच्छत इत्यलम् ॥ २७ ॥

**नन्वेवम् 'अवतप्ते नकुलस्थितम्' इत्यादौ 'नकुलस्थित' शब्दस्य क्तान्तत्वाभावात् समासो न स्यात्, अत आह—**

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥**

**अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके 'गतिरनन्तरः' इति सूत्रे अनन्तरग्रहणं ज्ञापकम् । तद्धि 'अभ्युद्धृतम्' इत्यादावतिव्याप्तिवारणार्थम् । 'प्रत्ययग्रहण' परिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद्व्यर्थं सदस्या ज्ञापकम् ।**

---

ननु 'प्रत्ययग्रहण' परिभाषया प्रकृतिप्रत्ययसमुदायाधिकग्रहणवारणेन भावे क्तान्तस्थितशब्देन 'कर्तृकरणे कृता बहुलम्' इति तृतीयान्तनकुलशब्दस्य समासेन निष्पन्नेन नकुलस्थितशब्देन 'अवतप्ते' इति सप्तम्यन्तं क्तान्तेन सह प्रागवन्निन्दायामित्यर्थकेन 'क्षेपे' इति सूत्रेण न समस्येत; 'क्तेनाहोरात्रावयवाः' इति सूत्रादनुवर्तमानक्तग्रहणेन प्रकृतिप्रत्ययसमुदायस्य 'स्थित' इत्यस्य क्तान्तस्य प्रत्ययग्रहणपरिभाषया ग्रहणेऽप्यधिकस्य नकुलस्थितशब्दस्याग्रहणात् । एवम् 'नखनिर्भिन्नः' इत्यत्रापि 'कर्तृकरणे' इति समासो न स्यात्, उक्तहेतोः । अतः 'प्रत्ययग्रहण' परिभाषायाः अपवादभूताम् 'कृद्ग्रहणे' इति परिभाषामवातारयति—**नन्वेवमिति** ।

**अस्याश्चेति** । ज्ञापकमित्यत्रास्यान्वयः । **कर्मणि क्तान्ते** इति । कर्मणि यः क्तः, तदन्ते इत्यर्थः । 'क्ते च' इत्यतः क्ते, 'तृतीया कर्मणि' इत्यतः कर्मणीति चानुवर्तत इति भावः ।

अनन्तर इत्यस्य ज्ञापकत्वमुपपादयति—**तद्धीति** । **अभ्युद्धृतमिति** ।

अत्रायं स्वरक्रमः—धृतशब्देन क्तान्तेनोच्छब्दस्य 'कुगति' इति समासे 'समासस्य' इत्यन्त उदात्तः प्राप्तः, तं बाधित्वा 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इति सूत्रेण सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्येत्यर्थकेनाव्ययपूर्वपदत्वात् पूर्वपदप्रकृतिस्वरः प्राप्तः, तमपि बाधित्वा 'गतिकारकोपपदात् कृत्' इत्यनेन एभ्यः कृदन्तः प्रकृतिस्वरं स्यात् तत्पुरुषे इत्यर्थकेन कृत्स्वरः प्राप्तः तमपि बाधित्वा 'थाथघञ्क्ताजपित्रकाणाम्' इत्यनेन थ-अथ-घञ्-क्त-अच्-अप्-इत्रक-एतदन्तानां गतिकारकोपपदात् परेषामन्त उदात्त इत्यर्थकेनान्तोदात्तः प्राप्तः, तमपि बाधित्वा 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्त उद्धृतशब्द इति । ततोऽभीत्यस्योद्धृतशब्देन समासेऽनया परिभाषया पूर्वोक्तक्रमेण 'गतिरनन्तरः' इति प्रकृतिस्वरः प्राप्तः, तद्वारणाय प्रकृतसूत्रेऽनन्तरग्रहणम् । कृद्ग्रहणे गतिकारकपूर्वस्याग्रहणे तु 'प्रत्ययग्रहण' परिभाषया उद्धृतशब्दस्य क्तान्तत्वाभावादभीत्यस्य प्रकृतिस्वराप्राप्त्या तद्वारणाय तद्ग्रहणं व्यर्थं सदेतस्या ज्ञापकमिति भावः ।

**न च 'अभ्युद्धृतम्' इत्यादौ परत्वाद् 'गतिर्गतौ' इत्यनेनाभेर्निघात एवेति वाच्यम्, पादादिस्थत्वेन, पदात् परत्वाभावेन च तदप्राप्तेः। अनन्तरग्रहणे कृते तु तत्सामर्थ्याद् गत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यत इति न दोषः।**

**न च 'अभ्युद्धृतम्' इत्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वा-**

---

ननु 'अभ्युद्धृतम्' इत्यादौ 'गतिरनन्तरः' इति स्वरः 'गतिर्गतौ' इति स्वरश्च प्राप्नुतः। तत्र 'पुरोहितोऽभ्युद्धरति' इत्यादावन्यत्र चरितार्थयोस्तयोर्विप्रतिषेधे परत्वात् 'गतिर्गतौ' इत्यनेन प्रकृतिस्वरं बाधित्वा निघात एवेति। तत्र प्रकृतिस्वराप्राप्त्या तद्वारणायानन्तरग्रहणस्य ज्ञापितायामपि परिभाषायां स्वस्मिन् चारितार्थ्याभावात् ज्ञापकत्वासम्भव इत्याशङ्कते—**न चेति**। परत्वादित्यस्य 'गतिरनन्तरः' इत्यपेक्षयेत्यादिः। तथा च सर्वविषये चारिथ्याभाव इति भावः।

बाधकत्वेनाभिप्रेतस्याप्राप्तिमुपपादयति—**पादादिस्थत्वेन, पदात् परत्वाभावेन चेति**। चो हेतौ, यतो हेतोः पदात् परत्वाभावः, अतः पादादिस्थत्वमित्यर्थः। यथाश्रुतं तु न युक्तम्, 'कुत्सने च सुपि' इत्यतः प्राक् पदादित्यधिकार इति 'पदात्' इति सूत्रभाष्यशेखराद्युक्तेः। अनन्तरग्रहणमनर्थकमिति भाष्यं त्वेकदेश्युक्तिः, उक्तयुक्तेः।

नन्वत्र कृतेऽप्यनन्तरग्रहणे एतद्ग्रहणज्ञापितपरिभाषया 'अभ्युद्धृतम्' इत्यादौ 'उद्धृत' इत्यस्य क्तान्तत्वेनाभेस्तदानन्तर्यस्य सत्त्वात् तेन प्रकृतिस्वरो दुर्वार एवेति पुनरनन्तरग्रहणस्य स्वांशे चारितार्थ्याभाव एवेत्यत आह—**अनन्तरग्रहणे कृते त्विति**। **तत्सामर्थ्यादिति**। अनन्तरग्रहणसामर्थ्यादित्यर्थः। धातुलाभोपायमाह—**गत्याक्षिप्तेति**। **गृह्यत इति**। अभिस्तु न तथेति भावः।

नन्वाद्युदात्तोद्धृतशब्दस्याभिना समासे तत्रानन्तरग्रहणाभावे 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति सूत्रादत्र पूर्वपदग्रहणानुवृत्तौ कर्मार्थक्तान्ते परे पूर्वपदभूता गतिः प्रकृत्येत्यर्थे उदः पूर्वपदत्वाभावेन तदप्राप्त्या सतिशिष्टथाथादिस्वरेणान्तोदात्तत्वापत्तिः, तद्वारणार्थमनन्तरग्रहणम्, सूत्रं त्वेकगतिके सफलम्। कृते तु तस्मिन् 'अनन्तरः' इति योगं विभज्य तत्सामर्थ्यात् पूर्वपदाननुवृत्त्याऽनन्तरमात्रगतिः कर्मार्थक्तान्ते परतः प्रकृत्येत्यर्थेनोच्छब्दस्य प्रकृतिस्वरः सिध्यतीत्येतावतानन्तरग्रहणस्य चारितार्थ्ये तस्य ज्ञापकत्वमसंभवीति पुनराशङ्कते—**न चेति**। **अभिना समासे इति**। गतिस्वरेणाद्युदात्तोद्धृतशब्दस्येति शेषः। **तदिति**। अनन्तरग्रहणमित्यर्थः। **गतिग्रहणमिति**। 'गतिकारकोप०' इति सूत्रादेकदेशे स्वरितत्वप्रतिज्ञयेति भावः। तत्र ततः समुदितानुवृत्तावपि योगविभागस्येष्टसिद्ध्यर्थत्वेनैतस्यैवात्र सम्बन्धः। 'सूपमानात्' इत्यतः क्तग्रहणं त्वनुवर्तत एवेति भावः। **कृत्स्वरेणेति**। 'गतिकारकोपपदात् कृत्' इत्यनेनेत्यर्थः। एतत्परिभाषयोद्धृतशब्दस्य कृदन्तत्वात् तस्य चाद्युदात्तत्वात्। तत्त्वं चोक्तमेव प्राक्।

**भावेऽपि स्वरार्थं तदिति वाच्यम्, 'कारकाद् दत्त' इति सूत्रे 'कारकात्' इति योगं विभज्य तत्र गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्दोदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः, तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेव। यत्र गतिकारकसमभिव्याहृतं कृदन्तम्, तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणम्। 'अपि' शब्दात् तदसमभिव्या-**

---

नन्वनन्तरग्रहणस्योदोऽपूर्वत्वेऽपि स्वरार्थत्वे उक्तपरिभाषाया ज्ञापकत्वासंभवेन कृद्ग्रहणपरिभाषाया एवाद्याप्यभावेनोद्धृतशब्दस्य कृदन्तत्वाभावेन कथं कृत्स्वरेणोदात्तत्वसिद्धेरित्युक्तिसंगतिः, कथञ्च तदपवादथाथादिस्वरस्य प्राप्तिरिति चेत्, न; 'वनो र च' इत्यादाविव तदन्तविधिद्वयेन तदुपपत्तेः। 'आटश्च' इतिवत् 'गतिश्च' इति चकारेण गतिरित्यस्यैवानुवृत्त्या वा पुनर्विधानेनोदोऽपूर्वपदत्वेऽपि स्वरसिध्यानन्तरग्रहणस्य व्यवहितनिवृत्त्यर्थत्वे निश्चिते तेनोक्तपरिभाषायां ज्ञापितायां तामङ्गीकृत्यैव कृत्स्वरेणोदात्तत्वसाधनाच्च।

**केचित्तु**, ज्ञापनात् प्रागपि प्राचीनैः पठ्यमानत्वेन एतस्या विद्यमानत्वेन ज्ञापकत्वस्य सुलभत्वादित्याहुः।

**परे तु** 'अहोने द्वितीया' इति सूत्रे 'अनुपसर्गमिति वक्तव्यम्' इति वार्तिकमस्यां ज्ञापकम्। तद्धि सुखप्राप्तम्' इत्यादौ पूर्वपदप्रकृतिस्वरव्यावृत्त्यर्थम्। यदि तु 'कृद्ग्रहण' परिभाषा न स्यात्, तर्ह्युपसर्गविशिष्टस्य क्तान्तत्वाभावेन क्तान्ते उत्तरपदे पूर्वपदस्य तदप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः।

नन्वत्र 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इति 'अपिग्रहणाद्' यत्र गतिकारकसमभिव्याहृतं कृदन्तम्, तत्रैव केवलस्यापि ग्रहणं स्यात्; गतिकारकासमभिव्याहृतस्य केवलस्य कुत्रापि ग्रहणं न स्यात्। तथा सति 'कर्तृकरणे' इति सूत्रेण नखनिर्भिन्न इत्यत्रैव समासः स्यात्; 'दात्रच्छिन्नम्' इत्यादौ न स्यात्। अतः परिभाषार्थमाह—**यत्रेति**। यत्र गतिकारकविशिष्टसमुदायस्य कृद्ग्रहणे सूत्रोपात्ततावच्छेदकाक्रान्तत्वम्, तत्रैव कृद्ग्रहणेन समभिव्याहृतगतिकारकविशिष्टसमुदायस्य ग्रहणम्, यत्र तु तदनाक्रान्तत्वम्, तत्र गतिकारकयोः समभिव्याहारेऽपि केवलस्यैव ग्रहणम्। अत एव 'गतिकारकोपपदानाम्' इत्यस्याभावे 'अवयवकुटिन्' शब्दादण आपादनं भाष्यकृता कृतम्। अत एव 'त्वया कृतम्' इत्यादौ 'व्यस्ते कृतम्' इत्यादौ प्रातिपदिकत्वमिति ध्येयम्।

**अन्यथेति**। अपिशब्दाभाव इत्यर्थः। उभयोरेकत्राङ्गीकारे इति यावत्। **परत्वादिति**। उत्कृष्टत्वात्, अपवादत्वादिति यावत्।

**यद्वा**, 'प्रत्ययग्रहण' परिभाषाया अवकाश उपगोरपत्यमौपगव इत्यत्र तद्धितान्तत्वात् प्रातिपदिकत्वम्, 'कृद्ग्रहण' परिभाषायास्तु 'व्यावक्रोशी, व्यावलेखी' इत्यादौ अवकाशः, त(अ)त्र 'णचः स्त्रियामञ्' इत्यञि गतिपूर्वकस्यापि णजन्तत्वाद् वृद्धिस्वरौ भवतः। प्रत्ययग्रहणपरिभाषा त्वत्र 'स्त्रीप्रत्यये

हृतस्य केवलस्यापीति तदर्थः। अन्यथाऽनया कृद्ग्रहणविषये परत्वात् 'प्रत्ययग्रहण' परिभाषाया बाध एव स्यादित्यपिग्रहणम्। अत एव 'सांकूटिनम्' इति 'गतिकारकोपपदानाम्' इति 'कृद्ग्रहणे' इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाजि सिध्यचति, न तु 'संकौटिनमिति' इति 'पुंयोगात्' इति सूत्रे भाष्योक्तं सङ्गच्छते। अन्यथा तत्र केवलकूटिन्नित्येतस्यापीनुणन्तत्वात् ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात्। स्पष्टं चेदं सर्वम् 'समासेऽनञ्पूर्व०' इति सूत्रे भाष्यकैयटयोः।

---

चानुपसर्जनेन' इति निषेधान्नोपतिष्ठते। यद्यपि तथा तदादिनियममात्रे निषिद्धे 'कृद्ग्रहणं परिभाषामन्तरापि समुदायस्य तदन्तत्वात् सिद्धिः, तथापि तत्समभिव्याहारे न्यूनाधिकव्यावृत्तये तत्प्रवृत्तिरावश्यकीति ध्येयम्। 'प्रत्ययग्रहण' परिभाषाया अङ्गसंज्ञासूत्रस्थत्वेन 'कृद्ग्रहण' परिभाषायाः 'गतिरनन्तरः' इति सूत्रस्थत्वेन च प्रकृते विप्रतिषेधात् परत्वेन व्यवस्थेति बोध्यम्। स्पष्टञ्चेदम् 'समासेऽनञ्पूर्वे' इत्यत्र भाष्यकैयटयोः।

**अत एवेति**। तत्समभिव्याहारे तद्विशिष्टस्यैव ग्रहणमित्याद्यर्थाङ्गीकारादेवेत्यर्थः। **सांकूटिनमिति**। कूट आप्रदाने इत्यस्मात् चुरादिण्यन्तात् 'अभिविधौ भाव इनुण्' इति इनुणि 'संपूर्वकात् संकूटिन् इत्यस्मात् 'अणिनुणः' इत्यणीदं रूपम्। **परिभाषायामिति**। 'संकूटिन्' शब्दावयवात् कूटिन्नित्यस्मात् प्रातिपदिकात् समासार्थविभक्तिश्च 'अणिनुणः' इत्यण् च प्राप्नुतः। तत्र स्वार्थिकत्वेनान्तरङ्गत्वादण्यादिवृद्धौ 'संकौटिनम्' इति हि स्यात्। अतः सुबुत्पत्तेः 'प्रागन्तरङ्गत्वात् पूर्वं समासः, 'गति' इति परिभाषया। अण्प्रत्ययो हि प्रतिपदिकविशेषापेक्षत्वाद् बहिरङ्ग इति भावः। ततश्च संकूटिन्नित्यस्माद् विशिष्टात् समासप्रातिपदिकादण्प्रत्यये सतीष्टं सिध्यति। कृतेऽपि समासे 'प्रत्ययग्रहण' परिभाषया केवलादेव प्राप्ते 'कृद्ग्रहण' परिभाषया विशिष्टादेवाणिति भाक् (वः)।

वस्तुतोऽत्रान्तरङ्गबहिरङ्गभावकल्पनमयुक्तम्, समासस्यापि पदद्वयनिमित्तकत्वेन समत्वात्। तस्मात् सुबुत्पत्तेरित्यस्य कृत्प्रकृतिकप्रत्ययोत्पत्तेः प्राक् समास इत्यर्थक 'गति' इति परिभाषयैवाण्प्रत्ययात् प्राक् समास इत्यवधेयम्। अत एव व्याघ्रीत्यादौ टाबुत्पत्तेः प्राक् समासः सङ्गच्छते।

**अन्यथेति**। उक्तार्थमनङ्गीकृत्य गतिकारकसमवधानेऽपि केवलस्य ग्रहणे इत्यर्थः। **पाक्षिकदोषो दुर्वार एवेति**। चिन्त्यमिदम्, 'निजौ चत्वार एकाचः' इति न्यायेन समुदायादेव प्रत्ययोत्पत्तिसिद्धेः। **सर्वमिति**। आदित आरभ्य यावदुक्तमित्यर्थः।

ननु गतिकारकसमभिव्याहारे न केवलस्य ग्रहणम्, ( अपि ) तु तद्विशिष्टस्यैवेत्यभ्युपगमे 'गतिरनन्तरः' इत्यनेन कर्मार्थक्तान्ते परतो गतेः प्रकृतिस्वर-

**'गतिरनन्तरः' इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानात् तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् ।**

**इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च, न तु कृदकृद्ग्रहण इति, 'अनुपसर्जनात्' इति सूत्रे भाष्ये स्पष्टम् ॥ २८ ॥**

**पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ २९ ॥**

---

विधानमनुपपन्नं स्यात्, विशिष्टस्य क्तान्तत्वेन ततो भेदाभावात्। अत आह– **'गतिरनन्तरः'** इति। **पूर्वदस्येति**। वस्तुतः पूर्वपदभूतस्येत्यर्थः। **विधानदिति**। विधानसामर्थ्यादित्यर्थः। एवञ्च तत्र सूत्रारम्भसामर्थ्यात्पूर्वोक्तनियमस्य त्याग इति भावः।

ननु सामर्थ्यादुक्तपरिभाषाया अप्राप्तौ 'अभ्युद्धृतम्' इत्यादौ व्यवहितस्य क्तान्तपरत्वाभावादेव स्वराप्रवृत्त्या ज्ञापितेऽप्यनन्तरग्रहणस्य स्वांशे चारितार्थ्याभाव इति चेत्, न; यस्या गतेः प्रकृतिस्वरः कार्यः तस्यैव सामर्थ्येन क्तान्तप्रवेशकल्पनात्। ननु कृद्ग्रहणे गतिपूर्वस्य ग्रहणं ज्ञाप्यताम्, कारकपूर्वस्य तु कथं ज्ञाप्यते ? उच्यते; एकदेशानुमित्या प्राचीनपठितपरिभाषाज्ञापनात्।

**कृत्समान्यग्रहणे** इति। तेन 'कर्तृकरणे कृता बहुलम्' इति सूत्रेण नखनिर्भिन्न इत्यत्र समासः। किञ्च, विष्णुसुकृतम्' इत्यत्र विष्णुनेति तृतीयान्तस्य सुकृतशब्देन समासः, 'गतिकारकोपपदात् कृत्' कृदुत्तरपदकृतिस्वरेण मध्योदात्तत्वञ्च सिध्यति। कृद्विशेषग्रहणे फलं तूक्तमेव सांकूटिनमिति। **न तु कृद्ग्रहणे इति**। तेन 'पुष्पसुहारी' इत्यादौ णिनोति पूर्वपदाद्युदात्तत्वं। तत्र हि 'काश्यपकौशिकाभ्यां कलापिवैशम्पायनान्ते वासिभ्यश्च' इत्यादिविहितणिनेस्तद्धितस्यापि ग्रहणसत्त्वात्। एवम् 'राजच्छत्रधारः' इत्यादावणन्ते उत्तरपदे नियुक्तवाचिनि समासे पूर्वमाद्युदात्तमित्यर्थकेन 'अणि नियुक्ते' इति सूत्रेणाकाराद्युदात्तत्वं न।

**भाष्ये** इति। तत्र हि प्रधानेन तदन्तविधेः प्रयोजनं कौम्भकारेयसिद्धिः। अन्यथाऽणन्तात् प्रातिपदिकाद् ङीबित्यर्थके 'टिड्ढा' इति सूत्रेऽण्प्रत्ययस्य कृदकृद्बोधकत्वेन कृद्ग्रहणपरिभाषाया अप्रवृत्त्या प्रत्ययग्रहणपरिभाषया कुम्भकारीशब्दावयवकारशब्दस्यैवाणन्तत्वेन तत एव 'टिड्ढा०' इति ङीपि केवलादेव कारीशब्दात् 'स्त्रीभ्यो ढक्' इति ढकि 'कुम्भकारेयः' इति हि स्यात्। अतोऽणन्तान्तात् प्रातिपदिकाद् ङीबित्यर्थकेन 'टिड्ढा०' इति सूत्रेण विशिष्टान्ङीपि विशिष्टादेव ढगित्युक्तम् ॥ २८ ॥

नन्वेवम् 'इष्टकचितम्' इत्यादाविव 'पक्वेष्टकचितम्' इत्यादौ ह्रस्वो न स्यात्, 'इष्टकेषीका०' इत्यत्र प्रत्ययग्रहणाभावेन पूर्वोक्तपरिभाषाया अप्रवृत्त्या विशिष्टाग्रहणात्, अत आह—**पदाङ्गाधिकारे** इति।

**पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः। 'येनविधिः' इत्यस्यायं प्रपञ्चः। तेन इष्टकचितम् पक्वेष्टकचितम्' इत्यादौ इष्टकेषीकामालानां चित०' इति ह्रस्वः 'महान्, परममहान्, परमातिमहान्' इत्यादौ 'सान्तमहतः' इति दीर्घश्च सिद्धः। अत एव 'तदुत्तरपदस्य' इति पाठोऽयुक्त इति भाष्ये स्पष्टम्।**

**अत्र पदशब्देनोत्तरपदाधिकारः, केवलपदाधिकारश्च। 'पादस्य पदाज्याति०' इत्यत्र न तदन्तग्रहणम्, लक्ष्यानुरोधादिति सर्वम् 'येन विधिः' इत्यत्र भाष्ये स्पष्टम्॥ २९॥**

---

परिभाषार्थमाह—**पदमिति**। तथा च पदाङ्गयोर्विशेष्यत्वमेव, न तु विशेषणत्वमिति। विशेष्यविशेषणभावव्यवस्थामात्रार्थकत्वमस्याः, न त्वपूर्वत्वमिति। तदेवाह—**येनेति**। पदाधिकारे प्रयोजनं 'पक्वेष्टकचितम्'। अङ्गाधिकारे प्रयोजनं परमातिमहान्। पदशब्देनोत्तरपदाधिकारो न गृह्यते, किन्तु शुद्धपदाधिकार इति प्राचीनमतमसंगतमिति ध्वनयितुमुत्तरपदस्थमेवोदाहरति—**तेनेष्टकेति**। शुद्धपदाधिकारप्रयोजनं तु 'विद्वान्, अतिविद्वान् 'वसुस्रंसु०' इति दः। **ह्रस्व इति**। अन्यथा पूर्वपदाक्षेपेण तस्य प्रथमावयवे रूढत्वेन 'पक्वेष्टकचितम्' इत्यादौ न स्यादिति भावः। 'धर्मादनिच् केवलात्' इति सूत्रे केवलाद्ग्रहणं त्वाक्षिप्तस्य पूर्वपदस्य पञ्चम्यन्तत्वकल्पनाय। अन्यथा पूर्वपदाक्षेपेऽपि पूर्वपदसम्बन्धी यो धर्म इत्यर्थापत्तौ परम्परासम्बन्धेऽपि 'परमस्वधर्मः इत्यादावनिच्प्रत्ययापत्तिः। एतेन पूर्वपदाक्षेपेऽपि पक्वञ्चेष्टका च चितं चेतिच्छेदे 'पक्वेष्टकचितम्' इत्यादौ दोषाभावाद् व्यर्थस्तदन्तविधिः, तदाक्षेपश्च व्यर्थ इत्यपास्तम्।

अत्र कस्यचित् पाठः—**'पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च'** इति। सोऽयुक्त इत्याह—**अत एवेति**। 'परमातिमहान्' इति भाष्योदाहृतोदाहरणदानादेवेत्यर्थः। अत्र महदन्तत्वेऽपि तदुत्तरपदकत्वाभावात् 'सान्त०' इति दीर्घानापत्तेरिति भावः। **भाष्ये इति**। 'येन विधिः' इत्यत्रेत्यर्थः।

**अत्रेति**। उक्त परिभाषायामित्यर्थः उत्तरपदाधिकार इति। उत्तरपदाक्षिप्तपूर्वपदस्य विशेष्यत्वं गृह्यत इति भावः। 'गिलगिले च' इति ज्ञापकेनोत्तरपदस्य विशेष्यत्वाभावस्तूक्त एवोत्तरपदाधिकारपरिभाषायाम्।

नन्वेवं पदाधिकारे तदन्तविधौ पादेनोपहतं पदोपहतमित्यत्रेव दिग्धपादेनोपहतं दिग्धपादोपहितमित्यत्रापि 'पादस्य पदाज्याति०' इति पदादेशः स्यात्, इत्यत आह—**पादस्येति। सर्वमिति**। आदित आरभ्य यदुक्तम्, तत् सर्वमित्यर्थः॥ २९॥

'पदाङ्गाधिकारे' इति परिभाषायां तदन्तस्य चेत्यंशः 'येन विधिः' इति सूत्रलभ्यः, तस्येत्यंशस्तुः, 'व्यपदेशिवदेकस्मिन्' इति परिभाषालभ्यः,

**नन्वेवम् 'अस्यापत्यमिः' इत्यादावदन्तप्रातिपदिकाभावादिञ् न स्यात्, अत आह—**

**व्यपदेशिवदेकस्मिन् ॥ ३० ॥**

**निमित्तसद्भावाद् विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी, यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः, स तेन तुल्यं वर्तते कार्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्तव्यमित्यर्थः । तेनाकारस्याप्यदन्तत्वाद् न क्षतिः ।**

**एकस्मिन्नित्युक्तेः 'सभासन्नयने' आकारस्य नादित्वम् 'दरिद्राधातौ' इकारस्य नान्तत्वम् । अन्यथा 'सभासन्नयने भवः' इत्यर्थे 'वृद्धाच्छः' दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात् ।**

---

अतस्तामाह—**नन्विति । एवमिति ।** पदाङ्गाधिकार एव तस्य तदन्तस्य च कार्याङ्गीकारे 'येन विधिः' इति सूत्रे तस्येत्यस्याभावेनान्यत्र तदन्तस्यैव कार्याङ्गीकारे इत्यर्थः । **इञ् न स्यादिति ।** अत इत्यस्योभयाधिकारबहिर्भूतत्वादिति भावः ।

ननु 'येन विधिः' इति सूत्रे 'स्वं रूपम्' इत्यतः स्वशब्दानुवृत्त्या तत्प्रत्याख्याने च 'तस्य च' इति पाठेन तस्यापि 'येन विधिः' इति सूत्रेणैव कार्यसिद्धौ कथमिदमिञ् न स्यादितीति चेत्, न; 'इयाय' इत्यादिसिद्धये 'व्यपदेशिवत्' इति परिभाषाया आवश्यकत्वेन तथैव सकलेष्टसिद्धौ 'येन विधिः' इति सूत्रे स्वशब्दानुवृत्तिः, तस्य चेति पाठो न कर्तव्य इत्याशयात् । न च रोणीत्यादौ 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधेन 'व्यपदेशिवद्भावाप्रवृत्त्या रौण इत्यादिसिध्यर्थमनुवृत्तिः, पाठो आऽऽवश्यक इति वाच्यम्, विधायकेऽन्तादिशब्दोपादान एव 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषाप्रवृत्तेर्व्यपदेशिवद्भावनिषेधाप्रवृत्त्या व्यपदेशिवद्भावेनैव रौहिण इत्यादीनां सिद्धत्वात् ।

यदि तु प्रत्ययविधिमात्रे 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधः, तदाऽनुवृत्तेः, पाठस्य वा आवश्यकत्वेन तेनैव अरूपात् प्रातिपदिकादपीञ् सिद्धौ 'न स्यात्' इत्यसंगतमेवेति इयायेत्याद्युदाहरणमस्या इत्यवधेयम् ।

**व्यपदेशिवदिति ।** अस्या अर्थस्तु मुख्यो व्यवहार इत्यादिना मूल एव स्फुटः ।

तत्र मुख्यत्वे बीजमाह—**निमित्तसद्भावादिति ।** यत्र निमित्तस्य सद्भावात् तादृशो व्यवहारो जायते, स एव मुख्य इति भावः । यथाऽदन्तात् प्रतिपदिकादिति व्यवहारो दक्षशब्दे मुख्यः । एकस्मिन्नित्यस्यार्थमाह—**असहाये इति ।** तत्त्वञ्च यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नत्वमतिदिदिक्षितम्, तद्धर्मावच्छिन्नसमभिव्याहारशून्यत्वम् । अतिदिश्यमानधर्मवदसमभिव्याहारत्वमिति यावत् । **तेनेति ।** व्यपदेशिनेत्यर्थः । **कार्यं प्रतीति ।** कार्यार्थमेवातिदेशाङ्गीकारादिति भावः । उक्तदोषमुद्धरति—**तेनेति । अकारस्येति ।** वासुदेववाचकस्येत्यर्थः ।

**अत एव 'हरिषु' इत्यादौ सोः पदत्वं न लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहारोऽयं मे ज्येष्ठः, कनिष्ठः मध्यम इति, किन्त्वेकपुत्र-सत्त्व एव।**

**अनेन चाशास्त्रीयस्याप्यतिदेशः। अत एव 'इयाय' इत्यादावेकाच्त्व-निबन्धनद्वित्वसिद्धिः। अत एव 'भवति' इत्यादौ भू इत्यस्याङ्गत्वम् 'इयान्' इत्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धप्रातिपदिकत्वं च सिध्यति। अन्यथा यस्माद् विहितस्तदादित्वाभावाद् न स्यात्।**

---

असहायार्थकैकस्मिन्नित्यस्य फलमाह—**एकस्मिन्नित्युक्तेरिति। सभासान्नयने** इति। तच्छब्दे इत्यर्थः। **अन्यथेति**। एकस्मिन्नित्यस्याभाव इत्यर्थः। **सभासन्नयने भव इत्यर्थ** इति। अत्र यस्याचो वृद्धिरित्यंशसत्त्ववदादित्वस्यापि व्यपदेशिवद्भावेन स्वस्मिन् सत्त्वात् समुदायस्य वृद्धसंज्ञा दुर्वारेति भावः। ननु 'वृद्धिर्यस्याचामादिः' इति सूत्रे आदिपदोपादानसामर्थ्यादिवात्र दोषवारणे व्यर्थ-मेवैकस्मिन्निति चेत्, आह—**दरिद्रातेरिति।**

फलान्तरमप्याह—**अत एवेति**। एकस्मिन्नित्युक्ते रेवेत्यर्थः। **पदत्वमिति**। पदत्वमपीत्यर्थः। अन्यथा यस्माद्विहितस्तदादित्वस्याशास्त्रीयस्याप्यनतिदेशात् पदत्वे 'सात्पदाद्योः' इति षत्वनिषेधो दुर्वार इति भावः।

वस्तुतश्चिन्त्यमिदम्, हरिष्विति विशिष्टसमुदायस्य सुवन्तत्वे हरीत्यस्य सहायत्वेऽपि सोः सुवन्तत्वे तस्यासहायत्वाद् तद्धर्माविच्छिन्ने यद्धर्मा वच्छिन्नोद्देश्यकं कार्यं चिकीर्षितम्, तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नसमभिव्या-हारशून्यत्व एवैतस्याः परिभाषायाः प्रवृत्तेरङ्गीकारात्। अन्यथा धुगित्यत्र भष्भावानापत्तिः, धुगवयवस्य 'उघ्' इत्यंशस्य मुख्यधात्ववयवैकाचः ससहाय-त्वात् परिभाषाऽप्रवृत्त्या विशिष्टस्य धात्ववयवैकाच्त्वाभावात्। मुख्यस्य 'उघ्' इत्यस्य तु कार्यप्राप्तिरेव नास्ति, तदवयवस्य वशोऽभावात्।

नन्वेवं तर्हि हरिष्वित्यादावुक्तदोषो दुर्वार एवेति चेत्, शृणु; परिभाषया स्वस्मिन् स्वघटकत्वम्, [ स्व ] घटितत्वञ्चातिदिश्येते, नान्यत् किमपीति हरिष्वित्यादौ [ एकां ? ] सौ स्वघटितत्वरूपसुबन्तत्वस्य चानया अतिदेशेऽपि सोर्विधानावधित्वाभावेन विधानावध्यादित्वस्यानतिदेशान्न दोषः। अत एव 'निजौ चत्वार एकाचः' इति भाष्यमपि सङ्गच्छते। अन्यथा 'इकारस्य' नकार-जकाराभ्यां ससहायत्वेन परिभाषाया अप्रवृत्त्या [ एका ] च्त्वव्यवहारा-सम्भवात् 'चत्वारः' इत्युक्तेरसङ्गतिः स्पष्टैव। अत एव रामशब्दे जराशब्दाति-देशोऽपि न। अन्यथा व्यपदेशहेत्वभावेनाविद्यमानव्यपदेशेन 'इयाय' इत्यादा-विवन्यायप्रवृत्तेः स दुर्वार एव स्यात्। 'व्यतिसे, इयान्' इत्यादावानुमानिक-स्थानिवद्भावेन तिङन्तत्वादेरतिदेशेन पदत्वं सुलभम्, कार्यकालपक्षे यथोद्देशे तु पदत्वादेरेवातिदेशः।

**यत्तु योऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशः; यथा 'इयाय' इत्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैयटः, तन्न; 'तस्यैकपदा ऋक्' इत्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात्। 'एकपदा ऋक्' इत्यत्रार्थेन युक्तो व्यपदेशः इति भाष्ये उक्तम्। ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽवयव इत्यर्थ इति तदाशयः।**

---

लोकन्यायसिद्धमिदं वचनमित्याह—**लोकेऽपीति**। एकपुत्रसत्त्वे एवेति पाठः। एकपुत्रत्व एवेति पाठे तु निमित्तसप्तमी कर्मधारयात्, बहुव्रीहेर्वा।

कैयटं खण्डयितुं स्वसिद्धान्तमाह—**अनेन चेति**। **अशास्त्रीयस्याप्यतिदेश इति**। शास्त्रीयत्वं शास्त्रविधेयत्वम्। यथाऽकारे अदन्तत्वम्, 'येनविधिः' इत्यनेन तद्विधानात्, नैव यस्माद्विहितस्तदादित्वम्। **अत एवेति**। अशास्त्रीयस्यातिदेशादेवेत्यर्थः। **कार्यकालेति**। यथोद्देशे पूर्वप्रवृत्तप्रातिपदिकसंज्ञाया लुप्तायामपि प्रकृतावानुमानिकस्थान्यादेशभावेन सुलभत्वादिति भावः। **अन्यथेति**। अशास्त्रीयातिदेशानङ्गीकारे इत्यर्थः। **न स्यादिति**।

तस्मादेतदर्थमनयाऽशास्त्रीयस्याप्यतिदेशस्य आवश्यकत्वेन तेनैव 'इयाय' इत्यादावपि निर्वाहे कैयटाद्युक्तिरयुक्तैवेति ध्वनयन्नाह—**यत्त्विति**। **अर्थस्य त्यागोपादानाभ्यामिति**। वृत्तिपदार्थत्वेन विवक्षितेऽर्थस्य त्यागः, अन्यपदार्थत्वेन विवक्षितेऽर्थस्योपादानमित्यर्थः। शब्दार्थसमुदायस्यान्यपदार्थत्वम्, शब्दमात्रस्य तदवयवत्वमिति यावत्। प्रतिलक्ष्यं लक्षणोपप्लवादनर्थकसमुदायविषये 'उर्णुनाव' इत्यादौ न दोषः। **तस्येति**। तथैकाच्त्वव्यवहारस्येत्यर्थः। मुख्यव्यवहारत्वादिति पाठः। मुख्यव्यवहारसत्त्वादिति पाठे तु तस्य=एतस्यार्थवत इत्यर्थो बोध्यः। **व्यवहारसत्त्वादिति**। तथा च 'इयाय' इत्यादौ तथोपपादनेन परिभाषाप्रयोजनं कैयटीयमयुक्तमिति भावः।

अर्थमाश्रित्य यो व्यवहारः स मुख्य एवेत्यत्र भाष्यसम्मतिमाह—**एकेति**। युक्तपदोपादानेन व्यपदेशिवदित्यस्य मुख्यव्यवहारवच्छब्दसदृशशब्द एव प्रवृत्तेर्भाष्यसम्मतत्वेनार्थमादाय व्यपेदशिवद्भावोपपादनमयुक्तमिति सूचितम्। युक्तत्वमुपपादयति—**ऋक्त्वादेरिति**। आदिना मन्त्रत्वादिपरिग्रहः। उभयेत्यनेन विशिष्टनिरासः सूचितः। तस्या ऋचः एकोऽवयव इत्यर्थ इति एकपदा ऋगित्यस्येति भावः। तदाशयः=भाष्याशयः।

अत्रायमाशयः यद्यप्यर्थमाश्रित्य मुख्यव्यवहारेणैव 'इयाय' इत्यादिसिद्धिः, तथापि वचनमन्तरेणापि लोकव्यहारात् सिद्धमित्यर्थकम् 'अवचनाल्लोकविज्ञानात् सिद्धम्' इति भाष्ये (अवचनादिति) प्रतीकमुपादाय 'अर्थस्य त्यागोपादानाभ्याम्' इत्यादि व्याख्या (कृता)। अनेन 'व्यपदेशिवत्' इति वचनस्य लोकन्यायसिद्धस्य 'इयाय' इत्यादिप्रयोजनदानं कैयटीयमतुक्तम्। तस्माद् मद्रीत्यैवैतस्यैतत् प्रयोजनं सङ्गच्छते।

**तस्मादेकस्मिंस्तत्तद्धर्मारोपेण युगपद् यथा ज्येष्ठत्वादिव्यवहारः, यथा च 'शिलापुत्रकस्य शरीरम्' इत्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेणैतस्य शरीरमित्यादिव्यवहारः, तथात्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम्।**

**न चासहाय एवैतत्वृत्तौ भवतीत्यत्र भू इत्यस्याङ्गत्वानापत्तिः, ससहायत्वादिति वाच्यम्, शपमादायाङ्गत्वे कार्ये यस्माद् विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्त्वेऽप्येकपुत्रस्य तस्मिन्नेवायमेव ज्येष्ठ इत्यादिव्यवहारवत्।**

**न चैवम् 'निजौ चत्वार एकाचः' इति भाष्यासङ्गतिः, इकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम् 'एकस्मिन्' इत्यस्यापर्यालोचनया तत्वृत्तेः।**

---

अतस्तदेवोपसंहरति **तस्मादिति**। **एकास्मिन्निति**। पुत्रे इत्यर्थः। **एकस्मिन्निति**। शिलापुत्रक इत्यर्थः। वयःकृतावस्थानां प्राणिधर्मत्वादाह—**आरोपितेति**। **समुदाय रूपत्वेति**। अनेकावस्थाविशिष्टशिलापुत्रकत्व इत्यर्थः। आदिना एकावस्थाविशिष्टशिलापुत्रकत्वपरिग्रहः। **एतस्येति**। अनेकावस्थाविशिष्टशिलापुत्रकस्यैकावस्थाविशिष्टमिदं शरीरमवयव इत्यादिव्यवहार इत्यर्थः। यथा हि 'देवदत्तस्य शरीरम्' इत्यादौ देवदत्तपदेन चैतन्यविशिष्टं, शरीरम्, शरीरपदेन चैकमेव शरीरमिति। **तथात्रेति**। 'इयाय' इत्यादायुक्तप्रकारद्वयेनेत्यर्थः। **लोकन्यायेति**। न तु कैयटोक्तरीत्येति भावः।

**भू इत्यस्येति**। भू अ ति इत्यवस्थायां भू इत्यस्य शप्रत्ययाकारेण सहेत्यर्थः। **शपमादायेति**। तिन्निरूपिताङ्गत्वे कार्ये ससहायत्वेन तस्य तदादित्वाभावेऽङ्गत्वानापत्तावपि शपमादायाङ्गत्वे कार्ये भू इत्यस्य ससहायत्वाभावेनैवद्वचनेन तदादित्वातिदेशादङ्गत्वाक्षतिरिति भावः। **लोके इति**। सजातीयसहायत्व एव एकस्मिन्नित्यनेन व्यावृत्तिः, न तु विजातीयसत्त्वेऽपीति भाष्यकृतोक्तम्। तत्र यद्यसहाय एव व्यपदेशिवद्भावः स्यात्, तर्हीकारस्य नकारजकाराभ्यां ससहायत्वेन तस्य तत्त्वोपादानमसङ्गतं स्यादिति भावः।

**अत्रेति**। इकारे इत्यर्थः। **अनुपपादनादिति**। अनया परिभाषया अनुपपादनादित्यर्थः। **तत्प्रवृत्तेरिति**। उक्तभाष्यप्रवृत्तेरित्यर्थः। एतेनास्य भाष्यस्यैकदेशयुक्तित्वमिति सूचितम्।

ननु 'अर्थवता व्यपदेशिवद्भावः' इति भाष्योक्तेऽर्थस्य त्यागोपादानाभ्यामेव व्यपदेशिवद्भावयोजनं कैयटोक्तरीत्यैवोचितमिति तत्खण्डनमनुचितम्, अत आह—**अर्थवतेति। पदेनापीति**। अत्रापिशब्दः परिभाषास्थैकशब्दसमुच्चायकः। अर्थवतेत्यत्र षष्ठ्यर्थे मतुप्। षष्ठ्यर्थश्च सम्बन्धः। स च वाच्यवाचकभाव एव। एवञ्च यत् फलितं तदेवाह—**अर्थबोधकेनेति**। वत्पदार्थमाह—**सदृश**

**अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते । अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः, प्रायोऽसहाय एवार्थवत्त्वात् ।**

**'कुरुते' इत्यादौ तशब्दाकारोऽचामन्त्य इति व्यवहारे स आदिर्यस्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्यन्यत्र विस्तरः ॥ ३० ॥**

**ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यात्, अत आह—**

---

इति । भावपदं कार्यपरम् । **तदर्थ** इति । उक्तभाष्याक्षरार्थ इत्यर्थः । वस्तुतस्तु ढौकत इत्यादौ ढौ इत्यस्योपदिश्यमानावयवत्वादुपदेशसत्त्वेन प्राप्तमात्वम् 'अर्थवता व्यपदेशिवद्भावः' इत्यनेन वारितम् । तदर्थस्तु प्रयोजनवता व्यपदेशिवद्भावः । यत्र प्रयोजनं तत्रैवारोपः, न तु सर्वत्रेति । एवञ्चार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यत इत्यादिकथनं भाष्यानवबोधप्रयुक्तमेवेति बोध्यम् । असहायत्वस्योपलक्षणत्वे प्रमाणमाह—**प्राय** इत्यादि । असहायः प्रायोऽर्थवानेवेत्यर्थः ।

प्रायपदस्य फलमाह—**कुरुत** इत्यादि । अत्र तङकारस्य निरर्थकत्वेऽप्यसहायत्वेन टिसंज्ञासिद्धिरिति भावः । **तत्रेति** । तशब्दाकारे इत्यर्थः । **अन्यत्रेति** । उद्द्योतादावित्यर्थः ॥ ३० ॥

'पदाङ्गाधिकारे' इति परिभाषायां 'तस्य' इत्यंशस्य प्रथमोपात्तत्वात् तदसम्भववारणाय व्यपदेशिवदित्युक्त्वा तदन्तविधिसिद्धस्य द्वितीयांशस्यातिव्याप्तिवारणायेदानीं ग्रहणवतेति परिभाषामवतारयति—**नन्वित्यादिना** । **गर्गेति** । गर्गादीनामधिकृतप्रातिपदिकविशेषणत्वेन 'येन' इत्यस्य प्राप्तेरिति भावः । अपिना केवलेभ्योऽपि । ननु 'ग्रहणवता' इति परिभाषायाः पूर्वं केवलेभ्यः प्राप्तिरेव कथम् ? 'येन' इति सूत्रे तस्येत्यस्याभावे न सर्वत्र तदन्तविधेः प्राप्तेरिति चेत्, न; व्यपदेशिवद्भावेन तत्सिद्धेः सुलभत्वात्, 'व्यपदेशिवद्भावोऽप्रातिपादिकेन' इति निषेधस्तु सूत्रगृहीतान्तादिशब्दविषयक इति 'उगितश्च' इति सूत्रे शब्देन्दुशेखरे उक्तत्वादिति भावः ।

**ग्रहणवतेति** । प्रत्ययमात्रोगिद्वर्णग्रहणान्यतमभिन्नेतिप्रातिपदिकत्ववद्ग्राहकत्वं ग्रहणवत्प्रातिपदिकत्वम् । यत्र प्रत्ययविधायके सूत्रे एतादृशस्य ग्रहणम्, तादृशेन प्रातिपदिकेन तदन्तविधिर्नास्तीत्यर्थः । 'यञिञोश्च' इत्यत्रेञ्त्वस्य 'अस्यापत्यम्' इत्यादौ प्रातिपदिकत्ववद्ग्राहकत्वात् प्रत्ययग्रहणभिन्नत्वे सतीत्युक्तम् । 'संख्याया अतिशदन्तायाः' इत्यादौ संख्यात्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्राप्तदन्तविधिवारणाय मात्रेत्युक्तम् । मात्रपदाभावे 'बहुगणवतुडति०' इत्यत्र 'संज्ञाविधौ' इति निषेधेन डतिमात्रस्य संज्ञायामपि 'संख्याया अतिशदन्तायाः कन्', 'तस्य पूरणे डट्' इत्यादौ संख्यायाः प्रातिपदिकविशेषण-

## ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

**इयं च 'समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जम्' इति वार्त्तिकस्थ-प्रत्ययांशानुवादः। अत एवायं प्रत्ययविधिविषय एव। अत एव 'येन विधिः' इति सूत्रभाष्ये प्रत्ययविधिभिन्ने 'अप्तृन्०' इत्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनम् 'स्वसा, परमस्वसा' इत्याद्युदाहरणं च सङ्गच्छते।**

---

त्वेन तदन्तविधौ संख्यान्तादित्यर्थसम्पादनेन केवलस्यापि डतेः संज्ञाविधानस्य चारितार्थ्यसंभवात् पञ्चक इतिवद् निपञ्चक इत्यपि स्यात्। मम तु मात्रपद-निवेशेन संख्याप्रदेशे 'ग्रहणवता' इति निषेधेन तदन्तविध्यभावेन नोक्तदोषः। इदानीं केवलस्य डतेः संज्ञाविधानवैयर्थ्येन संज्ञाविधावप्रवृत्तौ 'अनुपसर्जनात्' इति सूत्रस्य ज्ञापकता भाष्यशेखरोक्ता संगच्छते। अन्यथा 'टिड्ढा०' इत्यत्र टित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन 'ग्रहणवता' इति निषेधं बाधित्वा डत्यन्त-स्यैव संख्यासंज्ञेत्यन्तदेतत्। अत एव स्त्रीप्रत्ययेषु 'ग्रहणवता' इति निषेधावृत्त्या तदन्तविधिना 'बहुकुरुचरा' इत्यादौ प्राप्तङीप्वारणाय 'अनुपसर्जनात्' इत्य-स्यावश्यकत्वेन तस्य ज्ञापकत्वप्रतिपादकभाष्याद्यसंगतिः स्पष्टैवेति दिक्। 'उगितश्च' इत्यादावुगित्त्वस्य भवत्विध्यादौ प्रातिपदिकत्ववद्ग्राहकत्वादुगिद्-ग्रहणभिन्नत्वे सतीत्युक्तम्। 'अत इञ्' इत्यत्रात्वस्य, 'अस्यापत्यम्' इत्यादाव-व्याप्तिवारणाय वर्णग्रहणाभिन्नत्वे सतीत्युक्तम्।

नन्वेवम् 'अस्मायामेधास्रजो विनिः' इत्यादौ तदन्तविधिनिषेधः, असु क्षेपणे इति धातोः क्विपि अस्वीत्यादावेव स्यादिति चेत्, न; 'अनिनस्मन्' इति परिभाषया अस्त्वादेर्वर्णत्वातिदेशस्यैव 'अनिनस्मन्' इति परिभाषायामस्माभिः सिद्धान्तितत्वात्। नन्वेवम् 'ससजषो रुः', जराया जरस्' इत्यादौ तदन्तविधिर्न स्यात्, अत आह—**पञ्चेति**। **अत एवेति**। प्रत्ययविधौ वार्त्तिककृतोक्तो यः प्रतिषेधः, तदनुवादत्वादेवेत्यर्थः। **अयमिति**। 'ग्रहणवता' इत्येतद्वचनबोध्यः प्रतिषेध इत्यर्थः। **अत एवेति**। अस्याः प्रत्ययविधिविषयत्वादेवेत्यर्थः। **प्रातिपदि-केनापीति**। अपरिगृह्यमाणप्रातिपदिकसमुच्चायकः। **स्वासा, परमस्वसेति**। यद्यप्यत्र 'ऋदुशन' इत्यनङि 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घेणैवेष्टसिद्धिः, तथापि 'स्वसारौ, परमस्वसारौ' इत्यस्योपलक्षणं बोध्यम्। अस्य निषेधस्य प्रत्ययविधिविषयकत्वानङ्गीकारे एतत्प्रतिपादनपरम्, उदाहरणपरं च भाष्य-मसंगतं स्यादिति भावः।

तत्रैव प्रमाणान्तरं समुच्चिनोति—**अत एव चेति**। अस्य 'ग्रहणवता' इति निषेधस्य प्रत्ययविधिविषयत्वादेव चेत्यर्थः। ननु वार्त्तिकस्थप्रत्ययांशानु-वादकत्वं तदा भवेत्, यदि वार्त्तिकस्यास्य वचनस्य च समानविषयकत्वं स्यात्, तदेव तु कथम्? अत आह—**सोऽपीति**। प्रत्ययविधाविति निषेधोऽपीत्यर्थः। अपिरस्य वचनस्य समुच्चायकः। विशिष्येत्यस्यैव व्याख्यानं **तत्तद्रूपेणेति**।

**अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम्। सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव। ध्वनितं चेदम् 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्ये।**

**अत्र च ज्ञापकम् 'सपूर्वाच्च' इति सूत्रम्। अन्यथा 'पूर्वादिनिः' इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥ ३१ ॥**

**नन्वेवम् 'सूत्रान्ताट्ठक्', 'दशान्ताड्डः', 'एकगोपूर्वात्' इत्यादेः केवलसूत्रशब्ददशन्शब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात् स्यात्, अत आह—**

---

गृहीतं प्रातिपदिकं यस्मिन् तादृशे सूत्रे इति बहुव्रीहिघटितः कर्मधारयः। केचित्तु, वैकल्पिकत्वान्न ग्रहणवत्प्रातिपदिकातिरिक्तस्थले 'प्रत्ययविधौ' इति निषेधस्याप्यप्रवृत्तिरिति भावः। यत्तु प्रातिपदिकवन्मात्रोपस्थापकत्वं तत्त्वमिति, तन्न; वृद्धत्वादीनां धात्वादावपि सत्त्वेन 'वृद्धाच्छः' इत्यादौ तदन्तविध्यापत्तेः।

ननु तत्र वार्त्तिके प्रातिपदिकपदाभावादत्र च तत्सद्भावात् कथमुभयोः समानता ? भाष्यकृता ध्वनितमेतत्।

अत्रायं भावः—यदि 'प्रत्ययविधौ' इति निषेधो ग्रहणवत्प्रातिपदिकविषयको न स्यात्, तर्हि ठञ्विधौ प्रातिपदिकाधिकारानुरोधेन प्रातिपदिकमात्रप्रकृतिकत्वेनाश्रयणेऽपि विशिष्य तद्रूपेण कस्याश्चित् प्रकृतेराश्रयणाभावेन ग्रहणवतेति निषेधाप्रवृत्तावपि प्रत्ययविधावित्यनेन तदन्तविधिनिषेधो दुर्वार एवेति 'प्राग्वतेष्ठञ्' इत्यत्र तदन्तविधिः सिद्धो भवति। विषयकत्वमित्याशङ्कां परिहर्तुं प्रमाणमाह—**ध्वनितञ्चेदमिति**। तत्र हि निष्कादिष्वसमासग्रहणेन ज्ञापकेन ग्रहणवतेति तदन्तविधिनिषेधाभावं ज्ञापयित्वा 'किमेतस्य ज्ञापने प्रयोजनम्' इत्यनन्तरं पृष्टे 'प्राग्वतेष्ठञ्' इत्यत्र तदन्तविधिः सिद्धो भवतीति प्रयोजनमुक्तम्। तदनन्तरञ्च 'नैतदस्ति प्रयोजनम्' ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥ ३१ ॥

न च ठञ्विधौ का प्रकृतिर्गृह्यते इति [1]तत्प्रयोजनं निराकुर्वन् तदन्तस्योपस्थितिप्रसङ्गादाह—**नन्विति**। **एवमिति**। प्रातिपदिकेन तदन्तविधिप्रतिषेधेऽपीत्यर्थः। एतेनैकातिप्रसङ्गवारणेऽप्यतिप्रसङ्गान्तरमस्त्येवेति ध्वन्यते। तानेवातिप्रसङ्गानुपपादयति—**सूत्रान्तादित्यादिना**। **एकयोग इति**। ननु स्वातिरिक्तावयवकत्वस्य व्यपदेशिवद्भावेनातिदेष्टुमशक्यत्वादेकयोगे केवलपूर्वशब्दात् कथमिनेः प्राप्तिः ? अत एव 'सपूर्वायाः प्रथमायाः' इत्यादीनां केवलप्रथमान्तेऽप्रवृत्तिरिति चेत्, न; 'पूर्वादिनिः', 'सपूर्वाच्च' इत्युभयोः स्थाने 'पूर्वान्तादिनिः' इत्येव कर्तव्यम्। 'इष्टादिभ्यः' इत्यत्र 'इष्टाद्यन्तादिभ्यः' इति पाठ्यम्। यद्यप्येवं न्यासे पदलाघवाभावः, तथापि 'पूर्वादिनिः', 'सपूर्वाच्च' इति पृथग् योगकरणाभावरूपं लाघवम्, तत् परित्यज्यापि यत् पृथग् योगकरणं तज्ज्ञापकम्।

---

१. 'असमासे निष्कादिभ्यः' इत्यत्रोक्तमसमासग्रहणस्य प्रयोजनमित्यर्थः।

**व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥**

'पूर्वात् सपूर्वादिनिः' इत्येकयोग एव कर्त्तव्ये पृथग् योगकरणमस्या ज्ञापकम्। न च 'इष्टादिभ्यः' इति सूत्रेऽनुवृत्त्यर्थं तथा पाठः, अत एवानिष्टोत्यादिसिद्धिरिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येनानिष्टोत्यादिप्रयोगाणामनिष्टत्वात्, एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च।

अत एव 'नान्तादसङ्ख्यादेः' इति चरितार्थम्। अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात् तद्वैयर्थ्यं स्पष्टमेव।

---

न च पूर्वशब्द इष्टादिगण एव पाठ्यः,'इष्टादिभ्यश्च' इति सूत्रम् 'इष्टाद्यन्तेभ्यः' इति पठनीयम्, 'पूर्वादिनिः' 'सपूर्वाच्च' इति सूत्रकरणेन सा ज्ञाप्यत इति वाच्यम्, तत्रानेनेत्यस्यानुकृत्येष्टाद्यन्तनिरूपितकर्त्रर्थे एव प्रत्यासत्त्या प्रत्ययस्य विधानेन 'कृतपूर्वी' इत्यादौ तन्निरूपितकर्तृत्वसत्त्वात् प्रत्ययस्यासिद्धावपि व्यपदेशिवद्भावलब्धात् पूर्वशब्दात् स न स्यात्, तन्निरूपितकर्तृत्वाभावात्। अतो योगविभागसामर्थ्याद् बहिर्भूतक्रियानिमित्तकर्तृत्वेऽपि पूर्वशब्दात् प्रत्ययार्थं तथापाठस्यावश्यकत्वात्। एवञ्च धर्मिग्राहकमानेन सूत्रोपात्तान्तादिशब्दविषयकत्वमप्येतस्या इति सिद्धम्। अत एव 'उगितश्च' इति सूत्रस्थः सूत्रोपात्तान्तादिशब्दविषये एव सेति शेखरोऽपि सङ्गच्छते।

**तथा पाठ** इति। पृथक् सूत्रपाठ इत्यर्थः। **अत एवेति**। 'इष्टादिभ्यः' इत्यत्र 'सपूर्वात्' इत्यस्यानुवृत्तेरेवेत्यर्थः। **ज्ञापकपरेति**। 'एकयोगे कर्तव्ये' इत्यादिभाष्ये इत्यर्थः। इदञ्च 'एकयोगनिर्दिष्टानां सह' इति न्यायेनोक्तम्। एकदेशोऽपीति न्यायमाश्रित्याह—**एक** इति।

**अत एवेति**। प्रातिपदिकेन व्यपदेशिवद्भावनिषेधादेवेत्यर्थः। **इतोति**। सूत्रमित्यर्थः। **चरितार्थमिति**। नन्वस्याः प्रत्ययविधिविषयकत्वस्य वक्ष्यमाणत्वेन मट आगमत्वेन प्रत्ययविधित्वाभावादेव प्रकृतपरिभाषाया अप्राप्तौ तत्सञ्चारेण संख्यादेरित्यस्य चारितार्थ्योपपादनमयुक्तमिति चेत्, न; प्रत्ययविधिविषयेत्यस्य प्रत्ययाधिकारविधिविषयेत्यर्थात्। अथवा सूत्रोपात्तान्तादिविषयकत्वमेवास्याः, न तु प्रत्ययविधिविषयकत्वमित्याशयात्। युक्तं चैतत् प्रत्ययविधिविषयत्वे हि 'रोणी' इत्यत्र 'उगितश्च' इत्यादीनां केवलेऽप्रवृत्त्यापत्तिः। एतदर्थम् 'येन' इति सूत्रे तदन्तस्य चेति पाठे गौरवम्। न च सूत्रोपात्तान्तादिशब्दविषयकत्वे 'अग्रान्तशुद्ध' इत्यादावनया व्यापदेशिवद्भावाभावे कुड्मलाग्रदन्नित्येव स्यात्, अग्रदन्निति न स्यादिति वाच्यम्, इष्टापत्तेः। न च 'इजादेश्च गुरुमतोऽनृच्छः' इत्यादावनया व्यपदेशिवद्भावाप्रवृत्त्या ऋधातोरीधातोश्चाम् न स्यादिति वाच्यम्, एतद्घटकप्रातिपदिकपदेन प्रातिपदिकमात्रस्य ग्रहणात्। तदेवाह—**इयं प्रातिपदिकेति**। **तत्रैवेति**। 'उगितश्च' इत्यत्रैवेत्यर्थः।

**इयं च प्रातिपदिकग्रहणे एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे। तेन 'उगितश्च' इत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम्। इयम् 'ग्रहणवता' इति च परिभाषा प्रत्ययविधिविषयैवेति 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्यकैयटयोः। तेन 'अहन्' इत्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः॥ ३२॥**

**ननु 'वान्तो यि' इत्यादौ यादौ प्रत्यय इत्यर्थः कथम्? अत आह—**

---

प्राचीनैरस्याः प्रत्ययविधिविषयत्वमङ्गीकृतम्। तत्र मानमाह—**इयमिति। परिभाषेति।** जातावेकवचनम्। **भाष्यकैयटयोरिति।** तत्र हि निष्कादिष्वसमासग्रहणं ज्ञापकम्, पूर्वत्र तदन्तप्रतिषेधस्येत्यस्य प्रयोजनपरीक्षायाम् इदं तर्हि प्रयोजनम् 'आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्' 'परमगोपुच्छेन क्रीतं पारमगोपुच्छिकम्' इति प्रयोजनमुपपाद्य 'एतदपि नास्ति प्रयोजनम्, विधौ प्रतिषेधः, प्रतिषेधश्चायम्' इति तन्निराकृतम्। तत्र 'विधौ प्रतिषेधः' इति प्रतीकमुपादाय 'पूर्वादिनिः', 'सपूर्वाच्च' इति प्रत्ययविधौ ग्रहणवतेत्यस्याः परिभाषाया ज्ञापितत्वाद् यत्रैव प्रत्ययो विधीयते, तत्रैवानया तदन्तविधिः प्रतिषिध्यते, 'अगोपुच्छसंख्या' इत्यनेन तु ठक् प्रतिषिध्यत इति न तदन्तविधिप्रतिषेधः, नापि व्यपदेशिवद्भावप्रतिषेध इति कैयटः। असमासग्रहणज्ञापनेन ग्रहणवतेत्यस्याप्रवृत्त्या पूर्वत्र तदन्तविधौ व्यपदेशिवद्भावमन्तरा केवलादप्राप्तेः, अतः 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यस्याप्यप्रवृत्तिरिति विधौ प्रतिषेध इत्युक्त्या ध्वनित इति भावः। तत्फलमाह—**तेनेति। अन्यत्रेति।** बृहच्छब्देन्दुशेखरे हलन्तनपुंसक इत्यर्थः॥ ३२॥

एवं सप्रपञ्चं तदन्तविधिं प्रतिपाद्य तत्प्रसङ्गात् तदपवादभूतां परिभाषामवतारयति—**नन्वित्यादिना। कथमिति।** तदन्तविधेः प्रसङ्गादिति भावः। न च 'वान्तो यि' इत्यत्र यान्तप्रत्ययाप्रसिद्ध्यैव न तदन्तविधिरिति वाच्यम्, 'गोकाम्यामततोति गोकाम्यात्', एतस्मादाख्यानार्थके णिचि टिलोपे गोकाम्य् इति यान्तप्रत्ययस्य सम्भवात्। न च 'अचः परस्मिन्' इति स्थानिवत्त्वेनाजन्तत्वमिति वाच्यम्, टिलोपस्याच्झलादेशत्वेन 'अचः परस्मिन्' इत्यस्याप्रवृत्तेः।

ननु यान्तप्रत्ययनिमित्तकगुणवृद्ध्योरसम्भवात् 'धातोस्तन्निमित्तस्यैव' इति व्यर्थमेव स्यात्? अतस्तदारम्भसामर्थ्यादेव यादौ प्रत्यय इत्यर्थः स्यादिति चेत्, न, अत्र निर्वाहेऽपि 'तस्मान्नुडचि', 'बहुवचने झल्येत्' इत्यादौ दोषापत्तेः। अत एव 'आदौ' इत्युक्तम्। 'यस्मिन् विधिः' इति परिभाषायां यस्मिन्निति सप्तम्यन्तानुकरणम्। तस्याश्चाल्ग्रहणे इत्यनेन विशेषणतया सम्बन्धः। अलिति तु 'येन विधिः' इत्यनुवृत्त्यनुरोधेन विशेषणमेव ग्राह्यम्। **अल्ग्रहणे इति।** अल् गृह्यते येन तत्, प्रातिपदिक इत्यर्थः। अलो ग्रहणे उच्चारणे इत्यर्थे तु प्रत्याहारे दोषः स्यात्। तथा च विशेषणीभूतो योऽल्, तादृशबोधके सप्तम्यन्ते गृह्यमाणे सति यो विधिरारभ्यते, स तदादौ परतः कार्यः, न तु तदन्तेति परिभाषार्थः।

## यस्मिन् विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

**तदन्तविधेरपवाद इयम्। वाचनिक्येषा 'येन विधिः' इत्यत्र भाष्ये पठिता। अस्याश्च स्वरूपसती सप्तमी निमित्तम्। अत एव 'नेड् वशि कृति' इत्यादौ वशादेः कृत इत्याद्यर्थलाभः।**

---

विशेष्यविशेषणयोः समानविभक्तिकत्वे एवाभेदान्वय इति लोकन्याय-सिद्धार्थके समानविभक्तिकविशेष्यविशेषणवाचकपदसन्निधाने एव भवतीति ध्वनयन्नाह—**तदन्तविधेरपवाद इयमिति**। अत एव 'इको यणचि' इत्यादौ न तदादिविधिः, तादृशविशेष्यसन्निधानाभावादिति भावः।

अत्र ज्ञापकाकाङ्क्षां वारयन् एतस्याः स्थलं दर्शयति—**वाचनिक्येषेति**। यत्तु 'घुमास्था०' इति सूत्रे हलीत्यस्य ङिद्विशेषणत्वेन तदन्तविधिना हलन्ते ङ्कितीत्यर्थाङ्गीकारे ल्यपो हलन्तत्वाभावेनैवेत्त्वाप्राप्तौ 'न ल्यपि' इति व्यर्थं सदस्यां ज्ञापकमिति ज्ञापकसिद्धैवैषेति। तन्न; 'घुमास्था०' इति सूत्रे, 'आतो लोप इटि च' इति सूत्रे च क्ङिति विद्यमानो यो हल्, तस्मिन्नार्धधातुके विद्यमानो योऽच्, तस्मिन्नित्यर्थाङ्गीकारेण 'न ल्यपि' इत्यस्य चारितार्थ्यसम्भवात्। एतेन 'रथवदयोश्च' इति सूत्रम्, 'त्रौ च' इति वार्त्तिकं चास्या ज्ञापकम्। अन्यथा 'कोः कत्' इत्यत्राजन्ते उत्तरपदे इत्यर्थे एषामप्यजन्तत्वेन तेनैव सिद्धावेतयो-र्वैयर्थ्यं स्यादित्यपास्तम्।

यत्तु 'प्रदायच्छत्रम्' इत्यत्र तुकि इत्त्ववारणार्थकतया 'न ल्यपि' इत्यस्य चारितार्थ्यम्। न च बहिरङ्गतया तुकोऽसिद्धत्वम्, 'नाजानन्तर्ये' इति निषेधा-दिति वदन्ति, तन्न; 'आतो लोप इटि च' इत्यादावप्यजन्ते आर्धधातुके इत्यर्था-पत्तौ 'प्रदाय' इत्यादावाकारस्यैव लोपे उक्तस्थले चारितार्थ्यस्य दूरतोऽपास्त-त्वात् इति दिक्।

**अस्याश्चेति**। 'तस्मिन्निति निर्दिष्टे' इति सूत्रे इतिशब्दोपादानेन तस्मि-न्नित्यनेनार्थस्वरूपोभयतः सप्तम्यन्तग्रहणेऽप्यत्रेतिशब्दोपादानाभावात् सप्तम्य-र्थाभावेऽपि केवलसप्तम्यन्तशब्दस्वरूपोपादानेऽप्यस्याः प्रवृत्तिरिति भावः। एवञ्च परिभाषायां तदादावित्यत्र तदादेरित्यप्यर्थो बोध्यः। **अत एवेति**। सप्तमीश्रवणमात्रेणास्याः प्रवृत्तेरेवेत्यर्थः। अन्यथा वशीत्यस्याः सप्तम्याः षष्ठ्यर्थत्वाद् 'वशिकृति' इत्यत्र तदादिविधिर्न स्यादिति भावः।

विशेषणविशेष्ययोः समानविभक्तिकत्वे एवैतस्याः प्रवृत्तौ मानमप्याह—**इयञ्चेति। आदिग्रहणसामर्थ्यादिति**। अन्यथा बलीत्येव ब्रूयादिति भावः। ननु विजातीयविभक्त्युच्चारणे वैयधिकरण्येनान्वयस्यौत्सर्गिकत्वात् 'आर्धधातुक-स्येड्वलि' इत्युक्तौ सामानाधिकरण्याभावाद् 'यस्मिन्' इति परिभाषाया अप्रवृत्तौ 'तस्मिन्' इति परिभाषाप्रवृत्त्या बलि परत आर्धधातुकस्येडित्यर्थे भविष्यतीत्यादावेवेट् प्राप्नोति, न तु भवितेत्यादावपि। 'नेड् वशि' इति निषेधस्तु 'सुशर्मा देवदत्तः' इत्यादौ चरितार्थः।

**इयं च 'आर्द्धधातुकस्येड्०' इति सूत्रे बलादेरित्यादिग्रहणसामर्थ्याद् विशेष्यविशेषणयोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते। तेन 'ङः सि धुट्' इत्यादौ सादेः पदस्येति नार्थः 'तीषसह', 'सेऽसिचि' इत्यादौ यथा तादेरित्याद्यर्थलाभः, तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥**

---

एवञ्चादिग्रहणं सफलमेवेति चेत्, न; बहुलक्ष्यसंस्कारानुरोधेन 'तस्मान्नुडचि' इत्यादावचीत्यस्येव बलीति सप्तम्याः षष्ठ्यर्थत्वाङ्गीकारेण 'तस्मिन्निति' इत्यस्याप्रवृत्त्या सामानाधिकरण्यस्यापि सत्त्वेन परिभाषाप्रवृत्तेर्निर्विघ्नत्वादित्याशयात्, 'शमित यज्ञे' इत्यादिनिर्देशानामसङ्गत्यापत्तेश्च। **तेनेति**। अत्र विशेषणविशेष्ययोर्विभिन्नविभक्तिकत्वेन सामानाधिकरण्याभावाद् नास्याः प्रवृत्तिरिति भावः।

नन्वेवं तदादिविध्यभावेऽपि तदन्तविधिर्द्वार आसीदिति सप्तम्या षष्ठ्यर्थत्वेन पदस्येत्यनेन सामानाधिकरण्यसम्भवादिति चेत्, न; 'ङः सि' इति दृष्ट्या रुत्वविसर्गयोः सिद्धत्वेन सान्तपदस्यासम्भवात् सामानाधिकरणस्यासम्भवात् पदावयवस्य सस्येति वैयधिकरण्यस्याङ्गीकारात्। न चैवं वैयधिकरण्यान्वयाङ्गीकारादेव तदादिविधेरप्यप्राप्तिरिति वाच्यम्, तदन्तविधावगत्या तथान्वयस्वीकारेऽपि तदादिविधौ सामानाधिकरण्यस्य सम्भवात्तयान्वयाङ्गीकारस्यानौचित्यात्। **नार्थ इति**। सति हि तस्मिन् 'षट्त्सन्तः' इत्यादावेव धुट् स्यात् 'षट्त्सु' इत्यादौ च न स्यात्, सादेः पदत्वाभावादिति भावः।

ननूभयोः सप्तम्यन्तत्वे एव चेदस्याः प्रवृत्तिः, तदा 'तीषसह' इति सूत्रेऽनुवृत्तस्य विशेष्यबोधकस्यार्धधातुकस्येत्यस्य सप्तम्यन्तत्वाभावात् तादेरित्यर्थलाभः कथम्? अत आह—**तीषसहेति**।

**निरूपितमिति**। तत्र हि वलादेरित्यनुवर्तते, तस्य तीतिविशेषणम्। तत्र तीतिविशेषणेन वलादेरिति समुदायार्थस्यान्वयासंभवाद् वलादिपदार्थैकदेशवल्पदार्थोऽभेदेन विशेष्यते। एवञ्च तकाररूपो यो वल्, तदादेरार्धधातुकस्येडिति वाच्योऽर्थः। तीति तु प्रथमार्थे सप्तमी सौत्री। एमम् 'सेऽसिचि' इत्यत्रापि बोध्यम्। एतत् फलितमेव तादेरार्धधातुकस्येति भाव इत्युक्तम्। एवञ्चैतत्परिभाषाप्रवृत्तिं विनाप्येतत्सिद्धिरिति भावः।

वस्तुतः तीतीत्यादिविशेषणम्, तत्र 'तस्मिन्निति' परिभाषया तकाराव्यवहितपूर्वो य इत्यादिः, ततः परस्य वलादेरार्धधातुकस्येडित्यर्थाश्रयणे न कश्चिद् दोषः।

एवम् 'सेऽसिचि' 'ङः सि धुट्' इत्यादवपि बोध्यम्। 'वान्तो यि' इत्यत्र तु सामानाधिकरण्यासम्भवाद् यकाराव्यवहितपरकयोरोदौतोर्वान्तादेशोऽव्यवहितप्रत्यये परे इत्यर्थो नाश्रीयते, 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्' इति तत्त्वम्।

**'घटपटम्, घटपटौ' इत्यादिसिद्धय आह—**

**सर्वो द्वन्द्वो विभाषयैकवद् भवति ॥ ३४ ॥**

**'द्वन्द्वश्च प्राणि' इत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः ।**

**'चार्थे द्वन्द्वः' इति सूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानाद् न्यायसिद्धेयम् ।**

**'तिष्यपुनर्वस्वोः' इति सूत्रस्थं बहुवचनस्येति ग्रहणमस्या ज्ञापकम् । तद्धीदम् 'तिष्यपुनर्वसु' इत्यत्र तद्व्यावृत्त्यर्थम् ।**

---

ननु 'द्विगोर्लुगनपत्ये' इति सूत्रस्थभाष्यासङ्गतिः, तत्र हि 'गोत्रेऽलुगचि' इत्यतोऽचीत्यपकृष्य अजादेरित्यर्थं संसाध्य 'अजादिग्रहणं कर्तव्यम्' इति वार्त्तिकं प्रत्याख्यातम् । यदि तूभयोः सप्तम्यन्तत्वे एवास्याः प्रवृत्तिः, तर्हि 'तद्धिताः' इत्यस्य प्रथमान्तत्वेनाचीत्यस्य सप्तम्यन्तत्वेन च प्रकृतपरिभाषाया अप्रवृत्त्या तदसङ्गतिः स्पष्टैवेति चेत्, न; अचीत्येतदनपत्ये इत्यस्य विशेषणमित्यदोषात् । 'हुझल्भ्यो हेर्धिः' इत्यत्रत्यहलादेरिति भाष्यं तु 'तीषसह' इत्यादाविव हल्परकेभ्यो हुझल्भ्यः परस्य हेरित्यर्थाङ्गीकारेण फलितार्थकथनपरमेवेत्यवधेयम् । 'कारनाम्नि' इति सूत्रे 'एकहलादौ पूरयितव्ये' इति सूत्रे चादिग्रहणं स्पष्टमेवेति दिक् ॥ ३३ ॥

अतिदेशप्रसङ्गात् परिभाषान्तरमवतारयति—**घटपटमिति** ।

**सर्वो द्वन्द्व इति** । ननु 'चार्थे द्वन्द्वः' इत्यनेन समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानादेव विभाषयैकवद्भावे सिद्धे किमर्थोऽयमारम्भ इति चेत्? शृणु, एतस्याः परिभाषाया अभावे 'चार्थे' इत्यनेन सामान्यतो विहितस्य 'द्वन्द्वश्च प्राणि' इत्यनेन प्राण्यङ्गादीनामेव समाहारद्वन्द्वः, नेतरेषामिति विपरीतनियमापत्तेः ।

ननु सर्वपदोक्त्या 'द्वन्द्वश्च प्राणि' इत्यादिप्रकरणविषयस्यापि वैकल्पिकत्वापत्तिः, अत आह–**द्वन्द्वश्चेति** । अन्यथा तत्प्रकरणविषयस्य वैयर्थ्यं स्पष्टमेव । तथा च सर्वत्वं लक्ष्यनिष्ठम्, न तु लक्षणनिष्ठमिति फलितम् । अस्या न्यायसिद्धार्थकत्वबोधकत्वेनेदृशसंकुचितवृत्तिताया एव युक्तत्वादिति भावः ।

इदमेव ध्वनयन्नत्र मूलमाह—**चार्थे** इति । **अविशेषेणेति** । लक्ष्यविशेषानादरेणेत्यर्थः ।

'द्वन्द्वश्च' इत्यादीनां विपरीतनियमत्वाभावे प्रमाणमाह—**तिष्येति** । यदि तु 'द्वन्द्वश्च' इत्यादिना प्राण्यङ्गादीनामेव समाहारद्वन्द्वः, नेतरेषामिति विपरीतनियमः, तर्हि 'तिष्य एका तारा; पुनर्वसू द्वे तारे' इत्याकरात् तेषां द्वन्द्वे सदा बहुवचनस्यैव सत्त्वेन 'बहुवचनस्य' इति ग्रहणं व्यर्थं सद्विपरीतनियमाभावे ज्ञापकम् । सति हि विपरीतनियमाभावे तेषां समाहारद्वन्द्वे 'तिष्यपुनर्वसु' इत्यत्र द्विवचनव्यावृत्त्या 'बहुवचनस्य' इति ग्रहणं चरितार्थमिति भावः ।

**न चैवमप्यत्र 'जातिरप्राणिनाम्' इति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम्, तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात्। न चैते प्राणिन इति वाच्यम्, 'आपोमयः प्राणः' इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात्। स्पष्टं चेदम् 'तिष्यपुनर्वस्वोः' इति सूत्रे भाष्ये।**

**अत एव 'द्वन्द्वश्च प्राणि' इत्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥**

---

**तद्धीति**। 'बहुवचनस्य' इति पदं हीत्यर्थः। **तदिति**। द्विवचनस्येत्यर्थः। यतो नास्ति विपरीतनियमः अतो न्यायसिद्धेयम्। 'अस्या ज्ञापकम्' इत्यत्रास्या इत्यस्य फलितार्थपरत्वमिति भावः।

**एवमपीति**। बहुवचनेन 'चार्थे द्वन्द्वः' इत्यस्य वैकल्पिकत्वबोधनेऽपीत्यर्थः। **अत्रेति**। इदं तिष्यपुनर्वसु इति लक्ष्ये इत्यर्थः। **सूत्रं व्यर्थमिति**। अस्योद्देश्याप्रसिद्धेरिति शेषः। न च 'जातिरप्राणिनाम्' इत्यनेन नित्यैकवद्भावेऽपि तिष्यपुनर्वसू इत्येकशेषेण 'तिष्य' इति सूत्रं सफलमिति वाच्यम्, तिष्यपुनर्वसुसमुदायस्यानेकत्वाभावात्। युगभेदेन तत्सद्भावकल्पनया तथा प्रयोगे तु दृढतरमानाभावात्। **तद्वैकल्पिकत्वस्येति**। जातेः प्राधान्यविवक्षायां द्वन्द्व एव 'जातिरप्राणिनाम्' इत्यस्य प्रवृत्तिः, व्यक्तेः प्राधान्यविवक्षायाम्, 'द्वन्द्वे तु जातिरप्राणिनाम्' इत्यस्य चाप्रवृत्तिरित्येवंरूपफलितवैकल्पिकत्वस्य 'जातिरप्राणिनाम्' इत्यस्य अनेन='तिष्य' इति सूत्रेण ज्ञापनादित्यर्थः। एवञ्च नक्षत्रद्वन्द्व इत्युक्त्या व्यक्तिप्राधान्यविषयत्वेन 'जातिरप्राणिनाम्' इत्यस्याप्रवृत्त्या सूत्रं सफलमेवेति भावः। अत एव घटपटावित्यपि सङ्गच्छते। अन्यथात्रापि 'जातिरप्राणिनाम्' इत्यनेन नित्यैकवद्भावे तदसङ्गतिः स्पष्टैव। अत एव 'क्षीरोदके' इति भाष्यप्रयोगसङ्गतिरपि। **एते इति**। तिष्यादय इत्यर्थः। **प्राणिन इति**। देवत्वादेषां प्राणित्वाशङ्केति भावः। **आपोमय इति**। नन्वप्शब्दान्मयटि अम्मय इति प्राप्ते कथम् 'आपोमयः' इति? अप्शब्दसमानार्थादाप्प्रकृतिकादसुन्नन्तादापस्शब्दान्मयटि तत्सिद्धेः सुलभत्वात्। 'आपोमयमिदं सर्वमापोमूर्तिः शरीरिणाम्' इतिवत्। **स्पष्टमिति**। प्रागुक्तं सर्वमित्यर्थः।

एवञ्च 'बहुवचनस्य' इति ग्रहणस्य विपरीतनियमाभावे ज्ञापकम्। तदेवोपसंहरति—**अत एवेति**। बहुवचनग्रहणादेवेत्यर्थः। अन्यथा तदनर्थक्यं स्पष्टमेवेति दिक् ॥ ३४ ॥

विकल्पप्रसङ्गात् परिभाषान्तरमाह—**सर्वे इति**। न केवलं समाहारद्वन्द्व एवेति भावः।

अत्र मानमाह—**व्यत्ययेति**। एकसूत्रेण विकरणप्रत्ययविधानादाह-**योगेति**। ततोऽपि लाघवादाह—**षष्ठीति**। एवञ्च 'व्यत्ययो बहुलम्' इत्यादीनि छन्दसि विकल्पविधायकानि शास्त्राणि न कर्तव्यानीति भावः ॥ ३५ ॥

**सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥**

**'व्यत्ययो बहुलम्' इति सूत्रे भाष्ये बहुलमिति योगविभागेन 'षष्ठीयुक्तश्छन्दसि' इति सूत्रे वेति योगविभागेन चैषा साधिता। तेन 'प्रतीपमन्य ऊर्मिर्युध्यति' इत्यादि सिद्धम्। युध्यत इति प्राप्नोति ॥ ३५ ॥**

**ननु क्षिय इत्यादावियङ् कथम्, अत आह—**

**प्रकृतिवदनुकरणं भवति ॥ ३६ ॥**

**क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः। तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति 'क्षियो दीर्घात्' इति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥**

---

मध्ये विकल्पप्रसङ्गं परिसमाप्य पुनः पूर्वोक्तातिदेशप्रसङ्गात् स्मृतामन्यां परिभाषामवतारयति—**नन्विति**। **क्षिय इत्यादाविति**। 'क्षियो दीर्घात्' इति नत्वविधायके, 'क्षियः' इति दीर्घविधायके च शास्त्रे इत्यर्थः। **कथमिति**। सूत्रघटकक्षिशब्दस्य क्षिधातुबोधकतया शब्दपरत्वेन धातुत्वाभावादिति भावः।

**प्रकृतिवदिति**। [1]**अनुकार्यवदित्यर्थः**। न चानया धातुत्वातिदेशेऽपि 'क्षिय' इत्यादौ घिसंज्ञायामियङं बाधित्वा परत्वात् 'घेर्ङिति' इति गुणापत्तावियङ् दुर्लभ एवेति वाच्यम्, 'शेषो घ्यसखि' इति सूत्रे 'असखि' इति पर्युदासेनातिदिष्टधातुत्वानाश्रयस्यैवावधित्वस्वीकारेण गुणाप्राप्तेः, 'प्रकृतिवत्' इत्यनया प्रकृतौ दृष्टस्याशास्त्रीयस्यापि गुणाभावस्यातिदेशेनादोषाच्च। अत एव 'क्षियो दीर्घात्' इति सूत्रे 'दीर्घात्' इति ग्रहणं संगच्छते; अन्यथा ह्रस्वे बाधकत्वेन गुणस्य इयङोऽप्रवृत्त्या तन्निर्देशेनैव दीर्घग्रहणे सिद्धे 'दीर्घात्' इत्यस्य वैयर्थ्यं स्पष्टमेव। एवञ्च 'क्षियः' इति ह्रस्वान्तस्यैवानुकरणम्, न तु दीर्घान्तस्येति सिद्धम्।

**निर्देश इति**। सौत्रनिर्देश इत्यर्थः। **ज्ञापक इति**। यद्यनुकरणस्यानुकार्यसदृशत्वं न स्यात्, तर्हि तस्य क्रियावाचकत्वाभावेन धातुत्वाभावादियङोऽप्राप्त्या तन्निर्देशस्यासंगत्यापत्तिरिति भावः। 'चिक्षियतुः' इत्यादिप्रयोगस्थकृतेयङोऽनुकरणम् 'क्षियः' इतीति 'क्षियो दीर्घात्' इति सूत्रस्थशेखरस्तूपायान्तरपर इत्यवधेयम्।

ननु सूत्रघटकक्षिशब्दस्यापि यद्यतिदेशेन धातुत्वम्, तर्हि धातुपर्युदासात् प्रातिपदिकत्वाभावेन ततो विभक्तिरेवादौ न स्यादिति इयङोऽनुपपत्तिरेवेत्युक्त्या आह—**तत्रैवेति**। क्षिय इति सौत्रप्रयोग एवेत्यर्थः ॥ ३६ ॥

अतिदेशप्रसङ्गात् परिभाषान्तरमवतारयति—**नन्विति**। **रामावित्यादाविति**। 'रामौ स्मरति' इति प्रयोगे निघातप्रवृत्तिसमये पदत्वस्यापेक्षितत्वादिति

---

१. अनुकार्यत्वं हि—स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वम्, अनुकरणत्वञ्च स्वसदृशबोधतात्पर्यकोच्चारणविषयत्वम्।

ननु 'रामौ' इत्यादौ वृद्धौ कृतायां कार्यकालपक्षे कथं पदत्वम् ? उभयत आश्रयणेऽन्तादिवत्वाभावाद् यस्माद् विहितस्तदादितदन्तत्वाभावात्, अत आह—

**एकदेशविकृतमनन्यवत् ॥ ३७ ॥**

---

भावः। **कार्यकाल इति।** यथोद्देशे तु नित्यमप्येकादेशं बाधित्वाऽपरनिमित्तकत्वेनान्तरङ्गत्वात् फलानमितं धानेन [ फलविशेषाननुसंधानेन ] वृद्धेः प्रागेव प्रवृत्तस्य शास्त्रीयस्य पदत्वस्यैकादेशेऽप्यानुमानिकस्थानिवद्भावेन सौलभ्यात्। कार्यकाले त्वानुमानिकस्थान्यादेशभावेऽप्यशास्त्रीयस्य यस्माद् विहितस्तदादित्वस्य स्थानिवद्भावेनानतिदेशात्। औवृत्तिसुप्त्वस्य स्थानिसम्बन्ध्यलधर्मत्वेन स्थानिवद्भावाप्रवृत्तेश्चेति भावः।

वस्तुतः शब्देन्दुशेखरे इण्धातौ उभयत आश्रयणेऽप्यन्तादिवत्त्वस्वीकारस्य निरूपितत्वान्नेदमवतरणं स्वमते युक्तम्; किन्तु 'चिकीर्षति, विवृत्सति' इत्याद्यवतरणम्। तत्र द्वित्वोत्तरमुरदत्वे 'हलादिः शेषः', 'सन्यतः' इतीत्वञ्च न स्यात्, द्विरुक्तधातुपूर्वभागत्वाभावेन पुनरभ्यासत्वाप्रवृत्तेः; अभ्यासस्य निरर्थकत्वेनानुमानिकस्थान्यादेशभावेनापि स्थानिवत्त्वाप्रवृत्तेरिति बोध्यम्। नन्वाकडारीयसंज्ञासु यथोद्देश एवेति पूर्वग्रन्थासङ्गतिरिति चेत्, न; समासोद्देश्यकसंज्ञाद्वयप्रसक्तौ यथोद्देशपक्ष एवेति तदाशयस्योक्तत्वात्।

**एकदेशेति।** एकदेशेन विकृतम् इति भावे क्तान्तेन तृतीयान्तस्यसमासः, एकदेशस्य विकार इत्यर्थः। एकदेशो विकृतं यत्रेति विग्रहे एकदेशविकृतशब्दादर्श आद्यच्। तथा चैकदेशविकारविशिष्टोऽन्यवन्न भवतीति परिभाषार्थः।

अत्र नञा अन्यशब्दस्य समासे अन्यभिन्नाप्रसिध्या वाक्यार्थाप्रसिद्धिः, अत आह—**अनन्यवदित्यस्येति। तत्रेति।** एकदेशविकृते इत्यर्थः। **सुतरामिति।** कैमुतिकन्यायेनेति भावः। **अत एवेति।** फलितान्यत्वाभावादेवेत्यर्थः। **तादृशादिति।** विकृतावयवविशिष्टादित्यर्थः। **अन्यथेति।** अन्यत्वे इत्यर्थः। शक्तं हि पदम्, शक्ततावच्छेदिका या आनुपूर्वी, तत्तद्विशिष्टमेव शक्यार्थबोधकम्। विकृतावयवत्वे तु तदवच्छेदिकानुपूर्व्यसत्त्वात् ततस्तादृशादर्थबोधो न स्यादिति भावः।

तदर्थमुपपाद्य तत्फलमाह—**एवञ्चेति। परादित्वेन सुप्त्वमिति।** सुप्त्वस्यालमात्रवृत्तित्वाभावेन परादिवद्भावेन सौलभ्यादिति भावः। **अर्थसमाजग्रस्तमिति।** समाजः=समुदायः, तेन ग्रस्तम्=गणितम्, अर्थसम्बन्धिसमुदायान्तर्वृत्तमित्यर्थः।

**श्वत्वव्यवहार इति।** श्वत्वप्रयोजको व्यवहार इत्यर्थः। लोकन्यायसिद्धस्याप्यत्र शास्त्रेऽस्याश्रयणे मानमाह—**अत एवेति।** लोकन्यायसिद्धस्यास्य वचनस्याङ्गीकारादेवेत्यर्थः। **अनुकरणमिति।** अष्टाध्याय्यां तान्तदीव्यच्छन्दस्या-

अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम्। अत एव तादृशादर्थबोधः, अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात् ततो बोधो न स्यात्।

एवं च रामिति मान्तस्य यस्माद् विहितस्तत्त्वम्, औ इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम्।

छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम्। अत एव 'प्राग्दीव्यत॰' इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देशः ? एतदेव ज्ञापयत्याचार्यः—भवत्येषा परिभाषा 'एकदेशविकृतमनन्यवत्' इत्युक्तम्।

---

दर्शनादिति भावः। **किमर्थमिति**। 'प्राग्दीव्यतेरण्' इति वक्तव्ये 'प्राग्दीव्यतः' इति निर्देशः किमर्थ इति प्रश्नः।

ननु लाघवात् तान्तस्यैवावधित्वे तस्यैवेदमनुकरणम्, न तु विशिष्टस्येति चेत्, न; 'अत इञ्' इत्यत्राणिञोः पर्यायेण विधानव्यावृत्त्यर्थमर्थानामेवावधिमत्त्वस्येष्टत्वेन 'अवध्यवधिमतोः साजात्यम्' इति नियमादर्थस्यैवावधित्वस्येष्टत्वात् तान्तस्य निरर्थकत्वेन तत्त्वासम्भवात्। एवञ्चैकदेशविकृतोऽप्यर्थबोधकः। अन्यथाऽनेन न्यायेन शब्दस्वरूपाभेदप्रतिपादनेऽप्युक्तरीत्यार्थबोधकत्वेनार्थस्यावधित्वं न स्यादिति भावः। **ज्ञापयतीति**। बोधयतीत्यर्थोऽत्र विवक्षितः, स्वांशे चारितार्थ्यासम्भवात्।

**एतेनेति**। लोकसिद्धस्य 'प्राग्दीव्यतः' इत्यनेन ज्ञापितत्वेनेत्यर्थः। तत्रोभयोरभावादिति भावः। नन्वेकवतरदित्यत्र ( ननु कतरदित्यत्र ) विकृतावयवह्रस्वप्रयुक्तमपि कार्यं स्यात्, अत आह—**विकृतेति**। लोके तथाविधव्यवहारादर्शनात्। शास्त्रेऽपि न तथाविधव्यवहार इति भावः। अत एव 'मघवतः राजकीयम्' इत्यादौ सम्प्रसारणाल्लोपो न। अन्यथा अनेन न्यायेनान्नन्तत्वात् 'श्वयुव॰' इति सम्प्रसारणं स्यात्, 'राज्ञः क च' इति कादेशेऽप्यन्नन्तत्वात् 'अल्लोपोऽनः' इति स्यादिति भावः।

मघवतश्छान्दसत्वेनान इत्यपकर्षणे फलाभावात् तत्र न दोष इत्यन्ये।

विकृतावयवनिबन्धने कार्येऽस्य यथा न प्रवृत्तिः, तथा परिच्छिन्नपरिमाणेऽप्यस्य न प्रवृत्तिरित्याह—**एवमिति**। अत्र परिभाषाणामानुपूर्वीविशेषोऽपि। तथा च परिच्छिन्नानुपूर्वीविशेष्यकसंज्ञिभूतशब्दग्रहणेऽपीत्यर्थः। यथोक्तपरिमाणार्थवाचकानां द्रोणादिशब्दानामधिके न्यूने वा न प्रवृत्तिरिति लोके दृश्यते, तद्वदिति भावः। तेन भवन्तीत्यत्र 'न्तो' शब्दस्य तिङ्त्वाभावेन सार्वधातुकत्वाभावात् 'अतो दीर्घः' इति दीर्घो न। **उक्तयुक्तेरिति**। द्रोणादिशब्दानां परिमाणार्थवाचकानां न्यूनाधिकयोः प्रवृत्तिर्यथा दुरुपपादा, तथा तिङाद्यानुपूर्वी अपि दुरुपपादेति भावः।

**एतेनायं न्यायः शास्त्रीयकार्यं एव शास्त्रीयविकार एवेत्यपास्तम्। विकृतावयवनिबन्धनकार्ये तु नायम्, छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्य दुरुपपादत्वात्।**

---

नन्वेवम् 'गुडोदकम्' इत्यादावेकादेशे 'दक'शब्दस्यानेन न्यायेनोदकशब्दत्वमादाय 'उदके केवले' इति स्वरापादनपरभाष्यासंगतिरिति चेत् न; तद्भाष्यस्यैकदेश्युक्तित्वात्, 'पूर्वोत्तरपदनिमित्तककार्यादन्तरङ्गोऽप्येकादेशो न' इति परिभाषया एकादेशात् प्रागेव स्वरसिद्धेश्च। नन्वेवमपि दीव्यतित्वस्याक्तपरिमाणनिष्ठतया 'प्राग्दीव्यतः' इत्यत्राप्येतदप्रवृत्तौ एतज्ज्ञापकपरभाष्यासङ्गतिरिति चेत्, न; 'जरायाः' इत्यादाविव शब्दस्यावधित्वे स्यादेव दोषः, प्रकृते त्वर्थस्यैवावधित्वाद् दीव्यत्यर्थबोधकत्वस्याक्तपरिमाणत्वाभावेनास्य न्यायस्य प्रवृत्तेः सुलभत्वात्।

**एतदिति**। अव्यवहितोक्तमित्यर्थः।

**ध्वनितमिति**[1]। तत्र हि—पञ्चद्रोणादिदृष्टान्तेनोक्तस्थले तदभावमाशङ्क्य 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति परिभाषया समाहितम्। यदि

---

१. ध्वननप्रकारश्चेत्थम्—सर्वके इत्यादावकज्विशिष्टस्य सर्वनामसंज्ञा न स्यात्। तथा हि—'सर्व जस्' इति स्थिते 'अन्तरङ्गानपि' इति न्यायेन शीभावादि बाधित्वाऽकचि 'यस्मात् प्रत्ययविधिः' इत्युक्तेः 'अप्रत्यय' इति निषेधाभावे प्रातिपदिकत्वेन सुपो लुकि पुनर्जसि शी न स्यात्।

'उच्चकैः' इत्यत्राकज्विशिष्टस्याव्ययसंज्ञा न स्यात्। तथा सति लुग् न स्यात्। यद्यपि 'हल्ङ्याब्भ्यो०' इति सोर्लोपेन सिध्येत्, तथापि अव्ययेभ्यः सर्वविभक्त्युत्पत्तिपक्षे दोषोऽयं विज्ञेयः।

भिनत्तीत्यादौ च श्नम्विशिष्टस्य धातुसंज्ञा न स्यात्। तथा च सति धातोरन्त उदात्तो भवतीत्युदात्तत्व न स्यात्। प्रत्ययस्वरेण तत्सिद्ध्याग्रहे तु अभिनोऽत्रेत्यत्र 'दश्च' धातोर्विधीयमानं रुत्वं न स्यात्।

वस्तुतस्तु भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् सति शिष्टस्वरो धातुस्वर एव एष्टव्यः।

इत्याद्युपर्युक्तमाशङ्क्य, यथा गङ्गायमुनाप्रविष्टानेकनदीनां गङ्गायमुनाग्रहणेन ग्रहणं भवति, यथा च देवदत्तास्थगर्भस्य देवदत्ताग्रहणेन ग्रहणं भवति, तथा 'तदेकदेशभूतः तद्ग्रहणेन गृह्यते' इति लौकिकदृष्टान्तेन समाधाय, पुनः यथा पञ्चसप्तादिसंख्याशब्दाः, द्रोणादिपरिणामशब्दाश्च परिच्छिन्नपरिमाणार्थकत्वेन न्यूनाधिकयोर्न प्रवर्तन्ते, एवं परिच्छिन्नपरिमाणार्थवाचकत्वेन सर्वनामादिसंज्ञकाः शब्दा अपि न्यूनाधिकयोर्न प्रवर्तेरन्निति समाधानं प्रत्याख्याय 'नेदमदसोरकोः'' इत्यत्र 'अकोः' इति सककारयोः प्रतिषेधेन 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति तन्मध्यपतितन्यायं ज्ञापयित्वा समाहितम्।

**एवमात्तपरिमाणग्रहणेऽपि नायम्, उक्तयुक्तेः। एतत् 'येन विधिः' इत्यत्र भाष्यकैयटयोर्ध्वनितम्।**

**यत्र त्वर्द्धं तदधिकं वा विकृतम्, तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानलरूपावयवत्वप्रतीत्यर्थं च 'स्थानिवत्०' सूत्रम्। क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम्। तेन 'अभीयात्' इत्यादिसिद्धिः। स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः 'प्रथमयोः पूर्वसवर्णः' इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः॥ ३७॥**

॥ इति श्रीनागेशभट्टविरचिते परिभाषेन्दुशेखरे
शास्त्रत्वसम्पादनोद्देशनामकं प्रथमं प्रकरणम्॥

---

तत्रैतत्प्रवृत्तिः, तर्ह्यधिकगड्वादिसत्त्वेऽपि पुनः इत-(शुनः श्व) त्ववदकजधिक-सर्वकस्य सर्वशब्दत्वमक्षतमेवेति भाष्यसङ्गतिः, अतस्तथेति तदाकूतमिति भावः।

आगमाकचोरविकारत्वात् 'यदागमाः', 'तन्मध्य' इति न्याययोर्नानेन गतार्थता। अत एव 'लोपागमवर्णविकारज्ञो हि' इति भाष्ये आगमस्य विकारात् पृथगुक्तिः।

एकदेशविकृतन्यायेनैव सिद्धे निर्वाहेऽवयवादेशस्थले 'स्थानिवत्' सूत्रस्य न प्रयोजनम्; किन्तु यत्र समुदायादेशस्तत्रैवेति कश्चिदाह, तदुक्तिं खण्डयति—**यत्र त्विति। अर्धमिति।** यथा 'एरुः' इत्यादौ। **तदधिकमिति।** यथा 'ज्वरत्वर' इत्यनेनोठि स्रिमव्योः, वसनसत्वमिष्टेत्यादौ। **विकृतानलरूपेति।** तथा 'त्वत्, मत्' इत्यत्र कार्यकालपक्षे स्थानिवत्त्वेन सुप्त्वात् तदन्तत्वेन पदत्वम्, एवं यशस्-शब्दाण्णिचि टिलोपे अनेनास्त्वालाभेन स्थानिवत्त्वेन तत्त्वमाश्रित्य 'अस्माया' इति विनिः। एवं चेदुभयमनेन न्यायेनासिद्धमिति भावः। यदि सर्वत्र 'एकदेश-विकृत' न्याय आश्रीयते, तदा बहुधीवानमाचष्टे स्त्रीत्यर्थे णिचि टिलोपे तदन्तात् क्विपि णिलोपे वान्तस्याप्यनेन न्यायेनानन्तबहुव्रीहिग्रहणेन ग्रहणं तस्मान्ङी-बापत्तिः स्यात्।

ननु 'अभीयात्' इत्यादावुपसर्गत्वस्यात्तपरिमाणतयाऽयं न्यायः 'एतेर्लिङि' इति विधीयमाने ह्रस्वे यद्यपि पूर्वोक्तरीत्या न भवति, तथापि भान्तस्यानेन पदत्वे जश्त्वापत्तिः, अत आह—**क्वचिदिति।** यद्यप्यत्र 'अचः परस्मिन्' इति स्थानिवद्भावेनैव भान्तस्य पदत्वाभावः, तथापि पटितीत्यादीनामुपलक्षणं बोध्यमिति भावः।

**केचित्तु,** अयमेव सिद्धान्तनिष्कर्षः। एतन्न्यायस्वीकारे यत्र यत्रात्तपरि-

---

अत्रेदं विचार्यते—यदि 'एकदेशविकृत'न्याय ईदृशे विषये प्रवर्तेत, तर्हि न्यूनत्वाधिकत्वयोरपि विकारत्वाविशेषात् तेनैवोपपत्तौ प्रयत्नान्तरानुसरणं विफलं स्यात्, अतस्तेनेदं ध्वनितमिति नागेशाभिप्रायः।

माणादौ दोषः, तत्र तत्रैतन्न्यायाश्रयणेनैव निर्वाहः, लाघवादित्यपि बोध्यमित्याहुः, तदसत्; श्रायसशब्दादणन्ताद् द्विवचने श्रायसावित्यत्र वृद्धौ सान्तस्योगित्त्वेनानेन न्यायेनाङ्गतया च प्राप्तस्य नुमः पूर्वसम्बन्धित्वेन 'अचः पर०' इति स्थानिवत्त्वेन वारणपरभाष्यविरोधापत्तेः। अतः पदत्वे कर्तव्य एवैतन्न्यायानाश्रयणमित्येव युक्तमुक्तं द्रढयितु सामान्यरूपेण दृष्टान्तमाह–**स्पष्टञ्चेति**।

**न्यायेति**। न्यायत्वावच्छिन्नेत्यर्थः। तत्र हि—बाध्यसामान्यचिन्तामाश्रित्य 'वृक्षाः, वृक्षान्' इत्यत्र जश्शसोः पररूपबाधाय 'प्रथमयोः' इति योगविभागेऽपि 'अमि पूर्वः' इत्यत्रातिप्रसङ्गपरिहारायाश्रित 'मध्येऽपवाद' न्यायव्याख्यावसरे 'न्यायश्चायम्, न तु वचनम्', 'यद्वक्ष्यति यद्येतदस्ति' इति। 'नहि वचनस्यासत्तासंभावना, न्यायस्तु क्वचित् क्वचिदाश्रीयत इति युज्यते वक्तुम्' इति तेनोक्तम्।

भाष्यसम्मतापीयम्। एतदभावेऽङ्गत्वमेव दुर्लभमित्यादिशब्देन्दुशेखरे स्पष्टमिति बोध्यम्। तदाह—**अन्यत्रेति**। वस्तुतो व्यर्थेयं परिभाषा, रामावित्यादीनामन्यथासिद्धयुक्तत्वात्। चिकीर्षतीत्यादावुरदत्वेऽपि द्विरुक्तधातुपूर्वभागत्वस्य प्रक्रियाज्ञानवतां सुलभत्वेन पुनरभ्याससंज्ञया दोषाभावात्, 'प्राग्दीव्यतः' इत्यत्र सौत्र इकारलोप इति कल्पनया निर्वाहात्। अत एव 'स्थानिवत्' सूत्रे भाष्ये आदेशग्रहणेनानुमानिकस्थान्यादेशभावेन पचत्वित्यादीनां पदत्वमङ्गीकृत्य 'एतदर्थम्' एकदेशविकृतस्योपसंख्यानम्' इति चोदितम्, तन्न वक्तव्यं भवति इत्युक्तं सङ्गच्छत इति दिक्॥ ३७॥

**॥ इति श्रीमन्महामहोपाध्यायपदवाक्यप्रमाणपारावारीणश्रीमन्नागेश्वरशर्मविरचितायां परिभाषेन्दुशेखरव्याख्यायां हैमवत्याख्यायां शास्त्रत्वसम्पादनोद्देशनामकं प्रथमं प्रकरणम्॥**

# अथ बाधबीजनामकं
## द्वितीयं प्रकरणम्

**पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥**

**पूर्वात् परं बलवत्, विप्रतिषेधशास्त्रात्, पूर्वस्य परं बाधकमिति यावत् ॥ ३८ ॥**

**नन्वेवम् 'भिन्धि' इत्यत्र परत्वात् तातङा बाधितो धिर्न स्यात्, अत आह—**

**पुनः प्रसङ्गविज्ञानात् सिद्धम् ॥ ३९ ॥**

---

### अथ बाधबीजप्रकरणम्

'अनन्यवत्' इत्यत्र प्रतिषेधार्थकस्य नञः सत्त्वात् तत्प्रसङ्गेनान्यप्रयुक्त-बाधानामप्युपस्थितिः, अतः पर्यवसितनिषेधार्थिकां संग्रहवाक्यरूपां परिभाषा-माह—**पूर्वपरेति**। **उत्तरोत्तरमिति**। 'आनुपूर्व्ये द्वे वाच्ये' इत्यनेनोत्तरशब्दस्य द्वित्वम्। 'समासवच्च बहुलम्' इत्यत्र बहुलग्रहणेनात्र समासवद्भावः। एवञ्च 'पूर्वपर' इत्यानुपूर्व्या यदुत्तरम्, तद् बलीय इत्यर्थः। अथवा समाहारद्वन्द्वः, एक उत्तरशब्दः परवाचकः, एकस्तूत्तरत्वेन गृहीतोत्तरपरः। उत्तरत्वे गृहीतादुत्तरः पर इत्यर्थः। अत्र पूर्वपूर्वापेक्षोत्तरोत्तरस्य बलवत्त्वे बोधिते पूर्वपूर्वस्य निषेधः पर्यवसितः।

इतर[?]आरभ्य 'उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्त-मप्युत्सर्गं बाधते' इत्येतत्पर्यन्तं सर्वमस्यैव क्रमेण प्रपञ्चः। तदाह—**पूर्वादिति**। परिभाषायां हेत्वनुक्तेराह—**विप्रतीति**। एवमग्रिमपरिभाषायामपि। ननु बलव-त्त्वमात्रोक्त्या नेष्टसिद्धिः, अत आह—**पूर्वस्येति** ॥ ३८ ॥

विप्रतिषेधशास्त्रमूल 'पूर्वात् परं बलवत्' इत्यंशीयबलवत्त्वविशेषोप-पादकपरिभाषाद्वयम्। तत्र द्वितीयां परिभाषामवतारयति—**नन्विति**। **एवमिति**। परस्य पूर्वबाधकत्वाङ्गीकार इत्यर्थः। भिन्धकीत्यत्र परत्वाद् धिना बाधितोऽ-कज् न स्यादिति पाठः। भिन्धीत्यत्र परत्वात् तातङा बाधितो धिर्न स्यादिति त्वपपाठः, 'स्थानिवत्' सूत्रभाष्योक्त 'सकृद्गति' न्यायोदाहरणीभूत 'भिन्तात्' इति रूपस्यासिद्धेः, तातङो वैकल्पिकत्वेन तदभावे धिभावप्रवृत्त्या भिन्धीति रूपसिद्धेश्च परशास्त्रप्रवृत्तेर्वैयर्थ्याभाव एव 'पुनः प्रसङ्ग' इत्यस्याश्रयणाच्च।

**नन्वेवम् 'तिसृणाम्' इत्यत्र परत्वात् तिस्रादेशे पुनस्त्रयादेशः स्यात्, अत आह—**

**सकृद् गतौ विप्रतिषेधे[1] यद् बाधितं तद् बाधितमेव ॥ ४० ॥**

---

अत एव 'अचश्च' इति सूत्रस्थभाष्यकैयटादि संगच्छते। तत्र हि—अच्समुदाय-निवृत्त्यर्थम् 'ऊकालः' इत्यत्राज्ग्रहणम्। तेन 'तितउच्छत्रम्' इत्यादौ 'दीर्घात् पदान्ताद्वा' इति वा तुग् नेति भाष्यकृतोक्तम्। तत्र 'तितउच्छत्रम्' इति प्रतीक-मुपादय परत्वाद् दीर्घलक्षणे वैकल्पिके तुकि 'सकृद्गति' न्यायाद् ह्रस्वलक्षणः पुनर्न प्रवर्तत इति कैयटेनोक्तम्। यदि त्वेतादृशविषयेऽपि 'पुनः प्रसङ्गविज्ञानात्' इत्यस्य प्रवृत्तिः स्यात्, तर्ह्येतद्भाष्यकैयटाद्यसंगतिः स्पष्टैव। तस्माद् यत्र पूर्वो विधिः परं न बाधते, तत्रैव पुनः प्रसङ्गविज्ञानस्य क्वचिदाश्रयणमित्येव युक्तम्। यथा भिन्धिकीत्यादौ पूर्वेणाकचा परस्य धिभावस्य न बाधः, विरोधाभावात्। धिभावप्रवृत्तेः, सार्थक्यादिति यावत्।

वस्तुतो भाष्ये 'अन्तरङ्गत्वाद् धित्वेऽकच्' इत्युक्तमिति नेदं 'पुनः प्रसङ्ग' न्यायस्योदाहरणम्, किन्तु 'ईजतुः' इत्यादि। अत्र परत्वाद्दीर्घादेशे सम्प्रसारणे पुनः प्रसङ्गविज्ञानाद् द्वित्वं बोध्यम् ॥ ३९ ॥

यत्र तु परशास्त्रे प्रवृत्तेर्वैयर्थ्यमेव, तत्र 'सकृद्गति' न्यायस्यैवाश्रयणम्। अतस्तमाह—**नन्विति**। **एवमिति**। बाधकप्रवृत्त्युत्तरमपि पुनः प्रसङ्गविज्ञानेन सर्वत्र भाष्यप्रवृत्तिस्वीकार इत्यर्थः। **पुनरिति**। स्थानिवद्भावेन त्रिशब्दत्वादिति भावः।

**सकृदिति**। गतौ = पूर्वशास्त्रयोर्युगपत्प्राप्तौ सत्याम्, यो विप्रतिषेधः=

---

१. विप्रतिषेध इति। अत्रायं सन्दर्भाशयः—'शा हौ' इत्यस्य 'हिप्रत्ययाव्यवहितपूर्वस्य शासः प्रसङ्गे शा साधुः' इत्यर्थे, 'तुह्योस्तातङ्' इत्यस्य च अङ्गाव्यवहितोत्तरस्य हेः प्रसङ्गे तातङ् साधु, इत्यर्थे 'शास् हि' इति स्थितौ शासो हि प्रत्ययाव्यवहितपूर्वत्वात्, हेश्चाङ्गाव्यवहितोत्तरत्वाच्छादेशस्य तातङश्च युगपत् प्रवृत्तौ विरोधो न स्यात्। अपि च एवमर्थे शास् हीत्यनयोः स्थाने शामात्रस्य तातङ्मात्रस्य च साधुत्वापत्तिः स्यात्। अतो निमित्तवाचकपदानामावृत्त्या विधेयेऽपि निमित्तानन्तर्यं विशेषणमङ्गीकर्तव्यम्। ततश्च हिनिरूपिताव्यवहितपूर्वत्वविशिष्टः शादेशः स्यादित्या-दिसूत्रार्थादुभयोर्युगपत्प्रवृत्तौ विधेये स्वनिमित्तानन्तर्यासम्भवाद् विरोध उपपन्नः, उक्तापत्तिश्च नेति नागेशाभिप्रायः।

वस्तुतो नैतत्सारम्—हिशब्दाव्यवहितपूर्वस्य शासः प्रसङ्गे शा साधुरित्याद्य-र्थेऽपि शादेशमात्रे शास्त्रतात्पर्यम्, तदितरभागस्य तु प्रसक्तस्यैव श्रवणम्, न न्यूनाधि-कस्य, मानाभावात्। एवञ्च विधेये निमित्तानन्तर्यविशेषणस्य निष्फलत्वान्निष्प्रमा-णत्वाच्च।

**तत्र क्वचिच्चरितार्थयोरेकस्मिन् युगपदुभयोः कार्ययोरसम्भवेन बाधका-भावात् पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थम् 'विप्रतिषेध' सूत्रमिति 'सकृद्गति०' न्यायसिद्धिः ।**

**यथा—तुल्यबलयोरेकः प्रेष्यो भवति । स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये तदोभयोर्न करोति, यौगपद्या-सम्भवात् । तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसभम्वाद-प्रतिपत्तौ प्राप्तायामिदं परविध्यर्थम् । तत्र कृते यदि पूर्वप्राप्तिरस्ति, तर्हि तदपि भवत्येवेति 'पुनः प्रसङ्गविज्ञान'सिद्धिरिति 'विप्रतिषेध०' सूत्रे भाष्ये स्पष्टम् ।**

---

परेण बाधः, तस्मिन् सति यत् सकृत्=एकवारं बाधितम्, तत् सर्वथा बाधित-मेवेत्यर्थः ।

एतौ द्वावपि न्यायौ लक्ष्यानुरोधाद् व्यवस्थितौ, अतस्तयोर्यथा सिद्धिः । तत्प्रकारमाह—**तत्रेति** । न्यायद्वयमध्य इत्यर्थः । **क्वचिदिति** । अन्यतराविषय इत्यर्थः ।

एकस्मिन् विरोधस्थले बाधकाभावादित्यनेनोत्सर्गापवादवैधर्म्यं दर्शितम् । स च दृष्टा ( दार्ष्टा )न्तिकयोः पर्य्यायेण प्रवृत्तौ हेतुः, वचनद्वयप्रामाण्यादिति तदाशयः ।

ननु शास्त्रप्रसङ्गोऽपि कार्यार्थं एवेति कार्ययोर्युगपदसम्भवे कथं शास्त्रयोः प्रसङ्गः ? अत आह—**तृजादीति** । **नियमार्थमिति** । तत्त्वे स्वोद्देश्यतावच्छेद-कावच्छिन्नातिरिक्तत्वेन पूर्वशास्त्रस्य सङ्कोचः । यथा तिस्रादेशविधायकेन स्त्र्यर्थत्रिशब्दातिरिक्तत्वम् 'त्रेस्त्रयः' इत्यस्य बोध्यते । एवञ्चानायासेन 'सकृद्गति'न्यायः सिद्धः ।

'विप्रतिषेध' सूत्रस्य विधित्वे 'पुनः प्रसङ्ग' इत्यस्य सिद्धिः, तदेव कथम् ? अत आह—**यथा तुल्येति** । एकत्र विरुद्धकार्यद्वयस्य सम्भवादाह—**नानेति** । तत्रापि देशे सम्भवादाह—**दिक्ष्विति** । कार्ये इति शेषः । **अप्रतिपत्ताविति** । प्रवृ-त्तावित्यर्थः । इदमिति । विप्रतिषेधसूत्रमित्यर्थः । **परविध्यर्थमिति** । परशास्त्र-विहितकार्यस्य विध्यर्थमित्यर्थः । विधिपक्षे स्वप्रवृत्त्यर्थकल्पितलक्ष्यातिरिक्तत्वं पूर्वशास्त्रस्य, यथा 'भिन्धिकि' इत्यत्र स्वं धित्वम्, तत्प्रवृत्त्यर्थं लक्ष्यम्—'भिन्द हि' इति, तदतिरिक्तम्—'भिन्धि' इत्यकज् भवत्येव । एवमेवान्यत्रापि 'विप्रतिषेध०' सूत्रस्य नियमार्थत्वे च संकोचः स्वयमेवोहनीयः । तथा च 'पुनः प्रसङ्ग' न्यायोऽर्थत एव सिद्धः ।

भाष्योक्तप्रकारमुक्त्वा कैयटहरदत्तदीक्षितोक्तप्रकारमर्थतोऽनूद्य, तद् दूषयितुमुपक्रमते—यत्त्वित्यादिना । **परमेवेति** । तत्त्वेन यथा 'सकृद्गति'न्याय-सिद्धिः, तथा प्राक् प्रतिपादितम् । **तल्लक्ष्यविषयेति** । विरुद्धलक्ष्यविषयेत्यर्थः ।

यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः। अत्र पक्ष एतन्नियमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव।

जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थल उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरित्याहुः, तन्नः, व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मानाभावात्।

'न ब्राह्मणं हन्यात्' इत्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात्। अत एव 'सरूप०' सूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधिप्रवृत्तेः 'गौरनुबन्ध्यः' इत्यादौ सकलगवानुबन्धनासम्भवात् कर्मणो वैगुण्यमुक्तम्।

द्रव्यवादे चासर्वद्रव्यावगतेः 'गौरनुबन्ध्यः' इत्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्त इत्युक्तम्।

किञ्च, न हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति।

---

नन्वेवं तद्विषयकपूर्वशास्त्रस्य वैयर्थ्यम्, अत आह—**अत्रेति**। नियमपक्षे इत्यर्थः। **एतदिति**। 'विप्रतिषेध' सूत्रस्येत्यर्थः। क्वचित्=विरोधान्यस्थले। सत्प्रेति। साध्याभावसाधकं हेत्वन्तरं यस्य सः, सत्प्रतिपक्षः। तत्र यथा मिथः प्रतिबन्धादनुमितिद्वयं न, एवमत्रापीति भावः। शास्त्रं कर्तृ, सर्वं लक्ष्यं कर्म। ननु व्याख्यानमेव मानम्, अत आह—**न ब्राह्मणेति**।

**अनवयवेनेत्यस्य** व्याख्या **साकल्येनेति**। जात्याश्रयो व्यक्तिविशेषोऽवयव इत्युच्यते। तथा च व्यक्तिविशेषानालम्बनेति तदर्थो वाच्यः। एवञ्च साकल्यं फलितम्। प्रत्युत वैपरीत्ये मानमित्याह—**द्रव्यवाद** इति। चस्त्वर्थे। **एकः शास्त्रोक्त** इति।

एकशब्दः प्रत्यर्थं निवेशितत्वान्न गोद्वयं बोधयेत्। तस्य केनचिदनुबन्धे कृते शास्त्रार्थसम्पत्त्या तेन गवान्तरानुबन्धोऽशास्त्रः स्यादित्यर्थः[1]। **मानमस्तीति** काकुरयं नास्तीत्यर्थः।

---

१. 'सरूपाणामेकशेष एकविभक्तौ' (१/२/६४) इति सूत्रे भाष्ये—जातेः पदार्थत्वात्, तस्याश्चैकत्वादेक एव शब्दो न्याय्य इत्यनेकशब्दप्रसङ्ग एव नास्तीति किमेकशेषेण ? इत्याशयेन 'आकृत्यभिधानाद् वैकं विभक्तौ वाजप्यायनः' इति वाजप्यायनाचार्यसाधितं जातिशक्तिवादं समुपस्थाप्य 'अव्यपवर्गगतेश्च' [ वा० ] 'नहि गौरित्युक्ते व्यपवर्गो गम्यते—'शुक्ला, नीला, कपिला, कपोतिका' इत्यादिना तत्पक्षं समर्थ्य 'धर्मशास्त्रञ्च

अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्ति-विरोधात् स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम्। जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव; नैतद्व्यक्तिविषयकत्वमित्यत्र नियामकाभावः।

---

अन्यव्यक्तिरूपेति। विरोधाधारान्येत्यर्थः, इयं विरोधाधारभूता।

उपसंहरति–तत्र लक्ष्यानुसारादिति। न्यायद्वयमध्ये तस्मादिति शेषः। क्वचिदिति। तिसृणामित्यादौ क्वचित् लौकिकेति। भिन्धिकीत्यादौ। लौकिको दूतरूपः।

नन्वेककार्ययोगो हि विप्रतिषेधः, यथा रामेभ्य इत्यादौ, न च शिष्टादित्यादौ तथास्ति, धातोश्शादेशः, हेश्च तातङादेश इत्यत आह–द्वयोः कार्ययोरिति। 'अन्यत्र लब्धावकाशयोः' शेषोऽत्र। एवेति। नैकस्य कार्यद्वययोगित्वव्यवच्छेदः। शास्त्रेऽपीति। शास्त्रप्रवृत्त्येत्यर्थः।'नावश्यं द्विकार्ययोग एव विप्रतिषेधः, किं तर्ह्यसम्भवोऽपीति 'इको गुण' इति सूत्रस्थभाष्यस्थम् 'नावश्यम्' इति प्रतीकमुपादाय 'द्विकार्ययोगत्वाभावे केवलोऽप्यसम्भवो (ऽपि ?) विप्रतिषेधः' इति कैयटे स्पष्टमित्याह—इदमिति।

तमुपपादयति—यथेति। शाभावोऽनाशिषि चरितार्थः। कालभेदेन पूर्वोक्तोदाहरणे कदाचित् स्वस्वनिमित्तानन्तर्यसम्भवेऽपि यौगपद्यासम्भवोऽस्त्येवेत्याह—यद्यपीति। आदिना शाभावपरिग्रहः। तत्=तत्तदानन्तर्यम्, सः=स्थानिवत्त्वपदवाच्यः स्थानिवद्भावः। एतेनान्यतरस्मिन् जाते निमित्तविघातादन्यतरन्न

---

तथा' एवञ्च कृत्वाधर्मशास्त्रं प्रवृत्तम्–'ब्राह्मणो न हन्तव्यः, सुरा न पेया' इति ब्राह्मणमात्रं न हन्यते, सुरामात्रं च न पीयते। यदि द्रव्यं पदार्थः स्यात्? 'एकं ब्राह्मणमहत्वा, एकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात्' इति जातिशक्तिवादे उपोद्बलकं प्रस्तूय 'द्रव्याभिधानं व्याडिः' इति व्याडिसम्मते व्यक्तिशक्तिवादे सर्वद्रव्यापरिज्ञानात् 'गौरनुबन्ध्योऽजोऽग्नीषोमीय इति एकः शास्त्रोक्तं कुर्वीत, अपरोऽशास्त्रोक्तम्' इत्यादिना व्याडिमतं दूषयित्वा 'ननु च यस्याकृतिः पदार्थः, तस्यापि यद्यनवयवेन चोद्यते न चानुबन्ध्यते विगुणं कर्म भवति' इत्यादिना 'जातिशक्तिवादेऽपि तस्य दोषस्य प्रसक्तिस्तुल्या' इत्यभिधाय 'एवं तर्ह्यनवयवेन चोद्यते प्रत्येकं च परिसमाप्यते, यथा—आदित्यः। ननु च यस्यापि द्रव्यं पदार्थः, तस्याप्यनवयवेन चोद्यते, प्रत्येकं च परिसमाप्यते' इति प्रतिपादितम्।

अत्रेदमाकूतम्—'जातिः पदार्थः' इति पक्षे यथा अनवयवेन=साकल्येन, चोद्यते=उच्यते, प्रत्येकञ्च परिसमाप्यते=शास्त्रं प्रत्येकं प्रत्याययति, तथा 'व्यक्तिः पदार्थः' इति पक्षेऽपि जातेरनभिधेयाया उपलक्षणत्वेनाश्रयणात्तदुपलक्षितं परित्यक्तभेदं व्यक्तिमात्रं साकल्येनोच्यते, प्रत्येकं च परिसमाप्यते शास्त्रमिति पक्षद्वयेऽपि साम्यमेव। अनेन भाष्यसन्दर्भेण पक्षद्वयेऽपि शास्त्रस्य सकललक्ष्यव्याप्तिप्रतिपादनात् अक्षभेदने परिभाषाद्वयव्यवस्थापनं कैयटोक्तमसङ्गतमिति भावः।

तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणम्, क्वचिल्लौकिक-दृष्टान्ताश्रयणमिति भाष्यसम्मतमार्ग एव युक्त इति बोध्यम् ।

द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी । इदम् 'इको गुण०' इति सूत्रे कैयटे स्पष्टम् ।

यथा 'शिष्टात्' इत्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्ता-नन्तर्यासम्भवः । यद्यपि तातङादेः स्थानिवद्भावेनास्त्येव तत्, तथाप्यादेश-प्रवृत्त्युत्तरमेव सः, न तु तत्प्रवृत्तिकाले । एवं नुम्तृज्वद्भावयोः 'प्रियक्रोष्टूनि' इत्यादौ युगपदसम्भवः, यदागमा इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः । एवम् 'भिन्धि' इत्यत्र तातङ्धिभावयोर्युगपदेकस्थानिसंबन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासंभवो बोध्यः । नुम्नुटोरपि नुटचजादिविभक्त्यानन्तर्यबाधः, नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद् विप्रतिषेधः ।

क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्यमित्यर्थात् पूर्वमेव भवति । तेन सर्वे पूर्वविप्रतिषेधाः संगृहीता इति 'स्वरितेन' इति सूत्रे भाष्ये । विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात् तत्संग्रह इति 'विप्रतिषेध०' सूत्रे भाष्ये ।। ४० ।।

---

स्यादिति केषाञ्चिदुक्तिः परास्ता । इदमेव ध्वनयितुं बहुषु तमुपपादयति-एवमित्यादिना । अप्रवृत्तेरिति । अङ्गत्वसम्पादकस्थानिवत्त्वस्य तृज्वद्भाव-प्रवृत्त्युत्तरं प्रवृत्तेश्चेत्यपि बोध्यम् ।

पूर्वात् परं प्रवृत्तम् इत्यस्यासार्वत्रिकतामाह--क्वचिदिति । प्रकारान्तर-माह—विप्रतिषेधेति । तत्सङ्ग्रह इति । सकलपूर्वविप्रतिषेध इत्यर्थः । 'स्वरितेन' इति सूत्रस्य तथार्थकस्यावश्यकत्वं तत्र भाष्ये एव स्पष्टमिति तत एवा-वधार्यम्[1] ।। ४० ।।

यद्यपि 'पूर्वात्परं बलवत्' इत्युत्तरम् 'परान्नित्यं बलवत्' इति पठितुं युक्तम्, तथापि 'परं बलवत्' इत्येतस्या अपवादभूतां परिभाषां मध्येऽवतार-यति—नन्विति । एवमिति । पूर्वविप्रतिषेधादन्यत्र परस्य पूर्वबाधकत्वे इत्यर्थः ।

---

१. तत्र हि भाष्ये—अनुवृत्तिरपि निवृत्तिरिव व्याख्यानादेव भविष्यति किमेतेनेति सूत्र-वैयर्थ्यमाशङ्क्य, अधिकः कारः = अधिकारः = अधिकं कार्यम् । स्वरितेनाधिकं कार्यं भवति । 'वृद्ध्यौत्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषेधेन' 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इत्यादिवचनानि न कर्तव्यानि । नुम्नुटौ च स्वरयिष्येते । तेन नुमादिविधयः प्राक् पठिता अप्युत्तरविधीनां बाधकाः स्युः । अधिकारशब्दादीदृशार्थ-लाभश्च लोकसिद्धः । लोके हि यो दुर्बलः सन् बलवद्भिः सह भारं वहति, सोऽधि-कमयं कारं करोतीत्युच्यते । एवमिहाप्यधिकमयं कारं करोतीत्युच्यते योऽयं पूर्वः सन् परं बाधत इत्यर्थकमुक्तम् ।

नन्वेवम् 'एधते' इत्यादौ परत्वाद् विकरणे 'अनुदात्तङितः' इत्यादि-नियमानुपपत्तिः, अत आह—

विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥

अत्र 'वृद्भ्यः स्यसनोः' इति सूत्रेण स्ये विभाषाऽतङ्विधानं ज्ञापकम् । अन्यथा स्वव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्यात् । अत्रार्थे ज्ञापिते तु स्य इति तत्र विषयसप्तमी बोध्येति 'अनुदात्तङितः' इत्यत्र भाष्यकैयटयोः स्पष्टम् ।

विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति 'शदेः शितः' इत्यत्र भाष्ये ध्वनितम् ।

---

एधत इत्यादाविति । आदिना पचत इत्यादिसंग्रहः । पचत इत्यादाविति त्व-( प )पाठः, प्राक्पठितत्यागे मानाभावात् । अत एव 'अनुदात्त' इति दोष-सङ्गतिः । तदपि प्रागेव पठितम् । परत्वादिति । विकरणस्य चारितार्थ्यं खश्चा-नशादौ, आत्मनेपदस्य तु लिडादौ, प्रकृते उभयोः प्राप्तौ परत्वाद् विकरणं स्यादित्यर्थः । एवं स्यप्रत्ययापेक्षया परत्वात् तिबादौ कृते स्यप्रत्ययेन परत्वा-न्नियमस्य बाधः । न च नियमस्याचारितार्थ्यम्, लिङादौ चारितार्थ्यस्योक्त-त्वात्, न च नियमतिबादेरप्राप्तियोग्ये स्यप्रत्ययस्य चारितार्थ्याभावेन स्यप्रत्य-येन वैयर्थ्यान्नियमादीनां बाध इति वाच्यम्, कृते नियमादौ च स्यप्रत्ययस्य चारितार्थ्यात् । ननु तर्हि 'तक्रकौण्डिन्य' इति न्यायेनैव बाध इति चेत्, न; 'भविष्यतिमर्यादा' इत्यादिनिर्देशैस्तस्यानित्यत्वादप्रवृत्तौ 'विप्रतिषेधे परम्' इत्यस्य प्रवृत्तेः सूपपादत्वात् ।

परिभाषायां ज्ञापकमाह—अत्रेति । परिभाषायामित्यर्थः । स्ये [इति], परत इति शेषः । अतङिति च्छेदः । परस्मैपदेति तदर्थः । क्वचित्तु 'विकल्प-विधानम्' इति पाठः । तत्र विकल्पेन परस्मैपदविधानमित्यर्थः । उपपादनपर्या-लोचनया त्वयमेव पाठो युक्त इति भाति । नन्वेवमपि स्य इति परसदा(प्त)मीति ज्ञापितेऽपि चारितार्थ्याभावात् कथं ज्ञापकत्वम् ? अत आह—अत्रेति । परिभाषायां ज्ञापितायामित्यर्थः ।

विषयसदाभ्यां ( प्तम्यां ) गौरवम्, 'विप्रतिषेधे परम्' इत्यस्य बाधश्च, अतो भाष्यान्तरोक्तपक्षान्तरमाह—विकरणव्यवधानेऽपीति ।

ननु भिन्नवाक्यता ( तया ) विधानेऽपि नियमेन जातनिवृत्तिः, प्रधाना-नुरोधेनाधिकनवप्रकृतिकल्पनम् विपरीतनियमेन प्रधाननिवृत्तौ तत्कल्पितनवकृते-र्निवृत्तिश्चेति गौरवत्रयमित्यत आह-वस्तुत इति । तत्र 'धातोः' इति । तिबादि-विधायकशास्त्र इत्यर्थः । अत एव लिट् लुनातीत्यादौ न तिबाद्यादेशः । विहित-विशेष( ण )मेवेति । एतस्य विहितविशेषणत्वे फलाभावात्, 'धातोः' इत्यस्यैव विहितविशेषणत्वेन सिद्धेश्चेति चिन्त्यमेतत् । लावस्थायां स्येति ।

**वस्तुतोऽस्माद् ज्ञापकात् 'अनुदात्तङित.' इत्यादिप्रकरणं तिबादिविध्येकवाक्यतया विधायकम्। तत्र 'धातोः' इति विहितपञ्चमी, तत्समानाधिकरणम् 'अनुदात्तङितः' इत्यादि विहितविशेषणमेव।**

**एवं च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः। शबादिभ्यस्तु पूर्वमेव नियमः।**

**यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशाः, लकारविशेषापेक्षत्वात् स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः।**

---

ननु नियमैकवाक्यतापन्नतिबादेः स्यापेक्षया परत्वेन प्रथमं प्रवृत्तौ दिग्योगलक्षणपञ्चम्यामपि नियमसिद्धेः कथं लावस्थायां स्यप्रवृत्तिरिति चेत्! शृणु; 'श्यन्नादितः स्यादयोऽन्तरङ्गाः, कान्तरङ्गता? लावस्थायामेव विधानात्' इति भाष्योक्त्या[1] 'आयादयः' इत्यतः 'आर्धधातुके' इत्यनुवृत्त्या लावस्थायामेव तत्प्रवृत्तेः। एतच्च भाष्यग्रन्थानुरोधेनोक्तम्। वस्तुतः 'स्यतासी' इत्यत्र आर्धधातुकपदानुवृत्तौ फलाभावादेतत्पक्षे परत्वादेव तिबादेस्सिद्धत्वेन विहितविशेषणं व्यर्थमेव। अत एव 'विकरणेभ्यो नियमः' इत्यादि, 'विकरणव्यव(हार?)धानेऽपि' इत्यादि 'वस्तुतः' इत्यादिनैकवाक्यताश्रयणादि सर्वं सङ्गच्छते। इतरेषामपि(रथै)षां वैयर्थ्यं स्पष्टमेव।

न च स्यप्रत्ययो नित्यः, 'शब्दान्तरे प्राप्नुवन्' इति परिभाषया तस्याप्यनित्यत्वात्। न च 'विपराभ्यां जेः' इत्यादौ नियमस्य पदान्तरे सापेक्षस्य तदपेक्षयान्तरङ्गत्वात् स(स्य)प्रत्यये तेन व्यवधानात् तदर्थं विहितविशेषणमिति वाच्यम्, विपराभ्यां परत्वयोग्याज्जेरित्याद्यर्थस्य शेखर एव सिद्धान्तितत्वात्। **पूर्वमेवेति**। कर्त्रर्थसार्वधातुके तेषां विधानादिति भावः।

'एकवाक्यतया विधानम्' इति पक्षेऽपि विहितविशेषणाश्रयणप्रयुक्तं गौरवम्, अत आह—**यद्वेति**। **लकारविशेषापेक्षेति**। लकाररूपो यो विशेषः परः, तदपेक्षत्वात्परनिमित्तत्वादिति यावत्। यथाश्रुतं तु न युक्तम्, नियमे एकवाक्यतया प्रकृतिविशेषापेक्षत्वादादेशानां तत्सामान्यापेक्षत्वेन समत्वात् स्वमते एतादृशान्तरङ्गत्वस्यासत्त्वाच्चेति केचित्। तत्, न; 'सः, यः' इत्यादौ 'त्यदादीनामः' इत्यस्य परनिमित्तत्वेन बहिरङ्गस्यापरनिमित्तत्वेनान्तरङ्ग 'हल्ङ्यादि' लोपदृष्ट्यासिद्धत्वात्। पूर्वं हल्ङ्यादिलोपे पश्चादत्वेऽपि विसर्गश्रवणानापत्तेः। न च 'हल्ङ्याब्भ्यः' इति पञ्चम्यन्तनिमित्तत्वेन 'हल्ङ्याब्भ्यः' इत्यस्यापि परनिमित्तत्वेनोभयोः समत्वमिति वाच्यम्, एवं तर्हि प्रकृतेऽपि तुल्यत्वात्। तस्मान्मूलं कैयटानुरोधेनेति दिक्।

नन्वत्र पक्षे पूर्वं लस्थानिकत्वा(त्?) भावेनात्मनेपदपरस्मैपदसंज्ञ-

---

१. ३/१/३३। एवं हि तत्रत्या भाष्यानुपूर्वी— अथवान्तरङ्गाः स्यादयः। काऽन्तरङ्गता? लावस्थायामेव स्यादयः, सार्वधातुके श्यन्नादयः।

अत्र पक्षे 'वृद्भ्यः स्य०' इति सूत्रं स्यविषय इति व्याख्येयम् । आत्मने-पदशवा भाविसंज्ञाऽऽश्रयणीयेति तत्त्वम् ।

भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्या । भुक्तवन्तं प्रति मा 'भुङ्क्था इति ब्रूयात्' किं तेन कृतं स्यात्' इति न्यायस्तु नात्र शास्त्र आश्रयितुं युक्तः, नियमादिशास्त्राणां वैयर्थ्या-पत्तेः, ध्वनितं चेदम् 'स्थानेऽन्तरतमः' इति सूत्रे भाष्ये ।

शास्त्रार्थनक्यं तु वृद्धिसंज्ञासूत्रे भाष्यं तिरस्कृतम् । सामान्यशास्त्रे-णोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन[1] गुणभेदकल्पना तावत्-

---

योरभावेन तेषा संज्ञाविधाने इतरेतराश्रयः,[२] भिन्नवाक्यतया विधाने तु पूर्व-मष्टादशानां जातत्वेन तयोस्तत्संज्ञायां नेतरेतराश्रयः, अत आह—**आत्मनेपद-शब्दादाविति** । न तु संज्ञया हि विधिः, विहितानाञ्च संज्ञेत्याकारकस्यान्यो-न्याश्रयस्य तत्र संज्ञया विधाने लस्योद्देश्यत्वेऽपि संज्ञाविधायके लस्योद्देश्यत्वा-भावात् कथं सम्भव इति चेत्, न; शानचस्तत्संज्ञावारणायात्मनेपदविधायके लकारानुवृत्तेरावश्यकत्वात् ।

एकवाक्यतया विधिरिति सिद्धान्तिपक्षं परिष्कृत्य विकरणेभ्य इति प्रकृत-परिभाषाश्रयणपक्षं गौरवेण निराकरोति—**भिन्नेति** ।

वैयर्थ्यापादने इष्टापत्तिं परिहरति—**शास्त्रानर्थक्यमिति** । नन्वेकस्याः प्रकृतेरनेकप्रत्ययानामव्यवहितपरत्वासम्भवादुत्पत्तिरेव सर्वेषां दुर्लभेति कथं जातानां नियमेन निवृतिः, अत आह—**सामान्येति** ।

**तावत्प्रकृतिकल्पनयेति** । इदमेकवाक्यतया विधानेऽप्यावश्यकम् । अन्यथै-कस्माद् धातोरेक एव प्रत्ययः, न तु नव प्रत्यया इति ध्येयम् । तुश्चार्थे कल्पनया कार्येत्यग्रे योज्यः । **निवृत्तौ चेति** । च कल्प्येत्यग्रे योज्यः ।

एवञ्च दोषत्रयं भिन्नवाक्यतया विधानपक्षे सिद्धम् । एकवाक्यतया

---

१ प्रधानीभूतप्रत्ययानुरोधेन त प्रति गुणीभूतानां धातुरूपप्रकृतीनामपि भेदः कल्प्यत इति भावः ।

प्रत्ययस्य प्राधान्यञ्च न प्रधानार्थप्रतिपादकत्वप्रयुक्तम्, 'शाब्दिकनये भावप्रधान-माख्यातम्' इति यास्कोक्तरीत्या धात्वर्थस्यैव प्राधान्यात् । किन्तु विधायकशास्त्रजन्य-शाब्दबोधीयविशेष्यताऽऽश्रयत्वप्रयुक्तम् । तथा च धातूद्देशेन लकारादिविधानाद् धातो-स्तत्र विशेषणत्वेन गुणत्वम्, प्रत्ययस्य च तं प्रति विशेष्यत्वेन प्राधान्यमिति बोध्यम् ।

१ अयमाशयः—एकवाक्यतया विधाने "अनुदात्तङित:" इत्यस्य 'लस्य स्थाने आत्मनेपदं भवति' इत्यर्थः स्यात् । स चासिद्धः, तदानीमात्मनेपदज्ञानाभावात् । तज्ज्ञानञ्च "तङानावात्मनेपदम्" इत्येतद्वाक्यार्थबोधाधीनम्, तज्ज्ञानञ्च लस्थानिकत्वापेक्षणात् "तिप्तस्झि" इति वाक्यार्थबोधान्तरमित्यन्योन्याश्रयः ।

**प्रकृतिकल्पनया कार्या, प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः ॥ ४१ ॥**

## परान्नित्यं बलवत् ॥ ४२ ॥

**कृताकृतप्रसङ्गित्वात्। तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजम्। तदाह—'कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम्'।**

---

विधाने आत्मनेपदादौ भाविसंज्ञाश्रयणरूपमेकमेव दूषणमित्येकवाक्यतया विधानमिति पक्ष एव लघुरित्याशयः। न चात्र पक्षे तिबादिसूत्रेऽनुवृत्तधातोरित्यस्य विहितविशेषणाश्रयणमपि गौरवमिति वाच्यम्, अस्मिन् पक्षेऽपि परपञ्चमीत्वस्य प्रागुपपादितत्वात्। **इति गौरवमिति**। एतस्य विहितानां नियम इत्यनेनान्वयः। यदि तु लुगादिवन्नियमेनानुत्पत्तिरेवान्वाख्यायते, तदाऽऽद्यपक्षावपि निर्दुष्टावित्यादिबोध्यम्।[1] तदाह—**इत्यन्यत्रेति**। कैयटादावित्यर्थः॥ ४१ ॥

परं बलवदित्युक्त्वा तदपवादभूतां परिभाषामवतारयति—**परान्नित्यमिति**। तत्र तत्र बीजमाह—**तत्रेति**। परनित्ययोर्मध्य इत्यर्थः। **उचितमिति**। श्राद्धभोजनादिकर्मण्युपस्थितयोरावश्यकानावश्यकयोर्द्वयोर्युगपदसम्भवेऽक्लृप्ताभावस्य दौहित्रादेरावश्यकस्यैव लोके निमन्त्रणवत् तुदतीत्यादौ गुणोत्तरमपिशप्रत्ययस्य प्रवृत्त्या तस्यावश्यकत्वेन तस्यैव पूर्वं प्रवृत्तिरित्याशयः। **बीजमिति**। लाघवमेव, नित्यस्य बलवत्त्वे बीजम्, न त्विदं वाचनिकमिति भावः।

ननु न्यायादपि प्रत्यक्षशास्त्रस्य बलवत्त्वेन कथं नित्यस्य बलवत्त्वमिति चेत्, न; तुल्यबलोर्विरोधस्यैव विप्रतिषेधशब्दार्थत्वेन नित्ययोरतुल्यबलत्वात्।

ननु मा भूद्विप्रतिषेधशास्त्रस्य प्रवृत्तिः, तथापि तुदतीत्यादावुभयप्रवृत्तौ नित्येन कथं परशास्त्रबाधः, नित्यशास्त्रप्रवृत्तौ परशास्त्रसंकोचादवच्छेदकावच्छेदेन शास्त्रस्य प्रवृत्तिरित्य( लुगागम ? )स्य समावेशो सम्भवति, असमावेशो न न्याय्य इत्यस्य च; लौकिकयुक्तिद्वयस्यैकया नित्यत्वरूपलौकिकयुक्त्या बाधोऽनुचितः। यदि रन्धयतीत्यादौ नित्यशास्त्रप्रवृत्तिस्स्यात्, तदा वृद्धेरप्राप्तौ वृद्धिशास्त्रीयोद्देश्यः संकुचितः स्यात्, समावेशश्च न स्यात्। अतः प्रथमं वृद्धेः

---

१. अयमभिप्रायः—प्रधानिभूतप्रत्ययानुरोधेन प्रकृतिभेदकल्पनया एध् लृ, एध् लृ इत्यादिक्रमेण स्थानिनां भिन्नत्वम्। एवम् एध् ति, एध् तस इत्यादिक्रमेण तदादेशानामपि भिन्नत्वमित्यतो नोक्तदोषः। नियमशास्त्रेण च तिबादिनवप्रत्ययनिवृत्तौ तैः सह तत्प्रकृतीनामपि निवृत्तिरितीष्टसिद्धिः। किन्तु पक्षेऽस्मिन् कल्पनागौरवम्। अतो दूषणशून्यत्वादन्तिमः पक्ष एव समीचीनतामञ्चति।

लुकाऽनुत्पक्तेरिव नियमेनापि सामान्यशास्त्रविहितानामनिष्टानामनुत्पत्तेरेवान्वाख्यानमिति स्वीकारे तु आद्यपक्षद्वयमपि निर्दुष्टम्।

अत एव 'तुदति' इत्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४२ ॥

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह—

**शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ॥ ४३ ॥**

---

प्रवृत्तायुभयोर्भवनमिति संकोचाभावस्समावेशश्च भवत इति चेत्, न; उभयोर्यौगपद्यासम्भवेनान्यतरशास्त्रस्य प्रवृत्तेरावश्यकत्वेनाल्पसंकोचकस्य नित्यस्यैव प्रवृत्तेरुचितत्वात्। तथाहि—यदि परशास्त्रस्य पूर्वम्प्रवृत्तिः, तदा एतत्कालिकावच्छेदेनैतदुद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन नित्यशास्त्रे संकोचः, यदि नित्येन परशास्त्रस्य संकोचस्तदा एतदुद्देश्यतावच्छेदकावच्छिन्नारितिक्तत्वं परस्येति संकोचस्याल्पत्वात् नित्यमेव प्रवर्तते न परमिति भावः।

**नित्यत्वात् शप्रत्ययादिर्भवतीति।** न च शस्य शित्त्वसामर्थ्यादेव गुणाभाव इति वाच्यम्, 'विचति, पृच्छति'इत्यादौ सम्प्रसारणाद्यर्थं शित्त्वस्य, चारितार्थ्यात्। न च प्रतिपदोक्तत्वं शप्रत्ययस्येति शङ्क्यम्, तुदः प्रतिपदोक्तत्वेऽप्यादिशब्दग्राह्यानां प्रपिपदोक्तत्वाभावात्। ननु तुदतीत्यत्र सत्यपि सम्भवे बाधनम्भवतीति न्यायेन शप्रत्ययस्य पूर्वं प्रवृत्तिर्भवति न तु नित्यत्वेन, गुणस्यापि कृते शप्रत्यये प्रसक्तेः। बाधकेन 'क्ङिति च' इत्यनेन बाध इति त्वन्यदिति साम्यमुभयोः, अत आह—**आदीति।** तेन रुणद्धि, रन्ध्रयति, अस्मै इत्यस्य संग्रहः। आद्ये गुणं बाधित्वा श्नम्, द्वितीये तूपधावृद्धिं बाधित्वा 'रधिजभोरचि' इति नुम्, तृतीये नित्यत्वात् ङेः स्मैर्भवति ॥ ४२ ॥

इदानीम् 'कृताकृत' इतिं परिभाषास्थ 'तद्विपरीतमनित्यम्' इत्यशं प्रपञ्चयितुं 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः' इति परिभाषान्तरमवतारयति **यद्व्यक्तीति।** यद्व्यक्तीत्याद्युक्तकृताकृतंप्रसङ्गित्वोदाहरणन्तु मुमुदे, चुकुचे; इत्यादि। अत्र परत्वाद्गुणः प्राप्तः, तदप्रवृत्तयेऽसंयोगादिकित्त्वस्यावश्यमेत्र नित्यत्वाश्रयणम्। तच्च यद्व्यक्तिसम्बन्धितया एकव्यक्तिसम्बन्धितया कित्त्वस्य गुणात्पूर्वम्प्रवृत्तिः, तद्व्यक्तिसम्बन्धितयैव गुणोत्तरमपि प्रवृत्तिरस्ति। अत एव 'सार्वधातुकमपित्' इति सूत्रे च्यवन्त[1] इत्यत्र गुणान्नित्य एकादेश इत्युक्तं भाष्ये।

**शब्दान्तरेति।** तेन पृथुमाख्यत् अपिप्रथदित्यत्र( परत्र ? )परत्वाद्वृद्धौ सत्यां टिलोपेऽनग्लोपित्वात् सन्वद्भावेन 'सन्यतः' इतीत्वम्। अन्यथा नित्यत्वाट्टिलोपेऽग्लोपित्वात् सन्वद्भावाभावेनेत्वन्न स्यात् ॥ ४३ ॥

---

१. अत्र हि च्यु+अ+अन्त इति स्थिते शप्प्रत्ययनिमित्तकगुणस्य पररूपस्य च प्राप्तौ 'शब्दान्तराद्' इति परिभाषया नित्यैकादेशात् प्राक् गुणस्य सिद्धिः।

**इदम् 'शदेः शितः' इति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'न्यविशत' इत्यत्र विकरणे कृते तदन्तस्याकृते धातुमात्रस्येत्यडनित्य इत्युक्तम् ॥ ४३ ॥**

**एतत्तुल्यन्यायेनाह—**

**शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ ४४ ॥**

---

'शब्दान्तरस्य' इत्यस्याः प्रपञ्चभूतां 'शब्दान्तरात्' इत्यादि परिभाषामवतारयति— एतत्तुल्येति। 'यद्व्यक्ति' इति तुल्यन्यायेनेत्यर्थः।

**शब्दान्तरादिति।** तेनाजरांसीति सिद्धम्। अजर अस् इत्यवस्थायां परत्वाज्जरसि, ततः 'जश्शसोश्शिः' इति श्यादेशे झलन्तत्वान्नुमि 'सान्त' इति दीर्घः सिध्यति। अन्यथा अजर+अस् इत्यवस्थायां परत्वात् श्यादेशे नुम्जरसोः प्राप्तयोर्नित्यत्वान्नुमि निर्दिश्यमानस्य व्यवधानाज्जरसादेशो न स्यात्। शब्दान्तरात् प्राप्नुवतोऽनित्यत्वे परत्वाज्जरसादेशे, ततः श्यादेशे नुमि दीर्घे च सिद्धम्—अजरांसीति। न च जरसादेशस्यापि नित्यत्वमिति वाच्यम्, शब्दान्तरे प्राप्नुवत्वात्। ननु 'शब्दान्तरे प्राप्नुवतः' इत्यंशस्य किमसाधारणोदाहरणमिति चेत्? वरिष्यती[1] त्यवेहि। अत्रैकवाक्यतया नियमे लादेशे कृते स्यादीनां शब्दान्तरे प्राप्तत्वेनानित्यत्वात् परत्वात् तिबादय एव भवन्ति[2] ॥ ४४ ॥

---

१. 'विकरणेभ्यो नियमो बलियान्' इत्यनेन गतार्थत्वात् प्रयोजनमिदं मन्दम्। वस्तुतस्तु 'वस्वेकाजाद्घसाम्' [७/२।६७] इति सूत्रस्थभाष्योपपत्तिरेवास्य फलम्। तत्र हि बिभिद्वान्, चिच्छिद्वान्; इत्यत्र वसोरिडभाव प्रयोजनं प्रतिपाद्य कृतेऽप्येकाज्ग्रहणे धातोरेकाच्त्वेनात्रेट् प्राप्नोतीत्याशङ्क्य च समाहितम्—प्रकृतसूत्रे एकाज्ग्रहणसामर्थ्यात् 'द्विर्वचने कृते य एकाच्' इत्यर्थस्वीकारेण 'बिभिद्वान्' इत्यादौ तथात्वाभावेन दोषाभाव इति। इदञ्च भाष्यं कृते द्वित्वे शब्दान्तरात् प्राप्नुवत इडागमस्येव कृते इति शब्दान्तरे प्राप्नुवतो द्विर्वचनस्याप्यनित्यत्वेन परत्वादिडागमप्राप्त्यङ्गीकार एव सङ्गच्छते। इतरथा द्विर्वचनस्यैव नित्यत्वेन पूर्वप्रवृत्तावङ्गस्यैकाच्त्वाभावादुक्तं भाष्यमसङ्गतं स्यादिति तत्त्वम्।

२. शब्दान्तराद् प्रसक्तस्यानित्यत्वम् 'शदेः शितः' इति सूत्रे भाष्ये ध्वनितम्। तथा हि—'उपसर्गपूर्वनियमः' इति वार्तिकसमर्थनाय 'तरतः, तरन्ति' इत्यादौ विकरणात् तपः प्रागाङ्गकार्यस्य "ऋत इद्धातोः" इतीत्वस्य प्रवृत्त्यापत्तिवारणार्थम् 'आङ्गात् पूर्वं विकरणा एषितव्याः—तरतः, तरन्ति; इत्येवनर्थम्' इत्युक्त्वा 'भवेत् सिद्धं यत्र विकरणा नित्याः, अङ्गमनित्यम्; तत्राङ्गात् पूर्वं विकरणाः स्युः। यत्र तु खलूभय नित्यं परत्वात्तत्राङ्गं तावद् भवति' इत्युक्तम्।

अत्रेदमाकूतम्—यथा तरतीत्यादावाङ्गकार्यस्य गुणस्य विकरणस्य च कृताकृतप्रसङ्गित्वेन नित्यत्वसाम्यात् परत्वेन गुण एवादौ भवति तथा न्यविशतेत्यादावपि कृताकृतप्रसङ्गित्वेनाड्विकरणयोरुभयोर्नित्यत्वसाम्यात् परत्वेनाडागम एव पूर्वं भविष्यति। यदि च

एतन्मूलकमेवाह—

**लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः ॥ ४५ ॥**

अतिदेशविषये इयम् 'असिद्धवत्' सूत्रे कैयटेनोक्ता ॥ ४५ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावः, तदाह—

**क्वचित् कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥**

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकम्, न तु बाधकाबाधितफलोपहितप्रसङ्गोऽपि तथेति भावः ॥ ४६ ॥

---

**एतदिति।** उक्तपरिभाषाद्वयमूलकमेवेत्यर्थः। एतेनापूर्वत्वनिरासः।

**लक्षणान्तरेति।** उपदेशान्येनेत्यर्थः। तदाह—**अतीति।** **'असिद्धवत्' सूत्र इति।** तत्र हि—कुर्व इत्यादौ लघूपधगुणे पकारलोपयोः प्राप्तौ नित्यत्वादुकारलोपः। गुणस्तु लोपे कृते 'प्रत्ययलक्षणेन प्राप्नोति' इत्यनेन न्यायेनानित्य इत्युक्तं मूले। 'लक्षान्तरेण' इत्यस्य फलन्तु 'बभूवतुः' इत्यादि। अन्यथा 'भू+अतुस्' इत्यवस्थायां वुकि कृतेऽपि वुकोऽसिद्धत्वादुवङ्प्राप्त्या नित्यत्वादुवङि ततो वुकि कृते तदसिद्धिः स्पष्टैव। न च वुकोऽप्युवङि कृते प्राप्त्या नित्यत्वं शङ्क्यम्; शब्दान्तरप्राप्त्या वुकोऽनित्यत्वात्। नन्वेवम् 'वुग्युटौ' इति वार्तिके वुग्ग्रहणं व्यर्थमिति चेत्? न; वार्तिके वुग्ग्रहणस्यापि 'लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः' इत्यत्र प्रमाणत्वात्। 'लक्षणान्तरेण' इत्यस्य सत्त्वे तूवङो लक्षणान्तरेण प्राप्त्याऽनित्यत्वेनोभयोरनित्ययोः परत्वाद् वुकि तस्यासिद्धत्वात् प्राप्तस्योवङोऽभावार्थं तत्र वुग्ग्रहणं सार्थकम्। 'असिद्धवत्' सूत्रप्रत्याख्याने तूदाहरणमन्वेषणीयमिति। अत एवास्वरसात् 'कैयटेनोक्ता' इत्युक्तमीति दिक् ॥ ४५ ॥

नन्वेवम् 'रुणद्धि' इत्यत्र गुणे कृते श्नम्प्रत्ययस्य शब्दान्तरात् प्राप्तत्वेन स्थानिवत्त्वातिदेशेन च प्राप्तत्वेन नित्यत्वात् परत्वाद्गुणे कृते रूपासिद्धिः, अत आह—**यदा तु शास्त्र इति।** एवञ्च लक्ष्यानुरोधेनैषैव परिभाषा तत्र स्वीक्रियत इति भावः ॥ ४६ ॥

---

विकरणे कृते शब्दान्तरस्य प्राप्नुवन्नडागमोऽनित्य इति मन्यते तर्हि अडागमे कृते विकरणस्यापि शब्दान्तरात् प्राप्त्याऽनित्यत्वं तुल्यमिति परत्वेनैव व्यवस्थेत्यडागमस्य पूर्वं प्रवृत्त्या तस्य धातुभक्तत्वेन 'न्यविशः' इत्यादौ धातुग्रहणेन तद्विशिष्टस्य ग्रहणाद् दोषाभावेन 'उपसर्गपूर्वनियमः' इति वार्तिकस्य नास्त्युपयोग इति। एवञ्च भाष्येणानेनेयं ध्वनिता।

अत्र कैयटे च 'न चायं नियमः, शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति, न तु शब्दान्तरादिति' इति कण्ठत उक्तम्।

**तदाह—**

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४७ ॥**

**क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते ॥ ४७ ॥**

**तदाह—**

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४८ ॥**

**सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम् । वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालिनः प्राबल्यं न व्यवहरति ।**

---

कृताकृतप्रसङ्गश्चोभयविधः-क्वचिद्बाधकबाधितफलोपहितत्वरूपः, क्वचिद् बाधकाबाधितफलोपहितत्वरूपः । एतदुभयमपि लक्ष्यानुरोधादाश्रीयते । तत्र प्रथममूलकमिदं वचनम् 'यष्य लक्षणान्तरेणेति' इत्यत आह—**तदाऽऽह यस्य लक्षणान्तरेणेति** । एतदुदाहरणम् 'त्वापयति' इत्यादि—त्वामाचष्टे त्वापयति; ( मामाचष्टे ) मापयति; मपर्य्यन्तस्य त्वमौ, पररूपात् पूर्वन्नित्यत्वाट्टिलोपः, वृद्धिः, पुक् । अत्र पररूपे कृते एकाच्त्वात् 'प्रकृत्यैकाच्' इति प्रकृतिभावेऽपि टिलोपस्य प्रसङ्ग इति 'यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्' इति परिभाषया नित्यत्वाट् टिलोपस्यैव प्रवृत्तेः । न चान्तरङ्गत्वात् पररूपे 'प्रकृत्यैकाच्' इति प्रकृतिभावे च 'त्वादयति, मादयति' इत्येवं रूपमिति वाच्यम्, 'नाजानन्तर्ये' इति सत्त्वे तन्निषेधात्, तदसत्त्वे 'अन्तरङ्ग' परिभाषाया अनित्यत्वाच्च । नचैवमपि 'वार्ण' परिभाषया टिलोपस्यैव प्रवृत्तेः टिलोपस्य नित्यत्वं नोपयुज्यत इति वाच्यम्; भावकार्यं एव धर्मिग्राहकमानेन 'वार्ण' परिभाषायाः प्रवृत्तेरङ्गीकारस्य तत्परिभाषाव्याख्यावसरे उपपादयिष्यमाणत्वात् । अत एव परममूले नित्यत्वादेव टिलोप इत्युक्तम् न चाङ्गत्वादिति दिक् ।

नव्यमते 'वार्ण' परिभाषया टिलोपस्यैव प्रवृत्त्या 'त्वापयति' इत्यादिसिद्धौ परिभाषोदाहरणमन्वेषणीयमित्यलम् ॥ ४७ ॥

द्वितीयमूलकं तु द्वितीयम् 'यस्य लक्षणान्तरेणेति' इत्याहुः—**क्वचिदिति** ।

**तदपि अनित्यमिति** । अस्योदाहरणम्—'स्योनः' अत्र गुणात्पूर्वन्नित्यत्वादूठ्, गुणस्तूठि यणा बाधितत्वादनित्य इति ध्येयम् । अस्योणादित्वेनाव्युत्पन्नत्वे त्वस्याः फलम् 'अस्मै' इति बोध्यम् । अत्र 'इदम् ए' इत्यवस्थायाम् 'त्यदादीनामः' इत्यत्वे पररूपे च कृते 'अनाप्यकः' इत्यनादेशस्य प्रसङ्गे नित्यत्वात् स्मायादेशः, ततोऽनादेशस्य हलि लोपेन बाधादनित्यत्वम् । अन्यथा पूर्वपरिभाषयाऽनादेशस्यापि नित्यत्वमित्युभयोर्नित्ययोः परत्वात् 'अनाप्यकः' इत्यनादेश एव स्यादिति दिक् ।

अनयोर्वाचनिकत्वं लोकन्यायसिद्धमित्यत आह—**सप्तम इति** । **उपष्ट-**

भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितम् ॥ ४८ ॥

'लुटः प्रथमस्य' इति सूत्रे भाष्ये—

स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यो भवति ॥ ४९ ॥

इति पठ्यते ।

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च तत्रेच्छयान्तरत्तदुभयं वा तस्य बलवत्त्वे नियामकमुल्लेख्यम् । अत एव तत्र तत्र परत्वान्नित्यत्वाच्चेति भाष्ये उच्यते ।

---

स्भकमिति । ष्टभिधातौ 'द्वितीय औपदेशिकः टकारः, प्रथमः सकारस्तथा' इति वृत्तिकृता स्वीकारात् ष्टुत्वेनेदंरूपम्, न तु षत्वस्य प्राप्तिरिति बोध्यम् । बालिसुग्रीवयोर्युध्यमानयोरिति । लोके सुग्रीवापेक्षया बालिनः प्राबल्यं सुग्रीवपलायनादिना पुराणादिषु प्रसिद्धत्वेन बालिसुग्रीवयुद्धसमागमे बालिनाशं प्रति रामबाणव्यापारस्यैव कारणत्वस्य रामायणप्रसिद्धत्वेन च लोके व्यवहृतम्, तद्युक्तमेव । तथा कौरवपाण्डवानां युध्यमानानां तत्र दुर्योधनाद्यपेक्षयार्जुनादीनां प्राबल्यं भारतादिपुराणे प्रसिद्धत्वेन 'युद्धे शस्त्रग्रहणन्न करिष्ये' इति तत्र प्रसिद्धया वासुदेवप्रतिज्ञया दुर्योधनादीन् प्रति वासुदेवबाणव्यापारस्याकारणत्वस्य फुटतरं प्रतीत्यार्जुनादिबाणव्यापारस्य दुर्योधनादिनाशम्प्रति कारणत्वस्य भारतादिषु बहुशः प्रसिद्धत्वेन च लोके व्यवहृतम्, तद् युक्तमेव । तद्दृष्टान्तबलेन 'यस्य' इत्यादिन्यायद्वयसाधनं त्वप्रामाणिकमेव । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यस्ताधुनैव प्रतिपादितत्वादिति दिक् । न चैवमतिप्रसङ्गः सर्वेषां तदवस्थः, अत आह—सर्वञ्चेदमिति । 'कृताकृत' इत्यारभ्य यदुक्तमित्यर्थः ॥ ४८ ॥

'शब्दान्तरस्य' इति प्रागुक्तपरिभाषायाः प्रपञ्चभूतामन्यामपि परिभाषामाह—लुट इत्यादिना ।

स्वरभिन्नस्येति । स्वरेण भिन्नस्य शब्दान्तरस्येत्यर्थः । स्वरोऽपि शब्दान्तरत्वसम्पादक इति भावः ।

पठ्यते इति । तत्र भाष्ये च कर्तेत्यादौ 'तास्यनुदात्तेत्' इति स्वरापत्तिमुपपाद्य तस्य डादिभिर्विप्रतिषेधविचारे कृताकृतप्रसङ्गित्वेन द्वयोरपि नित्यत्वमुक्त्वा 'लक्षणान्तरेण' इति प्रागुक्तरीत्या निघातस्यानित्यत्वं प्रतिपाद्य डादीनामप्यनया परिभाषयाऽनित्यत्वात् पर[ तर ? ]त्वात् स्वरेणो[ अनु ]दात्तसिद्धिरुक्ता । एतदभावे 'लक्षणान्तरेण' इति परिभाषया निघातस्यानित्यत्वेन नित्यत्वाड् डादेशे टिलोपे तत्तत्स्वरे उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वानापत्तिरिति भावः ।

एतत्परिभाषोदाहरणम् 'दध्युदकम्' इति । अत्र दधि+उदकमिति स्थिते

**वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदम् 'विप्रतिषेध०' सूत्रे कैयटे।**

**'णौ चङि' इति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यादन्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासम्भव एवेति बोध्यम् ॥ ४९ ॥**

**नित्यादप्यन्तरङ्गं बलीयः, अन्तरङ्गे बहिरङ्गस्यासिद्धत्वात्।**

**तदाह—**

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

---

'नब्विषयस्य' इत्याद्युदात्तत्वेनेकारस्यानुदात्तस्य कृताकृतप्रसङ्गितया प्राप्तनित्यत्वेन 'इको यण्' इत्यनेनेको यणादेशः पूर्वं न भवति। किन्तु 'उदके केवले' इति पूर्वपदान्तोदात्तत्वे कृते स्वरेण भिन्नस्य तस्य स्थाने प्राप्तत्वाद् यणादेशोऽनित्य इति परत्वात् 'उदके केवले' इति पूर्वपदान्तोदात्तत्वे कृते प्रवर्तते। ततः 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वमुकारस्य सिध्यतीति केचित्। तत्तु 'पूर्वोत्तरनिमित्तकार्यात् प्रागन्तरङ्गोऽप्येकादेशो न' इत्यत्रैकादेशपदं सन्धिकार्यस्योपलक्षणमित्यर्थज्ञानेनोक्तमिति बोध्यम्।[1]

**उल्लेख्यमिति**। प्रत्येकं समुच्चित्य वेति भावः।

**एकदेशिन इति**। नित्यानित्ययोरतुल्यबलत्वात् कथम् 'विप्रतिषेध' शास्त्रप्रवृत्तिरिति भावः।

ननु नित्यान्तरङ्गत्वयुक्तस्थले 'अन्तरङ्गत्वात्' इत्येवोल्लेख्यम्, न तु 'नित्यत्वात्' इति तुल्यन्यायादित्यत आह—**णौ चङि इति**। अत एवेति शेषः। तस्य चेच्छयोभयोरन्यतरस्य वा नियामकत्वेनोल्लेख्यत्वादेवेत्यर्थः। विशेषान्तरमप्याह—**एवमिति**। परत्वस्य बलवत्त्वप्रयोजकस्थलवदित्यर्थः ॥ ४९ ॥

यत्तु सीरदेवादयः 'नित्यादप्यन्तरङ्गं बलीयः' इति परिभाषान्तरम्। यत्र नित्यस्य बहिरङ्गत्वम्, अनित्यस्य त्वन्तरङ्गत्वम्, तत्रास्य प्रवृत्तिः। तेन बहिरङ्गान्तरङ्गयोरन्तरङ्गं बलीय इति सिद्धम्।

'नाजानन्तर्ये' परिभाषाया [ चास्या न ] निषेध इति तद्दूषयितुमुपक्रमते—**नित्यादप्यन्तरङ्गमित्यादिना**। 'नित्यादपि' इत्यपिना परस्य संग्रहः। नित्यादन्तरङ्गस्योदारणम्—पदस्य विभज्यान्वाख्यानमिति पक्षे ग्रामणिनीत्यादौ कृताकृतप्रसङ्गित्वेन नित्यादपि नुमः पूर्वमन्तरङ्गत्वात् 'ह्रस्वो नपुंसके' [ १।४।४७ ] इति ह्रस्वसिद्धिः, अन्यथा नुम्यनजन्तत्वात् स न स्यात्। क्रमि-

---

१. स्वरयणोरुभयोरपि कृताकृतप्रसङ्गित्वेन नित्यत्वात् परत्वात् स्वरे ततो यणि रूपसिद्धेर्नैतत्परिभाषाफलमित्यपि केचन वदन्ति। एवञ्च निष्फलैषा।

**अन्तः=मध्ये, बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये, अन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद् बहिर्भूताङ्गकं बहिरङ्गम्। एतच्च 'खरवसानयोः' इति सूत्रे 'असिद्धवत्' सूत्रे च भाष्यकैयटयोः स्पष्टम्।**

---

कान्वाख्याने नित्यादन्तरङ्गस्योदाहरणमन्वेषणीयम्। उदाहरणम्---कश्च अश्च ईशश्चेति द्वन्द्वे केशा[1] इति। परादन्तरङ्गम्, यथा---'धियति, असुस्रुवत्' इत्यादि। अत्र परमपि लघूपधगुणं बाधित्वा पूर्वोपस्थितनिमित्तत्वेनान्तरङ्गत्वादियङुवङौ। ननु परापेक्षयान्तरङ्गस्य बलवत्त्वे किं मानमिति चेत्, शृणु, अन्तरङ्गशास्त्रदृष्टया परस्यासिद्धत्वेन युगपदसम्भवरूपविप्रतिषेधाभावाद् विप्रतिषेधशास्त्राप्रवृत्तिरिति। अत एव 'ओमाङोश्च' इत्याङ्ग्रहणं चरितार्थम्। एवं नित्यादन्तरङ्गस्य बलवत्त्वेऽपि। अत एव 'अचः परस्मिन्' ( १।१।५७ ) इति सूत्रे पट्व्या, मृद्व्येत्यादावचः परस्मिन्नित्यस्य खण्डनावसरे नित्यस्यापि परयणादेशस्यानयाऽसिद्धत्वात् पूर्वयणादेशस्साधितो भाष्ये। नित्याद्यपेक्षया लौकिकान्तरङ्गस्यैव बलवत्त्वं बोध्यम्।

वाक्यार्थबोधे पदार्थधियो हेतुत्वादादौ तमाह---**अन्तरित्यादि**। निरूपितमित्यन्तेन। परिभाषायामङ्गशब्द उपकारपरः। स च स्थानिनिमित्तसमुदायरूपः, धर्मिग्राहकमानात्। अत्रान्तःशब्दोऽन्तर्भूतार्थकः, न तु मध्यार्थः, समानाधिकरणानामेव बहुव्रीहेरनुशासनात्। अन्तरङ्गपदार्थस्य सापेक्षत्वद्योतनाय परिभाषाघटकान्तःपदार्थमाह–**मध्य इति**। तत्त्वस्य सापेक्षत्वात् कस्येति सम्बन्ध्याकाङ्क्षायां यथा 'शूरक्षत्रियको राजा' इत्यादावध्यवधिमतोः साजात्यादन्यदीयक्षत्रियत्वावच्छिन्नसमुदायापेक्षं शूरत्वं प्रतीयते, तथोपकारकपराङ्गशब्दसमभिव्याहारात् प्रत्यासत्त्या अन्यदीयोपकारकसमुदायमध्य इति लभ्यते। तच्चोपकारकम्। वस्तुतो बहिरङ्गत्वेनाभिमतशास्त्रसम्बन्ध्येव भवतीत्याशयेनाह---**बहिरङ्गशास्त्रेति**। इदं फलितार्थकथनम्, न तु तत्त्वेन निवेशः। अतो नान्योन्याश्रयः। मध्य इत्यन्तं शेषपूरणलभ्यम्। एवं बहिरङ्गपदेऽपि बोध्यम्।

एवञ्च तत्तत्प्रयोग उपस्थितमसिद्धत्वाश्रयत्वेनाभिमतं यच्छास्त्रं तच्छास्त्रसम्बन्ध्युपकारकसमुदायान्तर्भूतोपकारकसमुदायकत्वमन्तरङ्गत्वम्। तथा तत्प्रयोगे प्रसक्तासिद्धत्वे प्रयोजकत्वेनाभिमतं यच्छास्त्रं तच्छास्त्रसम्बन्ध्युपकारकसमुदायान्तर्भूतोपकारकसमुदायकत्वं बहिरङ्गत्वम्। नहि कार्यीतिन्यायस्तु न,

---

१. अत्र 'क+अ+ईश' इति स्थिते नित्यमपि गुणं बाधित्वाऽन्तरङ्गत्वेन पूर्वं सवर्णदीर्घे, ततो गुणे केशा इति रूपं सिध्यति। पूर्वं गुणे तु वृद्धया कैशा इत्यनिष्टरूपमापद्येत। केचित्तु, अत्रापवादत्वेन गुणं बाधित्वा सवर्णदीर्घसिद्धेर्नेदं समकालप्राप्तिकबहिरङ्गासिद्धत्वस्य फलमित्याहुः, तन्नत् सारम्; अकारद्वयनिमित्तकगुणं प्रति सवर्णदीर्घस्यापवादत्वेऽप्यकारेकारनिमित्तकगुणं प्रति तस्य तथात्वाभावात्।

**अत्र 'अङ्ग' शब्देन शब्दरूपं निमित्तमेव गृह्यते, शब्दशास्त्रे तस्यैव प्रधानत्वात्। तेनार्थनिमित्तकस्य न बहिरङ्गत्वम्। अत एव 'न तिसृचतसृ' इति निषेधश्चरितार्थः। अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षयान्तरङ्गत्वात् त्रयादेशे तदसंगतिः स्पष्टैव।**

**अत एव 'त्रयादेशे स्रन्तस्य प्रतिषेधः' इति 'स्थानिवत्' सूत्रस्थभाष्यवार्त्तिकादि सङ्गच्छते।**

---

अङ्गशब्दस्योपकारकमात्रपरत्वात्। नहि कार्यीति न्यायानाश्रयणस्य तत्परिभाषायामुपपादितत्वाच्च। अत एवास्य धर्मिग्राहकमानेन न विरोधः।

अन्तरङ्गत्वञ्चानेकविधम्--दैशिकपूर्वोपस्थितनिमित्तकत्वेन 'पट्व्या, मृद्व्या, असुस्रवत्' इत्यादौ, कालिकत्वेन खट्वोढेत्यादौ, नव्यमतेऽपरनिमित्तकत्वेनापि पचावेदमित्यादौ, घटकत्वेन स्योनादौ, अधिकसापेक्षत्वेन विश्वौहः, यथोढेत्यादौ सर्वेषां लक्ष्यानुरोधेन व्यवस्थेति नातिप्रसङ्गः।

अत्र कैयटमते तदीयोपकारकनिष्ठसंख्यावन्निमित्तान्यन्तर्भूतानि यस्य तदन्तरङ्गम्। यत्तु न तथा तद् बहिरङ्गम्। तथा च 'त्रेस्त्रयः' इति शास्त्रस्य त्रि आमित्येतद्द्वयापेक्षत्वेन त्रयादेशापेक्षया तिस्रादेशस्य त्रिशब्दस्त्रीत्वविभक्तिरेतत्त्रयापेक्षत्वेन बहिरङ्गत्वात् त्रयादेशेऽन्तरङ्गत्वाद् दीर्घे च 'न तिसृ०' ( ६।४।४ ) इति व्यर्थं स्यात्, अतोऽन्तरङ्गशब्देन प्रयोगीयशब्दस्वरूपमेव गृह्यते तदाह--**अत्राङ्गशब्देनेति। अन्तरङ्गत्वात् त्रयादेश** इति। त्रि आमिति स्थिते नुटः पूर्वं प्रतिपदोक्तत्वात् तिस्रोऽन्तरङ्गत्वात् कैयटोक्तरीत्या त्रयादेशे तथैवान्तरङ्गत्वात् तिस्रः पूर्वं नुटि, तथैवान्तरङ्गत्वात् 'नामि' ( ६।४।३ ) इति दीर्घे, ततस्तिस्रादेशे तस्यासिद्धत्वादादेशे दीर्घाप्राप्त्या स्थानिनिवृत्तत्वेन तद्बुध्यापि दीर्घाप्राप्त्या तद्वैयर्थ्यं स्पष्टमिति भावः।

एतेन लक्ष्ये लक्षणस्येति न्यायेनादेशे दीर्घाप्राप्त्या तद्वैयर्थ्यमित्यपास्तम्। 'कुरुते' इत्यत्र शेखरोक्तरीत्याऽऽदेशावयवस्थानिकादेशस्यान्यरववदत्रापि लक्ष्यभेदस्य सूपपादत्वात्। न च प्रतिपदोक्तत्वेन पूर्वं तिस्रादेशः, दीर्घस्यापि प्रत्यांशे प्रतिपदोक्तस्य तुल्यत्वात्।

वस्तुतश्चतसृग्रहणं ज्ञापकमिति वक्तुं युक्तम्, चतसृणामित्यत्र चतसुरसिद्धत्वादेव दीर्घाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। ननु दीर्घेऽजानन्तर्यसत्त्वेन 'नाजानन्तर्ये' परिभषया कैयटादिमते तिसृणामित्यत्रासिद्धत्वाभावात् 'न तिसृचतसृ' ( ६।४।४ ) इति निषेधस्य न वैयर्थ्यम्, अत आह-- **अत एव त्रयादेशे स्रन्तस्येति।**

ननु तिसृणामित्यत्र स्थानिवत्त्वात् प्राप्तस्य 'षट्त्रिचतुर्भ्यो हलादिः' ( ६।१।१७९ ) इति स्वरस्य निवृत्तिस्तत्फलमिति चेत्, न; त्रयादेशे कर्त्तव्य एव स्थानिवद्भावस्य स्रन्ते प्रतिषिद्धत्वेनोक्तस्थले स्वरस्येष्टत्वानुमानात्।

**एतेन 'गौधेरः, पचेत्' इत्यादावेयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वाद् बलिलोपो न स्यादिति परास्तम्। एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च।**

---

प्राचां मतेऽर्थसंज्ञाकृतस्याल्पापेक्षसामान्यापेक्षस्य चान्तरङ्गबहिरङ्गभावस्य लक्ष्यपर्यालोचनमन्तरापि सुज्ञानत्वम्। नव्यमतेऽपि पूर्वोपस्थितनिमित्तकस्यान्तर्भूतनिमित्तकस्य पदद्वयसम्बन्धिवर्णद्वयापेक्षस्य च लक्ष्यगतनिमित्तकसापेक्षत्वेन लक्ष्यमनुसृत्यान्तरङ्गत्वादिव्यवस्था। अपरनिमित्तकत्वेनान्तरङ्गत्वं तु शास्त्रकृतमेव, न तु लक्ष्यकृतम्। प्राचां मते लक्ष्यशास्त्रोभयगतान्तरङ्गस्य ग्रहणम्; नव्यमते लक्ष्यगतं पूर्वोक्तस्थलेऽपरनिमितत्वेनान्तरङ्गस्थले शास्त्रगतमेवेति बोध्यम्।

**एतेनेति।** अर्थकृतबहिरङ्गत्वस्यानाश्रयणप्रयोजकस्योक्तशब्दरूपनिमित्तस्यैवाश्रयणेनेत्यर्थः। एयादीनामित्यादिपदेन सीयुडागमपरिग्रहः। न च सीयुटोऽङ्गाधिकारे पाठाभावेनाङ्गसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वक्तुमशक्यमिति वाच्यम्, अङ्गसंज्ञेत्यत्रैकशेषेणाङ्गरूपसंज्ञाङ्गस्य संज्ञाङ्गसंज्ञेत्यर्थाश्रयणेन चाङ्गसम्बन्धिधातुसंज्ञाया विवक्षितत्वात्। **पचेरन्नित्यादौ।** इत्यादिपदेन भवेदित्यादिसंग्रहे त्वेयादीनामित्यादिपदेनेयादेशपरिग्रहः।

वस्तुतोऽङ्गत्वं प्रत्ययपरकत्वे सति तदादित्वम्। तथा चेयादेः प्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्गत्वं यलोपस्य तदादिप्रत्ययैतदुभयान्तर्भूतवर्णद्वयनिमित्तत्वेनान्तरङ्गत्वमस्तीति तस्मिन् कर्तव्ये एयादीनामसिद्धत्वाद् वलिलोपानापत्तिः। तस्मात् 'चेले क्नोपेः' इति निर्देशेन वलिलोपेऽन्तरङ्गपरिभाषाया अप्रवृत्तिर्वक्तव्या। एवञ्च चिन्त्यमिदं सर्वम्।

अथवा इत एवारुचेराह—**अपरनिमित्तकत्वेनेति।** तथा च तदादिप्रत्ययैतदुभयापेक्षत्वरूपं बहिरङ्गत्वमियादेशस्य परनिमित्तकत्वरूपं बहिरङ्गत्वं यलोपस्येति विनिगमनाविरहादन्तरङ्गपरिभाषाया अप्रवृत्तिरिति भावः।

न चापरनिमित्तकत्वरूपान्तरङ्गत्वाश्रयणे मानाभाव इति वाच्यम्, 'ऊकालः' इति निर्देशस्यैव प्रमाणत्वात्। अन्यथा समाहारद्वन्द्वे उ ऊ ऊ३ इति स्थिते परत्वाद् दीर्घे ततो ह्रस्वे 'ऊकालः' इति स्यात्। अपरनिमित्तकत्वेनेत्यस्यानैमित्तकत्वेनेत्यर्थः। अनैमित्तकं कार्यमप्रसिद्धम्, अतः परेत्युक्तम्। उपश्लेषातिरिक्तनिमित्तकमन्तरङ्गमिति यावत्। एवञ्च पञ्चम्यन्तसप्तम्यन्तान्यतरनिमित्तकं बहिरङ्गमिति फलितम्। अत एव 'यः, सः' इत्यादौ त्यदादीनामित्यतः प्रागन्तरङ्गत्वाद् हल्ङ्यादिलोपो नेत्युक्तं प्राक्। अत एव 'अजरांसि' इत्यत्र नुमजरसोर्विप्रतिषेधविधारपरभाष्यबलाद् 'विभक्त्यादेशा जरसापेक्षया पूर्वविप्रतिषेधेन' इति स्वग्रन्थेन न विरोधः। अन्यथाऽपरनिमित्तकत्वेनान्तरङ्गत्वादेव जरसः पूर्वं शीभावे तद्ग्रन्थासङ्गतिः स्पष्टैव। अत एव 'नामि'

ननु 'येन विधिस्तदन्तस्य' इति सूत्रे भाष्ये 'इको यणचि' इत्यादावपि तदन्तविधौ 'स्योनः' इत्यत्रान्तरङ्गत्वाद् यणो गुणबाधकत्वमिष्यते, तन्न सिध्येत्, ऊनशब्दमाश्रित्य यणादेशः, नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव स्यादित्युक्तम् ।

अत्र कैयटः । सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसङ्गे ऊठ् अपवादत्वाद् वलोपं बाधते, गुणं त्वन्तरङ्गत्वाद् बाधते । गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति । ऊठ् तु वकारान्तमङ्गमननुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यण्गुणो प्राप्नुत इति ।

---

इति सूत्रे आमोति न्यासे नित्यत्वाद् दीर्घं आपादितो भाष्ये सप्तम्यन्तमात्रनिमित्तकस्यैव तत्त्वे तु तदसंगतिः । तथा 'ऋतो भारद्वाजस्य' इति सूत्रेऽच इत्यत्रोपदेशानपकर्षे जहर्थेत्यत्र परत्वाद् गुणेऽनजन्तत्वान्निषेधो न प्राप्नोतीत्युक्तं भाष्ये पूर्वोक्तस्यैव तत्त्वे तदसङ्गति ।

केचित्तु, जातबहिरङ्गविषये एवापरनिमित्तकमन्तरङ्गम्, तेनापि नोक्तसूत्रद्वयभाष्यविरोध इत्याहुः । वस्तुतो जातबहिरङ्गस्थलेऽप्यपरनिमित्तकस्यान्तरङ्गत्वे प्रमाणाभावः । 'पचावेदम्' इत्यत्र पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन वहिरङ्गस्यैकपदसम्वन्धिवर्णनिमित्तक 'एत ऐ' इत्यन्तरङ्गे कर्तव्येऽसिद्धत्वेन 'गौधेरः' इत्यादौ वलिलोपविषये अन्तरङ्गपरिभाषाया अप्रवृत्तेरुक्तत्वेन च तादृशान्तरङ्गस्वीकारे फलाभावश्च । वस्तुत इतरेतरयोगद्वन्द्वेनोकाल इति निर्देशस्योपपत्त्या तत्कालप्राप्तिकस्थलेऽप्यपरनिमित्तत्वेनान्तरङ्गत्व एव मानाभावो वोध्यः । अत एव 'दुद्यूषति' इत्यादावुभयोर्द्विवचनात् परत्वादित्यन्तरङ्गत्वाद् यणि, ततो द्वित्व उक्तरूपसिद्धिः । अन्यथा द्विर्वचनस्यापरनिमित्तकत्वेनानन्तरङ्गत्वात् पूर्वं प्रवृत्तावुक्तरूपासिद्धिः स्पष्टैवेत्यलम् ।

ननु संज्ञानिमित्तकस्यापि बहिरङ्गत्वं भाष्यारूढमेवेति कथमत्र शब्दरूपस्यैवाङ्गशब्देन ग्रहणमित्यत आह—**नन्विति** । **तदन्तविधेरिति** । इदं तदादिविधेरप्युपलक्षणम् । **इत्युक्तमिति** । **गुणः स्यादिति** । ध्वनितमिति भावः । भाष्ये ह्यूनशब्दमाश्रित्य यणादेशः, नशब्दमाश्रित्य गुण इत्येवोक्तत्वात् । **ऊठपदत्वादिति** । ननु देवमाचष्टे द्युरित्यत्र टिलोपणिलोपयोः स्थानिवत्त्वेन वलोपाप्राप्त्योठि क्वौ विधिं प्रति निषेधात् तदप्राप्त्या तत्रोठश्चारितार्थ्यमिति चेत्, न; अनुनासिकनिमित्तस्योठोऽपवादत्वमिस्याभिप्रायात् । **अन्तरङ्ग इति** । गुणे निमित्तानि पञ्च, ऊठि निमित्तानि चत्वारीति भावः ।

**असङ्गतेरिति** । कैयटमते ऊठीव यण्यपीगन्ताजादिशब्दद्वयमात्रापेक्षत्वेन गुणशास्त्रीयसंख्यावन्निमित्तान्तर्भावाद् गुणापेक्षयान्तरङ्गत्वस्य सुवचत्वेन भाष्यासङ्गतिरिति भावः । न च गुणेऽपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्य वक्तुं शक्यत्वेनोभयोरन्तरङ्गयोः परत्वाद् गुणः स्यादिति कैयटेनैव

**एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्, न; तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासंगतेः। बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च। तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत्।**

**अत एव 'विप्रतिषेध०' सूत्रभाष्ये 'गुणाद्यणादेशोऽन्तरङ्गत्वात्' इत्यस्य 'स्योनः' इत्युदाहरणम्, न तु गुणादूडन्तरङ्गत्वादित्युक्तम्।**

**त्वद्रीत्या तदपि वक्तुमुचितम्। प्राथम्यात् तदेव वा वक्तुमुचितम्। मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भवात् तन्नोक्तम्।**

---

तदाशयस्य वर्णितत्वेन न भाष्यासङ्गतिरिति वाच्यम्, सिद्धान्तेऽपि त्वदुक्तान्तरङ्गत्वस्य गुणे सत्त्वेन यणोऽन्तरङ्गत्वेन गुणबाधकत्वप्रतिपादनपरभाष्यासङ्गतेः। तस्मादत्र लक्ष्यानुरोधात् तादृशान्तरङ्गत्वस्यानाश्रयणेन न तद्भाष्यासङ्गतिरिति भावः।

ननु यण उक्तरीत्या चतुष्काश्रयत्वेनान्तरङ्गत्वे गुणशास्त्रीयनिमित्तसमुदायानन्तर्भूतनिमित्तकत्वेन बहिरङ्गत्वमपि। एवं गुणस्योक्तबहिरङ्गत्वेऽपि तदीयनिमित्तसमुदायान्तर्भूतनशब्दनिमित्तकत्वेनान्तरङ्गत्वमपीति तुल्यमुभयोरिति परत्वाद् गुणः स्यादिति कैयटोक्तरीतिस्साध्वीत्यरुचेराह--**बहिरङ्गान्तरङ्गेति**। ननु तस्य धने एतस्य धनमेकदेशभूतमिति सर्वलोकसाधारण्येन व्यवहाराच्छते पञ्चाशदिति न्यायेन बह्वपेक्षत्वाल्पापेक्षत्वयोः संख्याद्वारकमन्तर्भूतत्वमन्तरङ्गत्वं सुन्दरमित्यत आह—**तथा सतीति**। **वदेदिति**। अल्पसंख्याकबहुसंख्याकयोर्निमित्तयोरन्तर्भूतत्वादेः संख्या द्वारा कल्पते साक्षादेव तथा निर्दिशेदिति भावः।

ननु तथोक्तौ तत्संग्रहेऽपि तदितरासंग्रहः, अत आह—**अत एवेति**। तथा तदर्थानङ्गीकारादेवेत्यर्थः। ननु गुणाद्यणादेशोऽन्तरङ्गत्वादित्यनेन गुणादूठोऽन्तरङ्गत्वमुक्तप्रायम्। ऊठप्रवृत्ति विना यणोऽप्राप्तेरत आह--**प्राथम्यादिति**। ननु गुणादूठ् अन्तरङ्ग इत्युक्तौ गुणाद्यण इत्यस्यासंग्रहापत्तिः। किञ्च, त्वदुक्तरीत्या नित्यत्वादूठः पूर्वं प्रवृत्तिसिद्धेर्नैतत् फलं वक्तुं युक्तमित्यत आह--**उचितमिति**। नित्यादन्तरङ्गयोर्मध्येऽन्तरङ्गस्याभ्यर्हितत्वादन्तरङ्गपरिभाषाफलोपन्यासप्रक्रमात् तथैव वक्तुमुचितमिति भावः।

ननु भाष्यस्यान्यथोपपत्त्या सम्भवात् कैयटोक्तमेवावश्यकमित्यतो भाष्यं स्वमतेन लापयति—**किञ्चेति**। चस्त्वर्थे किन्त्वित्यर्थः। **सिद्धान्त** इति। तदन्ततदादिविध्यभावपक्ष इत्यर्थः। **यणा बाधितत्वादिति**। ननु तदन्ततदादिविधिपक्षे यणो बहिरङ्गस्य, गुणेन बाधात् कथमेतदिति चेत्, न; तदन्तविध्यभावपक्षे एवैतस्य प्रवृत्तेः।

तदुक्तम्—**सिद्धान्त** इति। नन्वेवमपि तदन्तविधिमाश्रित्य प्रवृत्तप्रकृतभाष्यासङ्गतितादवस्थ्यमिति चेत्, न; यणो गुणबाधकत्वापत्त्युक्त्योठो नित्यत्वविघटन एव प्रकृतभाष्यतात्पर्यमित्याशयात्।

**किञ्च, सिद्धान्ते नित्यत्वाद् गुणात् पूर्वमूठ्, गुणस्तु ऊठि यणा बाधितत्वादनित्यः । ऊनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्ततयोपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् ।**

**यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद् गुणः प्राप्नोतीत्युक्तम्, तत्तु 'ऊन' शब्दमाश्रित्येत्यादिभाष्यासङ्गत्या चिन्त्यम् ।**

**वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम् । तत्सूत्रे भाष्य एव व्रश्चादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न ।**

---

गुणाद्यणादेशोऽन्तरङ्ग इत्यस्य तदन्तविधिपक्षे 'ऊनशब्दमाश्रित्य यणादेशः' इत्यस्य चायं भावः—सिव न इति स्थिते गुणोठोः प्राप्तौ परत्वाद् गुणे प्राप्ते नित्यत्वादूठ् । न च गुणोऽपि नित्यः, ऊठि कृते गुणयणोः प्राप्तौ तदन्तविध्यभावकल्पेऽन्तरङ्गत्वाद्यणः प्रवृत्त्या 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम्' इति परिभाषया गुणस्याप्यूठपेक्षया नित्यत्वात् परत्वादूठं बाधित्वा गुण एव स्यात् । तथा चोठो नित्यत्वोपपादन एव तत्तात्पर्यम्, न तु यणगुणयोरन्तरङ्गत्वे तात्पर्य्यमिति ।

**सप्तम्याद्यन्ततयेति** । वस्तुत ऊनशब्देति भाष्यस्यायं भावः–गुणशास्त्रीयषष्ठ्यन्तसमुदायः 'सि ऊ' इति, तत्रान्तर्भूतयण्शास्त्रीयषष्ठ्यन्तं निमित्तं सीति यथा यण्शास्त्रीयसप्तम्यन्तसमुदाय ऊन इति, तत्र गुणशास्त्रीयसप्तम्यन्तसमुदायो न इति अन्तर्भूतमिति, उभयोस्तदन्तविधिरिति । पक्षे समत्वेन परत्वाद् यणपेक्षया गुण एव स्यादिति । अत एव तदन्तविधिपक्षेऽन्तरङ्गबहिरङ्गे न प्रकल्प्येयातामिति भाष्योक्तं संगच्छते । अत एव अनुपदं वक्ष्यमाणकैयटश्च सङ्गच्छते । एतेन तूनशब्दमाश्रित्येत्यादिभाष्यासङ्गत्या चिन्त्यम् । तथोनशब्दमाश्रित्येत्यादिभाष्येण षष्ठ्यन्तातिरिक्तस्यैव परिभाषायां निमित्तस्य ग्रहणमङ्गपदेनेति च नव्यानां प्रमाद एव । षष्ठ्यन्तनिमित्तस्याङ्गपदेन ग्रहणादेव पयोट, पयोदेत्यादौ प्लुतस्य बहिरङ्गत्वं त्वदुक्तं सङ्गच्छते । अत एव धर्मिग्राहकमानेन विरोधो न, अन्यथा सप्तम्यन्तोपात्तयोर्ण्विशसोर्विश्वौह इत्यत्र परस्मिन् परस्यान्तर्भावाभावेनान्तरङ्गत्वाद्युपपादनासम्भवाद् भाष्यादिसकलग्रन्थासङ्गतिरिति दिक् ।

गौधेरादौ प्राचोक्तं समाधानं खण्डयति—**वलि लोप** इति **न प्रवर्तत** इति एतत् फलं तु 'क्नोपयति, यातिः, पचेत्' इत्यादि । अत्र णिङ्निमित्तकस्य पुकः किन्निमित्तस्यातो लोपस्य प्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्गस्येयादेशस्य चान्तर्भूतनिमित्तत्वेनान्तरङ्गे वलि लोपे नासिद्धत्वम् । एवमक्षद्यूरिति भाष्योदाहृते ऊठोऽसिद्धत्वाद्वलि लोपो न । 'नाजानन्तर्य' इत्यस्यान्तरङ्गे कृते इत्यर्थे मानाभावो गौरवं च । अत्र मानं तु 'चेले क्नोपेः' इति निर्देशः । 'स्वरदीर्घयलोपेषु' इत्यत्र यलोपग्रहणं च । तद्धि वाय्वोरित्यत्र वलि लोपे स्थानिवत्त्वाय वलि लोपेऽन्तरङ्गपरिभाषाप्रवृत्तौ तयैव सिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेति प्राचां भावः ।

**न च 'वृश्चति' इत्यादौ चारितार्थ्यम्, बहिरङ्गतया सम्प्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः।**

**यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात् 'पञ्च' इत्यत्र 'न षट्' इति निषेध इति। तच्चिन्त्यम्। नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्, तच्च**

---

**न युक्तमिति। वस्तुतस्तु** इदमेव युक्तम्, वलि लोपे उक्तधर्मिग्राहकमानेन जातबहिरङ्गासिद्धत्वाभावस्यैव कल्पनात् तत्सूत्रस्थैतद्भाष्यविरोधाभावात्।

किञ्च, 'लोपो व्योः' इत्यत्र वकारग्रहणस्य भाष्ये प्रत्याख्यानाद्यकारविषये न प्रवर्तते इति कल्पनाद्युक्तमानेन वा। न च सामर्थ्यादुपदेशावस्थायां लोपस्याप्रवृत्तावपि ततो धातुसंज्ञादिकार्ये सम्प्रसारणे वल्परत्वाभावेन लोपाप्राप्त्या चारितार्थ्येन सम्प्रसारणविषये 'वव्रश्च' इत्यादौ लोपो दुर्वार इति वाच्यम्, पदसंस्कारपक्षेऽपि वृश्चतीत्यत्र व्रश्चतीत्यवस्थायां विकरणात्प्रागेव वलोपप्राप्त्या तत्रापि चारितार्थ्याभावेन वकारोच्चारणसामर्थ्याद् व्रश्चधात्ववयवकारातिरिक्तस्य वकारस्य 'लोपो व्योः' इत्यत्र ग्रहणमिति कल्पनात् 'लोपो व्योः' इति सूत्रे भाष्ये न वा एतत् प्रयोजनम्, बहिरङ्गाः सम्प्रसारणादयः, अन्तरङ्गो लोपः 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यत्र वलि लोपकाले सम्प्रसारणस्याप्रप्तिरित्येतावतैव असिद्धं बहिरङ्गमन्तरङ्गे इत्युक्तम्, न तु असिद्धपरिभाषायाः कश्चिद् व्यापार इति दिक्।

'नलोपस्सुप्स्वर' इति सूत्रस्थकैयटोक्तिं खण्डयति—**यत्त्विति। षट्संज्ञायामसिद्धत्वादिति।** यथोद्देशे कैयटादिमते षट्त्वस्यालवृत्तित्वेन कार्यकाले विकृतावयवनिबन्धनकार्ये एकदेशन्यायाप्रवृत्त्या नान्तत्वासम्भवेन षट्त्वाप्राप्त्याऽनयाऽसिद्धत्वं तैः स्वीकृतम्। षट्संज्ञायास्संख्यासापेक्षत्वेऽपि पदप्रातिपदिकेति संज्ञाद्वयसापेक्षत्वेन नलोपस्य बहिरङ्गत्वमिति भावः। न चैवं पञ्चेति 'नलोपस्सुप्' इति संज्ञाग्रहणस्य फलं भाष्यकृता न दत्तम्, तस्य कथं सिद्धिरत आह—**पञ्चेति। व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमिति।** इदञ्च कार्यकालपक्षे, यथोद्देशे तु लुगर्थं ङीब्निषेधप्रवृत्त्यर्थं च जायमानमादायैवानुमानिकस्थानिवत्त्वेन सिद्धम्। यद्यपि प्रियपञ्चा द्रौपदीत्यादौ 'अन उपधा' इति ङीपः 'डाबुभ्याम्' इति डापश्च निषेधेन तथा व्याख्यानं कृतार्थम्, तथापि 'अजाद्यतष्टाप्' 'ऋचि पादोऽन्यतरस्याम्' 'ङीप्' अत्र पाद इत्यनुवर्तते ऋचीति निवृत्तम्। ततः 'ऋन्नेभ्यः' इति न्यासेन सिद्धे ङीप्प्रकरणमध्ये पुनष्टाप्करणेन टापो निषेधबोधनेन भूतपूर्वषट्त्वमादाय तत्प्रवृत्तः सूपपादत्वात्।

किञ्च, यथोद्देशपक्षस्यैव पञ्चेत्यत्राश्रयणात् स्थानिवद्भावेन ङीबादिनिषेधप्रवृत्त्यर्थं पूर्वं जातषट्त्वमादायापि निषेधः सुवचः। षट्त्वस्य स्वमतेऽनल्वृत्तिधर्मत्वात् षट्संज्ञायां यथोद्देशत्वादेव षट्संज्ञायां नलोपस्यासिद्धत्वस्य न फलमित्यादिना तत्सूत्रस्थभाष्योक्तं संगच्छते। ननु दत्तदण्डिनावित्यत्र नियमेनोभयोरपि पूर्वनिपातसिद्धये 'न लोपस्सुप्' इत्यत्र संज्ञाग्रहणस्यावश्यकतया तेनैव

**न, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। 'पञ्च' इत्यत्र निषेधस्तु स्त्रियां यत् प्राप्नोति, तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम्।**

**अत एव कृतितुग्ग्रहणं चरितार्थम्।**

**'वृत्रहभ्याम्' इत्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात्। भ्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्तकत्वाभावात्।**

---

तत्सिद्धेरेवमुक्तिर्मुधैवेति चेत्, न; नलोपः पूर्वनिपाते सति, नलोपे धित्वे च सति पूर्वनिपात इत्यन्योन्याश्रयस्य वारणद्वारा द्युकावित्यादौ दिव्शब्दस्य पूर्वनिपातसिद्धये यस्य पूर्वपदे धित्वं भावि तत्पूर्वं प्रयोक्तव्यमित्यर्थज्ञापनार्थमेव संज्ञाग्रहणस्य कृतार्थत्वात्। न च द्युकावित्येतावन्मात्रार्थत्वे 'द्वन्द्वे घि' इत्यनन्तरं दिव इति सूत्रयित्वा संज्ञाग्रहणं न कर्तव्यम्, शब्दस्वरूपाध्याहारेण तदन्तविधिना परमाद्युकावित्यादिसिद्धेरिति वाच्यम् 'ग्रामणिपुत्रौ' इत्यत्र ह्रस्वविषये पूर्वनिपातसिद्धये संज्ञाग्रहणेनोक्तलक्षणाया आवश्यकत्वात्। **किञ्च**, गुरुशब्दस्य छत्रशब्देन द्वन्द्वे पूर्वनिपातानन्तरं तुक्प्रवृत्त्या धित्वासम्भवादनियमस्सिध्यति। उक्तार्थानाश्रयणे तु नियमापत्तिरिति दिक्।

ननु संज्ञानिमित्तरूपबह्वपेक्षत्वेन बहिरङ्गत्वं न ब्रूमः, किन्तु पदसंज्ञाद्वारा भ्याम्निमित्तकत्वेनेत्यत आह—**अत एव कृति तुगिति**। परम्परया तत्त्वमादाय तत्त्वानाश्रयणादेवेत्यर्थः। संज्ञाकृतत्त्वानाश्रयणादेवेति तु नार्थः, तत्कृताश्रयणे तु तुग्विधौ ह्रस्व-इत्-कृदिति संज्ञात्रयाश्रयणेन नलोपे पदप्रातिपदिकेति संज्ञाद्वयाश्रयणेन तुक एव बहिरङ्गत्वेन वैयर्थ्याभावादसङ्गत्यापत्तेः। **चरितार्थमिति**[1]। न च 'वृत्रहधनम्' इत्यत्रापरनिमित्तकत्वेन पदत्वस्यान्तरङ्गत्वं शङ्क्यम्, बहिर्भूतसुब्निमित्तकपदत्वापेक्षनलोपापेक्षयान्तर्भूतक्विब्निमित्तकत्वेन तुकोऽन्तरङ्गत्वाहानेः।

**वृत्रहभ्यामिति**। ननु त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्त्या कथमेतदिति चेत्, न; 'नलोपस्सुप्' इति सूत्रे कृति तुग्ग्रहणाभावेन नलोपस्य तुक्यसिद्धत्वाभावेन त्रिपाद्यामप्रवृत्तिबीजस्यासिद्धत्वस्याभावात्। **परम्परयेति**। बहिरङ्गत्वेनाभिमतशास्त्रघटकसंज्ञाविधायकशास्त्रान्तरोपात्तसप्तम्यन्तादिद्वारकं बहिरङ्गत्वं नेति भावः। ननु सन्निपातपरिभाषया तत् प्रत्याख्यातमत आह—**ध्वनितमिति**। त्वद्रीत्यानया तुकोऽप्राप्त्या तत्प्राप्तिमभ्युपगम्य सन्निपातपरिभाषया वारणपरभाष्येण ध्वनित—मित्यर्थः।

एवं पदार्थमुक्त्वा वाक्यार्थमाह—**अन्तरङ्गे इति**। **जातमिति**। एतस्यासिद्धत्वे मानं तु 'वाह ऊठ्' इति 'ऊठ्' ग्रहणमित्यनुपदं स्फुटीभविष्यति।

---

१. ख. 'इति केचित्। वस्तुतः संज्ञाकृतनाश्रयणादेवेत्यर्थ एव युक्तः। प्रतिपदिकसंज्ञाया बहुपदार्थापेक्षेण लोपापेक्षया।—इत्यधिकः पाठः।

**परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम्। ध्वनितं चेदम् 'नलोपः सुप्०' इति सूत्रे भाष्य इति, तत्रैव भाष्यप्रदीपोद्योते निरूपितम्।**

**अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः।**

---

**तत्कालप्राप्तिकमिति।** अत्रार्थे मानम् आङ्ग्रहणमित्यपि। अत एव **'ओमाङोश्च'** **इत्याङ्ग्रहणञ्चरितार्थमित्यादिना** मूल एव स्फुटीभविष्यति। जातिसिद्धत्वे फलन्तु अम्बाऽत्रेत्यत्र 'अम्बार्थनद्योः' ( ७।३।१०७ ) इति ह्रस्वे ततस्सवर्णदीर्घे काण्डे इतिवल्लक्ष्यभेदात् पुनस्तेन ह्रस्वो न, अनया पदद्वयसम्बन्धित्वेन सवर्ण-दीर्घस्य बहिरङ्गत्वेनासिद्धत्वात् तल्लक्ष्यत्वसत्त्वात्। एवं 'जागृढः' इत्यत्र तस्-निमित्तसम्प्रसारणस्यासिद्धत्वादन्तरङ्गलक्षणरुगादिर्नेति बोध्यम्।

**यत्तु,** अबीभवदित्यत्रापि फलं बोध्यम्। अत्र 'णौ चङि' ( ७।४।१ ) इति ह्रस्वे तस्य बहिरङ्गत्वेनासिद्धत्वात् 'अत उपधायाः' (७।२।११६) इति वृद्धिर्न। एवम् 'अरीरधत्' इति जातबहिरङ्गस्योदाहरणमुक्तम्। अत्र हि राधधातोर्णिचि 'णौ चङि' इति उपधाह्रस्वे कृते ततो द्वित्वे उत्तरखण्डस्य 'अत उपधायाः' इति णिन्निमित्तके वृद्धौ कर्तव्यायां चङ्परणिन्निमित्तकस्य 'णौ चङि' इति ह्रस्वस्य बहिरङ्गस्यासिद्धत्वार्थमेषा कर्तव्येति। तत्, न; अत उपधेत्यत्र तपरकरणस्य प्रयोजनाभावेन राध इत्यवस्थायामेव प्रथमं वृद्धौ 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनर्वृद्ध्यप्रवृत्तेः। न च णिचि अजादेशो नेति निषेधाद्ध्रस्वात् प्राक् तपर-करणाभावेऽपि दीर्घाप्रवृत्त्या ह्रस्वे ततो दीर्घवारणायेयमवश्यं वक्तव्येति वाच्यम्, एतद्ग्रन्थकृन्मते णिच्यादेशो नेत्यस्योवर्णादेशमात्रविषयत्वाद् दीक्षिता-दिमते त्विदमपि तदुदाहरणं सम्यगेव।

**केचित्तु** 'अवीविदत्' इत्युदाहरणं वदन्ति। अत्र ह्रस्वस्य 'पर्जन्यवत्' इति न्यायेन ह्रस्वे उत्तरखण्डे गुणापत्तिरिति। तदपि न, नव्यनये तत्रापि प्रथमं लघूपधगुणे ततो ह्रस्वे लक्ष्यलक्षणस्येति न्यायेन पुनर्गुणाप्राप्तेः। **केचित्तु,** 'असूषुदत्' इत्यत्र सूद्धातोः णिचि 'णौ चङि' ( ७।४।१ ) इति ह्रस्वे कृते गुणबाधनार्थमित्युक्तवन्तः। तदपि न, क्नोः कित्त्वसामर्थ्याल्लघूपधाद्विहित इत्यर्थस्वीकारेण दोषाभावात्। न च 'ओषति' इत्यत्र उष् तीत्यवस्थायां तस्य गुरुत्वेन तस्माच्छषो विहितत्वाभावाद् गुणो न स्यादिति वाच्यम्, क्नोः कित्त्वेन कदाचिद्यो लघुः, तदुपधाद्विहित इत्यर्थेनादोषात्। 'पचावेदम्' इति तु न जाता-सिद्धत्वस्य फलम्। 'एत ऐ' ( ३।४।९३ ) इत्यत्र 'इत ए' इति न्यासात्। 'भवानि' इत्यत्र त्वत्र न्यासे न दोषः 'मेर्निः' ( ३।४।८९ ) इत्यस्य तक्रन्यायेनै-तदपवादत्वात्। याहि याहीति यातु इत्यत्रापि न दोषः, पुरुषत्वानतिदेशस्य कौमुद्यामुक्तत्वेनोत्तमत्वाभावात्।

**यद्वा,** यथाश्रुतन्यासेऽपि नोक्तदोषः, लक्षणप्रतिपदोक्तपरिभाषा नव्यमते वर्णग्रहणेऽपि प्रवृत्त्याऽस्य लाक्षणिकत्वात्।

**व्रश्चादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् ।**

**एतेन 'अन्तरङ्गं बहिरङ्गाद् बलीयः' इति परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य 'विप्रतिषेध' सूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च ।**

**अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् ।**

---

वस्तुतः 'असूषदत्' इत्युदाहरणमेव, क्नोः कित्त्वेन कदाचिदेव लघुः, तदुपधस्य गुण इत्यर्थेन कित्त्वस्य चारितार्थ्यात् । लघूपधाद्विहित इत्यर्थे मानाभावेन तत्र गुणापत्तेः । नव्यमते त्रिपाद्यामेव तत्परिभाषाया अप्रवृत्त्या न कार्तिरित्यादीनि फलानि जातिसिद्धत्वस्य । कुरुतादित्यपि जातासिद्धत्वे फलम् । अत्र सार्वधातुकनिमित्तकस्योकारस्यान्तर्भूतोकाराधधातुकनिमित्तके 'पुगन्त' इति गुणेऽन्तरङ्गे कर्तव्येऽसिद्धत्वान्न गुण इति ध्येयम् ।

यत्तु, भाष्ये उदिति तपरकरणान्न गुण इत्युक्तम्, तत्तु शब्दाधिक्यादर्थाधिक्यस्य तैरेवोपहसितत्वादेश्युक्तिरिति प्रतिभाति । अतिष्ठिपदित्यपि तस्योदाहरणम् । तथाहि—अत्र णिनिमित्तके गुणे कर्तव्ये चङ्परणिनिर्मित्तकस्य बहिरङ्गस्य 'तिष्ठतेरित्' ( ७।४।५ ) इतीत्वस्यासिद्धत्वाद् गुणाभावस्य सिद्धिः । तिष्ठतेरिदिति तपरकरणमुक्तरीत्याऽत उदितिवदुच्चाराणार्थमेव । एवमाटिटदित्यत्रापि णिन्निमित्तके गुणे कर्तव्ये बहिरङ्गस्य चङ्निमित्तकद्वित्वस्यासिद्धत्वात् 'पुगन्त' इति गुणाभावः । एवम्—'औजिढदित्यत्रापि चङ्निमित्तद्वित्वस्यासिद्धत्वात् तल्लक्ष्यत्वेन लक्ष्ये लक्षणस्येति न्यायेन 'ढ्रलोपे' इति दीर्घस्याभावः । न च ढ्रलोपेऽजानन्तर्यसत्त्वेन 'नाजानन्तर्य' इति निषेधात् कथं बहिरङ्गद्वित्वस्यासिद्धत्वमिति वाच्यम्, नव्यनये तस्या असत्त्वेन, प्राचां नये 'ओमाङोश्च' ( ६।१।९५ ) इत्याङ्ग्रहणेन 'नाजानन्तर्य' इत्यस्यानित्यत्वेनादोषादित्यलं बहु विस्तरेण ।

तत्कालप्राप्तिकान्तरङ्गोदाहरणम्—रियति, पियति, असुस्रुवत् अयजे इन्द्रम्, सर्वे इमे ग्रामे, इह पदस्य विभज्यान्वाख्याने ग्रामणिनी कुले इत्यादीनि स्फुटानि इति नेह तन्यते ।

प्रकृतमनुसरामः—ननु तत्कालप्राप्तिकमितिवत् प्राप्स्यमानमित्यपि निवेशनीयम्, वलि लोपसूत्रभाष्ये अनया परिभाषया प्राप्स्यमानसम्प्रसारणस्यासिद्धत्वस्योक्तेरित्यत आह—**व्रश्चादिष्विति । समानकालत्वमेवेति ।**

वस्तुत इदं चिन्त्यम्, पदसंस्कारेऽपि व्रश्चतीत्यवस्थायां विकरणात् प्रागेव वलिलोपप्राप्त्या तत्कालिकप्राप्त्यभावात् । भाष्ये संम्प्रसारणस्यासिद्धत्वोक्तिस्तु वलिलोपप्राप्तिकाले सम्प्रसारणप्रापकशास्त्रस्याभावात् तस्याप्राप्तिरूपैवेति तत्त्वम् ।

एतेन=अस्याः परिभाषाया उक्तार्थकरणेन ।

ननु वक्ष्यमाणज्ञापकसाजात्याज्जातस्यैव बहिरङ्गस्यानेनासिद्धत्वविधानं

**इयं च त्रिपाद्यां न प्रवर्तते, त्रिपाद्या असिद्धत्वात्। अस्याञ्च 'वाह ऊठ्' सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायोस्था। अन्यथा सम्प्रसारणमात्र-विधानेन लघूपधगुणे 'वृद्धिरेचि' इति वृद्धौ 'विश्वौहः' इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यात्।**

---

युवतमत आह-**एनामिति**। एवञ्च विप्रतिषेधसूत्रस्थ बहिरङ्गान्तरङ्गयोरन्तरङ्ग वलीयः' इति परिभाषाखण्डनपरभाष्यप्रामाण्येन तत्कालप्राप्तिकमित्यंशोऽपि निवेशनीय एव। **प्रत्याख्यानाच्चेति**। परिभाषाद्वयस्यापि प्रयोजनान्युपन्यस्योभे तर्हि कर्तव्ये नेत्याह, अनयैव सिद्धं भवतीहापि स्योनः स्योनेति भाष्येणा-तत्प्रत्याख्यानस्य कण्ठत एव कृतत्वादिति भावः।

**अस्या लिङ्गमिति**। ननु बहिरङ्गशास्त्रत्वमेव कुतो न लिङ्गमिति चेत्, न; 'आगच्छ पयोट, पयोद' इत्यादावुत्वदृष्टया प्लुतस्यासिद्धत्वस्येष्टत्वात्। तच्च बहिरङ्गशास्त्रत्वस्य लिङ्गत्वेऽसम्भवि बहिरङ्गस्य प्लुतस्य त्रिपादी-स्थतया तस्य परिभाषादृष्टया सिद्धत्वात्।

**असिद्धत्वादिति**। सम्प्रसारणस्य बहिरङ्गत्वं तु भत्वस्य पदद्वये पर्य्या-प्त्या पदद्वयाश्रितत्वेन बोध्यम्।

ननूक्तबहिरङ्गत्वस्य सम्प्रसारणे सत्त्वेऽपि सार्वधातुकार्धधातुकनिमित्तकत्वेन परनिमित्तकत्वरूपबहिरङ्गत्वं गुणस्यापीत्युभयोः समत्वेन ज्ञापितेऽपि चारिता-र्थ्याभाव इति चेत्, न; अङ्गपदस्य परतो विधानावध्यादिमति शक्तिस्वीकारे-णोभयोः परनिमित्तत्वाविशेषात्। अत एव णिजन्ताद् वाहेः विचि, ऊडभाव-प्रतिपादकः, लोके तु णिजन्ताद्विजितिमूलप्रतीकस्थशब्देन्दुशेखरस्सङ्गच्छते।

**लघूपधगुणो न स्यादिति**। न च सम्प्रसारणस्यासिद्धत्वेऽपि 'सम्प्रसा-रणाच्च' (६।१।१०८) इति पूर्वरूपस्य बहिरङ्गत्वाभावेनासिद्धत्वाभावाद् गुणेनेष्टसिद्धिरिति वाच्यम्, सम्प्रसारणस्य यो यो धर्मः, तावद्धर्मस्य पूर्वरूपेऽपि स्वीकारात्। तेन सम्प्रसारणस्येव पूर्वरूपस्यापि बहिरङ्गत्वं सिध्यति। अत एव 'जागृढ' इत्यादौ तन्निमित्तकसम्प्रसारणस्यासिद्धत्ववत् पूर्वरूपस्याप्य-सिद्धत्वाद् रुगादिर्न। न च 'अचः परस्मिन्' (१।१।५७) इति 'सम्प्रसारणाच्च' (६।१।१०८) इति पूर्वरूपस्य स्थानिवद्भावादृदुपधत्वाभावान्नेदं फलमिति वाच्यम् अभ्यासस्य कार्यं तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानि-वत्त्वं नेति वक्ष्यमाणेन स्थानिवद्भावनिषेधात्। ज्ञापकञ्चात्र 'वसुसम्प्रसारणम-ज्विधौ सिद्धं वक्तव्यम् इति 'असिद्धवदत्राभात्' (६।४।२२) इति सूत्रस्थं वार्त्तिकम्। अन्यथा सम्प्रसारणस्याभीयत्वेन समानाश्रयत्वेन चासिद्धत्वेऽपि पूर्वरूपस्यानाभीयत्वेन समानाश्रयत्वाभावेनासिद्धत्वाभावाल्लोपसिद्धयोक्तवा-र्त्तिकासङ्गतिः स्पष्टैव। अत एव 'क्ङिति च (१।१।५) इति सूत्रे भाष्ये तन्निमि-त्तग्रहणाभावे 'औयत'इत्यत्र वृद्धिनिषेधमाशङ्क्य नैतदस्ति प्रयोजनं बहिरङ्गा

न च 'पुगन्त०' इति सूत्रे निमित्तमिको विशेषणम्, अत एव 'भिनत्ति' इत्यादौ न गुणः । एवं च 'नाजानन्तर्ये' इति निषेधात् कथं परिभाषाप्रवृत्तिरिति वाच्यम् । प्रत्ययस्याङ्गांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात्, 'पुगन्त' इत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इति 'इको गुणवृद्धी' इति सूत्रभाष्यसम्मतेऽर्थे 'भिनत्ति' इत्यादावदोषाच्च ।

अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्न

---

वृद्धिः, अन्तरङ्गो गुणवृद्धिप्रतिषेध इत्युक्तम् । तत्र बहिरङ्गसम्प्रसारणम्, तदाश्रयत्वाद् वृद्धेर्बहिरङ्गत्वमित्यर्थकं कैयटोपाध्यायैरुक्तम् । अत एव च 'हलः' ( ६।४।२ ) इति सूत्रं चरितार्थम् । अन्यथा हल इत्यादौ 'सम्प्रसारणाच्च' इति पूर्वरूपनिष्पन्नौकारस्य सम्प्रसारणत्वाभावात्तद्वैयर्थ्यं स्पष्टमेव । मम तु सम्प्रसारणस्य यो धर्मस्तद्धर्मस्य सर्वस्यापि तत्स्थानिकपूर्वरूपेऽपि स्वीकारात् तत्सार्थक्यं स्पष्टमेव । अत एव यून इत्यादौ यु उ अन् इत्यवस्थायामङ्गत्वात् 'अल्लोपो नः' ( ६।४।१३४ ) इत्यल्लोपस्य 'सम्प्रसारणाच्च' इति पूर्वरूपात् पूर्वं न । यद्याङ्गत्वात् पूर्वमल्लोप उक्तस्थले स्यात्, तदा तस्य 'अचः परस्मिन्' इति स्थानिवद्भावात् 'इको यणचि' ( ६।१।७७ ) इति स्यात् । एतेन वार्ण-परिभाषाया अनित्यत्वाद्यून इत्यादौ 'अल्लोपो नः' इत्यल्लोपो नेति नव्योक्तं निरस्तम् । अत एव 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति दीक्षितादीना-मुक्तिस्संगच्छत इति दिक् ।

ननु कथमूठ्ग्रहणं ज्ञापकम्, 'प्रष्ठौहः' इत्यादावडिति स्वरार्थं तस्या-वश्यकत्वादिति चेत्, न; स्वरविधायके ऊहेरपि पाठचत्वात् 'वाह ऊठ' ( ६।४। १३२ ) इति सूत्रस्थोढ्ग्रहणकरणापेक्षया स्वरविधायके ऊहिपाठेनैकमात्राला-घवात् । न च वहेः क्विप्यपि स्वरविधौ तथा पाठे स्वरापत्तिरिति वाच्यम्, अन्तरङ्गपरिभाषाज्ञपकपरभाष्यप्रामाण्येनोक्तस्थले क्विपोऽभावानुमानात् ।

अत्र केचिद्–ह्रस्व उड्विधेयः स्वरविधायके ठिदिति पाठचम्, तस्मा-दूड्विधानमनन्यार्थमिति भाष्योक्तं ज्ञापकं सम्यगेवेत्याहुः, तत्, न; ठिदिति न्यासे पदगौरवेण ह्रस्वोठ्विधानस्यायुक्तत्वात् ।

ननु दीक्षिताद्युक्तार्थे ऊठग्रहणस्य स्वांशे चारितार्थ्यं दुर्वचम् 'इको गुण-वृद्धी' ( १।१।३ ) इति सूत्रभाष्योक्तार्थे ऊठग्रहणस्य स्वांशे चारितार्थ्यमिति ध्वनयन् दीक्षितादिमतं दूषयितुं शङ्कते––न चेति ।

**अङ्गांशे उत्थिताकाङ्क्षेति** । अङ्गशब्दस्य प्रत्यये परतो विधानावध्यादौ शक्ति तत्र प्रत्ययस्योपस्थितत्वादित्यर्थं इति कथञ्चिद् योज्यम् । यथाश्रुत तु न युक्तम्, अङ्गपदार्थस्य पित्रादिपदार्थवत्, सनिरूपकत्वाभावात् संकेतसम्बन्धे-नाङ्गवत्त्वस्यैवाङ्गपदार्थत्वाच्च । **पुगन्तेति** । ननु सम्प्रसारणमात्रविधाने प्रौहः,

स्त एव। ज्यूहेत्यादि तु 'ऊहतेः' क्विपि बोध्यम्। धातूनामनेकार्थत्वान्नार्थासङ्गतिः। 'प्रौहः' इत्याद्यसाध्वेव, वृद्धेरप्राप्तेः। अस्योहस्यानर्थक्यान्न 'प्रादूहोढ' इत्यस्यापि प्रवृत्तिः।

**न च कार्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्, पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात् तया तस्यासिद्धत्वप्रतिपादनासम्भवात्।**

---

दध्यूह इत्यादि न सिध्यति। आद्ये पररूपप्रसङ्गः, अन्त्ये ऊकारस्याश्रवणं प्राप्नोतीति कथमूठ्ग्रहणं ज्ञापकमत आह--**अकारान्तोपेति।**

नन्वेवं तत्पराङ्गावयवत्वस्येको गुण इत्यर्थे भिनत्तीत्यादौ दोष एवेति तदन्यथानुपपत्त्या तदर्थाङ्गीकार इति स्वांशे चारितार्थ्याभावस्तदवस्थ एवात आह--**वहेर्वाहेर्वेति।** वेह्व वाह्व इत्यत्र दन्तोष्ठ्यादीत्यपर इत्युक्तत्वात् तस्य वाहेर्ग्रहणमत्र बोध्यम्। णिजन्तस्य वहेस्तु स्थानिवद्भावात् सम्प्रसारणस्य प्राप्तिरेव नेति 'वाह ऊठ' ( ६।४।१३२ ) इति सूत्रे शब्देन्दुशेखर एव स्पष्टम्। एतेन वस्तुतः 'विभाषा पूर्वाह्णे' ( ४।३।२४ ) इति सूत्रे प्रष्ठौह आगतं प्रष्टवाड्रूप्यमिति भाष्ये लौकिकविग्रहवाक्ये प्रष्ठौह इति प्रयोगादन्यत्रापि ण्विरिति 'वाह ऊठ्' सूत्रस्थोक्तिर्नव्यानां परास्ता, बाह्यप्रयत्ने इत्यस्मात् क्विपि उक्तप्रयोगोपपत्तेरित्यन्यत्र विस्तरः।

ननु 'ङमो ह्रस्वादचि' ( ८।३।३२ ) इत्यादिप्रदेशे तस्मादित्यादीनामुपस्थित्यैकवाक्यतया ततः पूर्वं सुड्विशेषेण प्रसक्तस्य कार्यस्य विषयविशेषे व्यवस्थापनवत् कार्तिरित्यादौ 'रदाभ्याम्' ( ८।२।४२ ) इति नत्वे कर्तव्ये तत्रोपस्थितयान्तरङ्गपरिभाषया तद्धितनिमित्ताया वृद्धेरसिद्धत्वविधानेन रेफात् परत्वाभावान्नकारादेशस्योक्तस्थलेऽप्रवृत्तिसम्पादनेन विषयविशेषपरत्वेन संकोचकल्पनं युक्तम्, न तु सामान्येन। न च 'पूर्वत्रासिद्धम्' ( ८।२।१ ) इत्यनेनान्तरङ्गपरिभाषां प्रति 'रदाभ्याम्'इत्यस्यासिद्धत्वादन्तरङ्गशास्त्रत्वरूपलिङ्गज्ञानाभावात् कथं तत्रोपस्थितिरिति वाच्यम्, कार्यकालपक्षे प्राचीनमते सर्वासां परिभाषाणां विधिदेशस्थत्वाङ्गीकारेणादोषात्।

नव्यमतेऽपि विधिभिः 'तस्मिन्' ( १।१।६६ ) इत्यादिपरिभाषाणामाक्षेपेण पदैकवाक्यतया विषयविशेषे कार्यव्यवस्थापत्वेन लक्ष्यसंस्कारवत् 'रदाभ्याम्' इत्यादीनां वाक्यार्थबोधकाले तत्र सन्निहितया अन्तरङ्गपरिभाषया वाक्यैकवाक्यतया वृद्धेरसिद्धत्वबोधनद्वारा विषयविशेषे कार्यव्यवस्थापकत्वे बाधकाभावादिति शङ्कते--**न चेति। पूर्वं प्रति परस्यासिद्धत्वादिति।** न च पूर्वत्र कर्तव्ये परस्यासिद्धत्वेऽपि पूर्वस्मिन् कृते परस्यासिद्धत्वे मानाभावादिति स्वयमेव 'अष्टानाम्' इति प्रतीके उक्तत्वेन कथमेतदिति वाच्यम्, 'न भकुर्छुराम्' ( ८।२।७९ ) इत्यत्र 'कुर्' ग्रहणस्य कृतेऽपि पूर्वस्मिन् परस्यासिद्धत्वे मानत्वात्।

अन्यथा कुर्यादित्यत्र 'अत उत्' ( ६।४।११० ) इति तपरकरणेन गुणाभाववत् 'न भकुर्छुराम' इति दीर्घस्यापि वारणसम्भवात् कुर्ग्रहणस्य वैयर्थ्यं स्पष्टमेव। मम तु कृतेऽप्यसिद्धत्वेन 'अत उत्' इत्युत्वदृष्टचा दीर्घस्यासिद्धत्वेन तपरकरणेनासिद्धत्वाद् दीर्घवारणासम्भवेन कुर्ग्रहणस्य सार्थक्यं स्पष्टमेव। अत एव 'चञ्चूर्यते' इत्यत्र 'उत्परस्यातः' ( ७।४।८८ ) इति उति 'हलि च' ( ८।२।७७ ) इति दीर्घः सिध्यति। अन्यथेति कृते दीर्घप्राप्त्या पूर्वस्मिन् कृते परस्यासिद्धत्वाभावादुदिति तपरकरणेन चञ्चूर्तीत्यत्र गुणाभाववत् 'हलि च' इति दीर्घस्याप्रवृत्तिः स्यात्।

अथवा, उक्तसूत्रे कुर्ग्रहणमेवान्तरङ्गपरिभाषायाम् 'यथोद्देशपक्ष एव' इत्यस्य ज्ञापकमस्तु। अन्यथा कार्यकालपक्षेऽन्तरङ्गे हल्निमित्ते दीर्घे[1] प्रकृतिप्रत्ययनिमित्तत्वेन बहिरङ्गस्य 'अत उत्' इत्युत्वस्यासिद्धत्वेन दीर्घप्राप्त्या कुर्ग्रहणं व्यर्थं स्यात्। अन्तरङ्गपरिभाषायाः त्रिपाद्यामप्रवृत्तिफलन्तु तद्वान्। अत्र वत्वस्यासिद्धत्वेन 'यरोऽनुनासिके' इत्यनुनासिको न। तथा 'कदश्वः' अत्र कदादेशस्यासिद्धत्वाभावाज्जश्त्वाभावो न तथा 'करिष्यति' 'वारिणा' अत्र प्रकृतिप्रत्ययनिमित्तत्वेन बहिरङ्गस्य प्रत्ययस्य 'आङो ना' इति नादेशस्य चासिद्धत्वाभावात् षत्वणत्वाभावौ न। तथा 'सर्वेषाम्, विविक्षति' अत्राद्ये प्रकृतिप्रत्ययनिमित्तत्वेन बहिरङ्गस्य सुटोऽसिद्धत्वाभावात् षत्वाभावो न, द्वितीये झलादिसन्निमित्तत्वेन बहिरङ्गस्य 'व्रश्च' इति षत्वस्यासिद्धत्वेन 'षढोः कः सि' इति कत्वाभावो न। तथा अमीभिरित्यत्र भिस्भावनिमित्तत्वेन बहिरङ्गस्य 'बहुवचने झल्येत्' इत्येत्वस्यासिद्धत्वाभावात् 'एत ईद् बहुवचने' इति ईत्वाभावो न। तथा नद्धमित्यादि। अत्र झलादिसन्निमित्तत्वेन बहिरङ्गस्य 'नहो धः' इति धत्वस्यासिद्धत्वाभावात् 'झलां जश् झशि' इति जश्त्वाभावो न। एवं बहुषु स्थलेष्वन्यत्राप्यूह्यम्। अत्र सर्वत्र लक्ष्यानुरोधाद् यथोद्देशाश्रयणे महान् क्लेश इति बोध्यम्।

**असम्भवादिति**। 'पूर्वत्रासिद्धम्' इत्यत्रत्पूर्वत्र कृतेऽप्यसिद्धत्वेन पूर्वशास्त्रस्यानुत्पन्नत्वरूपासिद्धत्वारोपेण तस्यासत्त्वपर्यवसायितयाऽसद्विषयकप्रतिपत्तेरसम्भवात् सिद्धासिद्धयोः पूर्वपरयोर्युगपदेकबुद्धावुपारोहासम्भवेन निरूप्यनिरूपकभावापन्नान्तरङ्गत्वबहिरङ्गत्वग्रहप्रयोजकीभूतस्यैकबुद्धावपेक्षितपरस्परावस्थानस्यासम्भवेनेदृशे विषयेऽन्तरङ्गत्वबहिरङ्गत्वग्रहस्यैवासम्भवेनास्यास्त्रिपाद्यां प्रवृत्तेर्दुरुपपादत्वादिति भावः।

ननु कार्यकालपक्षेऽनया पूर्वमेव वृद्धेरसिद्धत्वविधानेन 'रदाभ्याम्' इति नत्वविषये वृद्धिविधायकशास्त्रस्यैवाप्रवृत्त्या बहिरङ्गपरिभाषाप्रवृत्तिस्सुस्थेति शङ्कते—**न चेति**।

---

१. कर्त्तव्य इति शेषः।

न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम्, एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः। किञ्च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः। अतः कार्यकालपक्षेऽपि त्रिपाद्यामस्या अनुपस्थितिरेव।

अत एव कार्यकालपक्षमेवोपक्रम्योक्त्युक्तीरुक्त्वा 'अतोऽयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वात्' इत्युक्तं विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना। त्रिपादीस्थेऽन्तरङ्गे कर्तव्येऽयं परिहारो न युक्त इति तदर्थः। किन्तु वचनमेवारब्धव्यमिति तदाशयः। अत एव निगाल्यत इत्यादौ लत्वार्थम् 'तस्य दोषः

---

ननु लक्ष्यदर्शनं लाघवञ्च विनिगमकं सम्भवतीत्यरुचेराह—किञ्चेति। उचित इति। अधिकारप्राप्त 'पुर्वत्रासिद्धम्' इत्यपेक्षया लक्ष्यपर्यालोचनसापेक्षान्तरङ्गत्वरूपलिङ्गाक्षिप्त 'अन्तरङ्ग' परिभाषाया विलम्बोपस्थितिकत्वेन वाक्यार्थबोधकाले एव निष्प्रतिद्वन्द्वितया 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वे सति ततो निमित्तत्वाभावादेव परिभाषाया अप्रवृत्तेरिति भावः।

स्वोक्तार्थे भाष्यसम्मतिमाह—अत एवेति। उभयत्रैतदनुपस्थितेरिष्टत्वादेवेत्यर्थः। 'विसर्जनीय' सूत्र इति। विसर्जनीयविधायके 'खरवसानयोः' इति सूत्र इत्यर्थः। न युक्त इति। 'संयोगान्तस्य' 'रदाभ्यम्' इत्यादौ यत्र यत्रोक्तः, स सर्वो न युक्त इत्यर्थः। वचनमिति। जातावेकवचनम्। वचनानीत्यर्थः। एकवचनम्प्रकृताभिप्रायेण वा, यत्र यत्र दोषस्य प्रसक्तिः, तत्र तत्र वचनमारब्धव्यमित्यर्थो वा। यथा 'संयोगान्तस्य लोपः' इति सूत्रे दध्यत्रेत्यादौ यकारस्य लोपवारणाय संयोगान्तस्य लोपे 'यणः प्रतिषेधः' इति वचनमारब्धम्, तस्य 'न वा झलो लोपात्' इत्यनेन प्रत्याख्यानं कृतम्। तत्र वाशब्दोपादानेन वचनारम्भः कर्त्तव्यः, 'झलोपः' इति वा स्वीकार्यमित्यर्थः। तथा 'मादुपधायाः' इति 'नार्मतेवत्वस्य प्रतिषेधः' इत्यस्य 'न वा बहिरङ्गलक्षणत्वात्' इत्यनेन यत्प्रत्याख्यानम्, तन्न युक्तम्, किन्तु प्रतिषेधवचनमेव युक्तम्। अत्र नृमतोऽपत्यमित्यर्थे जातस्याणो रेफनिमित्तत्वेन बहिरङ्गत्वेऽपि तत्प्रत्याख्यानमुक्तयुक्त्या न युक्तमिति भावः। तथा 'रदाभ्याम्' इति 'वृद्धिनिमित्तान्निष्ठानत्वस्य प्रतिषेधः' इति वचनमेव कर्तव्यम्—कार्तिरित्याद्यर्थम्, तथा नैष्कुल्याद्यर्थम् 'इदुदुपधस्य' इति षत्वे 'वृद्धेरसिद्धत्वं वक्तव्यम्' इति वचनमारब्धव्यम्, तथा 'खरवसानयोः' इति सूत्रे 'नार्कुटः, नार्पत्यः, इत्यत्र विसर्गवारणाय 'विसर्गनोयोऽनुत्तरपदे' इति वचनं कृतं वार्त्तिककृता। वार्त्तिके पदशब्दस्य शक्तपरत्वम्, उत्तरञ्च तत्पदं चोत्तरपदम्। तेन नार्कलिपरित्यादौ नाव्याप्तिः। तदर्थस्तु—उत्तरपदवृत्तिस्वनिष्ठोद्देश्यताको यो रेफः, तस्य विसर्गो न। नार्कुट इत्यादौ चाङ्गघटकतया ऋकारस्याप्युद्देश्यत्वेन निषेधसिद्धिः। अथवा उत्तरपदाघटितप्रकृतिकप्रत्ययनिमित्तकरेफस्य न विसर्गः। यथाश्रुतन्तु न युक्तम्; दास्याः पुत्रः इत्यलुक्समासे विसर्ग-

इति वचनमेवारब्धम् । अन्यथाऽन्तरङ्गत्वाण्णिलोपात् पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव ।

येऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति । तेऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या इति दिक्,

नापत्तेः । अनेकवचनाकरणे आग्रहस्तर्हि 'चर्षि' इत्यादिज्ञापकेनैकदेशानुमत्या 'त्रैपादिके कार्ये कर्तव्ये गुणवृद्ध्योरसिद्धत्वं कल्प्यम्' इति नव्यमतेऽपि न गौरवम् । अत्र गुणपदे धर्मिग्राहकमानेनैकदेशभूतगुणस्यैव सिद्धत्वविधानान्न धातरित्यादौ दोषः ।

तद्वैयर्थ्यमिति । ननु 'प्लायते' इत्यादौ लत्वस्यासिद्धत्वादादौ दीर्घे ततो लत्वस्यैव बहिरङ्गत्वेन लत्वग्रहणमावश्यकम्, तथा तक्षिरक्षिभ्यां क्विपि तक्, रक् इत्यत्र क्विन्निमित्तकणिलोपस्य स्थानिवद्भावार्थं संयोगादिलोपस्य बहिरङ्गत्वात्, तथा प्रहिणोतीत्यादौ 'हिनुमीना' इति णत्वार्थं ग्रहणमावश्यकम् । अत्र पदद्वयनिमित्तत्वेन गुणापेक्षया णत्वस्य बहिरङ्गत्वादिति चेत्, न; सयोगादिलोपे काव्यर्थम्, वास्यर्थम्; लत्वे निगाल्यते, णत्वे माषवपनीति भाष्येणोक्तप्रयोगार्थमपि वचनमित्यर्थस्य बोधनात् तस्य वैयर्थ्यमित्याशयात् ।

तत्त्वञ्च–अन्तरङ्गपरिभाषया सिद्धानामुक्तोदाहरणानामेवोक्तवार्तिकव्याख्यानावसरे भाष्ये दानेनान्तरङ्गपरिभाषायास्त्रिपाद्यां कार्यकालेऽप्यप्रवृत्तिरिति ।

विसर्जनीयसूत्रस्थं कैयटोक्तमनुवदति––येऽपीति । नादर्तव्या[1] इति । केचित्त्––अत्र कार्यकालपक्षे त्रिपाद्यामप्रवृत्तौ मानाभावः । न च पूर्वं प्रति परस्यासिद्धत्वात्' इत्युक्तयुक्तिमूलम्; पूर्वत्र कर्तव्ये परस्यासिद्धत्वेऽपि तत्र कृते परस्यासिद्धत्वे मानाभावस्य त्वयैव शब्देन्दुशेखरे, शब्दरत्ने चोपपादितत्वात् । 'कर्तरि चर्षि०' इत्यादिनिर्देशाश्च, कार्यकालपक्षेऽस्यास्त्रिपाद्यामप्रवृत्तौ गमकः, अन्यथा विसर्गे तदसङ्गतिः । न चात्र गुणविसर्गयोस्तुल्यनिमित्तत्वेन नान्तरङ्गबहिरङ्गभावः, विसर्गविधौ रेफस्य स्थानितयोपादानेनोत्तरपदसम्बन्ध्येकवर्णनिमित्तत्वम्, गुणस्य तु पदद्वयसम्बन्धिवर्णद्वयनिमित्तकत्वमिति तत्सम्भवात् ।

किञ्च सर्वथाऽस्यास्त्रिपाद्यामप्रवृत्तौ दध्यत्रेत्यत्र संयोगान्तलोपाप्रवृत्तये, कार्ति रित्यत्र निष्ठानत्वाप्रवृत्तये, नार्कुट इत्यत्र विसर्गप्रवृत्तये, नैष्कृतिरित्यादौ 'इदुदुपधस्य' इति षत्वप्रवृत्तये चानेकवचनारम्भे गौरवम्, एतेषूक्तकार्याप्रवृत्तिप्रवृत्त्योर्भाष्यवार्तिककाराभ्यां बहिरङ्गपरिभाषयैवोक्तत्वेन तदसंगतिश्च । विसर्जनीयसूत्रस्थम् 'अतोऽयुक्तोऽयं परिहारः––न वा बहिरङ्गलक्षणत्वात्' इति भाष्यन्तु 'तस्य दोषः' इत्यत्र लत्वग्रहणं कुर्वता वार्त्तिककृता पूर्वत्र कृतेऽपि परस्यासिद्धत्वाङ्गीकारात्तद्रीत्या तम्प्रति तत्परिहारस्याप्युक्तत्वाभिप्रायकमिति

१. नादरणीया इति क्वाचित्कः पाठः ।

**अत एव 'ओमाङोश्च' इत्याङ्ग्रहणं चरितार्थम्। तद्धि 'खट्वा आ ऊढ' इत्यत्र परमपि सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ**

---

न तद्विरोधः। अत एव प्रत्याहाराह्निके भाष्ये 'नूनमनस्यापत्यं नार्नमनिरित्यत्र णत्वं प्रति वृद्धिरसिद्धा' इत्युक्तम्। किञ्च, वार्त्तिके लत्वग्रहणं प्लायत इत्यत्र लत्वे स्थानिवद्भावार्थम्। अत्रैकादेशापेक्षया विशिष्टसमुदायनिमित्तकं लत्वमेव वहिरङ्गमिति न बहिरङ्गपरिभाषया सिद्धिः। 'विसर्जनीय' सूत्रस्थम् 'एवमेषा परिभाषा सिद्धा भवति' इत्यन्तमेव भाष्यं सिद्धान्त्युक्तिः। 'कुतो नु खलु' इत्यादि त्वेकदेशिनः, पूर्वत्र कृते परस्य सिद्धत्वे मानाभावात्। न च 'न भकुर्छुराम्' इति सूत्रे कुर्ग्रहणं कृते इत्यर्थे मानमुक्तमेवेति वाच्यम्, अन्तरङ्गपरिभाषायां यथोद्देशपक्षोऽप्यस्तीत्यर्थे तात्पर्यग्राहकत्वात्, पूर्वोक्तानेकभाष्यविरोधाच्चेति प्राहुः[1]। तेन नार्कुटादौ दोषनिरासार्थं तत्र तत्र तत्तद्वचनारम्भो न कर्त्तव्यो भवति। रामाणां तदनित्याद्युक्तोदाहरणे णत्वादि तु यथोद्देशपक्षाश्रयणेन सिद्धमिति न तत्प्रवृत्तौ दोषः। 'व्यवस्थितपक्षद्वय' इति न्यायाच्च न विपरीतप्रवृत्त्यप्रवृत्त्योरापादनं शक्यं कर्तुमिति तेषामभिप्रायः।

नव्यास्तु नैतत् क्षमन्ते—तथा हि—नहि कार्यकालयथोद्देशपक्षावेव प्रवृत्त्यप्रवृत्त्योर्मूलम्, किन्तु 'पूर्वत्र०' इत्यसिद्धत्वबोधनम्, तदभावश्चान्तरङ्गपरिभाषां प्रति, असिद्धत्वं तु पक्षद्वयेऽपि भवितुमर्हतीति। इतश्च 'तस्मिन्' इत्यादीनामपि त्रिपाद्यामप्रवृत्तिः प्राप्नोतीति चेत्, अत्रेत्थमनुभावयामः—'पूर्वत्रासिद्धम्' इत्यनेन तावत् त्रैपादिकस्य केन रूपेणसिद्धत्वं प्रतिपाद्यते ? न तावद्येन केनचिद् रूपेण, 'रोरि' इत्यादावुत्वानापत्तेः। नापि स्वोच्चारयितृच्चरितपदतात्पर्यग्राहकपरिभाषाणाम् 'षष्ठीस्थाने योगा' इत्यादीनां त्रिपाद्यां प्रवृत्त्यनापत्तेः। अतश्शास्त्रत्वेन रूपेणास्या असिद्धत्वं वक्तव्यम्। शास्त्रत्वञ्च अप्रामाण्यज्ञानानास्कन्दितबोधजनकत्वमेव। तच्च 'तस्मिन्निति' प्रभृतिसकलपरिभाषाप्रवृत्तावेव सम्भवति, न तु ततः प्रागिति ताः प्रति त्रैपादिकस्यासिद्धत्वं बोधयितुं नालम्। 'पूर्वत्रासिद्धम्' इति यास्तु शास्त्रत्वावच्छिन्नोदेश्यिकाः 'असिद्धं बहिरङ्गम्' [इति ?] प्रभृतिपरिभाषाः। तासां तु न त्रिपाद्याम्प्रवृत्त्या भवितव्यम्, स्वोद्देश्यतावच्छेदकरूपस्यान्तरङ्गशास्त्रत्वादेः स्वदृष्ट्या सत्त्वात्। तदेतत् सर्वम् 'अन्तरङ्गशास्त्रत्वमस्या लिङ्गम्, इयञ्च त्रिपाद्यां न प्रवर्तते, त्रिपाद्या असिद्धत्वात्' इत्यादिग्रन्थेन नव्यैः स्पष्टमेव प्रदर्शितम्। 'विप्रतिषेधे' सूत्रशेषे शब्देन्दुशेखरे चोक्तार्थस्स्पष्ट एव दर्शित इति तत एवावधार्य्यम्।

एवञ्च वाक्यार्थनिर्णायक 'तस्मिन्निति' इत्यादीनां त्रिपाद्यां पक्षद्वयेऽपि प्रवृत्तिः। शास्त्रत्वावच्छिन्नोद्देश्यताकानाम्' 'असिद्धं बहिरङ्गमन्तरङ्गे'

---

१. इदमत्राकूतम्—त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्तते न वा ! इति संशये कार्यकालपक्षे प्रवर्तते, पक्षान्तरे तु नेत्याहुः।

**परूपार्थम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् 'खट्वा' शब्दस्य समुदायेन योगाद् गुणस्यान्तरङ्गत्वमिति 'सम्प्रसारणाच्च' इति सूत्रे भाष्ये स्पष्टम्।**

---

'विप्रतिषेधे परं कार्यम्' 'अनुदात्तं पदमेकवर्जम्' इत्यादीनाञ्च पक्षद्वयेऽपि प्रवृत्तिर्नेति सिद्धमिति।

**दिगिति**। दिगर्थस्तु प्रकारान्तरेणापि 'अन्तरङ्गपरिभाषायास्त्रिपाद्याम-प्रवृत्तिर्वक्तुं शक्यत इति। तथाहि—कार्तिरित्यादौ नत्वादीनां रेफनिमित्तत्वाद्रेफो जात इति बुद्ध्युत्तरमेव नत्वादीनां प्रवृत्तिः। तथा च सिद्धत्वमुपजीव्य प्रवृत्ता नत्वादयः कथमसिद्धत्वं बोधयिष्यन्ति? अत एव प्रतिद्वन्द्विभाविनावेतावेकार्थे सत्यन्तरङ्गे बहिरङ्गम्। तत्र बहिरङ्गनिमित्तत्वमेवान्तरङ्गस्येत्याद्युक्तम् 'खरवसानयोः' इति सूत्रे भाष्ये।

'अन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्यासिद्धत्वम्' इत्यंशे ऊठ्ग्रहणं ज्ञापकमुक्त्वा तदनन्तरं जातविषये करिष्यतीत्यादौ बहिरङ्गत्वेन स्यप्रत्ययस्य-सिद्धत्वात् षत्वं न स्यादिति प्राप्तदोषस्य वारणाय कार्यकालेऽप्यन्तरङ्गपरिभाषा त्रिपाद्यां न प्रवर्तत इत्यभिधायेदानीं तत्कालप्राप्तिकमसिद्धमित्यंशे ज्ञापकमभिदधाति—**अत एवेति**। द्वितीयार्थाङ्गीकारादेवेत्यर्थः। ननु पदानि संस्कृत्य संस्कृत्योत्सृज्यन्ते, तेषां यथेष्टमभिसम्बन्धो भवति—आहर पात्रम्, पात्रमाहरेति 'वृद्धि०' सूत्रस्थभाष्येणेह शास्त्रे लोके प्रयोगार्हाणां पदानां पदान्तरसमभिव्याहारानपेक्षया स्वातन्त्र्येणैव व्युत्पाद्यत्वप्रतीत्या सहप्रयोगस्यैच्छिकत्वेन पूर्वं पश्चाद् वोपस्थितखट्वारूपार्थबोधकस्य खटवाशब्दस्य स्वार्थे परिपूर्णेन ओढाशब्देन सह प्रयोगकाले गुणस्य जातत्वेन दीर्घगुणयोर्युगपदप्राप्त्या तत्र प्राप्तवृद्धिबाधनार्थमाङ्ग्रहणं चरितार्थमिति कथमाङ्ग्रहणस्य ज्ञापकत्वम्? अत आह—**तद्धीति**। आङ्ग्रहणं हीत्यर्थः। 'युष्मद्युपपदे' इत्यादिसूत्रस्वरसेन शास्त्रे वाक्यसंस्कारपक्षस्याश्रयणेन प्रकृते ज्ञापकपरभाष्यप्रामाण्येनोक्तपक्षस्यैवाश्रयणात् परत्वाद् दीर्घेणेष्टसिद्धयाङ्ग्रहणं व्यर्थमिति भावः।

ननूभयोरपि पदद्वयापेक्षत्वेन समत्वात् कथं गुणस्यान्तरङ्गत्वमत आह—**साधनेति**। ननु वाक्यसंस्कारपक्षेऽपि वाक्यघटकपदद्वारैव तस्य संस्कारः कर्तव्यः। तत्र वर्तमानानां बहूनां युगपदेव 'खले कपोतन्यायेन' संस्कारः, उत, येन क्रमेण पदानामुच्चारणम्, तेनैव क्रमेण? आद्ये कानि सन्ति इत्यादिमूला-संगतिः' वाचः क्रमवृत्तितया युगपदेनककार्यासम्भवश्च। द्वितीये श्रुतवर्णक्रमत्यागे बीजाभावेन तादृशान्तरङ्गमादाय पूर्वं दीर्घस्य प्रवृत्त्या गुणस्यान्तरङ्गत्वासम्भवादिति चेत्, न; साधनबोधकप्रत्ययोत्पत्त्यनन्तरमेव धातोरुपसर्गयोगेन तदुत्तरमेव बहिर्भूतखट्वाशब्दार्थेन योगेन तत्काले खट्वाशब्देन सम्बन्धेऽपि ययैवानुपूर्व्यार्थानां प्रादुर्भावः, तयैव शब्दानां तद्गतकार्य्यैरपि भवितव्यमिति

'एहि इत्यनुकरणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृत्तिर्ज्ञापकपर-'सम्प्रसारणाच्च' इति सूत्रस्थभाष्यप्रामाण्येनानित्यम्, 'प्रकृतिवदनुकरणम्' इत्यतिदेशमादाय लब्धाङ्त्वे एतदप्रवृत्तेः ।

---

'अचः परस्मिन्' इति सूत्रभाष्योक्त्या पदार्थबोधक्रमेणैव प्रक्रियानुपूर्वी आश्रयणीयेत्यमियुक्तोक्त्या च खट्वा आवहृत इत्यत्र दीर्घसम्प्रसारणयोर्युगपत्प्राप्तौ पूर्वंगतसाधननिमित्तकत्वेन सम्प्रसारणस्य पश्चादुपस्थितखट्वाशब्दापेक्षदीर्घापेक्षयान्तरङ्गत्वे पूर्वं प्रवृत्त्या ततो दीर्घगुणयोः प्राप्तौ पूर्वोपस्थितार्थकशब्दनिमित्तकत्वेन गुणस्यान्तरङ्गत्वसंभवेनादोषात् । न च सुलोपोत्तरं दीर्घप्राप्तिः, गुणस्य तु 'हल्ङ्याप्' इति सूत्रेण लोपसमकालं प्राप्तिरिति दीर्घगुणयोर्युगपत्प्राप्त्यैतत्परिभाषाविषयतैव नेति वाच्यम्, पदद्वयापेक्षगुणापेक्षया सुलोपस्यान्तरङ्गत्वात् पूर्वप्रवृत्त्यौ दीर्घगुणयोयुगपदस्याः सम्प्रधारणसम्भव इत्याशयात् । न च देव+आ+उह्यमित्यत्र धातूपसर्गकार्याभावेन गुणस्य पूर्वोक्तरीत्या चान्तरङ्गत्वासंभवादेव तद्विषये गुणात् परत्वादीर्घे प्राप्ते 'अनित्यान्नित्यं बलीयः' इत्यत्रैवाङ्ग्रहणस्य ज्ञापकत्वं युक्तम्, न तु 'अन्तरङ्गं बलीयः' इत्यत्र । किञ्च, खट्वा आरुढेत्यवस्थायां बहिरङ्गस्य सवर्णदीर्घस्यासिद्धत्वाभावेऽपि नित्यत्वादेवाद्गुणे वृद्धिप्राप्तौ तद्बाधनार्थमाङ्ग्रहणं चरितार्थमिति कथं तत्कालप्राप्तबहिरङ्गस्यासिद्धत्वे आङ्ग्रहणं ज्ञापकमिति वाच्यम्, दीर्घस्य गुणापवादत्वेन गुणस्य नित्यत्वेऽप्यपवादापेक्षया तस्य बलवत्त्वाभावेनापवादत्वात् सवर्णदीर्घे आङ्ग्रहणस्योक्तस्थले चारितार्थ्याभावात् । मम तु तत्कालप्राप्तबहिरङ्गस्यासिद्धत्वेनापवादकृतसंकोचस्योत्सर्गशास्त्रस्य ज्ञानाभावेनोत्सर्गशास्त्रस्योक्तस्थलेऽप्रवृत्त्या वृद्धिप्राप्तौ तद्बाधनार्थमाङ्ग्रहणस्य चारितार्थ्यं स्पष्टमेव । अत एव इष्यते—'अपवादो यद्यन्यत्र चरितार्थः, तर्ह्यन्तरङ्गेणैव बाधः' ।

**अत एवेति** । ननु[1] एहीति पदस्यानुकरणे शिव इत्यनेन सम्बन्धे तद्घटकस्य षष्ठीसमासे, सम्बोधनप्रयोगे वा शिव एहीत्यादौ 'प्रकृतिवदनुकरम्' इत्याङ्त्वातिदेशे तत्र वृद्धिबाधनार्थमाङ्ग्रहणं चरितार्थमिति कथं ज्ञापकत्वमत आह—**भाष्य** इति । **अप्रवृत्तेरिति** । न च प्रकृतिपर्याप्तधर्मस्यैवातिदेशः, न तु प्रकृत्यवयवगतधर्मस्यापीति कथमत्र तेन न्यायेङ्त्वातिदेशमभ्युपेत्य भाष्यप्रामाण्याद् न्यायानाश्रयणमित्युक्तेः सम्भव इति वाच्यम्, अनुकरणावयवेऽपि प्रकृत्यवयवगतधर्मस्य 'प्रकृतिवदनुकरणम्' इत्यनेनातिदेशात् । अत एवास्य वामीयमित्यादावनुकरणैकदेशेऽपि, सुप्त्वात् प्राप्तलुकः 'प्रकृतिवदनुकरणम्' इत्यस्यानित्यत्वेन वारणं कृतं भाष्ये । अत एव 'जहि जोड' इत्यादौ जोडं जहीति समुदायानुकरणेऽवयवस्य सुप्त्वात् तस्य लोपः सिध्यति । अत एव

---

१. ए 'हि' इत्यनुकरणद्वयम् न त्वेकमनुकरणमिति तात्पर्यम् ।

**यत्तु, पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन। उपसर्गेण तत्संज्ञकशब्देन, साधनेन कारकेण तत्प्रयुक्तकार्येण च। अत एव 'अनुभूयते' इत्यादौ सकर्मकत्वात् कर्मणि लकारसिद्धिः' इति, तन्न; क्रियायाः साध्यत्वेन बोधात्**

---

'अपोयोनियन्मतिषु' इति सूत्रे[1] 'किञ्च [2]मतुब्विति पाठे फलं चिन्त्यम्, अस्य वामीयमित्यादाविव लुकोऽप्राप्तिः' इति ग्रन्थोक्तिः संगच्छते। एतेन वस्तुतस्त्वाङ्त्स्य तत्रैकदेशनिष्ठत्वेऽपि समुदायानिष्ठत्वेन प्रकृत्यधर्मत्वात् पररूपस्याङ्मात्रकार्यत्वाच्चात्रातिदेशस्यैवासम्भव इति भाष्यं सम्यगेव। एवञ्च 'एहीत्यनुकरणस्य' इत्यादिग्रन्थस्तु प्राचामनुरोधेनेति बोध्यमिति बालम्भट्टास्तदनुसारिणश्च केचनार्वाचीनाश्च प्रत्युक्ता एवेति दिक्।

ननु वहधातोः क्ते ऊढेति सिद्धौ तत आङ्खटवाशब्दयोर्योगे युगपद्दीर्घगुणयोः प्राप्त्या भाष्योक्तसम्प्रधारणा युक्ता स्यात्। सैव न सम्भवति, 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति सुटकात्' 'गतिर्गतौ' इति सूत्रयोर्भाष्योक्तेरिति कथं ज्ञापकत्वमित्याशयेनाह—**तत्संज्ञकेति**। तदुक्तम् 'सुट्कात् पूर्वः' इत्यत्र भाष्ये 'धातूपसर्गयोः कार्यमन्तरङ्गम्, कुत एतत्? पूर्वं धातुरुपसर्गेण युज्यते, पश्चात् साधनेन' इत्युक्त्वा 'नैतत्सारम्, पूर्वं हि धातुः साधनेन युज्यते, पश्चादुपसर्गेण। साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि' इत्युक्तम्। तदग्रे सत्यमेतत्, यस्त्वसौ धातूपसर्गयोरभिसम्बन्धः, तमभ्यन्तरं कृत्वा धातुस्साधनेन युज्यते, अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्वं धातुस्साधनेन युज्यते पश्चादुपसर्गेणेति, आस्यते गुरुणेत्यकर्मकः, उपास्यते गुरुरिति सकर्मकः केन स्यात्। एवञ्च कृत्वा सुट सर्वतोऽन्तरङ्गतरको भवतीति।

अत्र **कैयटः**, 'सर्वतः' इति प्रतीकमुपादाय 'धातुसंज्ञाया अपीत्यर्थः। यस्माद् धातूपसर्गसमुदायेन विशिष्टा क्रिया प्रतिपाद्यते, सैव साधनेन साध्यते, न तु साधनाल्लब्धस्वरूपाऽन्यतो विशेषं लभते। अडादिव्यवस्थार्थं तु पृथग धातूपसर्गप्रकल्पनम्। तत्र 'सं कृ' शब्दे व्यवस्थित एव सुड भवति। पश्चात् समुदायावयवस्य तेनार्थेनार्थवतो धातुसंज्ञा भवतीति व्याख्यातवान्।

---

१. 'अलुगुत्तरपदे' ६।३।१ इति सूत्रे वार्त्तिक इत्यर्थः।

२. अप्सुमतिरिति। वृत्तिहरदत्तादयस्तु वार्तिके 'मतुपु' इति पठित्वा 'अप्सुमन्ता वाज्यभागौ' इत्युदाहरन्ति। भाष्येऽप्येवमेव पाठः। दृश्यमानपाठस्तु लेखकप्रमादादिति तदनुपायिनः। 'हलोऽन्तराः' इति सूत्रे 'हरि' ग्रन्थे तु 'अप्सुमतिः' इत्येव पाठो दृश्यते। युक्तञ्चैतत्। एकवच्चेत्यस्यातिप्रसङ्गव्याजेनास्योपन्यासो भाष्ये। न हि 'अप्सुमन्तौ' इत्यत्रास्यातिप्रसङ्गोऽस्ति। 'अप्सु' इत्यनुकरणाद्धयं मतुप्। न हि तत्राप्शब्दो बह्वर्थः, शब्दपरत्वात्, शब्दस्य चैकत्वात्। प्रकृतिवत् इत्यतिदेशोऽपि शास्त्रीयधर्मातिदेशकः, न त्वस्य लौकिकस्य। किञ्च 'अस्य वामीयम्' इत्यादाविव तत्र लुकः प्राप्तिरेव नेति दिक्' इति उद्द्योत्।

साध्यस्य च साधनाकाङ्क्षतया तत्संबन्धोत्तरमेव निश्चितक्रियाबोधेन साधन-कार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात् ।

अत एव 'सुट्कात् पूर्वः' इति सूत्रे 'पूर्वं धातुरुपसर्गेण' इत्युक्त्वा 'नैतत्सारम्, पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण' इत्युक्त्वोक्तयुक्त्याऽस्यैव युक्तत्वमुक्तम्, साधनं हि क्रियां निर्वर्तयति' इत्यादिना भाष्ये । उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्मणि लकारादिसिद्धिः । पश्चाच्छ्रोतृबोधाय द्योतकोपसर्गसम्बन्धः ।

---

अयं भावः-सोपसर्गस्थलेऽधीत इत्यादावुभाभ्यां पृथगर्थद्वयानुपलम्भादुपसर्गविशिष्टसमुदायस्यैव क्रियावाचकत्वम्, न तु केवलस्येङः, तावन्मात्रेण तदर्थाप्रतीतेः । न चैवं समुदायस्य क्रियावाचकत्वेऽपि भ्वादित्वाभावात्, अवयवस्य भ्वादित्वेऽपि क्रियावचनत्वाभावादत्र धातुसंज्ञैव दुर्लभेति वाच्यम्, कन्नादीनां साक्षादर्थवत्त्वाभावेऽपि पितृधनेनैव पुत्रस्य धनवत्त्वव्यवहारवत् प्रत्ययाधिकारे पा [ठ] सामर्थ्येनैव प्रत्ययसंज्ञाप्रयोजकार्थवत्त्वव्यवहारः, यथा वा सामुदायिकधनेनैव भ्रातृणां धनवत्त्वव्यवहारः, तथेङो धातुपसर्गसमुदायार्थेनैव भ्वादौ पाठसामर्थ्येनाऽडादिव्यवस्थार्थमेतादृशे विषये गणपठितशब्दमात्रेऽपि धातुसंज्ञामात्रोपयोग्यार्थवत्त्वप्रतिज्ञाश्रयणेन तावन्मात्रेऽपि धातुसंज्ञासंभव इति । न चैवम् 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व नियमभङ्गः, प्रकृति प्रयोज्योपस्थितिविषयार्थान्वित, इत्यर्थेनादोषात् । एवञ्च धातूपसर्गयोः कार्यमन्तरङ्गमिति तदाशयः **तत्प्रयुक्तकार्येणेति** । तिवादिनेत्यर्थः ।

अत्रायं सिद्धान्तः--'पूर्वं धातुस्साधनेन युज्यते, पश्चादुपसर्गेण' इत्यत्र साधनपदं प्रयोगनिर्वाहकप्रत्ययपरम्; अन्यथाध्ययनमित्यादौ भावप्रत्ययस्य पूर्वमनुत्पत्तिप्रसङ्गः, तस्य कारकबोधकत्वाभावात् । अत एव प्रणिदापयतीत्यादौ पूर्वं णिचि पुकि दापयतीत्यस्य सिद्धयुत्तरं प्रति ( नि ) भ्यां योगे णिचोऽपि प्रयोगनिर्वाहकप्रत्ययत्वात् ।

अत एव अभिषावयतीत्यादावभेर्धातुना न समासः । भाष्येऽपि 'साधनं हि क्रियां निर्वर्तयति' इत्यत्र क्रियापदं क्रियार्थकधातुघटितप्रयोगसाधुत्वपरम्, निर्वर्तयतीत्यस्य निर्वाहयतीत्यर्थः । 'साध्यस्य च साधनाकाङ्क्षतया' इति वक्ष्यमाणग्रन्थस्तु चिन्त्य एव भावप्रत्ययस्थलेऽनुपपत्तेः । णेरध्ययने इत्यादिज्ञापकं तूक्तार्थ एवेति ।

**तत्सम्बन्धोत्तरमेवेति** । ननु साधनसम्बन्धात् पूर्वं क्रियाबोधकत्वाभावे कथं धातुत्वमिति चेत्, न; 'धातोः साधनयोगस्य भाविनः प्रक्रमाद् यथा धातुत्वं कर्मभावश्च, तथान्यदपि दृश्यताम्' इति हरिणैव समाधिकरणात् ।

अस्यार्थः--यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते, यथा च भाविकर्मत्वमाश्रित्योपक्रम एव कर्मत्वम्, तथा भाव्युपसर्गसम्बन्धादुपक्रम एव विशिष्टक्रियावाचित्वं दृश्यतामिति कर्मणि ।

**एवं चान्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् सम् कृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते, ततो द्वित्वादि ।**

**अत एव 'प्रणिदापयति' इत्यादौ णत्वम् 'यदागमाः' इति न्यायेन समाहितं भाष्ये । अत एव 'प्रत्येति प्रत्ययः' इत्यादिसिद्धिः । अन्यथाऽन्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः ।**

**यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तत्वात् तदन्तरङ्गम् । यत्तु न तथा, तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव 'न धातु०' इति सूत्रे 'प्रेद्धः' इत्यत्र 'गुणो बहिरङ्गः' इति भाष्ये उक्तम् ।**

---

लकारस्यासिद्धिं परिहरति—**उपसर्गद्योत्येति** । 'पश्चादुपसर्गेण युज्यते' इत्यनेन तदर्थेन युज्यते इत्यर्थकस्य न प्रतिषेध इति भावः ।

इदं चिन्त्यम्, साधनसम्बन्धात्पूर्वमुपसर्गद्योत्यार्थान्तर्भावेण धातोर्वृत्तावुपसर्गसंज्ञकप्रयोगे कारणाभावात् तदर्थे वृत्तिमतः प्रयोग एव तदर्थप्रतीतिनियमात्; अन्यथा टाबाद्यभावेऽपि खट्वादितः स्त्रीत्वादिप्रतीतिप्रसङ्गात् ।

एवञ्चेति । साधनसम्बन्धात् पूर्वमुपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधाने सतीत्यर्थः । **अन्तरङ्गतरेति** । उपसर्गसमभिव्याहारविषये तद्द्योत्यार्थविशेषस्यैव निष्पाद्यत्वेन तस्मिन् साधन संबन्धेन क्रियात्वनिश्चयाय पूर्वं बुद्धिस्थत्वावश्यकत्वे बाह्यसाधनसम्बन्धापेक्षया धात्वर्थान्तर्भूत'सम्'शब्दार्थस्य प्रथममुपस्थितत्वेन पायसं करोतीत्यादौ सुण्निवृत्तये 'अर्थवत्' परिभाषयाऽर्थवत् 'सम्'शब्दस्यैव सुटं प्रति निमित्तत्वेनान्तरङ्गतरार्थक 'सम्' शब्दनिमित्तकत्वात् सुटोऽन्तरङ्गत्वमिति भावः । एतेन सुड्द्वित्वयोर्मध्ये परत्वात् सुटि न दोष इत्यपास्तम्, पदद्वयापेक्षसुडपेक्षस्यान्तरङ्गत्वाद् द्वित्वे संचस्कारेत्यस्यासिद्धचापत्तेः । **सम् कृतीति** । 'सम्परिभ्याम्' इत्यादौ संपरिपरत्वयोग्यस्य करोतेरित्यादिक्रमेणार्थ इति स्वयमेव तिङन्तप्रकरणे उक्तत्वेन सम् कृतीत्यवस्थायामिति कथनं परस्परविरुद्धमिति प्रतिभाति न चार्थकृतबहिरङ्गत्वस्यात्रैव परिभाषायामुक्तत्वेनान्तरङ्गतरार्थेति कथनमनुचितमिति वाच्यम्, अर्थनिमित्तकबहिरङ्गत्वस्यानाश्रणेऽपि, स्वतोऽस्यान्तरङ्गत्वमित्याशयात् ।

उक्तार्थे मानमाह—**अत एवेति** । णिचवाच्यव्यापारे उपसर्गद्योत्यप्रकर्षादिविवक्षाया असम्भवस्य शेखरे स्पष्टमुक्तत्वेन णिच्प्रकृत्यर्थे एवोपसर्गार्थप्रकर्षादिविवक्षणेन पूर्वमेवोपसर्गयोगेन णत्वस्य सिद्धचा भाष्यासंगतिरिति भावः ।

वस्तुतः सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां त्रैपादिककार्यस्य पूर्वमप्रवृत्त्या पूर्वमुपसर्गयोगेऽपि णत्वात् पूर्वं णिचि पुकि भाष्यसंगतेश्चिन्त्यमेवेदम् ।

अवा [ अथवा ] इत एवारुचेराह—**अत एवेति** । पूर्वं धातोः साधनेन योगादेवेत्यर्थः ।

**किञ्च, 'पूर्वमुपसर्गयोगे धातूपसर्गयोः समासे ऐकस्वर्याद्यापत्तिः' इति 'उपपदमतिङ्' इति सूत्रे भाष्ये स्पष्टम्। भावार्थप्रत्ययस्यापि पूर्वमेवोत्पत्तिः। अत एव 'णेरध्ययने' इति निर्देशः संगच्छते। इदं च सामान्यापेक्षं ज्ञापकम्, भावतिङोऽपि पूर्वमुत्पत्तेः। अन्यथा तत्र समासापत्तिः। तिङि तु 'अतिङ्' इति निषेधान्न तत्र दोषः, यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्।**

---

**प्रत्यय इति**। 'वर्णादाङ्गम्' इति समानप्राप्तिकस्थले एवेति बोध्यम्। सिद्धान्ते धातूपसर्गयोः कार्यमन्तरङ्गमित्यस्य विषयमाह—**यदुपेति**। **अन्तरङ्गमिति**। 'अर्थवत्' परिभाषया सार्थकशब्दस्यैव निमित्तत्वेन पूर्वोपस्थितार्थकशब्दनिमित्तत्वेनान्तरङ्गत्वं बोध्यम्। **यत्तु न तथेति**। विशिष्टोपसर्गानाश्रयणेनार्थस्यानिमित्तत्वात् केवलोपसर्गसम्बन्धिवर्णनिमित्तकमित्यर्थः।

'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति सामान्यतः स्वीकर्तृमते दोषमाह—**किञ्चेति**। न च लकारोत्पत्तावपि साधनकार्यं जातमेवेति समासो दुर्वार एवेति वाच्यम्, साधनस्य संख्याविशिष्टत्वनियमेन सम्पूर्णतदाकाङ्क्षानिवर्तकतिङामुत्पत्त्यैव तदाकाङ्क्षानिवृत्तिरिति पूर्वम् 'तिङतिङः' इति निषेधसम्भवात्।

वस्तुतो धातूपपर्गयोः पूर्वं योगेऽपि 'उपसञ्जनिष्यमाण' इति न्यायेन समासात् पूर्वं तिबाद्युत्पत्त्या न दोषः। 'उपपदमतिङ्' इत्यत्र 'अतिङ्' इत्यस्य स्थाने 'अक्रिया' इति न्यासेन 'क्रियाविशेष्यकबोधजनकेन न समासः' इत्यर्थाद् धातूनां न समासप्राप्तिरिति प्राचां मतेऽप्यदोषो बोध्यः।

ननु भावार्थकस्य पूर्वमेवोत्पत्तौ न किञ्चिद् गमकमिति तत्र पूर्वमुपसर्गयोगे समासो दुर्वार इत्यत आह—**भावार्थेति**।

अत्र मानमाह—**अत एवेति**। निर्देशस्थ सामान्यापेक्षज्ञापकत्वमित्याह—**इदञ्चेति**। पिपठिषतीत्यादावपि 'समानकर्तृकात्' इत्युक्त्या सनर्थसाधनेनैव प्रकृतेरपि तदाकाङ्क्षानिवृत्त्या सना एकार्थीभावः, तद्विशेषणत्वाच्च प्रकृत्यर्थस्य तदुत्तरमेवोपसर्गयोग इति तत्रापि न समास इति बोध्यम्।

एवं कर्मलकारविषयेऽपि कारकान्वयरूपयोग्यतावच्छेदकरूपसाध्यत्वनिश्चयस्य तदुत्तरमेव जायमानत्वेन न पूर्वमुपसर्गयोग इति न दोषः।

**समासापत्तिरिति**। अत्रापि 'उपसञ्जनिष्यमाण' न्यायेन समासाप्राप्त्या सामान्यापेक्षज्ञापकस्वीकारे फलं चिन्त्यमेव। **यदि भावतिङीति**। वस्तुतो विक्रियते सैन्धवेंग्त्यादौ भावतिङ्स्थलेऽकर्मकत्वार्थं प्रथममेवोपसर्गार्थेन योगस्यावश्यकत्वेन 'यदि इति कथनमनुचितमिति बोध्यमित्यलमिति। अयमर्थस्तु 'अत्रायं सिद्धान्तः' इत्यादिना प्रतिपादितोऽर्थोऽनुसन्धेयः।

अदादिप्रकरणस्थकौमुदीं[1] द्यति—**यत्त्विति**।

---

१. 'प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद् यासुट्-रुद्याद्' इत्यत्रत्यामित्यर्थः। अत्रेडादिविधौ सार्वधातुकत्वज्ञानाय धातुत्वज्ञानाय धातुत्वरूपसामान्यज्ञानस्यावश्यकत्वेन तत्सामान्यविशेषोभयनिमित्तकत्वेनेटो बहिरङ्गत्वम्। यासुटो धात्वधिकारीयतया धातुमात्रनिमित्तिकत्वेनान्तरङ्गत्वमिति।

**यत्तु 'विशेषापेक्षात् सामान्यापेक्षमन्तरङ्गम्' विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात् । यथा 'रुदादिभ्यः सार्वधातुके' इत्यत्र रुदादित्वं सार्वधातुकत्वं च । तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः । एतेन यत् 'अनुदात्तङितः' इति सूत्रे कैयटेनोक्तम् 'लमात्रापेक्षयाऽन्तरङ्गास्तिबादयः, लकारविशेषापेक्षत्वाद् बहिरङ्गाः स्यादयः' इति, तत्परास्तम्; विशेषापेक्षत्वेऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात्, परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति, तन्न; विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात्, भाष्य एवं विधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च ।**

---

'विशेषापेक्षं बहिरङ्गम्' इत्यस्यायं भावः--विशेषो हि व्याप्यधर्मः, तस्य च व्यापकधर्मानान्तर्यकत्वेन तद्धर्मोपस्थितौ तदुपस्थितेः । एवञ्चाधिकनिमित्तापेक्षत्वात् तत्त्वम् । यथा 'रुदादिभ्यः सार्वधातुके' इत्यस्य धातुविहितप्रत्ययसंज्ञकतिङादेः सार्वधातुकसंज्ञाविधानाद् व्याप्यसार्वधातुकत्वरूपधर्मोपस्थित्या प्रत्ययत्वरूपव्यापकधर्मस्याप्युपस्थितेरावश्यकत्वाद्रुदादित्वरूपविशेषोपस्थित्या तज्ज्ञानाय धातुत्वरूपसाध्यधर्मस्योपस्थितेरप्यावश्यकत्वाच्चास्याः सुडपेक्षयाधिकधर्मनिमित्तत्वेन बहिरङ्गत्वम् । एतावता 'बह्वपेक्षं बहिरङ्गम्'इति फलतीति ।

'सामान्यापेक्षमन्तरङ्गम्' इत्यस्यायं भावः—सामान्यधर्मस्य व्यापकत्वेन तस्य व्याप्याधिकरणातिरिक्ताधिकरणकत्वस्यापि सत्त्वात्तदुपस्थितौ व्याप्यधर्मोपस्थितेरनियतत्वेनाल्पधर्मनिमित्तकत्वाद् यासुडन्तरङ्गम् । एतावता 'अल्पनिमित्तकमन्तरङ्गम्' फलितं भवतीति । 'विशेषापेक्षात् सामान्यपेक्षमन्तरङ्गम्' इति यस्य मतम्, स एव कैयटोक्तं दूषयति—**एतेनेति** । अधिकापेक्षबहिरङ्गत्वप्रतिपादनेनेत्यर्थः । **लमात्रापेक्षयेति** । अधिकापेक्षस्य बहिरङ्गत्वं सर्वसम्मतम्, तच्च स्यादीनां नास्तीति कैयटोक्तं बहिरङ्गत्वं स्यादीनामसम्भवमेवेति भावः । इदञ्च शब्दमर्यादया तथाविधान्तरङ्गबहिरङ्गालाभात् प्राक् खण्डितमपि यथा कथञ्चिदभ्युपेत्य तदिदानीं द्यति – **तन्नेति** ।

ननु धातुत्वप्रत्ययत्वैतदुभयज्ञानमन्तरा सार्वधातुकज्ञानान्यथानुपपत्त्या सामान्यधर्मस्य निमित्तत्वसंभवेन मानाभाव इत्युक्तिरयुक्तेत्यत आह--**भाष्य इति** । रुद्यादित्यादौ नित्यत्वाद्यासुटि न दोष इति भावः ।

ननूक्तान्तरङ्गबहिरङ्गभावस्य 'मतुप्' सूत्रे भाष्ये स्पष्टमुल्लेखेन कथं क्वाप्यनुल्लेखत्युक्तिः, अत आह—**यत्त्विति** । तत्र हि भाष्ये 'अथेह कस्मान्न भवति--चित्रगुरिति, बहुव्रीहिणोक्तत्वान्मत्वर्थस्य न भवति । अथेह कस्मान्न भवति--पञ्चगुरिति, समासेनोक्तत्वात् । नेतत् सारम्, उक्तेऽपि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितः । यथा द्वैमातुरः, पाञ्चनापितिरिति । नैष द्विगुः,

यत्तु मतुप्सूत्रे भाष्ये 'पञ्च गावो यस्य सन्ति' स 'पञ्चगुः' इत्यत्र मतुप्प्राप्तिमाशङ्क्य 'प्रत्येकमसामर्थ्यात्, समुदायादप्रातिपदिकत्वात्, समासात् समासेनोक्तत्वात्' इति सिद्धान्तिनोक्ते 'नैतत्सारम्, उक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिः' इति पूर्वपक्ष्युक्तिर्भाष्ये। 'द्विगोर्लुगनपत्ये' इति लुग्विधानात् तद्धितार्थद्विगोस्तद्धितो भवति, पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः। ततः 'द्वैमातुरः, पाञ्चनापितिः, पञ्चसु कपालेषु संस्कृतः' इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद् बाध इत्याशयेन 'नैष द्विगुः, कस्तर्हि? बहुव्रीहिः' इति सिद्धान्तिनोक्ते तमवकाशमजानानोऽपवादत्वाद् द्विगुः प्राप्नोतीति पूर्वपक्षी। अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद् बाधकः प्राप्नोतीति कैयटः।

---

कस्तर्हि? बहुव्रीहिः। अपवादत्वाद् द्विगुः प्राप्नोति, अन्तरङ्गत्वाद् बहुव्रीहिर्भविष्यति। कान्तरङ्गता? अन्यपदार्थे बहुव्रीहिः, विशिष्टेऽन्यपदार्थे तद्धितार्थे द्विगुः, तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते इत्युक्तम्।

ननु समुदायात् ते, उत वाक्यात्? अन्त्येऽपि, किं प्रत्येकम्, उत समुदायात्? तत्र न मध्ये इत्याह—'**प्रत्येकम्**' इति परस्परापेक्षत्वेनासामर्थ्यादिति भावः। नान्त इत्याह '**समुदाय**' इति। पूर्वपक्ष्युक्तिरिति सिद्धान्ते 'तद्धितार्थे' इति विषयसप्तमी न तु वाच्य इति। अत एव तत्र तद्धितपूर्वपक्षी तु वाच्य इत्येवार्थं मन्यते। **समासत** [ समासान्त ] श्चानित्यत्वान्न भवति। मतोस्तु न लुक्, अप्राग्दीव्यतीयत्वात्, अजादित्वाभावाच्च। ततश्च मतुप्श्रवणं दुर्वारमित्याशयेनाह—**द्विगोरिति**।

**सिद्धान्तिनोक्ते** इति। अप्रथमान्तेषु द्वैमातुरः, पञ्चकपालमित्यादौ द्विगोश्चारितार्थ्येन समानाधिकरणे प्रथमान्ते परत्वाद् बहुव्रीहिणा बाधेनास्यापि चित्रगुतुल्यत्वात् समासेनोक्तत्वान्न दोष इति भावः। **अपवादत्वाद् द्विगुरिति**। प्रथमान्तानामेव बहुव्रीहिरिति नियमाभावादन्यपदार्थमात्रे सुबन्तमात्रस्य विधीयमानबहुव्रीहेस्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वादबाधको भविष्यति। द्विगुविषये तु 'उक्तार्थानाम्' इति न्यायस्य 'द्विगोः' इति ज्ञापकादप्रवृत्त्या चित्रगुरित्यत्रैव पञ्चगुरित्यत्रापि वारणं न सारमिति भावः।

ततः सिद्धान्ती 'तुष्यतु दुर्जनः' इति न्यायेन तदुक्तमपवादमभ्युपगम्य 'अपवादोऽपि यद्यन्यत्र' इति न्यायेन तदुक्तं दोषं परिहर्तुमाह—**अन्तरङ्गत्वादिति**। अपवादत्वस्य कथमप्यसम्भवात् तदभ्युपगमादस्य सिद्धान्त्येकदेशित्वमिति भावः। **विशिष्ट** इति। विशेषविशिष्ट इत्यर्थः। **तस्मिंश्चास्येति**। अस्य द्विगोरर्थद्वारा निमित्तभूते तस्मिन् तद्धित इत्यर्थः। विषयत्वं सप्तम्यर्थः। मतुब्विधायकेऽस्तिग्रहणमिति यावत्। **अधिकेति**। बहुव्रीहिनिमित्तान्यपदार्थापेक्षयाधिकोऽस्त्यर्थः। तदपेक्षो यो मतुप्, तदर्थनिमित्तक इत्यर्थः।

ततः सिद्धान्त्येकदेश्याह—'अन्तरङ्गत्वाद् बहुव्रीहिः। कान्तरङ्गता? अन्यपदार्थे बहुव्रीहिः, विशिष्टेऽन्यपदार्थे द्विगुः, तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते' इति। अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति।

नैषा सिद्धान्त्युक्तिः, एतावताप्यपवादत्वाहानेः; अच्सामान्यापेक्षयणो विशिष्टसवर्णाजक्षेपदीर्घेण बाधदर्शनात्।

---

एवमनूद्य द्यति—एतावतेति। अधिकास्त्यर्थापेक्षत्वेनेति भावः। अहानेरिति। 'प्रकल्प्य' इति न्यायेन तद्विषये बहुव्रीहेरप्रवृत्तेरिति भावः।

नन्वपवादत्ववादिना पूर्वपक्षिणा प्रथमान्तानामेव बहुव्रीहिरिति नियमानभ्युपगमात् पञ्चानां नापितानामपत्यमित्यत्रापि बहुव्रीहेः प्राप्त्या तत्रान्तरङ्गबहिरङ्गभावापन्नत्वेन समानविषये उत्सर्गबहुव्रीहेर्बाधेनापवादत्वाद् द्विगोश्चारितार्थ्येन पञ्चगुरित्यत्र मत्वर्थविवक्षायामुभयोरपि प्राप्त्या 'अपवादोऽपि' इति न्यायेन बहुव्रीहिणा द्विगोर्बाधविषयेऽपवादत्वस्य हान्यभावेऽपि न दोषः, अत आह—अजिति। अधिकापेक्षत्वेन बहिरङ्गत्वाङ्गीकारे श्रीश इत्यादौ तुल्यन्यायेन दीर्घस्यापि यणपेक्षया बहिरङ्गतया समानविषयत्वाभावेन दीर्घस्याचारितार्थ्यासम्भवात् केवलापवादत्वेनैव दीर्घेणोत्सर्गबाधे 'अयजे इन्द्रम्' इत्यादावपि बाधापत्तिरित्युक्तरीत्या बहिरङ्गत्वमादाय 'अपवादोऽपि' इति न्यायप्रवृत्तिर्दुर्वचेति भावः।

ननु पूर्वपक्षिणः प्रथमान्तानामेव बहुव्रीहिरिति नियमाज्ञानेनापवादत्वोक्तेरेकदेशित्वेऽपि सिद्धान्तिनस्तज्ज्ञानेनापवादत्वज्ञानाभावेन वस्तुतोऽन्तरङ्गत्वाद् बहुव्रीहिरिति स्वाभिप्रायप्रकटनेन नैष द्विगुः, कस्तर्हि? बहुव्रीहिः' इति स्वोक्तिसमर्थनं युक्तमेव, न तु 'अपवादोऽपि' इति न्यायेन तत्समर्थनमभिमतमित्यत आह—किञ्चेति। सिद्धेरिति। अपवादत्वानभ्युपगमे परत्वेनैव बहुव्रीहेस्सिद्धत्वात् कथञ्चिदन्तरङ्गत्वसमर्थनायाधिकास्त्यर्थविवक्षणेन तदपवादप्रयासस्य वैयर्थ्यापत्तेरिति भावः।

ननु परत्वान्तरङ्गत्वयोर्योगे तुल्यबलत्वासम्भवेन विप्रतिषेधशास्त्राप्रवृत्त्या 'अन्तरङ्गत्वात्' इत्युपन्यास एव युक्तः। किञ्च, अस्यैकदेशित्वेऽपि 'विशेषापेक्षात् सामान्यापेक्षमन्तरङ्गम्' इति भाष्ये सूचितमेव 'अन्यथोक्तिसम्भव एव न स्यात्' इति कैयटाद्युक्तिर्युक्तैवेत्यत आह—किञ्चोक्तेति। पञ्चगुरित्यर्थः। नैवेति। एवकारेण प्राचीनसम्मतविशेषापेक्षत्वरूपबहिरङ्गत्वहेतोर्व्यावृत्तिः। बहिरङ्गत्वमिति वक्तुं युक्तमिति शेषः। एवञ्चात्र लक्ष्ये अधिकापेक्षत्वेनैव भाष्योक्तबहिरङ्गत्वं निर्वोढुं शक्यमिति भावः। न केवलविशेषापेक्षत्वेनेति। केवलपदेनाधिकापेक्षत्वरूपबहिरङ्गत्वहेतोर्व्यावृत्तिः। एवञ्चाधिकापेक्षत्वशून्यविशेषापेक्षत्वेनैव बहिरङ्गत्वं निर्बाधमिति तु नेत्यर्थः। इतिर्हेतौ। विशेषापेक्षत्वेन बहिरङ्गत्वमनभ्युपगम्याप्यत्राधिकापेक्षत्वेनैव बहिरङ्गत्वस्य सूपपादतया

**किञ्चोक्तरीत्या परत्वेन बाधसिद्धेः। किञ्चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्, न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम्।**

**अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिः, तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये। न चार्थकृतबहिरङ्गत्वस्यानाश्रयणादिदमयुक्तम्, एकदेश्युक्तित्वेनादोषात्।**

---

त्वदुक्तरीत्या विशेषापेक्षत्वेन बहिरङ्गत्ववर्णनमेकदेशिभाष्यारूढमपि न भवतीत्यर्थः। एवञ्च भाष्यस्यान्यथाप्युक्तिसम्भवाद् विशेषापेक्षत्वेन बहिरङ्गत्वस्वीकारे न किञ्चिद् गमकमिति भावः।

ननूभयथापि भाष्यस्य सुयोजत्वेनैतदेवाभिमतम्, न तदुक्तमभिमतमित्यत्र किं मानमत आह—**अत एवेति**। तस्यानभिमतत्वादेवेत्यर्थः। **नोक्तं भाष्य इति**। अन्यथा कान्तरङ्गता इति प्रश्ने उक्तरीत्या सामान्यविशेषधर्मपुरस्कारेणैव तदुपपादितं स्यादिति भावः।

नन्वधिकास्त्यर्थापेक्षत्वेन बहिरङ्गत्वमपि तवानिष्टमित्याशङ्कते—**न चेति**।

एकदेश्युक्तित्वे मानमाह—**अत एवेति**। **तदभिमतमिति**। अधिकास्त्यर्थापेक्षकृतमित्यर्थः। **सिद्धान्तिनेति**। अन्तरङ्गत्वाद् बहुव्रीहिरिति वदन्तमपेक्ष्यैव सिद्धान्ती। परमसिद्धान्ती तु 'नैष द्विगुः, कस्तर्हि बहुव्रीहिः' इति वक्तव्यमेवेति बोध्यम्।

न च नैतदिति द्विगौ तदुक्तापवादत्वस्याङ्गीकृतत्वेन स्वोत्प्रेक्षितान्तरङ्गत्वस्य बहुव्रीहावुक्तरीत्या सम्भवेन वचनमङ्गीकृतमिति भावः।

एवञ्चैतत्सूत्रस्थः सर्वोऽपि ग्रन्थः प्राय एकदेशिन एवेति सूचयितुमिदमुक्तमिति बोध्यम्।

**सूचित इति**। तत्र हि 'अरुदितम्, अरुदित' इत्यत्र 'इडपेक्षयान्तरङ्गास्तामृतमतामः' इत्युक्तम्। वस्तुतस्तामादीनामिति बोध्यम्।

ननु प्रकृतपरिभाषायां प्रत्ययविशेषापेक्षत्वेऽपीटः प्रकृतिविशेषापेक्षत्वेन तौल्यान्न 'पादः पत्' इति सूत्रस्थभाष्यविरोधो दीक्षितादीनाम्। जातम्, तत्कालप्राप्तिकञ्चेत्यर्थद्वयमङ्गीकृतम्। तत्र ज्ञापकद्वयञ्च। प्रथमार्थे 'वाह ऊठ्' इति सूत्रस्थमूड्ग्रहणम्, द्वितीये 'ओमाङोश्च' इति सूत्रस्थाङ्ग्रहणम्। धर्मिग्राहकमानेन प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वस्यापि लाभः। तथा सति असुस्रुवदित्यादौ स्रुधातोर्लुङि तिपि 'सार्वधातुके' इति गुणात् प्राग् नित्यत्वाच्चङि 'द्विर्वचनेऽचि' इति निषेधादुवङभावात् पूर्वं द्वित्वे तत उवङ्गुणयोः प्राप्तौ प्रक्रियाक्रमेण पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाद् गुण एव स्यादित्याशङ्कते—

**अत एवास्तिग्रहणं नोपाध्यर्थम्, किन्त्वस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना 'मत्वर्थे द्विगोः प्रतिषेधो वक्तव्यः' इति वचनेनैतत् सिद्धमित्युक्तम्। अत एव 'तदो सः सा०' इति सूत्रेऽनन्त्ययोरिति चरितार्थम्। अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्यात्वेऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। 'पादः' पत्' इति सूत्रे भाष्यकैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु।**

**नन्वेवम् 'असुस्नुवत्' इत्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत्, न; तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्त्वात्। अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वम्, अङ्गशब्दस्य निमित्तपरत्वात्। इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति 'मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदाम्, ततः सम्बन्धिनाम्'। अर्थानामपि जातिव्यक्तिलिङ्गसङ्ख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितः। तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति 'पट्व्या' इत्यादावन्तरङ्गत्वात् पूर्वं पूर्वयणादेशः, परयणादेशस्य बहिरङ्गतयाऽसिद्धत्वादित्यनेन 'अचः परस्मिन्' इति सूत्रे भाष्ये स्पष्टम्।**

---

**नन्वेवमितीति।** केचिदवतारयन्ति। वस्तुतो गुणशास्त्रीयषष्ठ्यन्तरूपोपकारकसमुदायः असुस्नुव इति। तत्रोवङ्शास्त्रीयषष्ठ्यन्तरूपोपकारकसमुदायः 'असुस्नुवः' इति। तथा च गुणशास्त्रीयोपकारकसमुदाये उवङ्शास्त्रीयोपकारकस्यान्तर्भूतत्वेनोवङोऽन्तरङ्गत्वमस्त्येव, विश्वौह इत्यत्रोक्तरीतिवत्, तथापि 'ओमाङोश्च' इत्यनेन तत्कालप्राप्तिकबहिरङ्गस्यासिद्धत्वं ज्ञापितम्, तन्नापूर्वम्; किन्तु लौकिकसिद्धमेवेति वक्तुमुपक्रमते—**नन्वेवमिति।**

**अल्पनिमित्तत्वाभावेनेति**[1]। अल्पम्=एकम्, स्थानिमात्रं निमित्तं यस्य, तत्त्वाभावेनेत्यर्थः। अनैमित्तिकत्वरूपान्तरङ्गत्वाभावेनेति यावत्। यथा श्रुतन्तु न युक्तम्, 'येन विधिः' इति सूत्रस्थकैयटोक्तरीत्या 'गुणापेक्षयाऽल्पनिमित्तकत्वेनोवङोऽल्पनिमित्तत्वाभावेन' इत्युक्तेरसङ्गतेरिति बोध्यम्।

**अन्तःकार्यत्वरूपेति।** ननु गुणस्य निमित्तं तिप् प्रथमोपस्थितमिति कालिकान्तरङ्गत्वं गुणस्यास्त्येवेति वाच्यम्, सार्वधातुकरूपनिमित्तस्य उपस्थितत्वेऽपि लघूपधगुणस्य तदानीं यावन्निमित्तानामनुपस्थित्यान्तरङ्गत्वं बाधितमित्याशयात्। [2]**अन्तःकार्यित्वञ्चेति।** कार्यमस्यास्तीति कार्यि, निमित्तमित्यर्थः। अन्तर्भूतनिमित्तकत्वरूपमिति यावत्। अन्तःकार्यित्वस्यानेकविधस्य सत्त्वेन प्रकृते कीदृशं तत्? इत्यत आह—**पूर्वोपेति।** लौकिकप्रयोगीयोच्चारणक्रमेणेत्यर्थः।

---

१. 'अल्पनिमित्तत्वाभावात्' इत्यपि पाठः।
२. 'अन्तःकार्यत्वञ्च' इत्यपि पाठः। तत्र बहुव्रीहेस्त्वप्रत्ययो बोध्यम्।

तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव। यथा 'पट्व्या' इत्यत्र पदस्य विभज्यान्वाख्याने, न तु जातस्य बहिरङ्गस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकम्, 'प्रागुक्तलोकन्यायेन तथैव लाभात्' इति 'वाह ऊठ्' सूत्रे कैयटे स्पष्टम्।

अत एव वाय्वोरित्यादौ वलिलोपो यणः स्थानिवत्त्वेन वारितः 'अचः परस्मिन्' इत्यत्र भाष्यकृता। क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम्।

यत्तु, एवं रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति। तच्चिन्त्यम्, 'स्रजिष्ठः' इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य 'प्रकृत्यैकाच्' इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य

---

कथमेतत् सिद्धमित्यत आह—इदञ्चेति। शरीरेति। तदर्थमेत्र कार्यमात्रस्योपयोगादिति भावः। सुहृदामिति। विजातीयप्रीतिविषयत्वं सुहृत्त्वम्। सम्बन्धिपदेनावश्यकश्वशुरादयः।

न च प्रत्यासत्तिरूपतारतम्यमेषां कार्याणां क्रमेण प्रवृत्तौ बीजम्। प्रत्यासत्तितारतम्यञ्च तद्गतप्रीतिवैजात्यम्। एवञ्चैतेषु विजातीयप्रत्यासत्त्यनुरोधेनेष्टत्वेष्टतरत्वेष्टतमत्वादेर्ग्रहः। तदनुरोधेन पूर्वकर्तव्यत्वज्ञानम्। प्रकृते चोभयोरपि कार्ययोर्मध्ये प्रयोक्तुः कस्यापि कार्यस्य प्रत्यासत्तिर्दुर्वचेति वाच्यम्, 'स्योनः' इत्यादौ तत्तत्कार्यनिमित्तयोः पूर्वोपस्थितिविषयत्वपरो [ रूपो ] पस्थितिविषयत्वरूपप्रत्यासन्नतरत्वप्रत्यासन्नत्वादिविवक्षणेनोवङि पूर्वोपस्थितिनिमित्तकत्वरूपान्तरङ्गत्वस्य सत्त्वेनादोषादित्याशयात्। शास्त्रकृत्कल्पित इति। प्रक्रियानिर्वाहायेति शेषः।

कल्पित इत्यनेन वस्तुतस्तेषां युगपदेवोपस्थितिरिति सूचितम्। तत्क्रमेणेति। युगपत्प्राप्तिविषय इति शेषः। तेन 'या' 'सा' इत्यादौ न दोषः।

नन्वसिद्धपरिभाषायामन्तरङ्गपदेनोक्तान्तरङ्गस्यापि ग्रहणे तत्रापि जातबहिरङ्गासिद्धत्वापत्तिः, अत आह—तदपीति। पूर्वप्रवृत्तीति। 'असुस्रुवत्, रियति' इत्यादौ नियामकमेवेति, न तु जातस्य बहिरङ्गस्यासिद्धतानियामकमित्यर्थः।

अत एवेति। एतस्यासिद्धतानियामकत्वाङ्गीकारादेवेत्यर्थः। वाय्वोरिति। अन्यथा लोपस्यान्तर्भूतनिर्मित्तकत्वेनासिद्धत्वाल्लोपाभावसिद्धेरिति भावः।

वस्तुतो वलिलोपविषयेऽन्तरङ्गपरिभाषाऽप्रवृत्तेः पूर्वमुक्तत्वेन स्थानिवत्त्वेन लोपवारणमत्र भाष्योक्तं युक्तमेव।

ननु क्रमेणान्वाख्याने कथं परिभाषानिर्वाहो भाष्याद्युक्तः, अत आह—क्रमेणेति। उक्तोदाहरण इति। पट्व्येत्यादावित्यर्थः। अप्राप्तिरूपमिति। अन्तरङ्गे पूर्वयणादेशे कर्तव्ये तदानीं बहिरङ्गस्य परयणादेशस्योपस्थितिरूपनिमित्ताभावादित्यर्थः।

**नैष्फल्यापत्तेः । त्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासिद्धत्वेनानायासतस्तद्वारणात्, भाष्य ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च, परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च ।**

**इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेति 'इच एकाचोऽम्' इति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्तव्या । 'परन्तपः' इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः ।**

---

'काव्य्, शाल्व्, कलत्र्' इत्यत्र णिजन्तात् क्विपि टिलोपे संयोगान्तलोपाभावाय उक्तदीक्षितमतम् 'यत्त्वेवम्' इत्यादिनाऽनूद्य 'प्रकृत्यैकाच्' इति सूत्रस्थभाषाविरोधेन दूषयति—**नच्चिन्त्यमित्यादिना । जातिपक्षाश्रयणेनेति ।** स्रग्विणमाचष्टे स्रजयतीत्यादौ प्रथमं विनो लोपार्थमेकं लक्षणम्, पुनश्चावृत्त्या विनो लोप एव, न त्वन्यत्कार्यमित्यर्थस्वीकारेण टिलोपाप्राप्तिरिति भावः ।

वस्तुतो विनो लोपस्य 'तक्रकौण्डिन्य' न्यायेन टिलोपापवादत्वात् पुनष्टिलोपाप्राप्तेर्जातिपक्षाश्रयणं व्यर्थमिति बोध्यम् ।

ननु पूर्वोक्तविधान्तरङ्गम् 'संयोगान्तस्य लोपः' इति सूत्रे 'यणः प्रतिषेधो वाच्यः, न वा झलो लोपाद्, 'बहिरङ्गलक्षणत्वाद् वा' इति वार्त्तिकत्रयस्यैकवाक्यतायै क्वचिदाश्रितमपि, न सर्वत्र इति न 'प्रकृत्यैकाच्' इति सूत्रस्थभाष्यविरोधगन्धोऽपीत्यरुचेर्हेत्वन्तरमाह—**भाष्य इति ।** भाष्ये तथाविधस्य मुखतोऽनाश्रयणेऽपि 'अचः परस्मिन्' इति सूत्रे लोकसिद्धमन्तरङ्गत्वं स्वीकुर्वता तदन्तःपातित्वेनेदमपि सूचितमेवेत्यतः पुनर्हेत्वन्तरमाह–**परिभाषायामङ्गशब्दस्येति ।** उद्देश्यनिमित्तोभयरूपसमुदायपरत्वादिति भावः ।

ननु 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यत्रानुत्तरपदाधिकार इत्यपि वक्तुमुचितम्, अन्यथा परन्तप इत्यत्रानया परिभाषया मुमोऽसिद्धत्वादनुस्वारो न स्यात् । तथा द्विषन्तप इत्यत्र संयोगान्तलोपश्च न स्यात् । अत एव श्रीमन्यमित्यत्र 'स्वमोर्नपुंस्कात्' इति लुक्सिद्धये । एवं तर्हि 'सिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वाद् बहिरङ्गलक्षणस्यामोऽन्तरङ्गलक्षणो लुग् न भविष्यतीत्याशङ्क्य, 'नैषा परिभाषेहोत्तरपदाधिकारे शक्या विज्ञातुम्' इति 'इच एकाचोऽम्प्रत्ययवच्च' इति सूत्रोक्तभाष्योक्तं संगच्छत इत्याशङ्कां तृणीकुर्वन्नाह—**इयञ्चेति । पूर्वपक्ष्युक्तिरिति ।** तत्र हि 'अथेह कथं भवितव्यं श्रियमान्मानं मन्यत इति श्रियंमन्यं कुलम्' इति सिद्धान्त्युक्तौ 'स्वमोः' इति लुक् कुतो न ? इति प्रश्ने 'सुपो धातु' इति 'लुग्वद् बाध्यसामान्यचिन्तया अम्विधिसामर्थ्याद् बाध्यते' इति तेनोक्ते, बाध्यविशेषचिन्तामाश्रित्य 'सुपो धातु' इति लुको नाप्राप्तावपि 'स्वमोः' इत्यस्य पुंस्यप्राप्त्या तत्त्वाभावात् कथं तेन बाध इति पूर्वपक्षिणा पृष्टे, एवं तर्ह्यन्तरङ्गे लुकि बहिरङ्गस्यामोऽसिद्धत्वान्न 'स्वमोः' इति लुक्' इति सिद्धान्तिनोक्ते, 'नैषा परिभाषोत्तरपदाधिकारे शक्या विज्ञातुम्' इह हि दोषः

**नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः । आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वम्, 'अन्तरङ्गस्यासिद्धत्वात्' दित्यसिद्धवत्सूत्रे भाष्येस्पष्टम् ।**

**एवं सिचि वृद्धेः 'येन नाप्राप्ति' न्यायेनान्तरङ्गबाधकत्वमूलकम् 'न सिच्यन्तरङ्गमस्ति' इति 'इको गुण' इति सूत्रे भाष्ये स्पष्टम् ॥ ५० ॥**

---

स्यात्-परन्तपः । तस्माच्छिन्नमन्यमित्येव भवितव्यमिति पूर्वपक्षिण उक्तिः । अस्य तदुक्तित्वं मूल एव स्फुटम् । अत्र विषये श्रीशब्दो ब्राह्मणकुले स्वलिङ्गपरित्यागेन वर्तते । यथा 'गोपदयोगात् स्त्रियां वर्तमानाः स्वलिङ्गमपहाय स्त्रीलिङ्गमुपाददत इति 'स्वमोः' इत्यस्य प्राप्तिः, इति कैयटः ।

ननु भाष्यकारवचनस्य प्रामाण्याविशेषादेव 'तर्ह्यन्तरङ्गे लुकि' इत्यस्यैव कुतो नैकदेश्युक्तित्वमिति शङ्कां निराकरोति—**नव्यमतेऽपीति** । दीक्षितादिमतेऽपीत्यर्थः ।

ननु पपुष इत्यादावनया परिभाषया सम्प्रसारणस्य बहिरङ्गत्वेनासिद्धत्वादल्लोपादीनि न स्युरित्यत आह—**आभीयेऽन्तरङ्ग** इति ।

अस्यायं भावः—अन्तरङ्गपरिभाषायाः 'वाह ऊठ्' सूत्रस्थतयाऽऽभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्टया त्रिपाद्या इवासिद्धत्वेनात्र तस्या अप्रवृत्तेः । 'अन्तरङ्गशास्त्राश्रय एव अन्तरङ्गपरिभाषया आश्रयः' इति समानाश्रयत्व ( त्वं ) व्याहतमिति । न च कार्यकालपक्षे विधिना आतो लोपादिना परिभाषाऽऽकर्षणं दुर्वारमिति वाच्यम्, अन्तरङ्गलोपादिविधिं प्रति परिभाषाया अप्यसिद्धत्वेन तदाऽऽकर्षणस्यासंभवात् ।

ननु 'अचिरायीत्, अजिरायीत्' इत्यत्रान्तरङ्गत्वाद् गुणेऽजा ( या ) देशे च यान्तत्वाद् वृद्धिनिषेधस्स्यात् ? अतस्तद्वारणार्थम् 'न सिच्यन्तरङ्गत्व ( ? ) मस्ति"[१] इत्यपि अन्तरङ्गपरिभाषाया अपवादरूपं वचनान्तरं वक्तव्यम् । अस्मिन् वचने ज्ञापकं च 'ह्ययन्त' इति सूत्रे श्विग्रहणम् । अन्यथा 'अश्वयीत्' इत्यादौ गुणायादेशयोः कृतयोर्यान्तत्वेन निषेधसिद्धेः किं तेन ? तेन 'अनैषीत्, अचैषीत्' इत्यादौ न गुण इति केषाञ्चिदुक्तिः, सा निष्फलेति वक्तुमुपक्रमते—**एवं सिचीति** । **अन्तरङ्गेति** । गुणरूपेत्यर्थः ।

**बाधकत्वमूलकमिति** । न च 'अनैषीत्' इत्यादौ सिचि वृद्धिविषये सर्वत्र नाप्राप्तस्य 'सार्वधातुक' इति गुणस्य निरवकाशत्वाद् बाधेऽप्यचैषीदित्यादौ

---

१. तथा हि भाष्यम्—'वृद्धिविधौ स्थान्यनिर्देशात् सिचि वृद्धेरिग्लक्षणत्वसंपादनद्वारा 'क्ङिति' इति निषेधप्रवर्तनाय वृद्धिग्रहणम्—न्यधुवीत् । नैतदस्ति, अन्तरङ्गत्वादुवङि कृतेऽनन्त्यत्वाद् वृद्धिर्न प्राप्नोति । एवं तर्हि 'न सिच्यन्तरङ्गमस्ति, यदयम् "ह्ययन्त" इत्यत्र णिश्विग्रहणं करोति' ।

**नन्वेवम्, 'अक्षद्यूः' इत्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यात्, अत आह—**

**नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥**

**अत्र 'षत्वतुकोः' इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्। अन्यथा 'अधीत्य, प्रेत्य' इत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाद् ल्यबुत्पत्तिपर्यन्तमप्यसंहितयावस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैजादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव।**

---

लघूपधगुणस्यापि प्राप्त्या तद्विषयेऽस्य नाप्राप्त्यसंभवेन बाधायोगाद् वृद्धौ परत्वाल्लघूपधगुणो दुर्वार इति वाच्यम्, बाध्यसामान्यचिन्ताश्रयणेनादोष इत्याशयादिति दिगिति शिवम् ॥ ५० ॥

अन्तरङ्गपरिभाषास्वीकारस्यावश्यकत्वमुपपाद्य तत्रातिव्याप्तिं वारयितुमाशङ्कते—**नन्वेवमिति**। सिजाभीयत्रि पाद्यन्यत्रान्तरङ्गपरिभाषाप्रवृत्त्यङ्गीकार इत्यर्थः। अक्षद्यूरित्यादावियादिना ह्रय इत्यत्रायादेशस्य संग्रहः। **बहिरङ्गेति**। ऊठ्शास्त्रीयषष्ठचन्तरूपनिमित्तसमुदाये यण्शास्त्रीयषष्ठचन्तरूप (स्य) इकोऽन्तर्भूतत्वेन यणोऽन्तरङ्गत्वम्, ऊठो बहिरङ्गत्वमिति भावः।

परिभाषां समूलयति—**अत्रेति**। परिभाषायामित्यर्थः।

यद्यपि भाष्ये 'यदयं षत्वतुकोरसिद्धः' इत्याहेत्युक्तम्, तथापि षत्वग्रहणं समासनिर्दिष्टत्वादुक्तम्, न तु ज्ञापकम्; वक्ष्यमाणयुक्तेः, अत आह—**तुग्ग्रहणमिति**।

तत्त्वमुपपादयति—**अन्यथेति**। प्रकृतपरिभाषानङ्गीकार इत्यर्थः। **अधीत्येति**। क्त्वान्तस्याधीत्यनेन योगे धातूपसर्गयोः संहिताया नित्यत्वेनान्तरङ्गनिमित्तविनाशकल्यप्प्रयोजकसमासस्यान्तरङ्गापेक्षया बलवत्त्वेऽपि प्रकृते तदभावादन्तरङ्गत्वाद्दीर्घे पूर्वान्तवद्भावेन गतित्वाद् व्यपदेशिवद्भावेन कृदन्तत्वात् ततस्समासे ल्यपि तुक एकपदसम्बन्धिप्रकृतिप्रत्ययमात्रापेक्षत्वेनान्तरङ्गत्वाद् दीर्घस्यासिद्धत्वमिति भावः।

न च दीर्घोत्तरं ह्रस्वाभावादन्तरङ्गकर्तव्यताया असम्भवः, पूर्वं ह्रस्वसत्त्वेऽपि पित्परत्वाभावात् कर्तव्यताया असंभवादसिद्धत्वं कथमिति वाच्यम्, असिद्धत्वोत्तरं ह्रस्वबुद्ध्यान्तरङ्गप्राप्तेस्सुवचत्वेन तद्विषयत्वमित्याशयात्।

अत्र केचित्—अधीत्येत्यादौ समासे कृते संहिताया अविवक्षया प्रथमं दीर्घाभावे ततश्चैकपदाश्रयत्वेनान्तरङ्गत्वात् तुक्यधीत्येत्यादिसिद्धावपि 'नाजानन्तर्ये' इत्यस्या जातबहिरङ्गस्यासिद्धत्वाभावबोधकत्वं वक्ष्यमाणं न सिध्यतीति वदन्ति, तत्खण्डयति—**असंहितयेति**। ततश्च प्रथमं दीर्घे ततो ल्यपि तुकि कर्त्तव्ये जातदीर्घस्यासिद्धत्वाभावो बोध्यत इति न वक्ष्यमाणपरिभाषार्थविरोध इति भावः। वस्तुतोऽत्र धातूपसर्गयोः कार्यत्वेन संहिताया नित्यत्वेनेति वक्तुं युक्तम्।

यद्वा, अधीत्येत्यादावित्यादिना केत्यस्य ग्रहणेन तदभिप्रायेणेयमुक्तिः। अत्र हि 'ईषदर्थे' इत्यनेन कादेश इति बोध्यम्। ननु 'वीच्छत्रम्, सूच्छत्रम्' इत्यादौ पदान्तपदाद्योरेकादेशसत्त्वेन दीर्घस्यासिद्धत्वात् 'छे च' इति नित्यतुक्-सम्पादनेन तुकश्चारितार्थ्यम्। अन्यथा 'पदान्ताद् वा' इति वैकल्पिकतुगापत्तिः। नहि तुगपेक्षयात्र दीर्घस्य बहिरङ्गत्वम्, पदद्वयनिमित्तकत्वेनोभयोः समत्वादिति चेत्, न; 'षत्वतुकोः' इत्यत्र षत्वसाहचर्यान्नित्यतुग्विधावेवैकादेशस्यासिद्धत्वानु-मानात्। तथा चात्र 'छे च' इति तुक्येकादेशस्यासिद्धत्वेऽपि, 'पदान्ताद् वा' इति तुग्विधावसिद्धत्वाभावेन 'निषेधाश्च बलीयांसः' इति परिभाषया 'पदान्ताद् वा' इति वैकल्पिकतुक एव प्राप्त्या तुग्ग्रहणाभावेऽपि 'पदान्ताद् वा' इति तुक एव प्राप्त्या 'वीच्छत्रम्' इत्यत्र तुग्ग्रहणेनासिद्धत्वे तदभावेऽसिद्धत्वाभावे च न फलभेद इति तुग्ग्रहणस्य न प्रागुक्तं फलम्। अत एव 'नाजानन्तर्ये' इति परि-भाषायां तुग्ग्रहणज्ञापक ( त्व ) प्रतिपादकभाष्यं संगच्छत इति दिक्।

न च 'षत्वतुकोरसिद्धः' इत्यत्र षत्वे कर्तव्ये यत् पदसम्बन्धि सस्य षत्वं प्राप्तं तत् पदसम्बन्धिवर्णेन सहैकादेशस्यैव ग्रहणम्; यथा कोऽसिचसित्यादौ। तत्साहचर्यात् तुक्यप्येवमेव। नहि वेः=पक्षिण इः वीः, तस्य च्छत्रं वीच्छत्र-मित्यादौ छत्रपदस्य तुक् तत्पदसम्बन्धिवर्णेनैकादेशोऽस्तीति वाच्यम्, अङ्गुलेरिः अङ्गुलीः, तस्य संगोऽङ्गुलीसङ्ग इत्यादौ षत्वेऽपि तथा नियमाभावेन साहचर्या-श्रयणस्य वक्तुमशक्यत्वात्। **एकदेशे ल्यपीति**। 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति तु धर्मिग्राहकमानेनान्तरङ्गनिमित्तविनाशकल्यप एव प्राबल्य-बोधकमिति भावः।

न च 'अन्तरङ्गनिमित्तकविनाशक' इति निवेशे फलाभाव इति वाच्यम्, 'निरेष्य गतः, अभिवाद्य गतः' इत्यादौ निरादिपूर्वकादिषिवद्योर्णिचि 'अन्तरङ्गा-नपि' इति परिभाषाया उक्तरीत्याऽत्राप्रवृत्त्या लघूपधगुणादौ लघुपूर्वत्वाभावात् 'ल्यपि लघुपूर्वात्' इति णेरयादेशाभावस्य फलत्वात्। अन्यथाऽनया पूर्वं ल्यपि गुणायादेशयोः प्राप्तावन्तरङ्गत्वात् प्राप्तमपि लघूपधगुणं बाधित्वा प्रतिपदोक्त-त्वात् 'ल्यपि लघुपूर्वात्' इति णेरयादेशो दुर्वार एव स्यात्।

अन्ये तु, प्रकृत्येत्यादावुक्तनिवेशस्य पूर्वं प्रादेशाद्युदात्तत्वसिद्धिः फलम्। अन्यथा प्रत्ययस्यान्तरङ्गमपि 'निपाता आद्युदात्ताः' इति स्वरं बाधित्वानया पूर्वं ल्यपि पश्चात् 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदस्य प्रकृतिभावादस्वरस्यैव श्रवणा-पत्तिरित्याहुः, तन्न; तत्र ल्यपोऽन्तरङ्गनिमित्तविनाशकत्वस्यैव सत्त्वेनोक्तार्थ-स्वीकारेऽपि दोषतादवस्थ्यादिति ध्येयम्।

यत्तु, उक्तनिवेशे पराजग्ध्येत्यस्यासिद्धिः। तथाहि—अत्र ल्यपोरन्तरङ्ग-निमित्तविनाशकत्वाभावेनान्तरङ्गत्वाल्ल्यपः पूर्वमेकादेशे जग्धि बाधित्वाऽनया ल्यपि पश्चाज्जग्ध्यादेशे नैकादेशेनैकादेशस्यापि अपहारापत्तिः। मम त्वेकादेशात् पूर्वमनया ल्यपि तत एकादेशजग्धिभावयोः प्राप्तावन्तरङ्गमप्येकादेशं बाधित्वा

**'पदद्वयसम्बन्धिवर्णद्वयापेक्षं बहिरङ्गम्' इति 'प्रेद्धः' इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन 'न धातुलोप' इति सूत्रे 'संयोगान्तस्य लोपः' इति सूत्रे च भाष्ये स्पष्टम् ।**

**यत्तु, षत्वग्रहणमपि ज्ञापकम्, अन्यथा 'कोऽसिचत्' इत्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति । तन्न, इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात् ।**

---

प्रतिपदविधित्वेन जग्ध्यादेशे तत्सिद्धिरिति वदन्ति, तन्न; स्वेन प्रकृतिरेवान्तरङ्गनिमित्तविनाशकस्यैव प्राबल्यमिति तदर्थात् । पराजग्ध्येत्यत्र ल्यप्प्रवृत्त्युत्तरं जग्ध्यैकादेशयोः प्राप्तौ प्रतिपदविधित्वेन जग्ध्यादेशस्यैव प्राप्त्याऽस्ति स्वप्रकृतिद्वारा ल्यपोऽन्तरङ्गैकादेशनिमित्तविनाशकत्वम् ।

नन्वन्यतरनिमित्तसमुदायेऽन्यतरनिमित्तसमुदायस्यान्तर्भूतत्वाभावात् कथं बहिरङ्गत्वम् ? अत आह—**पदद्वयेति** । ननु प्रेद्ध इत्यादौ पूर्वोपस्थितनिमित्तकत्वेन निषेधस्यान्तरङ्गत्वम्, गुणस्य त्वनन्तरोपस्थितिविनिमित्तकत्वेन बहिरङ्गत्वम्, न तु पदद्वयसम्बन्धिवर्णद्वयनिमित्तकत्वेनेत्यरुचेराह—**संयोगान्तस्य लोप इति सूत्रे चेति** । तत्र हि 'दध्यत्रेत्यत्र बहिरङ्गो यणादेशः अन्तरङ्गो लोपः' इत्युक्तम् । **पदद्वयसम्बन्धीति** विशेषणस्य भाष्येऽनुपादानेऽपि वस्तुतस्तथात्वमस्तीत्यत्रैव भाष्यतात्पर्यम् ।

वस्तुतोऽपरनिमित्तकत्वेन संयोगान्तलोपस्यान्तरङ्गत्वम्, यणः परनिमित्तकत्वेन बहिरङ्गत्वमिति भाष्यतात्पर्यस्य वक्तुं शक्यत्वेनैतद्भाष्यात् पदद्वयनिमित्तकत्वेन बहिरङ्गत्वप्रतिपादनं चिन्त्यमिदं ( इति ) कैयटाद्युक्तिं द्योति—**यत्त्विति** ।

नन्वधीत्येत्यादावेकादेशस्य पूर्वान्तवद्भावेन पूर्वपदसम्बन्धित्वात्तुकः पदद्वयसम्बन्धिनिमित्तकत्वेन बहिरङ्गत्वेऽप्येकादेशप्राक्कालिकैकपदस्थोद्देश्यनिमित्तकत्वेनान्तरङ्गत्ववत् षत्वस्यान्तरङ्गत्वमभ्युपेत्य ज्ञापकत्वं ब्रूषे ? उत, एकादेशोत्तरम्परादिवद्भावेनैकपदस्थोद्देश्यनिमित्तकत्वेन वा ? नाद्य इत्याह—**इणः पूर्वेति** । एकादेशात् प्रागिणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिनिमित्तकत्वेनान्तरङ्गत्वं दुरुपपादमिति भावः ।

न च तत्काले अकारेण व्यवधानान्न षत्वप्राप्तिरिति वाच्यम्, अन्तरङ्गस्य बहिरङ्गप्रवृत्तेः पूर्वं नियमेन प्राप्तिविषये एवान्तरङ्गासिद्धत्वमिति नियमाभावात् समत्वादिति ।

ननु समत्वेनान्तरङ्गत्वाभावादेतत्परिभाषाया अप्राप्त्या तद्वैयर्थ्यासम्भवेऽपि सिद्धान्ते सूत्रे षत्वग्रहणस्य प्रयोजनं दुर्वचम्, एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणात् सिचदित्यस्यैकदेशविकृतन्यायेन पदत्वात् 'सात्पदाद्योः' इति निषेधात् ।

**एकादेशस्य परादित्वेनौसिचदित्यस्य पदत्वेन पदादित्वाभावान्न 'सात्पदाद्योः' इत्यनेन निषेधः। त्रैपादिकेऽन्तरङ्गे कार्यकालपक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ।**

---

यद्यपि तेन न्यायेन पदत्वानतिदेशस्य 'एकदेशविकृत' इति परिभाषायां सिद्धान्तितरीत्या तु पदादादिः पदादिरिति पञ्चमीसमासेन षत्वनिषेधस्य सिद्धेरित्यत आह–**एकादेशस्य परादित्वेनेति** । ननु परादित्वेन विशिष्टस्य पदत्वेऽपि उभयत आश्रयणाभावेन पूर्वान्तवद्भावो नास्त्यत्रेत्यत्र प्रमाणाभावादुक्तरीत्या 'सात्पदाद्योः' इति निषेधेन षत्वाभावसिद्धेरिदमुदाहरणं षत्वग्रहणस्य चिन्त्यम् । किन्तु पूर्वोक्ताङ्गुलीसङ्गो बहूंष्ट्वमिति च । अन्त्ये बहु उङ्खतीति विग्रहे उखि गतावित्यतः क्विपि सवर्णदीर्घे 'बहूङ्ख' इति । ततो भावार्थकत्वप्रत्यये खकारस्य संयोगान्तलोपे 'नश्छवि' इति रुत्वे 'अत्रानुनासिक' इति अनुनासिकत्वे विसर्गे 'विसर्जनीयस्य सः' इति सत्वे ह्रस्वात्परत्वाभावेन 'ह्रस्वात्तादौ' इति षत्वाप्राप्तौ 'षत्वतुकोः' इत्यनेनैकादेशस्यासिद्धत्वेन 'ह्रस्वात्तादौ' इति षत्वप्रवृत्तिः 'षत्वतुकोः' इत्यत्र षत्वग्रहणे फलम् । 'सात्पदाद्योः' इति निषेधस्तु 'आदेशप्रत्यययोः' इत्यस्यैव, न तु 'ह्रस्वात्तादौ' इत्यस्यापि । तथा च बहूंष्ट्वमित्यत्र 'ह्रस्वात्तादौ' इति सूत्रे तदाद्यंशोपस्थित्याऽस्यैव बहिरङ्गत्वेन षत्वग्रहणमिति प्रकृतपरिभाषायां ज्ञापकमेवेति बोध्यम् ।

बहुषु वसतीति विग्रहे वसतेः क्विपि सम्प्रसारणे ततस्त्वप्रत्यये बहुस्त्वमित्येव । तथाहि—बहु उ सत्वमिति स्थिते दीर्घरुत्वषत्वानां प्राप्तौ 'षत्वतुकोः' इत्यसिद्धत्वेन दीर्घाप्रवृत्त्या षत्वस्यासिद्धत्वाद् रुत्वे 'र्वोः' इति दीर्घे, ततः षत्वे कर्तव्ये एकादेशस्यासिद्धत्वेऽपि ह्रस्वात् परत्वाभावेन षत्वाप्राप्तेः ।

किञ्च, अकृतसन्धेरेव प्रत्ययोत्पत्तावपि चतुष्ट्वमित्यत्र षत्वस्य चारितार्थ्येन षत्वरुत्वदृष्टयाऽसिद्धत्वेन पूर्वं रुत्वम्, ततः 'र्वोः' इति दीर्घे विसर्गसत्वयोः कृतयोः षत्वे कर्तव्ये दीर्घस्यासिद्धत्वाभावेन ह्रस्वात् परत्वाभावेन षत्वाप्राप्तिरिति तत्त्वमिति भाति । एतेन उशब्दाल्लालसायां क्यचि सुगागमे ततः क्विपि अल्लोपयलोपयोः, तस्य भानुशब्देन समासे, भानौ वसतीति वा भानूः, तस्य भावो भानूष्ट्वमित्यत्र 'ह्रस्वात्तादौ' इति षत्वसिद्धिः 'षत्वतुकोः' इत्यत्र षत्वग्रहणस्य फलम् । अत्र न कथमप्यशास्त्रीयत्त्वशङ्कापीति भैरवमिश्रादीनां भ्रमो निरस्तः, उक्तयुक्तेः । बहूंष्ट्वमितिवद् भानूष्ट्वमित्यत्र षत्वग्रहणस्य फलं भवत्येवेति बोध्यम् ।

किञ्च, कोऽसिचदित्यत्र परादिवद्भावोऽपि दुर्लभः, 'सात्पदाद्योः' इति निषेधप्रवृत्तिप्रतिबन्धेऽशास्त्रीये कार्येऽतिदेशाप्रवृत्तेः । अथ तत्प्रतिबन्धकस्यापि षत्वप्रयोजकत्वेन शास्त्रीयकार्यत्वादतिदेशः प्रवर्तत इत्यभिमानः, तदा इण उत्तरपदसम्बन्धित्वादन्तरङ्गत्वं सुस्थमिति षत्वग्रहणज्ञापकत्वं कैयटाद्युक्तं युक्तमेवेति ।

**परिभाषार्थस्तु—अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिः । बहिष्पदेन बहिरङ्गम्, तस्य भावो बहिरङ्गत्वम् । तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः, न प्राप्तिरिति ।**

**'असिद्धं बहिरङ्गम्' इत्युक्त्वा 'नाजानन्तर्ये इति वक्ष्यामि' इति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात् । तेन 'पचावेदम्'**

---

यत्तु, हरदत्तसीरदेवादयः—द्विवचनान्तेन समासः, द्वयमस्तीत्यध्याहारः, अचोरानन्तर्यं यत्र द्वयमस्ति बहिरङ्गं प्रवृत्तमन्तरङ्गं प्राप्नोति, अन्तरङ्गं प्रवृत्तं बहिरङ्गं वा; तत्र बहिरङ्गपरिभाषा नेति परिभाषार्थः । तथा च अन्तरङ्गे, बहिरङ्गे, उभयत्र वाऽचोऽजानन्तर्ये बहिरङ्गपरिभाषाप्रवृत्तिर्नेति फलितमित्याहुः, तत्, न; एतज्ज्ञापकपरक्तितुग्ग्रहणवैयर्थ्यापत्तेः, पचावेदमित्याद्यसिद्धयापत्तेः, 'न धातुलोपः' इति सूत्रस्थभाष्यविरोधापत्तेः, धर्मिग्राहकमानविरोधापत्तेश्च, इत्यत आह—**परिभाषेति** । अच इति सम्बन्धे सामान्ये षष्ठी, न तु स्थाने, मूलविरोधापत्तेः । निरूपितत्वं षष्ठ्यर्थ इति बोध्यम् । आनन्तर्य्यमव्यवधानम् । तच्च सप्तम्यन्ततया पञ्चम्यन्ततया वा उपात्तपदबोध्यनिरूपितम् । एवञ्चान्यस्य चान्येन वाच आनन्तर्य्यं विवक्षितम् । अच आनन्तर्यं पौर्वापर्यं निमित्तभूतं यस्मिन्नन्तरङ्गे इति बहुव्रीहिः ।

ज्ञापकसाजात्यादाह—**जातस्येति** । **तत्प्रयुक्तासिद्धत्वस्येति** । एवञ्च बहिरङ्गपदं बहिरङ्गत्वप्रयोज्यासिद्धत्वे लाक्षणिकमिति बोध्यम् ।

न च लक्षणैव चेदाश्रीयते, तदा बहिरङ्गपदस्यासिद्धपरिभाषायां लक्षणास्तु । एवञ्चाचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये असिद्धपरिभाषा न प्रवर्तते इत्यस्त्विति वाच्यम्, त्वान्तस्य लक्षणा यदि परिभाषायां स्यात्, तदा त्वप्रत्ययोपादानमनर्थमापद्येत, शक्यार्थस्य स्वाश्रयवाचकपदघटितत्वं सम्बन्ध इति वक्तव्यम् । तदपेक्षया त्वप्रत्ययमनुपादाय बहिस्पदस्य स्वरूपशक्तस्य घटितत्वसम्बन्धेन परिभाषायां लक्षणाया उचितत्वात्, साजात्याल्लब्धस्य जातस्येत्यस्य तदा लाभश्च स्यादिति भावः ।

परिभाषार्थमध्ये यदुक्तम् 'अन्तरङ्गे कर्तव्ये' इति तल्लाभोपायमाह—**असिद्धमित्यादि** । **अनुवृत्तिसूचनादिति** । वस्तुतस्तु, अन्तरङ्गपरिभाषायाः 'वाह ऊठ्' इति सूत्रस्थोड्ग्रहणेन ज्ञापितत्वात् 'वाह ऊठ्' इति सूत्रदेशत्वम्, अस्याश्च 'षत्वतुकोः' इति तुग्ग्रहणेन ज्ञापितत्वेन प्रथमपादस्थत्वेन चानुवृत्त्यसम्भवाच्चिन्त्यमेवैतत् ।

परे तु बहिष्ट्वपदार्थस्य नित्यसाकाङ्क्षतया प्रत्यासत्त्याऽजानन्तर्यनिरूपितस्यैव तस्य ग्रहणेनान्तरङ्गस्य इत्यस्य लाभसंभव इत्याहुः । तेन='अचोऽन्यानन्तर्यनिमित्तके' इत्यर्थेन । **भावादिति** । धातोरित्यनुवृत्तस्य विहितविशेषणत्वमित्याशयः ।

इत्यादौ न दोषः, अन्तरङ्गस्याच्स्थानिककार्यस्यैत्वस्यान्यानन्तर्यनिमित्त-कत्वाभावात्।

'जातस्य बहिरङ्गस्य' इत्युक्त्या 'अयजे इन्द्रम्, धियति' इत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम्। अत एव 'इण्ङशीनामाद्गुणः' सवर्णदीर्घत्वाच्छचङन्तस्यान्तरङ्गलक्षणत्वात्' इत्यादि सङ्गच्छते। अत एव ओमाङोश्च' इत्याङ्ग्रहणं चरितार्थम्। तद्धि 'शिव+आ+इह' इति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद् गुणे वृद्धिबाध-

---

वस्तुतः 'सवाभ्याम्' इति सूत्रे अचोऽन्यानन्तर्यसत्त्वेन 'नाजानन्तर्ये' इति निषेधादन्तरङ्गपरिभाषाया अप्रवृत्त्या एधस्वेदमित्यादावमादेशापत्तिः। तदर्थम् 'नाजानन्तर्य्ये' इति परिभाषाया अनित्यत्वं स्वीकार्यं स्यात्। तस्मात् 'षत्व-तुकोः' इति तुग्ग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वज्ञापनस्यैव न्याय्यत्वादियं परिभाषा व्यर्थैवेति दिगिति **केचित्**।

परे नु, 'सवाभ्याम्' इत्यत्र सकारात् परस्य लोडेतोऽनतिदिष्टस्यैव संभवेन तत्साहचर्याद् वकारात्परस्यापि अनतिदिष्टस्यैव ग्रहणमिति एधस्वेद-मित्यत्र एकारस्य आद्गुणनिष्पन्नत्वेन'सवाभ्याम्' इत्यस्याप्रवृत्त्या नाजानन्तर्य-स्यानित्यत्वे फलाभावात् 'वस्तुतस्तु' इत्यारभ्य 'केचित्' इत्यन्तग्रन्थश्चिन्त्य एवेत्याहुः।

**जातस्येति**। न च 'अयजे इन्द्रम्' इत्यत्र पदसंस्कारपक्षे न दोष इत्यत आह—**धिय इतीति**। नन्वियङ्विधौ अजादिप्रत्ययस्य धातुविशेषणत्वेनेवर्णो-वर्णान्तधातोरन्यानन्तर्यसत्त्वेऽप्यचोऽन्यानन्तर्याभावेन जातस्येत्यस्याभावेऽपि 'नाजानन्तर्य्ये' इत्यस्याप्राप्त्यान्तरङ्गपरिभाषयैव तत्सिद्धिरित्यत आह—**आदौ** [दावि] ति। आदिना स्योन इत्यस्य संग्रहः। जातस्येति निवेशे मानमाह—**अत एव 'ओम्' इति**। जातस्येति निवेशादेवेत्यर्थः। **बलिलोपापत्तिरिति**। बलिलोपे अन्तरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वेन चिन्त्यमिदम्।

**अत एवेति**। अज्निरूपितमान्तर्यमनिवेश्याज्निष्ठान्यानन्तर्यस्य निवेशा-देवेत्यर्थः। अन्यथा=अनित्यासिद्धपरिभाषया निर्वाहे। **पदत्वाश्रयत्वेनेति**। पद-त्वनिमित्तकत्वेनेत्यर्थः। इदं दीक्षितादिरीत्या। स्वमते तु अन्तरङ्गपरिभाषाया अप्रवृत्तिरिति अन्तरङ्गपरिभाषायां स्वेनोक्तेरिति बोध्यम्।

बृहद्विवरणकारोक्तरीत्या शङ्कते—**न चैवमिति**। **अनावश्यकत्वबोधना-दिति**। वस्तुतः 'श्रौतमजानन्तर्यं गृह्यते' इति भाष्यविरोधोद्भावनं भ्रमः, धर्मि-ग्राहकमानादिति। तत्, न; 'अधीत्य' इत्यादौ 'षत्वतुकोः' इत्यस्य प्रवृत्तेर्धर्मि-ग्राहकमानत्वस्य वक्तुमशक्यत्वात्। एतेन प्राचीनमते ऊड्ग्रहणेनान्तरङ्गपरि-भाषायां ज्ञापितायामप्यनया निषेधात् स्वांशे चारितार्थ्याभाव इति शङ्का परास्ता।

नार्थम्। न च 'अक्षद्यूः' इत्यत्र यणि कृते ऊठोऽसिद्धत्वाद् वलिलोपापत्तिरिति वाच्यम्; अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति, तत्र च कर्तव्ये नासिद्धत्वमिति तदर्थात्। असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः।

अत एव 'नलोपः सुप्' इति सूत्रे कृति तुग्ग्रहणं चरितार्थम्। अन्यथा 'वृत्रहाभ्याम्' इत्यादौ बहिर्भूताभ्यां निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। मम तु तुक्यजानन्तर्यसत्त्वान्न दोषः।

न चैवं सति 'ह्रस्वस्य पिति०' इति सूत्रस्थभाष्यविरोधः। तत्र हि 'ग्रामणिपुत्रः' इत्यत्र 'इको ह्रस्वोऽङ्यः' इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्। 'नाजानन्तर्ये' इत्यस्य सत्त्वे तत्र तदप्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्; तेन भाष्येणास्या अनावश्यकत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्।

अत एव 'अचः परस्मिन्०' इति सूत्रे भाष्ये 'पटु ई आ' इत्यत्र परयणादेशस्यानयाऽसिद्धत्वात् पूर्वयणादेशः साधितः। अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता। अत एवान्तरङ्गपरिभाषामुपक्रम्य 'विप्रतिषेध०' सूत्रेऽस्या बहूनि प्रयोजनानि सन्ति, तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं च दोषेषु' इत्युक्तम् 'सम्प्रसारणाच्च' इति सूत्रे भाष्ये। प्रतिविधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम्॥ ५१॥

---

'पटु ई आ' इत्यत्रेति। इदमपि चिन्त्यम्, अनया जातस्यैवासिद्धत्वाङ्गीकारस्य प्रकृतपरिभाषार्थनिरूपणावसरे एव तेनोक्तेरिति। तदपि न; 'अचः परस्मिन्' इत्यस्योदाहरणोक्त्या पूर्वं परयणादेशे जाते जातबहिरङ्गासिद्धविषयत्वेन 'नाजानन्तर्ये' परिभाषाप्राप्तावपि तदनाश्रित्यान्तरङ्गपरिभाषाऽप्रवृत्त्यनित्यत्वस्य वर्णने तात्पर्याद् विरोधस्य स्पष्टत्वात्। भाष्ये पुनः क्वापि नोल्लिखितेति। विप्रतिषेधसूत्रे कण्ठत उक्ता परिभाषा, अत्र पुनरनुक्तेत्यर्थ इति न युक्तम्, अनुगमस्य सर्वथा कर्तुमशक्यत्वात्। अनित्यत्वाश्रयणमेवेति। तथा सति अन्तरङ्गपरिभाषाया अपवादभूतानाम् 'अन्तरङ्गानपि' इत्यादिपरिभाषाणां वैयर्थ्यायैतत्कथनं ग्रन्थकृतामेव शोभत इति शिवम्॥ ५१॥

अजानन्तर्यान्तरङ्गविषये 'अक्षद्यूः' इत्यादौ 'असिद्धं बहिरङ्गम्' इति परिभाषायाः परिभाषान्तरेणातिव्याप्तिं परिहृत्येदानीं बहिरङ्गलुग्विषयकगोमत्प्रिय इत्यादौ तदतिव्याप्तिं परिहर्तुम् 'अन्तरङ्गानपि विधीन्' इति परिभाषान्तरमवतारयति नन्वेवमिति। हल्ङ्यादिलोप इति। ततोऽपि परत्वाद् दीर्घापादनं प्राचोक्तमयुक्तम्, अकृतव्यूहपरिभाषाया गतार्थत्वात्, अपरनिमित्तकत्वेन हल्ङ्यादिलोपस्य दीर्घापेक्षयान्तरङ्गत्वाच्चेति सूचयितुं लोपोक्तिः।

नन्वेवम् 'गोमत्प्रियः' इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्ग लुकं बाधित्वाऽन्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युः, अत आह—

अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ॥ ५२ ॥

---

अन्तरङ्गानपीति। 'अपि' शब्देनान्तरङ्गापेक्षया बलवत्त्वेऽन्यापेक्षया बलवत्त्वे का कथेति सूचितम्। तत्फलं तु 'तत् कुलम्' इत्यादौ परमप्यत्वं बाधित्वा लुक्, तथा 'ह्यः, श्वः' इत्यादौ परमपि हल्ङ्यादिलोपं बाधित्वाऽनेन 'अव्ययादाप्सुपः' इति लुक्, अन्यथा परत्वाद् हल्ङ्यादिलोपे 'अत्वसन्तस्य' इति दीर्घः स्यादिति भावः।

नन्वेवम् 'भवतात्' इत्यादौ तातङमनेन बाधित्वा हेर्लुक् स्यात्, तथा 'त्वं कुलम्' इत्यादौ 'ङेप्रथमयोः' इत्यमं बाधित्वा 'स्वमोः' इति लुक् स्यादिति चेत्, न; अस्या ज्ञापकसिद्धत्वेनासार्वत्रिकत्वादिति समाधानस्य भवतादिति प्रतीके शेखरे स्पष्टत्वात्[1]।

वस्तुतस्तु 'अन्तरङ्गानपि' इति 'अपि' घटितपाठो न कुत्रापि भाष्ये दृश्यते। अत एव 'स्वमोर्नपुंस्कात्' इत्यत्र 'अपि' घटितपाठः केषाञ्चिन्मतेनोपन्यस्तः कैयटेन। तथा च बहिरङ्गलुक एवानेन बलवत्त्वम्।

एवञ्च 'तद्राजसूत्रस्थ' भाष्यं स्वरसत, संगच्छते, सामासिकलुको बहिरङ्गत्वेन तद्राजलुकि बाधकत्वात्। अत एव 'स्वमोर्नपुंस्कात्' 'त्यदादिभ्यश्च' इति वार्त्तिकं सूत्रे भाष्ये पठितम्।

एवञ्च भवतादित्यादौ परत्वात्तातङि 'सकृद्गति०' न्यायेन हेर्लुक्। यथा त्वं ब्राह्मणकुलमित्यत्रापि 'सनीस्रंस' इत्यादावपि लुक् बहिरङ्ग एवेति न दोषः। 'सुपथि वनम्' इत्यादौ तु कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाल्लुकि नात्वादीति ध्येयम्। 'ह्यः, श्वः' इत्यादौ 'अत्वसन्तस्य' इति दीर्घस्तु न, अतुसाहचर्येणाव्ययभिन्नस्यैव दीर्घाङ्गीकारात्[2]।

किञ्च, वस्तुत इदं ज्ञापकं वार्त्तिकरीत्यैव, भाष्यरीत्या तु वाचनिक एवायमर्थ इति वदद्भिर्ग्रन्थकृद्भिर्ज्ञापकसिद्धार्थस्य खण्डितत्वेन भवतादिति प्रतीके 'ज्ञापकसिद्धं न सर्वत्र' इति समाधानमयुक्तमेवेति दिक्[3]।

---

१. 'अलिङ्गे युष्मदस्मदी' इति तु न, एतस्य पूर्वपक्षीयभाष्यत्वात्। अत एव 'शिशीनुम्लुग्विधिभ्य' इति वार्त्तिकं प्रवृत्तम्।

२. गोमतः समीपम्=उपगोमतः—इत्यत्राव्ययावयवस्याप्यतोः सम्भव इति तु न शङ्क्यम्, अव्ययीभावस्याव्ययत्वे लुक्मुखस्वरोपचारा इति कार्यत्रय एवाव्ययत्वेन दीर्घेऽव्ययत्वाभावेनानव्ययावयवस्यैव संभवात्।

३. यत्तु ब्रह्मिष्ठ इत्यत्रातिशयेन ब्रह्माण इत्यर्थे ,ब्रह्मन् जस् इष्ठ' इति स्थिते परत्वात् 'टेः' इति टिलोते, अनन्तरं लुकि पूर्वटिलोपस्याभीयासिद्धत्वेन "नस्तद्धिते" इत्यस्याप्रवृत्तौ

अत्र च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रं ज्ञापकम् । 'त्वत्कृतम्' इत्यादौ लुगपेक्षयान्तरङ्गत्वाद् विभक्तिनिमित्तकेन 'त्वमावेकवचने' इत्यनेन सिद्ध इदं व्यर्थं सत्तज्ज्ञापकम् ।

ननु 'तव पुत्रः, त्वत्पुत्रः' इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत्, एवं तर्ह्यत्रत्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः । युष्मदादिभ्य आचारक्विप् तु न, सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात्, 'ह्रस्वनद्यापः' इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च । एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकणिचोऽप्यनभिधानं बोध्यम् । एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् ।

---

अत्र ज्ञापकाकाङ्क्षायां भाष्योक्तक्रमेणैव ज्ञापकमाह—अत्रेति । ज्ञापकमिति । ननु ज्ञापितेऽपि सम्पूर्णं सूत्रमेव पुनर्व्यर्थम्, त्वमावित्यत्र विभक्तावित्यस्याननुवृत्त्या तेनैव सिद्धेरिति चेत्, न; 'त्वं सुन्दरः पुत्रो यस्य' इति विग्रहे युष्मत्सुन्दरपुत्र इत्यत्र त्वादेशाभावाय तत्र विभक्तावित्यनुवृत्तेरावश्यकत्वात् ।

ननु 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेणैव सिद्धेः 'त्वमावेकवचने' इति पृथक् सूत्रं व्यर्थमितिचेत्. न; 'प्रत्ययोत्तरपदयोश्च' इत्यत्रापि विभक्तावित्यनुवृत्तेः । तथा च प्रत्ययोत्तरपदपरविभक्तावित्यर्थेन 'त्वमावेकवचने' इति योगविभागस्य सार्थक्यं स्पष्टमेव । 'प्रत्यय' इत्यत्र विभक्तावित्यनुवृत्तौ मामं तु 'त्वमावेकवचने' इति योगविभाग एव, तत्फलं तु एकार्थप्रतिपादकाभ्यां युष्मदस्मद्भ्यां प्रातिपदिकाभ्यां क्विपि, णिचि वा 'प्रत्ययोत्तरपदयोश्च' इत्यस्याप्रवृत्तिरिति बोध्यम् ।

एतेन 'युष्मदादिभ्य आचारक्विप् तु न' इत्यारभ्यापास्तमित्यन्तो ग्रन्थोऽपास्तः, त्वत्पुत्र इत्यादावादिना तुभ्यं हितं त्वद्धितमिति ग्राह्यम् । तवममादिबाधनार्थमित्यादिशब्देन तुभ्यमह्ययोः संग्रहः ।

केश्चित् प्राचीनैः; 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे विभक्तिपदस्यानुवृत्तिमजानानैरत्र सूत्रं न ज्ञापकम्, प्रत्ययग्रहणस्य क्विबादौ सावकाशत्वात् । किन्तूत्तरपदग्रहणमित्युक्तम् । तदनुसारेणैव तदुक्तिं खण्डयितुं भाष्योक्तसम्पूर्णसूत्रज्ञापकत्वं द्योतयति—युष्मेति । वस्तुत इदमसंगतमित्युक्तमिति न विस्मर्तव्यम् । ननु तद्भाष्यस्योक्तरीत्यैकदेशयुक्तित्वेन कथमिष्टसाधकत्वम् ? अत आह—ह्रस्वेति । तत्र हि 'कास्प्रत्ययात्' इनि विहितस्यामोऽत्र ग्रहणं न, सानुबन्धकत्वात् । मस्येत्वाभावस्तु न तत् फलम्, फलाभावादित्युक्तम् । यदि हलन्तेभ्य आचारक्विप्

---

ब्रह्मनिष्ठ इति स्यात् । अपिघटितपाठे तु परस्यापि टिलोपस्य लुको बाधकत्वेन पूर्वं लुकि अनन्तरं टिलोपे ब्रह्मिष्ठ इति सिद्धेरिति, तत् , नः "प्रकृत्यैकाच्" इति शास्त्रस्य सुबन्तातिरिक्त एव प्रवृत्त्या सुप्प्रत्ययातिरिक्तप्रातिपदिकानवयवस्यैव टेर्लोपेन जसष्टिलोपस्याप्राप्तेः ।

ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था। 'न चोत्सर्ग-समानदेशा अपवादाः' इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्, तस्य श्नमकजादौ व्यभिचारादिति चेत्, न; श्नमि मित्वेन, बहुचि पुरस्ताद् ग्रहणेन, अकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात्।

अत एव 'तस्मिन्नणि च' इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम्। अन्यथाऽऽकङादेशमेव विदध्यात्। आकङि तवकाद्यादेशयोरेतदपवादयो रुक्तन्यायेनान्त्यादेशत्वापत्तिः। अतस्तद्विधानम्, इदमेव च तज्ज्ञापकम्।

---

स्यात्, तदा तत्र विशेषस्य सत्त्वेन तदसङ्गतिः स्पष्टैवेति भावः। **णिचौऽपीति**। अपिनाऽत्यन्तस्वार्थिकसंग्रहः : **अनभिधानमिति**। एतत्सूत्रस्थप्रत्ययपदोक्तरीत्या ग्रहणं नेत्यर्थः। एवञ्च युष्मयतीत्येव बोध्यम्।

ननु श्नमादिभिन्नेष्वपि 'आदेः परस्य' इत्यादावपवादस्योत्सर्गसदेशत्वाभावेन तत्स्वीकारेण ज्ञापकवर्णने प्रमाणाभावः। अत आह-**अत एवेति**। **ज्ञापकमिति**। ज्ञापनफलं त्वस्य ज्ञापकस्योपपादनमेवेति ध्येयम्।

ननु आकङ्पक्षे साकच्के सर्वादेशत्वानापत्तिः, न च 'निर्दिश्यमान' परिभाषया यथान्यासे चादेशाप्राप्त्या न फलभेद इति वाच्यम्, 'तन्मध्य' इति न्यायविषये तद्बोधितस्य निर्दिश्यमानत्वमस्तीत्यर्थस्य 'निर्दिश्यमान' परिभाषायां विस्तरेण निरूपितत्वादिति चेत्, न; ङसन्तादामन्ताद्वाणि खञि वा प्राप्तेः। न चौसि 'ओकार-सकार' इत्यादिना टेः प्रागकचि तत्सम्भव इति वाच्यम्, 'अलुगुत्तर' इति सूत्रस्थाकरप्रामाण्येन वृत्तौ द्वित्वादिभानस्य प्रमाणं विनाऽनभ्युपगमेन द्विवचनाद्यन्तेन विग्रहायोगात्।

अत एव कुमार्योरगारमिति प्रतीके कैयटेन कथञ्चिद् द्विवचनान्तेन समास इत्याशङ्क्य, नैष दोषः, यथा तावकीन इत्यादावादेशेन संख्याविशेषो व्यज्यते, तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्येतेति दोषोपन्यास इत्युक्तमिति **केचित्**, तत्, न; ङसन्तादणि खञि च तवकममकयोरेव प्रवृत्त्या द्विवचनान्तबहुवचनान्तादणि खञि च युष्माकास्माकादेशविधायकस्य 'तस्मिन्नणि' इति सूत्रस्य वृत्तिविषये संख्याविशेषस्याप्रतीतौ वैयर्थ्यापत्तेः। तस्मादोसि 'ओकार-सकार' इत्यादिना युष्मदादेष्टेः प्रागकचि सर्वादेशार्थमपि युष्माकादिविधानमिति तत्त्वम्।

वस्तुत इदं ज्ञापकं चिन्त्यम्, 'उत्सर्गसमानदेश' इति न्यायो युष्माकाद्यादेशमूलकः। तद्वैय्यर्थ्यं च युवयोरेव यौष्माकीण इत्यादावन्तरङ्गत्वात् प्राप्तयुवाद्यादेशनिवर्तकान्तरङ्गमिति न्यायमूलकमित्यन्योन्याश्रयात्, अन्तरङ्गान्' इति न्यायाभावः। युष्मकाद्यादेशे तु पूर्वमन्तरङ्गत्वाज्जातेऽपि युवाद्यादेशे पश्चाद्युष्माकादेशे यौष्माकीण इत्यादि रूपम्, आकङि यौवाकीन इत्यादि; इति फलभेदः

**यद्यपि विरोधे बाधकत्वमिति वार्त्तिकमतेऽयं न्यायः, भाष्यकारस्तु विनापि विरोधं सत्यपि संभवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमः, तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः। एतद् भाष्यमपि तत्स्वीकारे मानम्।**

**एवञ्च मपर्यन्तानुवृत्तिः 'त्वत्कृतम्' इत्यादौ मपर्यन्तस्यादेशविधानार्था। तत्र चान्तरङ्गत्वात् त्वमावित्येव सिद्धे व्यर्था सैतज्ज्ञापिका। ज्ञापिते**

---

स्पष्ट एवेति बोध्यम्। यद्यपि 'तवकश् ममकश्' इत्यत्र शित्करणमेव ज्ञापकं भविष्यतीति न दोषः।

ननूक्तरीत्या युष्मकादिविधानस्य 'उत्सर्गसमान' इति न्याये ज्ञापकत्वासम्भवेऽपि वार्त्तिकमते उक्तन्यायो युक्तिसिद्धः। नहि उत्सर्गापवादयोस्समानदेशत्वाभावे विरोधाः सम्भवन्तीति वक्तुमुपक्रमते—**यद्यपीत्यादीना**। उक्तस्थले चारितार्थ्यमजानानस्समाधत्ते—**तथापीत्यादीना**। उत्सर्गः=उक्तोऽर्थः। प्रकृते=त्वादिविषये।

ननु 'यथोत्तरं मुनीनां प्रामाण्याद्' नियम एव युक्तः, नोत्सर्गस्वीकारः, अत आह—**एतदिति**। मपर्यन्तग्रहणस्य ज्ञापकतापरोक्तभाष्यमपीत्यर्थः।

त्वत्कृतमित्यादौ आदिना त्वत्पुत्रस्य संग्रहः। **तत्र चेति**। उक्तलक्ष्यद्वये चेत्यर्थः। **अन्तरङ्गत्वादिति**। इदं त्वत्कृतमित्युदाहरणविषयकम्, त्वत्पुत्रादौ 'उत्सर्ग' इति न्यायेन सिद्धिरिति बोध्यम्।

सेति। मपर्यन्तानुवृत्तिरित्यर्थः। तत्त्वं तु 'त्वत्कृतम्' इत्यादौ सिद्धे इत्यन्तस्य लेखने उपयोगश्चिन्त्यः, पौनरुक्त्यापत्तेः। किञ्च, 'अन्तरङ्गात्' इत्यस्येदानीमभावेन 'प्रत्ययोत्तर' इति सूत्रस्य तवममादिबाधनार्थस्यैवोक्तत्वात्। अत्रेत्थं लेख उचितः—त्वत्पुत्र इत्यादौ मपर्यन्तस्य त्वाद्यादेशे उक्तन्यायेन सिद्धे इति।

ननु 'प्रत्ययोत्तर' इत्यस्य 'तवममौ ङसि' इत्येव नोत्सर्गः, किन्तु बाध्यसामान्यचिन्तयाऽऽत्वयत्वादयोऽपि। तथा चानुवृत्त्यभावे कदाचिदन्त्यस्यापि त्वमौ स्याताम्, मपर्यन्तानुवृत्तौ नेति फलभेदः स्यादिति चेत्, न; मपर्यन्तानुवृत्तिज्ञापनपरभाष्यप्रामाण्येन 'प्रत्ययोत्तरपदयोश्च' इति सूत्रविषये बाध्यविशेषचिन्ताया एवाश्रयणेन 'प्रत्ययोत्तरपदयोः' इति तु 'तवममौ' इत्यस्यैवापवादः, न त्वात्वयत्वयोरपीत्यभ्युपगमात्। तत्र च 'उत्सर्गसमान' इति न्यायेन सिद्धेऽनुवृत्तिर्व्यर्था सती ज्ञापिकेति बोध्यम्।

**तवादीनामप्राप्त्येति**। बाधकस्य लुको विषयतासत्त्वेन तद्विषये पूर्वम् 'तवममौ' इत्यादि न प्रवर्तते, विभक्तेर्लुकि तु विभक्तिपरत्वाभावादप्राप्तिरिति भावः।

त्वस्मिन्नेतद्विषये त्वादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्यैवादेशार्थं सा चरितार्थेति तदाशयः

यत्तु, हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासंभवेन तदनुवृत्तिर्व्यर्था सती ज्ञापिकेत्युक्तम्, तत्, न; अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः।

वस्तुत इदं ज्ञापकं वार्त्तिकरीत्यैव, भाष्यरीत्या तु वाचनिक एवायमर्थ इष्याहुः।

---

**तदपवादत्वाभावेनेति**। तदपवादत्वासम्भवेनेत्यर्थः। एवञ्च 'उत्सर्गसमानदेशा अपवादाः' इत्येतन्न्यायाविषयतया सर्वादेशत्ववारणाय मपर्यन्तग्रहणानुवृत्तिश्चरितार्थेति बोध्यम्।

**तदाशय इति**। 'मपर्यन्तानुवृत्तिर्ज्ञापिका' इति वदतो भाष्यकृत आशय इत्यर्थः।

**यत्त्विति**। अस्येत्युक्तमित्यत्रान्वयः। **मपर्यन्तासम्भवेति**। ममेत्यादावन्तरङ्गादिलोपेऽग्रे भागाभावेन मपर्यन्ताभावः। **अपवादबाध्यत्वेनेति**। उपसंजनिष्यमाण' न्यायेनेति भावः। वस्तुतो वार्णपरिभाषायां वक्ष्यमाणरीत्याऽनेकशास्त्रबाधकल्पनापेक्षया परिभाषाकल्पने लाघवम्।

न चैव परिभाषाकल्पनेऽपि परिभाषयाऽनेकशास्त्रबाधः कल्प्य एवेति वाच्यम्, फलमुखगौरवस्यादोषत्वात्।

ननु 'उत्सर्गसमानदेशा अपवादाः' इति न्यायो वार्त्तिकमते, तद्रीत्या मपर्यन्तानुवृत्तिः प्रकृतपरिभाषायां ज्ञापिका, युष्माकाद्यादेशस्य चारितार्थ्यन्तूक्तमेव भाष्यकारमते कथं ज्ञापकत्वम्? अत आह—**वस्तुत इति**। **वाचनिक एवेति**।

केचित्तु 'युष्मद् ङस् पुत्र सु' इत्यत्र तवममादीन् बाधित्वा मपर्यन्तस्यादेशार्थानुवृत्तिः। यद्ययं न्यायो नास्ति, तदा लुगपेक्षयान्तरङ्गत्वात् 'शेषे लोप' प्रवृत्त्या मपर्यन्तानुवृत्त्या त्वपुत्र इति रूपस्यैव प्राप्त्या त्वत्पुत्र इत्यस्यासिद्ध्या तद्वैयर्थ्यस्य तादवस्थ्याज्ज्ञापिका। न च त्वया कृतं त्वत्कृतमित्यादौ यत्वविषये शेषे लोपाप्राप्त्या फले विशेषसंभव इति वाच्यम्, तत्रान्तरङ्गत्वाद्यत्वे ततो मपर्यन्तस्य त्वादेशे यलोपे त्वत्कृतमित्यस्यैव प्राप्त्या फले विशेषाभावात् तत्रान्तरङ्गत्वात् 'त्वमावेकवचने' इत्यस्यैव प्रवृत्त्याऽदोषाच्च।

न च तवादीनामिव शेषे लोपस्यापि 'उत्पसंजनिष्य' इति न्यायेनाप्राप्तिरिति वाच्यम्, अन्तरङ्गस्येति न्यायेन तवादिबाधनेन चारितार्थ्यासंभवेन मपर्यन्ताधिकारवहिर्भूतशेषेलोपबाधे मानाभावात्। अत एव भवतादित्यत्रास्य न्यायस्य ज्ञापकसिद्धत्वेनाप्रवृत्त्युपपादनं तिङन्तप्रकरणस्थशब्देन्दुशेखरोक्तं संगच्छत इत्याहुः।

**इयम् 'सुपो धातु' इति लुग्विषयैवेति केचित्। 'एङ्ह्रस्वात् संबुद्धेः' 'न यासयोः' इति सूत्रस्थाकरप्रामाण्येन लुग्मात्रविषया। आद्ये 'हे त्रपु' इत्यादावनेन न्यायेन लोपं बाधित्वा लुग् भवतीति भाष्ये उक्तम्। अन्त्येऽन्तरङ्गांश्च विधिन् सर्वोऽपि लुग् बाधते, न तु सुब्लुगेव। अत एव 'समीध्वंस०' इत्यादौ नलोपो न भवति। 'पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्वः' इत्यादावेकादेशात् प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम्।**

---

अन्ये तु, 'तुभ्यमह्यौ ङय्यप्रवृत्तौ' इति सूत्रकरणेनोत्तरत्र 'तवममौ ङसि' इत्यत्र 'अवृत्तौ' इत्यनुवृत्त्या सिद्धे 'प्रत्ययोत्तरपदयोश्च' इति सूत्रमेव ज्ञापकम्। न चातितवेत्यादौ दोषः, 'अवृत्तौ' इति न्यासेन वृत्त्यनवयवे ङसादावित्यर्थेन सर्वत्रादोषादित्याहुः।

अत्र गुणदोषौ बुधा एव गृह्णन्तु, विस्तरभिया नोपपाद्यते।

प्रत्ययोत्तरपदयोः' इति सूत्रस्थभाष्यस्यायं भावः—'प्रत्ययोत्तर' इति सूत्रमनुवादः, लाघवात्। 'त्वमौ' इत्यनेन यौ विहितौ त्वमौ प्रत्ययोत्तरपदयोरपि तौ भवतः। बाधकवाधनार्थश्चायमनुवादः। विधानं तु 'त्वमौ' इत्यनेनैव; यथा 'वनोरच' इत्यादौ। तर्हि तेनैव मपर्यन्तस्यादेशे सिद्धे तदनुवृत्तिर्व्यर्था सती तज्ज्ञापिकेति। न च मपर्यन्तानुवृत्तिरनुवादार्था। अन्यथा सर्वदेशार्थतया विधायकत्वापत्तिरिति वाच्यम्, 'द्विगुरेकवचनम्' इत्यस्यापि द्विगौ विधायकत्वापत्तेः। यदि च लाघवात् तत्र तथा, प्रकृतेऽपि तर्हि तथैवेत्यवेहि।

तत्त्वन्तु, 'अन्तरङ्गानपि' इत्यत्र 'प्रत्ययोत्तर' इति सूत्रमेव ज्ञापकम्। न च त्वत्पुत्रः, त्वद्धितमित्यत्रान्तरङ्गत्वात् प्राप्ततवममादिबाधनार्थं तदिति मूल एवोक्तमिति वाच्यम्, 'प्रत्ययोत्तर' इत्यस्य स्थाने 'वृत्तेः' इति न्यासेनात्र विभक्तावित्यनुवृत्त्या वृत्त्यवयवे विभक्तावित्यर्थकेन तवममादिबाधसिद्धया 'प्रत्ययोत्तर' इत्यस्य वैयर्थ्यतादवस्थ्यात्।

न च त्वं सुन्दरः पुत्रो यस्येति त्रिपदे बहुव्रीहौ युष्मत्सुन्दरपुत्र इत्यत्र यथान्यासे उत्तरपदपरत्वाभावात् 'प्रत्ययोत्तर' इत्यस्य न प्रवृत्तिः, वृत्तिरिति न्यासे उक्तस्थलेऽपि स्यादिति फलभेद इति वाच्यम्, इदानीम् 'अन्तरङ्गान्' इति न्यायस्याभावेनोक्तस्थले समासात् प्रागन्तरङ्गत्वात् 'त्वमावेकवचने' इत्यस्य प्रवृत्त्या फलभेदाभावादिति।

**केचिदिति**। धर्मिग्राहकमानबलादिति भावः। 'केचित्' इति सूचितामरुचिं प्रकटयति—एङ् इत्यादिना। **आकरेति**। कैयटादिमतसंग्रहायाकरपदम्।

**एतद्विरोधादिति**। उक्तसूत्रद्वयस्थाकरविरोधादित्यर्थः। अयं विरोध एव 'तद्राजस्य' इति सूत्रे यत् कैयटेनोक्तम्, तत् प्रौढचेत्यत्र हेतुः।

**शङ्कापरभाष्येति**। तत्र हि भाष्ये वहुष्विति पदे 'न बहुवचनग्रहणम्' इति पक्षे अङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र परत्वात् 'सुपो धातु' इति शसो लुकि समा-

**एतद्विरोधाद् 'यत्तद्राजस्य' इति सूत्रे कैयटेनोक्तमङ्गानतिक्रान्तोऽस्त्यङ्ग इत्यत्र 'सुपो लुकि' बहुवचनपरत्वाभावात् 'तद्राजस्य' इति लुग् न स्यादिति शङ्कापरभाष्यव्याख्यावसरे 'अन्तरङ्गानपि' इति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्कच सुब्लुक एवानेन बलवत्वं बोध्यत इति तत्प्रौढचेति द्रष्टव्यम्। लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदा शङ्कासमाधानं वक्तुं युक्तम्।**

---

सार्थस्यैकत्वविवक्षायां बहुवचनानुत्पत्त्या तत्परत्वासम्भवाल्लुक् न प्राप्नोतीत्याशयेन 'बहुत्वे लुग्वक्तव्यः' इति दोष उपन्यस्तेऽन्तर्वर्तिशसमेवाश्रित्यान्तरङ्गत्वात्तद्राजलुकि नायं दोष इत्याशयेन न बहुवचन इत्येव सिद्धमिति प्रत्ययग्रहणवादिनोक्ते ततो 'अन्तरङ्गान्' इति न्यायेन पूर्वं सुपो लुकि दोषो दुर्वार इत्याशयेन चात्र बहुवचनं पश्याम इत्युक्तम्। तत्र 'न चात्र बहुवचनं पश्यामः' इति प्रतीकमुपादाय 'अन्तरङ्गान्' इति न्यायेन बहिरङ्गसुब्लुको यथाप्राबल्यं सम्भवति तद्वत् परिभाषायाम् 'अपि'-शब्देन परनित्ययोरपि समुच्चयात् प्रतिद्वन्द्वीभूतपूर्वानित्ययोरप्युपलक्षणीभूतेन परिभाषास्थबहिरङ्गपदेन तयोरपि ग्रहणेन तद्राजलुकोऽपि परिभाषाप्राबल्यबोधसम्मभवेन विनिगमनाविरहादनया 'सुपो धातु' इति लुकः प्राबल्यबोधनासम्भवादन्तरङ्गत्वात् पूर्वं तद्राजलुकि न दोष इत्याशङ्क्य 'प्रत्ययोत्तर' इति सूत्रे सुब्लुक एक सम्भवाज्ज्ञापकस्य विशेषापेक्षत्वेनानया सुब्लुक एव प्राबल्यं बोध्यत इति यत् कैयटेनोक्तं तत् प्रौढचेत्यन्वयः।

वस्तुतः प्रकृतपरिभाषायाम् 'अपि' घटितपाठाभावेनान्तरङ्गविध्यपेक्षया बहिरङ्गलुक एव प्राबल्यमिति परिभाषार्थत्वेन तद्राजलुगपेक्षया सुब्लुको बहिरङ्गत्वेन युक्तमेव 'सुब्लुक एवानेन बलवत्त्वं बोध्यम्' इति कैयटोक्तमिति ध्येयम्। न च 'अपि घटितपाठाभावे हे पुत्र इत्यादौ लुकः परत्वाद् गुणः स्यादिति वाच्यम्, नित्यत्वेन लुकः पूर्वं प्रवृत्त्याऽदोषात्। विस्तरेण दोषगणस्तु प्राङ्निरूपित इति विरम्यते।

**तदा शङ्केति।** सा चासौ शङ्का चेति समासः समाधानमेवाह—'**अनेन न्यायेनेत्यादिना बोध्यते**' इत्यन्तेन। एतदर्थस्वीकारफलं तु—'श्रीपमित्यादावन्तरङ्गाद् ह्रस्वात् पूर्वंन्न लुक्' इति केचिद्वदन्ति, तत्, न; दधदित्यत्रेव 'अतोऽम्' इत्यपवादविषयसम्भावनया पूर्वं लुकोऽप्रवृत्तेः। तस्माद्राज्ञः पुत्री राजपुत्रीत्यत्र लुको भावित्वेन पुत्रशब्दादनेन न्यायेन ङीनोऽनुत्पत्त्या पूर्वं समासे समासस्वरे चान्तरङ्गत्वाज्जाते पश्चान्ङीनि राजपुत्रीति विशिष्ठस्याद्युदात्ता [ त्वा ] पत्तिः। अतोऽन्तरङ्गनिमित्तविनाशकेति निवेशनीयम्।

केचित्तु, एतन्निवेशस्य फलान्तरमपि भवकन्तमतिक्रान्तोऽतिभवकानिति सिद्धिः। अन्यथानया पूर्वमकचोऽप्रवृत्तौ पश्चादुपसर्जनत्वात् तदनापत्तिः, एकार्थीभावेनानुपसर्जनत्वनाशेऽपि तस्य लुक्कृतत्वाभावादिति वदन्ति। एवं

**अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः ॥ ५२ ॥**

**नन्वेवं सौमेन्द्रेऽन्तरङ्गत्वादादगुणे पूर्वपदात्परेन्द्रशब्दाभावेन 'नेन्द्रस्य परस्य' इति वृद्धिनिषेधो व्यर्थः। अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः।**

---

प्रियः से यस्य तत् प्रियसीत्यत्रानया पूर्वमेकादेशस्याप्रवृत्तौ समासे पश्चात् 'अदसोऽसेर्दादुदोमः' इति सूत्रस्थशब्देन्दुशेखररीत्यान्तरङ्गत्वादेकादेशात् पूर्वं नपुंसकह्रस्वत्वे तत एकादेशेऽनिष्टापत्तिः, अतः 'अन्तरङ्गनिमित्तविनाशक' इति विशेषणम्। एवञ्च यत्र लुकोऽन्तरङ्गप्रवृत्तिप्रतिबन्धकता तत्रैव समासादिभिः प्रतिबन्धोऽन्तरङ्गस्येति सिद्धम्।

नन्वेवमपि 'गोमत्प्रियः इत्यादौ समासात् प्राग् नुमादयः स्युः ? नहि तदा लुक्प्राप्तिः, अत आह—**तत्प्रयोजकेति**। तस्य लुकः प्रयोजकं यत् समासादि, तेषामित्यर्थः। आदिना तद्धितपरिग्रहः। एवञ्च समासस्य बलवत्त्वात् समासविषये पूर्वमपि नुमादि न भवति। अस्मिन्नर्थेऽपि यत् 'अन्तरङ्गान्' इत्यत्र ज्ञापकम्, तदेव ज्ञापकम्, अन्यथोक्तन्यायाङ्गीकारे व्यर्थं एव स्यात्। नह्येकेनैकमेव ज्ञाप्यम्, यावता विनानुपपत्तिः, तस्य सर्वस्य ज्ञापकत्वादिति शिवम् ॥५२॥

एवं पूर्वोक्तज्ञापकेन पूर्वोक्तस्थले दोषवारणेऽपि। **सोमेन्द्र इति**। इत्यादिलक्ष्य इत्यर्थः। **अन्तरङ्गत्वाद् गुण इति**। न च समर्थग्रहणेनैव कृतसन्धिकार्यात् प्रत्ययोत्पत्त्यान्तरङ्गत्वकथनमनुचितमिति वाच्यम्, समर्थग्रहणस्यान्तरङ्गपरिभाषानुवादकत्वस्य वक्ष्यमाणत्वेनादोषात्। **व्यर्थं इति**। बोध्यार्थभावेन लक्ष्यासाधकत्वादिति शेषः।

नन्वन्तादिवद्भावेन तस्य ततः परत्वं सुलभम्, अत आह—**अन्तादीति**। **उभयत आश्रयणे इति**। अत्र बीजन्तु इणधातौ शब्देन्दुशेखरे निरूपितमिति तत एवावसेयम्।

ननुभयत आश्रय इह नाङ्गीक्रियते, किन्तु पूर्वान्तवत्त्वेनैकारविशिष्टे पूर्वपदत्वमस्तु, 'एकदेशविकृतमनन्यवत्' इति न्यायेनोत्तरपदत्वं न्द्रस्येति, निषेधश्चरितार्थ इत्यय आह—**किञ्चेति**। 'पूर्वपदत्वे' इति सप्तम्यन्तः पाठः, तदाश्रयणे इत्यपि सप्तम्यन्तम्, उत्तरपदत्वाश्रयणे इति तदर्थः।

अन्तादिवत्त्वोभयाभावे तु 'उभयत आश्रयणेनान्तादिवत्' इति निषेधाभावेन पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वे 'एकदेशविकृत' न्यायसञ्चारः प्राचीनवासनयेति बोध्यम्।

**उत्तरपदाद्यच्स्थानिकत्वादिति**। 'अभिव्यक्त' प्रत्यासत्ति' न्यायाभ्यां प्रसिद्धदेवतावाचकोत्तरपदादेरचो वृद्धिविधानम् 'देवता द्वन्द्वे च' इत्यनेनेति भावः।

किञ्च, वृद्धिरप्यत्र न प्राप्नोति, अन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वे-नैकादेशविशिष्टे पूर्वपदत्वेनेन्द्रशब्दस्य 'एकदेशविकृत' न्यायेनउभयत आश्रयणं-नान्तादित्' इत्यस्याभावेन तदाश्रयणेन वोत्तरपदत्वेऽपि तस्यानच्कत्वात्, एकस्यैकादेशेन परस्य नित्येन 'यस्येति' लोपेनापहारात् ।

न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्संभव इति वाच्यम्, उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्राप्तेस्ताद्रूप्यानति-देशात् ।

अन्यथा 'खट्वाभिः' इत्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐसापत्ति-रिति भाष्ये स्पष्टम् । अत एव 'पूर्वेषु कामशमः' इत्यादावन्तरङ्गत्वाद् गुणे वृद्धिर्न स्यादित्याशङ्कितम् । तदेकदेशमात्रस्य विकाराभावाच्च । तदुक्तं भाष्ये 'इन्द्रे द्वावचौ, एकः 'यस्येति' लोपेनापहृतोऽपर एकादेशेन, ततोऽनच्क इन्द्रशब्दः संपन्नः, तत्र कः प्रसङ्गो वृद्धेरिति ।

---

तत्र प्रसिद्धत्वस्य लौकिकन्यायसिद्धत्वेन तस्य शास्त्रीयत्वाभावेनानति-देशेऽपि प्रसिद्धदेवतावाचकोत्तरपदाद्यच्त्वस्यैवातिदेशोऽस्त्वित्याशङ्क्य समाधत्ते ताद्रूप्यानतिदेशादिति ।

नन्वेकादेशस्य परादिवद्भावेनोत्तरपदत्वमात्रम्, तत्रेन्द्रशब्दस्य एकदेश-विकृत' न्यायेन प्रसिद्धदेवतावाचकत्वम्, पुनस्तेनैव 'सोम्' शब्दस्य पूर्वपदत्व-मस्त्वित्याशङ्क्य, नेत्याह—**तदेकदेशमात्रेति** । केचिदवतारयन्ति, एकादेशस्यो-भयस्थानिकत्वेनेन्द्रशब्दैकदेशमात्रस्य विकाराभावादित्यर्थः ।

वस्तुत इदं न स्वमतरीत्या, 'एकदेशविकृत' न्यायस्य रामाविति त्वयैवो-दाहरणदानात्, 'अचः परस्मिन्' इति सूत्रे श्रायसावित्यादौ भाष्यकृतैतन्न्याय-सञ्चारस्य ध्वनितत्वाच्च, 'गुडोदकम्' इत्यादौ सर्वैरप्येतन्न्यायेन दकशब्दे उदकशब्दत्वाङ्गीकाराच्च ।

ननु मरुच्छब्देन्द्रशब्दयोर्यत्र समासः, तत्रैकादेशाभावेन तस्मात्तद्धिते उत्तरपदस्य वृद्धिनिषेधविधायकसूत्रयोः सार्थक्यम्, अत आह—**मरुदादिभिरिति** । **इन्द्रस्य पूर्वेति** । अजाद्यदन्तत्वादिति भावः । एवं विष्ण्वादिभिरिन्द्रस्य द्वन्द्वेऽपि 'घ्यन्तादजाद्यन्तम्' इतीन्द्रस्यैव पूर्वनिपातः, सोमस्य त्वभ्यर्हितत्वात् पूर्व-निपातः । यद्यपि सोमादिन्द्र एव श्रेष्ठः, 'यावदधिकारम्' इति ब्रह्मसूत्रव्याख्या-वसरे, तथैव भाष्यकृद्भिरुक्तत्वात्, तथापि चन्द्रस्य मनसो जातत्वेनात्र सोम-शब्दस्य महेश्वरवाचकत्वेन च तत्त्वं[1] बोध्यम् । अत एव वेदे सर्वत्र 'इन्द्राविष्णु' इत्येव प्रयोगः, न वैपरीत्येनेति दिक् ।

प्रकृतिपरिभाषायाः स्वीकारफलं तु पूर्वेषुकामशम इति । अत्रान्तरङ्गत्वात्

---

१. श्रेष्ठत्वमित्यर्थः ।

**मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातः, अत आह—**

**पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न ॥ ५३ ॥**

**अत्र च 'नेन्द्रस्य' इति निषेध एव ज्ञापक इति 'अन्तादिवच्च' विप्रतिषेधे परम्०' इति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥**

**नन्वेवमपि प्रधाय, प्रस्थाय' इत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप् स्यात्, अत आह—**

**अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥ ५४ ॥**

**'अदो जग्धिः' इति सूत्रेति कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमिति 'अदो जग्धिः' इत्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥**

---

प्राप्तमपि गुणं वाधित्वा 'दिशोऽमद्राणाम्' इत्युत्तरपदवृद्धिरनया। अन्यथान्तरङ्गत्वाद् गुणे दिग्वाचकशब्दात् परदेशवाचकशब्दाभावेन 'दिशोऽमद्राणाम्' इत्युत्तरपदवृद्धिर्न स्यात्। तथा 'रात्रिमट' इत्यादावन्तरङ्गत्वात् प्राप्तं यणं वाधित्वाऽनया 'रात्रेः कृति' इति मुम्सिद्धिः।

न च परिभाषायामेकादेशो नेत्युक्तत्वेन कथं यणोऽनया प्रवृत्तिरिति वाच्यम्, घर्मिग्राहकमानेन परिभाषायामेकादेशपदस्य सन्धिकार्य्योपलक्षणत्वादिति शिवम् ॥ ५३ ॥

एवमपि=पूर्वोक्तस्थलत्रये निर्वाहेऽपि। **अन्तरङ्गत्वादिति**। अनेकपदाश्रयसमासापेक्षल्यवादेशापेक्षयान्तरङ्गत्वादित्यर्थः। हित्वं हि प्रकृतिप्रत्ययसापेक्षम्। धित्वादिष्वित्यादिना 'द्यतिस्यति' इतीत्वम्, 'जनसन' इत्यात्वम्, 'घुमास्था' इतीत्वम्, 'अनुनासिकस्य' इति दीर्घः, 'च्छ्वोः' इति शादेशः, ऊठ्-इडागमादिपरिग्रहः।

**बाधत इति**। घर्मिग्राहकमानेन तङ्निमित्तविनाशक इति भावः। अत एवाभिवाद्येत्यादौ णिज्निमित्तकवृद्धौ लघूपूर्वत्वाभावेन णेरयादेशो न। अन्यथाऽनया पूर्वं ल्यपि लघुपूर्वत्वेन प्रतिपदोक्तत्वेन णेरयादेशो दुर्वारः। अत एव 'नाजानन्तर्ये' इति परिभाषावतरणे एकादेशोत्तरं ल्यबित्युक्तमिति विस्तरेण प्राग् निरूपितम्। अत एवोच्चैःकृत्येत्यादावुच्चैरित्यत्रोदात्तश्रवणम्। अन्यथा उच्चैरित्यस्यान्तरङ्गमपि फिट्स्वरं बाधित्वा ल्यपि पश्चात् 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदप्रकृतिभावादस्वरकस्यैव श्रवणं स्यादिति दिक्।

ननूक्तज्ञापकेन 'ल्यप्विषयेऽन्तरङ्गं न' इत्येव ज्ञाप्यताम्। एवञ्च 'न ल्यपि' इत्यपि न कार्यमिति चेत्, न; 'निरेष्य गतः' इत्यत्र लघूपधगुणस्याप्यप्रवृत्त्याऽयादेशापत्तेः, संकीर्त्येत्यादावीत्वादीनामनापत्तेश्च 'ल्यब्निमित्तं कार्यं न' इत्यर्थे णिलोपानापत्तिः। 'अन्तरङ्गविनाशकल्यप्विषये' इत्यर्थे तु 'न ल्यपि' इत्यस्यावश्यकतया न किञ्चिल्लाघवमिति।

**नन्वेवमपि 'इयाय' इत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात् सवर्णदीर्घत्वे तद-सिद्धिः, अत आह—**

**वार्णादाङ्गं बलीयो भवति ॥ ५५ ॥**

**तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः। 'अभ्यास-स्यासवर्णे' इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम्। तद्धि 'ईषतुः' इत्यादावियङादिव्यावृत्त्यर्थम्। एतत्परिभाषाभावे तु 'ईषतुः' इत्यादावन्त-रङ्गेण सवर्णदीर्घेण बाधात् तद्व्यर्थम्। इयङुवङौ ह्यभ्याससम्बन्धनिमित्तकत्वाद् बहिरङ्गौ।**

---

**'अदो जग्धिः' इत्यत्र भाष्य इति।** यत्तु, 'न ल्यपि' इति सूत्रमस्यां मानम्। अन्यथान्तरङ्गत्वादित्वे तद्वैयर्थ्यं स्पष्टमेवेति, तत्, न; उत्सर्गशास्त्रस्यापवाद-विषयपरिहारेण प्रवृत्तेः पूर्वं ल्यब्विषये इत्वाप्रवृत्तेः ॥ ५४ ॥

एवमपि=ल्यब्विषये निर्वाहेऽपि। **अन्तरङ्गत्वात्**=प्रत्ययानिमित्तकत्वेना-न्तरङ्गत्वात्। **तदसिद्धिः**=इयायेत्यस्यासिद्धिः।

**वार्णादाङ्ग बलीयः**—वर्णस्यायं वार्णः, वर्णनिमित्तक इति यावत्। आङ्गम्=अङ्गाधिकारपठितसूत्रविधेयम्।

**तेनेति।** वार्णादाङ्गमिति वचनेनेत्यर्थः। द्वित्वात् प्रागेव वृद्धिस्तु न 'द्विर्वचनेऽचि' इति निषेधात्। ईषतुरित्यादिनोरवतुरित्यस्य, इयङादौ आदि-पदेनोवङः परिग्रहः।

ननु ईयतुरित्यत्र यण्सवर्णदीर्घयोः 'येन नाप्राप्ति' न्यायेन 'दीर्घ इणः किति' इत्यनेनानवकाशत्वाद् दीर्घे उत्तरखण्डे 'इणो यण्' इति यणि स्थानि-वत्त्वेन तत्र यङ्वारणार्थाय सवर्णग्रहणमावश्यकमिति चेत्, न; 'ओः पुयण्जि' इति सूत्रारम्भसामर्थ्येनाभ्यासस्य कार्ये कर्तव्ये 'अचः परस्मिन्' इत्यस्याप्रवृत्ति-रिति सामान्येन ज्ञापनात्।

किञ्च, ईयतुरित्यम स्थानिवद्भावेनेयङ्प्रवृत्तौ 'दीर्घ इणः किति' इत्यत्र पुगिति न्यासेनाभीष्टरूपसिद्धया दीर्घग्रहणस्य वैयर्थ्येनेयङोऽप्रवृत्तिरिति कल्प-नात्। न च दीर्घग्रहणम् 'अत आदेः' इत्यत्रोत्तरार्थमिति वाच्यम्, 'अत आदेः' इत्यत्र व्याख्यानाद् 'आ आदेः' इति च्छित्वा अभ्यासस्यादेरत आकारविधाने-नोत्तरत्र प्रयोजनाभावात्।

यद्वा, अभ्यास इवर्णस्येयङचि न त्विण्धाताविरत्यर्थकेन 'अभ्यास-स्यानिणि' इति न्यासेन पूर्वोक्तदोषनिवृत्तेः सवर्णग्रहणवैयर्थ्यस्य तादवस्थ्यमि-त्याशयादिति दिक्।

**अभ्याससम्बन्धनिमित्तकत्वादिति।** यद्यपि संज्ञाकृतस्य बह्वपेक्षत्वरूपस्य वा बहिरङ्गत्वस्यानाश्रयणमित्युक्तं प्राक्, तथाप्यङ्गपदस्य प्रत्यये परतो विधा-

**न चेयङादिरपवादः, 'येन नाप्राप्ति' न्यायेन 'इर्यति' इत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयादिति प्राञ्चः ।**

**परे तु—एतत्परिभाषाभावे 'अभ्यासस्य' इति सूत्रमेव व्यर्थम् ।**

---

विधनावध्यादित्वे शक्तया प्रत्ययनिमित्तकत्वात् तत्त्वं बोध्यम् । **अभ्यासेत्युक्तिः** प्राचीनवासनया ।

**केचित्तु-अभ्याससम्बन्धेति** प्रतीकं धृत्वा न च संज्ञाकृतबहिरङ्गत्वानङ्गीकारादिदमयुक्तमिति वाच्यम्, अभ्याससंज्ञाकृतबहिरङ्गत्वेऽस्य न तात्पर्यम्, किन्तु अभ्यासावयवस्यादेशविधानादभ्याससंज्ञाप्रवृत्त्युत्तरमस्य प्रवृत्तिः । सवर्णदीर्घे तु पूर्वमेवेति पूर्वकालिकप्रवृत्तिरिति व्याचख्युः ।

**सकललक्ष्यप्राप्तयणपवादत्वस्येति** । ननु 'ऋ ऋ' इति स्थिते इत्वेन यण्दीर्घयोस्तक्रकौण्डिन्यन्यायेन बाधादित्वप्रवृत्त्युत्तरं न यण्विषयतेति कथं यणपवादत्वमिति चेत्, न; 'ऋ ति' इति स्थिते शब्गुणयोः प्राप्तौ नित्यत्वस्योभयोस्तुल्यत्वेन परत्वाद् गुणे पश्चाच्छपि, तस्य श्लौ अरशब्दस्य द्वित्वे 'अर्तिपिपर्त्योश्च' इतीत्वे तदनन्तरं यणः प्राप्ताविरवयणोर्युगपत् प्राप्त्यभावेनोक्तन्यायाविषयत्वेनेयङो यणपवादत्वस्य ध्रौव्यादिति दिक् ।

ननु इयङंशे यणपवादत्वेऽप्युवङंशे सवर्णदीर्घस्यैवापवाद उवङ्, 'उपसंजनिष्यमाण' न्यायात् । न च 'उवोख' इत्यादावन्तरङ्गत्वात् सवर्णदीर्घेण 'पुगन्त' इति गुणस्य बाधान्नोवङोऽनुवृत्तिरिति वाच्यम्, 'अचि श्नु' इति सूत्रे प्रत्येकं स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः ।

एवञ्च 'ऊखतुः' इत्याद्यर्थमसवर्णग्रहणमपि कर्तव्यमेवेति, कथमसवर्णग्रहणं ज्ञापकमिति चेत्, न; 'ऊखतु' इत्यादेः 'अनो' इति न्यासेन सिध्याऽसवर्णग्रहणस्य वैयर्थ्यमिति गूढाशयात् ।

नव्यमते तु नोक्तदोषः, तेषां मते विशिष्ट एव स्वरितत्वस्वीकारेण 'उवोख' इत्यादावन्तरङ्गत्वेन 'पुगन्त' इति गुणस्य सवर्णदीर्घेण बाधादुवङोऽननुवृत्तेरिति गुरुचरणपरिचारका आहुः ।

**प्राञ्च इति** । 'इर्यति' इत्यादौ श्लुना प्रत्ययापहारेणाक्षेपासंभवादङ्गाभ्यासस्येत्येतदुभयसंज्ञानिमित्तकप्रत्यय इत्यर्थाभावेन 'ईषतुः' इत्यादौ उभयोस्तुल्यनिमित्तत्वेन परत्वात् प्राप्तेयङ्वारणायासवर्णग्रहणमावश्यकमिति न तज्ज्ञापकमिति प्राचीनमतमयुक्तमेवेत्यस्वरसः ।

**व्यर्थमिति** । गुणवृद्धी अन्तराऽसवर्णपराभ्यासासम्भव इति भावः ।

ननु 'इयेष' इत्यादौ यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिः, तन्निमित्तसम्पत्तये सर्वत्रातिदेशस्य प्रवृत्तिरिति सिद्धान्तः ।

न हि 'इयेष' इत्यादावतिदेशप्रवृत्तिमन्तरा द्विर्वचननिमित्तवैकल्यं

**न च 'इयाय, इयेष' इत्यादौ चरितार्थम्। तयोरपि पूर्वंप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च 'द्विर्वचनेऽचि' इति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात् सवर्णदीर्घापत्तेः। न च 'इर्यात' इत्यादौ तच्चरितार्थम्, तावन्मात्रप्रयोजनकत्वे 'उः' इत्येव ब्रूयात्। य्वोरित्यनुवर्तते, 'इणो यण्' इति साहचर्याद् व्याख्यानाच्च ऋधातोरेव ग्रहणम्। अर्तेरिवर्णस्येयङित्यर्थः। 'अभ्यासस्यातो'' इति 'अभ्यासस्यार्तेः' इति वा गुरुत्वान्न युक्तम्।**

---

येनातिदशप्रवृत्तेरावश्यकता। 'चक्रे' इत्यादौ यण्येकाच्त्वाभावादतिदेशविषयता युक्ता। प्रकृते तु सत्स्वगुणादिषु नैकाच्त्वं विहितमिति 'द्विर्वचनेऽचि' इत्यस्याप्राप्त्या पूर्वं गुणे ततो द्वित्वे ह्रस्वे 'इयेष' इत्यादौ सूत्रं चरितार्थमिति शङ्कते—**न चेति। अपहार इति।** धातुसंज्ञाया अक्तपरिमाणनिष्ठतया गुणवृद्ध्यनन्तरं धातुत्वातिदेशमन्तरा द्वित्वाप्राप्त्या द्वित्वनिमित्तवैकल्येनातिदेशान्तरवदस्यापि प्रवृत्त्याऽपहारः संभवतीति भावः।

**पुनः प्राप्ते इति।** न च द्वित्वकर्त्तव्यतायामेव पपातिदेशात् कृते तस्मिन् तद्रूपनिवृत्त्या कथं गुणादीनां प्राप्तिरिति वाच्यम्', अतिदिष्टरूपस्य निवर्तकवचनान्तरानुपलम्भेन तद्रूपस्य तादवस्थ्यसम्भवात्। न च द्वित्वे कर्तव्ये इव कृतेऽपि तस्मिन्नतिदिष्टरूपाभ्युपगमे द्वित्वे कर्तव्ये इति कालावधारणं व्यर्थं स्यादिति वाच्यम्, पुनर्गुणादीनां प्रवृत्त्यभ्यनुज्ञानार्थतया तत्सार्थक्यात्। अन्यथा रूपातिदेशे गुणादीनां बाध एव स्यात्। मम तु कालावधारणसामर्थ्यात् कृते द्वित्वे रूपनिवृत्तिस्तु अशाब्दीति सामर्थ्यान्निवृत्तिकल्पनापेक्षया गुणाद्यभ्यनुज्ञार्थत्वस्यैवौचित्यान्न दोष इति भावः।

न च लक्ष्यभेदाभावः, द्विर्वचनपदस्यावृत्त्या द्वित्वे कर्तव्ये इत्यर्थाश्रयणसामर्थ्येन तद्विषये तदप्राप्तिः। **अन्तरङ्गत्वादिति।** 'इयाय' इत्यादावभ्यासाङ्गसंज्ञासमकालमेव दीर्घप्रवृत्त्या इयङपेक्षया पूर्वकालिकत्वेन, गुणापेक्षया पूर्वदेशवृत्तिनिमित्तकत्वेन चेति भावः।

नन्वारेत्यादावपि तदापत्तिः, अत आह—**य्वोरिति।**

ननु ऋधातोरेव ग्रहणे किं मानम्? ऋकारान्ताङ्गस्य ऋधातोर्वाऽवयवस्येवर्णस्येयङित्यर्थसंभवात्।

तथा चार्तारमतिक्रान्तैरत्यर्तृभिरित्यत्र, दधि ऋच्छिव्रत इवाचरति दधिऋच्छिव्रत इतीत्यादावियङापत्तिः, अत आह—**साहचर्यादिति।**

ननु व्यवहितसूत्रान्तरसाहचर्याश्रयणे न मानम्, अत आह—**व्याख्यानादिति।** 'अचि श्नु' इत्यतो धातुपदमनुवर्त्य तस्य विशेषणत्वाश्रयणरूपादित्यर्थः।

न च सकारस्थानिकेकारस्येत्यर्थान्नोक्तदोष इति किमर्थं साहचर्याद्याश्रयणमिति वाच्यम्, अरियतोऽरियिय्रियादित्यादावियङनापत्तेः।

---

१. 'क' पुस्तके नास्ति।

**न च 'ए, ऐ, ओ, औ' शब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकम्, तथा ओणृधातोर्ण्वुलन्तादिच्छाक्यजन्तात् सनि 'उवोणकीयिषति' इत्याद्यर्थमावश्यकमिति वाच्यम्, षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात्। अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात्। एवञ्च सम्पूर्णसूत्रस्य ज्ञापकता युक्ता।**

---

ननु 'इयेथ' इत्यादौ 'द्विर्वचनेऽचि' इत्यस्याप्राप्त्या पूर्वमेव गुणे ततो द्वित्वे ह्रस्वे सूत्रं चरितार्थमिति कथमृधातावेव सूत्रस्य चारितार्थ्यप्रदर्शनम्? न च 'जग्मतुः' इत्यादिसिद्धये द्वित्वनिमित्तेऽचि तन्निमित्तकाजादेशो नेत्यर्थस्यावश्यकत्वेन व्यवधानेऽपि तत्प्रवृत्त्या न दोष इति वाच्यम्, 'अचि किं जेघ्रीयते' इति भाष्यप्रामाण्येनाजादौ द्वित्वनिमित्त इत्यर्थे प्रकृते तदभावेनादोषात्। अत एव 'ममाथ, सुसूर्षति' इत्यादौ 'मीनातिमिनोति' इत्यात्वस्य 'उदोष्टच' इत्युत्वस्य चाभ्यासे श्रवणम्। न च 'इ लिट्' इति स्थिते सिबादेशात् परत्वाद् द्वित्वेऽन्तरङ्गत्वात् सवर्णदीर्घो दुर्वार एवेति न चारितार्थ्यम्। न च परत्वात् तत्रापि गुणः, 'असंयोगात्' इति कित्त्वेन तदप्रवृत्तेः। 'अपित्' इति निषेधस्तु स्थानिवत्त्वेन प्राप्तकित्त्वस्य निषेधेन चरितार्थ' इति वाच्यम्, लावस्थायामेव कित्त्वे 'उवाच' इत्यादौ सम्प्रसारणापत्त्या 'अपित्' इति पर्युदासेन पित्त्वयोग्योद्देशभूतस्यैव लिटो ग्रहणेन लावस्थायां परत्वाद् गुणे चरितार्थमित्यर्थस्य सूपपादत्वादिति चेत्, न; 'ए एथ' इति स्थिते ह्रस्वापेक्षयान्तरङ्गत्वादयादेशे उक्तरूपस्यैव परिभाषासिद्धेः प्राग् दुर्लभत्वात्। एतेन 'ए, ऐ, ओ, औ' इति वक्ष्यमाणग्रन्थोऽपि परमतरीत्येति बोध्यम्।

**तत्सूत्रमावश्यकमिति।** न च 'इजादेः' इत्याम् प्रवृत्त्यान दोषः, 'अनृच्छः' इति पर्युदासेनौपदेशिकेऽजादावेव तत्प्रवृत्तिरित्याशयात्। न च 'कास्प्रत्ययात्' इत्यामापत्तिः, प्रत्ययग्रहणमपनीय तत्स्थाने 'अनेकाच इति वाच्यम्'इत्याथाङ्गाकर्तृमताभिप्रायेण ग्रन्थस्य प्रवृत्तत्वेनादोषात्। अत्र ह्रस्वापेक्षयान्तरङ्गत्वादयादेशेन सूत्रसार्थक्यमिति पूर्वोक्तं न विस्मर्तव्यम्। उवोणकीयिषतीति 'यथेष्टं नामधातुषु' इत्यनेनाजादेर्द्वितीयस्येत्यस्य बाधेन तृतीयैकाचो द्वित्ववत् प्रथमैकाचोऽपि द्वित्वं दुर्वारमिति भावः।

**षाष्ठेति।** 'दाश्वान् साह्वान्' इति सूत्रस्थेन 'नैकमुदाहरणं योगारम्भं प्रयोजयति' इति ज्ञापकपरभाष्येणेत्यर्थः। **दुर्लभत्वादिति।** नामधातुष्विन्द्रिदियिषतीत्यादिभाष्यप्रयोगेष्विकारस्य द्विकारणेन [द्वित्वाकरणेन] अजादेस्त्वाद्येतरस्यैव द्वित्वस्वीकारादिति भावः।

ननु 'ए, ऐ, ओ, औ' शब्देभ्य आचारक्विबन्तेभ्यो लिटयाम्प्रवृत्त्या तत्राभ्यासत्वाभावेन पूर्वोक्तरीत्या च दोषाभावेऽपि 'भानोॠदश्वः—भानुॠदश्वः' अत्र 'ॠत्यकः' इति प्रकृतिभावः। तस्मादाचारक्विबन्ताण्णिजन्ताद्वा

**यद्यपि भाष्यं 'यदयमभ्यासस्यासवर्णं इत्यसवर्णग्रहणं करोति' इति ग्रन्थे-नासवर्णग्रहणस्यैव ज्ञापकता लभ्यते, तथापि 'न ह्यन्तरेण गुणवृद्धी असवर्णपरा-भ्यासो भवति' इति तदुपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते।**

---

सनि 'यथेष्टं नामधातुषु' इति ऋत्‌शब्दस्य द्वित्वे 'त्' शब्दस्य 'हलादिः शेषः' इति लोपे स्थानिवद्भावेन 'ऋ' शब्दस्य पदत्वेन 'ऋत्यकः' [इति] प्रकृतिभावात् सवर्णदीर्घाप्राप्त्या 'उरत्' इत्यत्वे लक्ष्यभेदेन पुनः 'हलादिः शेषः' इति रेफलोपे 'सन्यतः' इतीत्वे 'भानु इयृदशिवषति' इत्यादौ 'अभ्यासस्य' इति चरितार्थम्।

किञ्च, एधीत्यस्याभीक्ष्ण्ये द्वित्वे तस्मात् प्रशंसायां रूपम्, ततो णिचि पूर्ववदेधशब्दस्प्र द्वित्वे ह्रस्वे स्थानिवद्भावे नेशब्दस्य पदत्वेन 'इकोऽसवर्णे' इति प्रकृतिभावेन यणोऽप्राप्त्या 'अभ्यासस्य' इति चरितार्थम्।

किञ्च, ऋच्छतीति ऋच्छकः, भानोर्ऋच्छकः भानुऋच्छकः, तस्मादा-चारक्विबन्तात् [ काजतात् ? ] णिजन्ताद्वा सनि शेषा [ हलादिशेषः ] भानु इयृदशिवषतीत्यत्रेव प्रक्रिया बोध्या। तत्रेदं चरितार्थमिति चेत्, न; आद्ये 'ऋत्' शब्दस्य 'यदागमपरिभाषया' धातुरूपऋशब्दत्वेन 'उः' इति मूलन्यासेन सिद्धेः।

द्वितीये ह्रस्वापेक्षयान्तरङ्गत्वादयादेशे लक्ष्यभेदेन पुनः 'हलादिः शेषः' इति यशब्दस्य लोपे एध इति स्थिते 'सन्यतः' इति बाधित्वान्तरङ्गत्वादेका-देशापत्तेः।

तृतीये, 'उः' इति भाष्यप्रामाण्येन 'यथेष्टं नामधातुषु' इत्यत्रैकाच्पदे-नाजादिभिन्नैकाचो द्वित्वविधानमिति कल्पनेन प्रकृते 'ऋत्' शब्दस्य द्वित्वाभाव-कल्पनाच्च।

एवञ्च सर्वत्रोक्तस्थले निर्वाहेऽपि उक्तोपायान्तरं व्युत्पत्तिप्रदर्शनायेति बोध्यम्। एवं मनस एतत्=मन एतत्, तस्माद् णिजन्ताद्वा सनि दोषाभाव इत्यलं बहुविस्तरेण।

स्वमते भाष्यविरोधमाशङ्क्य परिहरति—**यद्यपीति। तदुपपादनग्रन्थे-नेति।** वार्णपरिभाषया 'इयेष' इत्यादौ गुणवृद्ध्योः सवर्णदीर्घापेक्षया पूर्वं प्रवृत्तौ वीजाभावेनासवर्णपराभ्यासासम्भवात् सूत्रमेव निर्विषयं स्यादित्याशयेनेत्यर्थः।

असवर्णग्रहणस्यैव ज्ञापकत्ववादी 'सूत्रं त्वदुक्तरीत्या न ज्ञापकम्' इति दूषयति—**अत्यर्थमिति।** सिद्धान्ती 'नैकमुदाहरणम्' इति न्यायेन सूत्रस्य ज्ञाप-कत्वं सम्भवतीति दूषितवान्—**स्यादिति।** त्वन्मते 'ईषतुः' इत्यादावियङ्वार-णार्थत्वेन तत्सार्थक्यमेव दर्शितं स्यादित्यर्थः। एतद्भाष्यानुरोधेनोपक्रमस्थ-भाष्यमपि असवर्णस्य ग्रहणं यस्मिन्निति बहुव्रीहिणा सूत्राभिप्रायेणैव योज्यम्।

ननु 'इयेष' इत्यादौ दीर्घोत्तरं गुणाद्यप्राप्त्या भाविनिमित्तविनाशाभावेन कथं तत्प्राप्तिः, अत आह—**यदीति। सूपपादत्वादिति।** एतत्परिभाषाप्रवृत्ति-

**अग्रेऽपि 'नैतदस्ति ज्ञापकम्, अर्त्यर्थमेतत् स्यात्' इत्यनेन सूत्रसार्थक्यमेव दर्शितम्। असवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्।**

**न च 'अकृतव्यूह' परिभाषया 'इयेष' इत्यादौ सवर्णदीर्घप्राप्तिः, यदि दीर्घो न स्यात्, तर्हि गुणः स्यादिति सम्भावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं सम्पूर्णसूत्रस्य ज्ञापकतेति वाच्यम्, तस्या असत्त्वात्। सत्त्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिः, तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च।**

**न चान्तरङ्गत्वाद् दीर्घेऽपि 'इयाय' इत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे इयङ्विधानेन सूत्रं चरितार्थम्।**

---

विषयेऽन्तरङ्गकार्यस्य प्रतिबध्यमानतया क्वाप्यन्तरङ्गस्याप्रवृत्त्यान्तरङ्गप्रवृत्तेः प्राग् बहिरङ्गेणान्तरङ्गनिमित्तविनाशस्य संभावना यत्र, तत्रैवैतत्परिभाषाप्रवृत्तिर्वक्तव्येति भावः।

न च यद्यत्र गुणो न स्यात्, तर्हि दीर्घः स्यादिति सम्भावनया गुणस्याप्यप्रवृत्त्या न दोष इति वाच्यम्, तस्यान्तरङ्गाभावेन तत्रैतदप्रवृत्तेरिति भावः।

**असत्त्वादिति।** एतद्बीजम् 'अकृतव्यूहपरिभाषायाम्' मूल एव स्फुटीभविष्यति। **योग्यकालोत्तरमेवेति।** अत एव 'शचङन्तस्य' इति वार्त्तिकं चरितार्थम्। एतत्परिभाषाविषयेऽन्तरङ्गप्रवृत्तेः प्रतिबध्यमानत्वाद् योग्यत्वनिवेशः।

सूत्थितादौ समासे प्रातिपदिकसंज्ञासमकालमेव सवर्णदीर्घस्य प्रवृत्तियोग्यकालः, तदुत्तरकाल एव तन्निमित्तविनाशकवृद्धेः प्राप्त्या 'अकृतव्यूह' परिभाषायाः स्वांशे चारितार्थ्यम्। एवम् 'प्रतीचः, सेदुषः' इत्यादावपि प्रातिपदिकसंज्ञासमकालमेवान्तरङ्गयणादिप्राप्तिकालः, तदुत्तरकाल एव बहिरङ्गस्य भसंज्ञानिमित्तकः 'अचः' इत्यादिना लोपादेः प्राप्तिः, 'इयाय' इत्यादौ तु 'इ इ अ' इत्यत्र सवर्णदीर्घप्राप्तिकाल एव तन्निमित्तविनाशकवृद्ध्यादेरपि प्राप्त्योभयोः समकालत्वेनात्रैतत्परिभाषाया न विषय इति भावः।

**चरितार्थमिति।** न चासवर्णग्रहणस्य वैयर्थ्यं सूत्रे तादवस्थ्यमिति वाच्यम्, 'इययिथ' इत्यादौ तस्य चारितार्थ्यात्।

**प्रत्यासत्त्येति।** यन्निरूपितपूर्वत्वमादायाभ्यासत्वम्, तदवच्छिन्ननिरूपितोत्तरस्यैव ग्रहणौचित्यादित्यर्थः। **असवर्णपदेनेति।** असवर्णाच्पदेनेत्यर्थः।

ननु प्रत्यासत्त्या 'अभ्यासस्य' इति सूत्रस्य विलक्षणार्थकत्वमाश्रित्य परिभाषाज्ञापकतया चारितार्थ्यकल्पनापेक्षया 'अचि श्नु' इति सूत्रबाधक 'अचो ञ्णिति' इति सूत्रबाधकतया सार्थकत्वमस्तु, इत्यत आह—**शास्त्रेति।** विधिशास्त्रेत्यर्थः।

**न च 'अचि श्नु०' इत्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यम्, प्रत्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणात्, शास्त्र-बाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः।**

**सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानमार्थित्व एव।**

---

किञ्च, 'इयाय' इत्यादिकतिपयलक्ष्यलाभेऽपि 'इयेष' इत्यादिलक्ष्या-संग्रहः। परिभाषां विनेत्यपि बोध्यम्। **आहुरिति।**

वस्तुतः 'अचः परस्मिन्' इति स्थानिवद्भावेनाभ्यासस्यासवर्णाच्परत्वा-भावादियङ् न। न चैकादेशविशिष्टस्याभ्यासत्वेन तस्य स्थान्यपेक्षया पूर्वत्वेन दृष्टत्वाभावेन कथं स्थानिवत्त्वमिति वाच्यम्, यत्किञ्चित्स्थानिभूतादचः पूर्व-वृत्तिधर्मावच्छिन्नोद्देश्यकविधौ स्थानिवत्त्वप्रवृत्त्यभ्युपगमात्। अत एव 'कृद-तिङ्' इति सूत्रेऽतिङ्ग्रहणप्रत्याख्यानावसरे पचतीत्यादौ तुग्वारणाय धातुग्रहणा-नुवृत्तिं कृत्वा 'एवमपि 'चिकीर्षति' इत्यादौ पूर्वान्तवद्भावेन धातुत्वात् तुक् प्राप्नोति' इत्याशङ्क्य 'पूर्वधर्मावच्छिन्नोद्देश्यककार्ये स्थानिवद्भावान्न दोष' इति समाहितम्।

नन्वेवम् 'गाते' इत्यत्र 'गा अ आत' इति स्थितेऽन्तरङ्गमपि सवर्णदीर्घं बाधित्वा 'आतो ङितः' इतीयादेशापत्तिः, अत आह—**समानकार्यित्व एवेति।** तत्त्वञ्च भावरूपसमानस्थानिकत्वम्। अत एव 'चच्छौ' इत्यत्रान्तरङ्गत्वाद्ध्र-स्वात् पूर्वं तुकि ह्रस्वार्थमभ्यासाधिकारे वैयधिकरण्यान्वयो भाष्ये कृत इति 'ह्रस्वः' इति सूत्रे शब्देन्दुशेखरे उक्तम्। तेन गाङ्धातोश्शानचि विकरणे च कृते सवर्णदीर्घमुगागमयोः प्राप्तावनयान्तरङ्गमपि सवर्णदीर्घं बाधित्वा मुगागमो न, किन्त्वन्तरङ्गत्वात् सवर्णदीर्घे 'गान' इति रूपं सिध्यति। अत एव 'आदा-दिकोऽयम्' इति हरदत्तादयः, फले तु न भेद इति कौमुदीग्रन्थः सङ्गच्छते। हरदत्तमते गाङ्धातोरादादिकत्वे तु राधातु-लाधातुभ्यां क्विपि तदन्तादाचार-क्विपि 'कर्तरि कर्मव्यतीहारे' इत्यात्मनेपदे 'व्यतिराणः, व्यतिलानः' इत्यादा-वुक्तार्थस्य फलं बोध्यम्।

अत एव 'युच्छति' इत्यादौ पदावधिकेऽनया परिभाषया अन्तरङ्गात् तुकः प्राग् गुणो न, किन्त्वन्तरङ्गत्वात् तुगेव। भावरूपेत्युक्तेः 'जुह्वतुः, शूनः, त्वं स्त्री' इत्यादौ पूर्वरूपादेः पूर्वम् 'आतो लोपः' इत्यादिनाऽऽलोपादि न, अन्यथा आद्ये, 'ह्वा अतुस्' इत्यत्राल्लोपापेक्षयाऽनैमित्तकत्वेनान्तरङ्गत्वात् सम्प्रसारणे 'हु आ अतुस्' इत्यत्रानया परिभाषयान्तरङ्गमपि 'सम्प्रसारणाच्च' इति पूर्वरूप बाधित्वाऽऽतो लोपे, तस्य 'अचः परस्मिन्' इति स्थानिवद्भावेनो-वर्णान्तधातोरजादिप्रत्ययपरत्वाभावादुवङ स्यात्। मम तु 'हु आ अतुस्' इति स्थिते पूर्वरूपालोपयोः प्राप्तौ धर्मिग्राहकमानेन 'वार्णादाङ्गम्' इति परिभाषया भावकार्यस्यैव प्राबल्यबोधनेन प्रकृते लोपस्य भावकार्यत्वाभावात् प्रकृतपरि-

**यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति, तत्, न; ज्ञापितेऽपि 'इयाय, इयेष' इत्याद्यसिद्धेः, सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च।**

**'स्योनः' इत्यत्र तु वक्ष्यमाणरीत्याऽस्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद् यणादेशः।**

---

भाषाया अप्रवृत्त्याऽन्तरङ्गत्वात् 'सम्प्रसारणाच्च' इति पूर्वरूपे ततो द्वित्वे उक्तरूपसिद्धिः। उवङि कर्तव्ये पूर्वरूपस्य न स्थानिवत्त्वम्, उवर्णान्तधातोरुङ्-विधानेनाकारात् पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाभावात्, आकारैकादेशस्याकारात् परभूतनिमित्तकत्वाभावाच्च; प्रत्यासत्त्या 'अचः परस्मिन्' इत्यत्रादेश-स्थान्यपेक्षपरत्वनिमित्तकस्यैवादेशस्य ग्रहणात्।

द्वितीये, सम्प्रसारणे 'शु अन्' इति स्थिते पूर्वरूपं बाधित्वाऽनया परिभाषया 'अल्लोपोऽनः' इति लोपे शुनेति सर्वानुदात्तं स्यात्, उदात्तनिवृत्तिस्वरेणान्तोदात्तं वा स्यात्, पूर्वरूपेणाद्युदात्तनिष्पत्तेः। तत्र हि वकारस्थानिकोकारस्य संस्रन्धर्महल्स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततयाकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात्।

किञ्च, लोपे स्थानिवत्त्वे यण्प्रसङ्गः। 'अतेः शुनः' इत्यादिनिर्देशैस्तद्वारणे तु 'बहुश्वा, बहुमघवा, बहुयुवा' इत्यत्र 'अन उपधालोपिनः' इति ङीब्-विकल्पापत्तिः। 'मघोनः' इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्चोक्तानिवेशे स्यात्। मम तु 'शु अन्' इति स्थिते उक्तरीत्या प्रकृतपरिभाषाया अप्रवृत्त्यान्तरङ्गत्वात् 'सम्प्रसारणाच्च' इति पूर्वरूपे उक्तरीत्या स्थानिवद्भावाप्रवृत्त्या न दोषः।

तथा तृतीये तु, 'अ अट्' इति स्थिते 'अतो गुणे' इति पररूपस्य 'शेषे लोपः' इति लोपस्य च प्राप्तौ प्रकृतपरिभाषयान्तरङ्गमपि पररूपं बाधित्वा टिलोपेऽदन्तत्वसत्त्वेन टाप् दुर्वारः, मम तूक्तनिवेशेन वार्णपरिभाषाया अप्राप्त्यान्तरङ्गत्वात् 'अतो गुणे' इति पररूपे, पश्चाद् इलोपेऽदन्तत्वाभावान्न टाप्। 'स्वरितो वा' इति सूत्रस्थभाष्यमप्युक्तनिवेश एव बीजम्। अत एव 'च्छ्वोः शूठ्' इत्यत्र सतुग्ग्रहणं चरितार्थम्। सतुग्ग्रहणेन 'वार्ण' परिभाषाया अनित्यत्वज्ञापनं न युक्तम्, लक्षणैकचक्षुष्काणामननुगमत्वेनानुपयोगात्।

न च भावरूपसमानस्थानिकत्वसंकोचेऽपि 'स्योनः' इत्यर्थमस्या अनित्यत्वस्यावश्यकत्वेन संकोचो व्यर्थ एवेति वाच्यम्, 'पुगन्त' इत्यत्र पुगन्तसाहचर्येण लघूपधांशे हलन्ताङ्ग एव गुणप्रवृत्तिस्वीकारेण 'स्योनः' इत्यत्र गुणाप्राप्तेर्भाष्ये यण्गुणयोरन्तरङ्गादिविचार एकदेशिनः। तन्मते उणादिष्वव्युत्पत्तिपक्षस्यैवाङ्गीकारात्। एतेन वस्तुतोऽनित्यत्वमेवास्या इति समानस्थानिकत्व एवेति न वक्तव्यम्। अत एव 'स्योनः, शुनः' इत्यादौ समानस्थानिकत्वेऽपि न प्रकृतपरिभाषाया अप्रवृत्तिरित्यपास्तम्। न चोक्तस्थल एवास्याः प्रवृत्तौ 'वारिणी'

**न चैवमपि 'इयाय' इत्यादावियङ् दुर्लभः, तत्र कर्तव्ये वृद्ध्यादेः स्थानिवत्त्वेन 'असवर्णे' इति प्रतिषेधादिति वाच्यम्; सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः। तच्च सामान्यापेक्षम्—अभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति।**

---

इत्यादावन्तरङ्गत्वान्नुम बाधित्वा सवर्णदीर्घापत्तिरिति वाच्यम्, 'इकोऽचि' इत्यस्यानवकाशत्वेन सन्धिकार्यापवादत्वात् चक्षम्यत' इत्यादौ नुकं बाधित्वान्तरङ्गत्वात् तुक्यपि 'यदागम' परिभाषयाऽच्छब्दस्य 'नुगतः' इत्यत्रत्यात्पदेन ग्रहणात् तुक्सिद्धिरवधेया, सति नुग्घटितप्रयोग इत्यलम्।

प्राञ्चस्तु, समाननिमित्तकत्वे एवैषा प्रवर्तते इत्यर्थं स्वीकृत्य 'स्योनः' इत्यत्र दोषाभावमाहुः, तत् खण्डयति—**यत्त्विति**।

स्वमते भाष्यविरोधं परिहरति—**स्योन** इति। सामान्यतो लघूपधगुणविषये प्रकृतपरिभाषाया अप्रवृत्तिस्वीकारे 'इयेष' इत्यत्र दोषः।

**सूत्रारम्भसामर्थ्यादेवेति**। ननु 'इयेथ' इत्यत्र पूर्वं गुणे ततो द्वित्वे ह्रस्वे तस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावान्न स्थानिवद्भावप्राप्तिः। एवम् 'इयर्ति, इयृतः' इत्यादौ च चारितार्थ्यम्। 'उः' इत्यनेन 'इयर्ति, इयृतः' इत्यादिसिद्धावपि 'इयेथ' इत्यस्यासिद्धिरिति चेत्, न; अभ्यासस्यानणोत्येव सिद्धेऽसवर्णग्रहणस्य वैयर्थ्यात्। ज्ञापिते त्वस्मिन् 'इयर्ति' इत्यत्रोत्तरखण्डस्य स्थानिवद्भावाप्राप्त्याकारेऽनणोति निषेधापत्तेस्तथा कर्तुमशक्यम्।

ननु 'इयाय' इत्यत्र 'इ ए अ' इत्यत्र स्थानिवद्भावेनासवर्णे इति निषेधादियङोऽप्राप्तावपि पूर्वमयादेशे तस्मिन्निकारनिष्ठसवर्णत्वातिदेशेऽपि तदवयवाकारेऽसवर्णत्वस्य सत्त्वादनणीति पूर्वोक्ते न्यासेन न सिद्धिरिति चेत्, न; 'यनः' इति 'रेः' इति वा न्यायेन इधातोः, ऋधातोश्चावयवीभूत इकारः, तस्येयङ् इत्यर्थकेनोक्तफलसिद्ध्या सूत्रवैयर्थ्यमित्याशयात्।

किञ्च, 'अचः परस्मिन्' इत्यस्य 'स्थानिसम्भावनायां यत् कार्यं प्राप्नोति यच्च न प्राप्नोति तत्कार्यमादेशो सत्यपि भवति न भवतीत्यर्थेन' इयायेत्यत्र फलाभावादिति बोध्यम्।

ननु सूत्रारम्भसामर्थ्येनेयङि कर्तव्येऽभ्यासोत्तरखण्डस्यादेशस्य स्थानिवद्भावेन लघुपरत्वाभावात् सन्वद्भावानापत्तिः, सन्वद्भावस्तु 'अजोगमत्, अजीजनत्' इत्यादौ स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवद्भावाप्रवृत्त्या चरितार्थः।

न च 'णिच्यच आदेशो न' इति निषेधेन द्वित्वात् पूर्वम् 'मितां ह्रस्वः' इति ह्रस्वस्याप्रवृत्त्या पूर्वं द्वित्वे तदनन्तरं ह्रस्वे स्थानिभूतादचः पूर्वत्वसत्त्वात् स्थानिवद्भावप्रवृत्त्या चोक्तस्थलेऽपि सन्वद्भावस्य चारितार्थ्यमिति सामर्थ्यात्

**अत एव 'अरति' इत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य 'ढ्रलोपे' इति दीर्घो दुर्लभ इत्यपास्तम्। दीर्घविधौ तन्निषेधाच्च।**

---

सन्वद्भावविषये स्थानिवद्भावाप्रवृत्तिरिति वाच्यम्, 'णिच्यच आदेशो न' इति निषेधेनोवर्णस्थानिकादेशस्यैव निषेधे इत्यर्थस्य नव्यैः सिद्धान्तितत्वात्।

यद्वा, 'अद्रीद्रपत्, अजीग्लपत्' इत्यादौ 'बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेव, ओणेर्ऋदित्करणात्' इति न्यायेन द्वित्वात् पूर्वं ह्रस्वे ततो द्वित्वेन स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात् तदप्राप्त्या स चरितार्थः।

न च 'अतूतवत्' इत्यादौ 'दीर्घो लघोः' इति दीर्घे 'न पदान्त' इति निषेधात् स्थानिवद्भावाप्राप्त्या दीर्घसिद्धेः सामान्यापेक्षस्य ज्ञापकस्य नोपयोग इति वाच्यम्, लोपाजादेशत्वाभावेन स्थानिवद्भावस्य दुर्वारत्वादित्याशङ्कां मनसि निधाय तां वारयति—**तच्च सामान्यापेक्षं ज्ञापकमित्यादिना।**

**स्थानिवत्त्वं नेति। अभ्यासस्येत्यस्य** फलं तु वेञो यङि 'वेवीयते' इत्यत्र यकारस्य सम्प्रसारणे पूर्वरूपे 'अकृत्' इति दीर्घे तस्य स्थानिवत्त्वेन 'न सम्प्रसारणे' इति निषेधः।

किञ्च, 'निन्यतुः, निन्ये' इत्यादौ यणः स्थानिवत्त्वाभावे 'अनिदिताम्' इति नलोपापत्तिः, 'यातिः' इत्यत्रालोपस्तु न, 'चिणो लुक्' न्यायेनोत्तरलोपस्यासिद्धत्वात्। किञ्च, धर्मिग्राहकमानेन अभ्यासकार्यस्य भावरूपस्यैव ग्रहणात्। **तदुत्तरखण्डेत्यस्य** फलं तु 'वव्रश्च' इत्यत्रैतन्निषेधाप्रवृत्तिः।

अत्रैव दोषवारणाय खण्डग्रहणमिति केचित्, तन्न; **तदुत्तरेत्यत्र** तत्पदेनाभ्यासस्यैव ग्रहणेनादोषात्।

**प्रतिबन्धकेत्यस्य** फलं तु अरियृयादिति मूल एव स्पष्टम्।

न चैवं प्रतिबन्धकेति निवेशे 'इयाय' इत्यत्रायादेशस्य स्थानिवत्त्वेन लघूपधगुणापत्तिः, 'पुगन्त' इति सूत्रे पुक्साहचर्येण लघूपधांशे हलन्ताङ्ग एव प्रवृतेः। नन्वेवमपि 'औननत्' इत्यादौ 'अत उपधायाः' इति वृद्ध्यापत्तिः, तत्प्रतिबन्धकस्य स्थानिवत्त्वस्यानेन निषेधात्। न च 'णौ चङि' इति ह्रस्वः, 'नाग्लोपि' इति निषेधादिति चेत्, न; 'आटिटत्' इत्यत्र बहिर्भूतचङ्निमित्तकद्वित्वस्य बहिरङ्गत्वेनासिद्धत्वाद् गुणाप्रवृत्तिवदत्रापि वृद्धेर्वारणसम्भवात्। यद्वा, उत्तरखण्डादेशस्यापि भावरूपस्यैव ग्रहणेन एतन्निषेधाप्रवृत्तेः। तथाचाभ्यासावयवभूते कार्ये तदुत्तरखण्डावयवभूतो य आदेशः, तस्य स्थानिवत्वं नेति ज्ञाप्यार्थः सिद्ध इति बोध्यम्।

नन्वेवम् 'अचकाणत्' इत्यत्र 'काण्यादीनां वा' इति ह्रस्वाभावपक्षे स्थानिवद्भावेन लघुपरत्वात् सन्वद्भावापत्तिः। न चेष्टापत्तिः, 'अचकाणत्' इति भाष्योक्तविरोधादिति चेत्, न; 'ओः पुयणजि' इति ज्ञापकस्य सजातीयापेक्ष-

**'अरियूयात्' इत्यत्र तु स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्या-भ्यासकार्यप्रतिबन्धकत्वाभावात् ।**

---

त्वेनोवर्णादेशस्यैव ग्रहणेन द्वित्वय पूर्वं प्रवृत्त्या ततः पूर्वमेव वृद्धावभ्यासस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात् स्थानिवद्भावाप्रवृत्तेः। न चैवमपि 'इट, किट' इत्यत्र प्रश्लिष्टादिधातोर्लिटचतुसि उत्तरखण्डे 'एरनेकाचः' इति यणि 'इयतुः' इत्यत्र यणादेशस्य स्थानिवत्त्वेन यणापत्तिः, पूर्वपरविधित्वेन 'अकः सवर्णे' इति कर्तव्ये स्थानिवद्भावाप्राप्त्या न 'अकः सवर्णे' इत्यस्य प्राप्तिरिति वाच्यम्, उत्तरखण्डावयवभूत आदेशस्याज्घटितस्याभ्यासावयवभूते कार्ये स्थानिवद्भावनिषेधात् ।

अत एव 'विव्यतुः' इत्यत्राभ्यासकार्यंदीर्घस्य प्रतिबन्धकमुत्तरखण्डादेशस्य स्थानिवत्त्वं सिद्धम् ।

किञ्च, अस्य वचनस्य 'अभ्यासस्य' इति सूत्रज्ञापितत्वेव षाष्ठतया एतया एतद्दृष्ट्या दीर्घस्य त्रैपादिकस्यासिद्धत्वेनाभ्यासकार्याभावान्न तत्रैतस्या स्था-वद्भावनिषेधस्य प्रवृत्तिरिति बोध्यम् ।

न च 'उत्तरखण्डाद्यादेशस्य सम्पूर्णाभ्यासस्य कार्ये' इति निवेशेन 'विव्यतुः' इत्यत्र न दोष इति वाच्यम्, 'अनूनवत्, अतूतवत्' इत्याद्यसिद्ध्यापत्तेः। **अत एवेति**। सामान्यापेक्षज्ञापकाश्रयणदेवेत्यर्थः ।

**आरतीति**। यङ्लुगन्तस्येदं रूपम् । अत्र हि ऋधातोः 'सूचि' इत्यादिना यङि तस्यानैमित्तके लुकि लटि झेरदादेशे प्रत्ययलक्षणेन यङन्तत्वाद् द्विर्वचनेऽ-भ्यासस्योरदत्वे रुगागमे उत्तरखण्डस्य यणादेशे 'रो रि' इति लोपे 'ढ्लोपे' इति दीर्घ इति बोध्यम् ।

अत्र पुनर्ह्रस्वस्तु न, 'लक्ष्ये लक्षणस्य' इति न्ययाद् दीर्घविधौ तन्निषेधा-च्चेति। स्वरदीर्घयलोपेषु लोपाजादेश एवेति निषेधस्तूपधादीर्घस्यैव । अत एव 'हंसौ, जनौ' इत्यादौ 'एकदेशविकृत' न्यायेन सान्तनान्तयोरङ्गत्वेन 'सान्तमहतः' 'सर्वनामस्थाने' इत्याभ्यां दीर्घाभावः ।

**अरियियादिति**। तस्यैव लिङि रिगागमे अ इत्यस्योत्तरखण्डस्यान्तरङ्ग-मपीयङं बाधित्वा प्रतिपदोक्तत्वात् पूर्वं रिङि, इयङिति भावः ।

न च यङो लोपो दुर्वारः, स्थान्यचः पूर्वत्वाभावेन स्थानिवत्त्वाप्राप्तेरिति वाच्यम्, रिङ आङ्गत्वेन बहिरङ्गत्वाद् बलिलोपे 'अन्तरङ्ग' परिभाषाया एतन्मते प्रवृत्तिसत्त्वेन तस्मिन् कर्तव्येऽसिद्धत्वादिति स्थितस्य गतिः ।

इदमत्र तत्त्वम्—प्रतिपदोक्तस्य निरवकाशस्यैवान्तरङ्गापेक्षया बलवत्त्व-मित्यर्थस्य वक्ष्यमाणत्वात् प्रकृते तदभावेनान्तरङ्गत्वात् 'अरियियात्' इत्यत्रेयङ्-सिद्ध्या प्रतिबन्धकेति विशेषणं व्यर्थमेव । अत एव 'अरियियात्' इत्यत्र 'लोपो

'इयं चाङ्गसम्बन्धिन्याङ्ग एव' इति 'स्वरितो वा' इति सूत्रे भाष्ये। तत्र हि 'कुमार्यै' इत्यादौ यणुत्तरमाडुक्तः।

इयं चानित्या 'छ्वोः' इमि सतुग्निर्देशात्। अन्यथान्तरङ्गत्वात् पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः॥ ५५॥

नन्वेवम् 'सेदुषः' इत्यादौ क्वसोरन्तरङ्गत्वादिटि, ततः सम्प्रसारणेऽपीटः श्रवणापत्तिरिति चेत्? अत्र केचित्—

---

व्योः' इति यलोपे 'अचः परस्मिन्' इति स्थानिवद्भावेन वलपरत्वाभावाद् यलोपो न। अन्यथा स्थान्यचः पूर्वत्वाभावेन स्थानिवत्त्वाप्राप्त्या यलोपो दुर्वारः। व्योरिति लोपे रिङो बहिरङ्गत्वेनासिद्धत्वाल्लोपवारणं तु न युक्तम्, वलिलोपे 'अन्तरङ्ग' परिभाषाया अप्रवृत्तेरिति पूर्वं सिद्धान्तितत्वात्। प्रतिबन्धकेति निवेशे लक्ष्यासिद्धिश्च। तथाहि—'इयाय' इत्यत्र अयादेशस्य स्थानिवद्भावो हि लघूपधगुणे साधक इति तस्य स्थानिवत्त्वेन लघूपधगुणापत्तिः। मम तु 'उत्तर-खण्डादेशस्याभ्यासकार्ये' इति निषेधात् स्थानिवत्त्वाभावेनोपधात्वाभावान्न दोषः। तथा 'ईयतुः' इत्यत्रोत्तरखण्डे 'एरनेकाचः' इति यणि तस्य स्थानिवत्त्वेन 'इको यण्' इति यणापत्तिश्च। पूर्वोक्तरीत्योत्तरखण्डादेशस्याज्घटितस्य ग्रहणेन तत्सिद्ध्यङ्गीकारेऽपि तन्निवेशे गौरवमिति ध्येयम्।

तथा 'अचकाणत्' इत्यत्र सन्वद्भावापत्तिः। पूर्वोक्तप्रकारेण तत्सिद्धिस्तु न युक्ता, 'ओः पुयण्जि' इति भाष्याद् यत्रोत्तरखण्डे परिनिष्ठितेऽवर्णः श्रूयते इत्येव कल्पनात्, न तु वर्णादेश एवेत्यन्यत्र प्रपञ्चितमित्यलम्।

**अङ्गसम्बन्धिनीति**। अङ्गत्वावच्छिन्नोद्देश्यक इत्यर्थः। ननु 'अतो येयः' इत्यत्र 'सकारप्रश्लेषो वार्णपरिभाषामनपेक्ष्य' इति शेखरोक्तिरयुक्ता, तस्याङ्गोद्देश्यकत्वाभावादिति चेत्, न; तस्याः सामान्यतः प्रवृत्तिकल्पनामन-पेक्ष्येत्यर्थेनादोषात्।

वस्तुतोऽङ्गसम्बन्धिनीति चिन्त्यम्, 'ज्ञाने, ज्ञानानि' इत्यादौ 'नपुंसकाच्च इति श्यादेशात् पूर्वमन्तरङ्गत्वाद् वृद्धिसवर्णदीर्घयोरापत्तेः। श्यादेशस्तु हलन्तेषु चरितार्थः। अत एव 'औङः श्याम्' इति वार्त्तिकं चरितार्थम्।

**सतुग्निर्देशादिति**। ननु वार्णाङ्गयोर्युगपत् प्रवृत्तावेव ज्ञापकसाजात्यात् परिभाषाप्रवृत्तिः। प्रकृते तुकः पूर्वमेव प्राप्तिरिति नात्र परिभाषाविषय इति चेत्, न; आङ्गकार्यप्रवृत्तियोग्यतायां वार्णकार्यं न प्रवर्तत इति तस्या अर्थ इति प्रकृतपरिभाषाया विषयसत्त्वात्। अत एव 'अध्यैयाताम्' इत्यादिसिद्धिरिति तत्प्रतीके शब्देन्दुशेखरे स्पष्टम्।

न च श्यादेशस्य झलादिप्रत्ययनिमित्तकत्वेन बहिरङ्गे तुकि कर्तव्येऽसिद्ध-त्वात् तु किं पुनस्तद्विशिष्टस्य विधानार्थं तदावश्यकमिति वाच्यम्, तुक्यजान-न्तर्यसत्त्वेन 'नाजानन्तर्ये' इति निषेधेन श्यादेस्यासिद्धत्वाभावेन तुकोऽप्राप्तेः।

अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

न कृतो विशिष्ट ऊहः=निश्चयः, शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। भाविनिमित्तविनाश इत्यध्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात् संभावितेऽन्तरङ्गं नेति यावत्।

अत्र च ज्ञापकम् 'समर्थानां प्रथमात्' इति सूत्रे समर्थानामिति। तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्। अन्यथान्तरङ्गत्वाद् दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव। तत्र हि भाविन्यादिवृद्धया सवर्णाच्त्व-विनाशः स्पष्ट एव।

---

किञ्च, 'वार्णं' परिभाषाविषयेऽन्तरङ्गपरिभाषायाः प्रवृत्तौ वार्णपरिभाषाया वैयर्थ्यापत्तेरित्यलम् ॥ ५५ ॥

नन्वेवमिति। उक्तस्थलेष्वेव 'अन्तरङ्ग' परिभाषाया अप्रवृत्तिस्वीकार इत्यर्थः।

अन्तरङ्गावादिति। क्रमिकान्वाख्याने 'सेद् वस्' इत्यवस्थायामिटः प्राप्त्या सम्प्रसारणस्य च भसञ्ज्ञाप्रयोजकप्रत्ययोत्पत्त्यनन्तरं प्राप्त्येटस्तत्त्वमिति भावः।

इटश्श्रवणेति। इट्स्थानिकस्य यण इत्यर्थः।

न च यणि कर्तव्ये सम्प्रसारणस्य बहिरङ्गत्वेनासिद्धत्वात् कथं यणिति वाच्यम्, 'अक्षद्यूः' इतिवत् प्रकृते 'नाजानन्तर्ये' इति निषेधात्।

ननु 'लोपो व्योः' इति लोपे कर्तव्ये सम्प्रसारणस्यासिद्धत्वेन वल्परत्वाद् यलोपे 'सेदुषः' इति सिद्धमिति चेत्, न; वलिलोपे 'अक्षद्यूः' इतिवदन्तरङ्ग-परिभाषाया अप्रवृत्तिरित्यसकृदावेदितत्वात्। ग्रन्थकृद्रीत्या त्वजानन्तर्ये कर्तव्ये कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति, तस्मिश्च कर्तव्ये नासिद्धत्वमिति 'नाजानन्तर्ये' इति परिभाषाया अर्थस्वीकारेण 'लोपो व्योः' इति लोपे कर्तव्येऽपि सम्प्रसारणस्यासिद्धत्वाभावात्। केचिद्=दीक्षितप्रभृतयः। अस्याहुरित्युत्तरेणा-न्वयः।

अकृतव्यूहाः [ इति ] ऊहपदार्थमाह—निश्चय इति। वैशिष्टयमाह—शास्त्रप्रवृत्तीति। यैः=पाणिनिप्रोक्तशास्त्राध्येतृभिः। नन्वेवं सर्वशास्त्रवैयर्थ्यम्? अत आह—भाविनीत्यादि।

अत्रेति। परिभाषायामित्यर्थः। ज्ञापकम् 'समर्थानाम्' इति। यत्तु, अत्र 'गोरतद्धितलुकि' इत्यत्र तद्धितग्रहणं ज्ञापकम्। तद्धि 'राजगवीयः' इत्यादौ सुब्लुकि निषेधो मा भूदित्येतदर्थम्। अस्या अभावे त्वन्तरङ्गत्वाद् ऋचा भाव्यमिति तदानर्थक्यं स्पष्टमेव। ज्ञापिते तु भाविलुकः सत्त्वेन टज्निमित्त-विनाशाद् टच् न स्यादिति सफलं तदिति। तत्, न; 'अन्तरङ्गान्' इति न्याय-

**न चात्रैकादेशप्रवृत्तिसमये वृद्धचप्राप्त्यैकादेशे कृत आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्, तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः ।**

**न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम्, समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ।**

**यत्तु, समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति । तन्न; असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य चान्तरङ्गे कर्तव्येऽसिद्धत्वं बोध्यते, न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात्, फलाभावाच्च ।**

---

प्राप्त्याऽनिष्टवारणेन तस्य साफल्यात् । **सवर्णाच्त्वविनाश इति ।** सवर्णाच्परत्वविनाश इत्यर्थः ।

ज्ञापिते चारितार्थ्यं विघटयति—**न चात्रैकादेश** इति । अत्र=सूत्थितादिशब्दे । **तद्द्वारैवेति ।** तथा च परिभाषार्थोऽयं सम्पन्नः—भाविनिमित्तविनाशे तन्निमित्तादेशविनाशे वा पाणिनीया अकृतव्यूहा भवन्तीति ।

ननु 'सु उत्थितः' इत्यस्यामवस्थायां प्राप्तसवर्णदीर्घनिमित्तभूताक्त्वविनाशस्य पश्चादवश्यं भावितया तज्ज्ञानेन 'अकृत' इति परिभाषाप्रवृत्त्या पूर्वं दीर्घाप्रवृत्तौ 'सावुत्थितिः' इति स्यादिति समर्थग्रहणं कृतम् ।

एतदभावेऽप्यकृतसन्धेः प्रत्ययोत्पत्तौ वृद्धचुत्तरमप्यन्तरङ्गे दीर्घे कर्तव्ये वृद्धेरसिद्धत्वेन दीर्घस्य प्रवृत्तिसम्भवेन भाविनिमित्तविनाशरूपलिङ्गज्ञानस्यैतद्विषयेऽसम्भवेन पूर्वं दीर्घप्रवृत्तेः सुस्थत्वात् समर्थग्रहणस्य स्वांशे चारितार्थ्यं दुर्वचमिति शङ्कते—**न चेति । वृद्धेरसिद्धत्वादिति ।**

न च दीर्घेऽजानन्तर्यसत्त्वेन 'नाजानन्तर्ये' इति निषेधात् कथं तस्मिन् कर्त्तव्ये बहिरङ्गवृद्धेरसिद्धत्वमिति वाच्यम् 'नाजानन्तर्ये' इति परिभाषाया नव्यमतेऽस्वीकारात् ।

**ज्ञापनादि ।** ऊक्तरीत्या तद्विषये क्वापि निमित्तविनाशाभावेन परिभाषाया निर्विषयत्वापत्त्या समर्थग्रहणेनासिद्धपरिभाषाया एतादृशे विषयेऽप्रवृत्तिरिति ज्ञाप्यत इति भावः ।

**ज्ञाप्यत इति ।** 'अकृतव्यूह' परिभाषाज्ञापकत्वस्य, 'अन्तरङ्ग'परिभाषाया एतद्विषयेऽप्रवृत्तिज्ञापकत्वस्य च कल्पने गौरवादेतत्परिभाषाऽकरणरूपलाघवानुरोधेन 'असिद्ध' परिभाषा अनित्यत्वकल्पनमेव लघ्वित्याशयः ।

ननु समर्थग्रहणेन 'अन्तरङ्गं बलीयः' इत्यस्यानित्यत्वं कल्प्यते, उत, 'असिद्ध'परिभाषायाः ? नाद्यः, सूत्थितादावेकादेशप्राप्तिसमये वृद्धेरप्राप्त्या

**एवञ्च सूस्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्व-ज्ञापनासम्भवात्। 'अन्तरङ्गानपि विधीन्' इत्यादेरप्यस्यामेवान्तर्भावः।**

**एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम्। अत एव 'गोमद्दण्डी' इत्यादौ हल्ङ्यादिलोपो न। अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः। अस्ति चात्रापि 'यदि लोपो न स्यात्, तर्हि लुक् स्यात्' इति सम्भावना।**

**'अल्लोपो नः' इति सूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम्। तद्धि 'आन' इत्यादौ लोपवारणाय। अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद् दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः।**

---

दीर्घस्याप्रतिद्वन्द्वितया तत्प्रवृत्तेः 'अन्तरङ्गं बलीयः' इति परिभाषासाध्यत्वाभावेनैतदनित्यत्वस्यानेन ज्ञापनासम्भवात्।

न द्वितीयः, अन्तरङ्गकर्तव्यतादशायां बहिरङ्गनिमित्तस्याभावेन तदनित्यत्वस्याप्यनेन प्रतिपादनासम्भवात्।

तदाह—**जातेऽन्तरङ्गे तस्येति**। प्राप्तस्येति शेषः।

**मानाभावादिति**। असिद्धपरिभाषायां यज्ज्ञापकं प्रागुक्तम्, तेन मानेन तथैव कल्प्यते, न त्वन्तरङ्गे कृते पश्चात् प्राप्तं बहिरङ्गं नेति, तदर्थे मानाभावादित्यर्थः।

**फलाभावादिति**। अनन्यथासिद्धलक्ष्यसिद्धरूपफलाभावादिति भावः।

**एवञ्चेति**। अन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकञ्च बहिरङ्गमसिद्धमित्येव 'बहिरङ्ग' परिभाषार्थस्थितौ चेत्यर्थः।

**साध्यत्वाभावेनेति**। यदा दीर्घस्य प्राप्तिः, तदा वृद्धेरप्राप्तेर्निमित्ताभावादिति भावः।

'वसुसम्प्रसारणमज्विधौ सिद्धम्' इति 'असिद्धवत्' सूत्रभाष्येण ध्वनितायाः 'अकृतव्यूह' परिभाषायास्स्वीकारे बहु लाघवमपीत्याह—**अन्तरङ्गानपीति**। **अन्तर्भाव इति**। यत् तस्याः फलम् 'गोमत्प्रियः' इत्यादि, तदनयैव सिध्यति, नुमादिनिमित्तस्य विनाशोन्मुखत्वात् तेषां पूर्वमप्रवृत्तेरिति भावः।

ननु 'प्रतीचः' इत्यादौ साक्षान्निमित्तविनाशस्थलेऽस्याश्चारितार्थ्येन सूस्थितादौ साक्षान्निमित्तविनाशाभावेनास्या अप्रवृत्तौ स्वविषये चारितार्थ्याभावात् समर्थग्रहणस्य ज्ञापकत्वासम्भव इत्याशङ्क्य समाधत्ते-**एतत्प्रवृत्ताविति**। एतेनैव सामञ्जस्ये 'तद्द्वारैव निमित्तविनाशसत्त्वेन' इत्यादि निष्फलमेव पूर्वोक्तमिति ध्येयम्।

एवञ्च सूस्थितादौ निमित्तविनाशसम्भवना त्वस्त्येव—यदि पूर्वं सवर्ण-

**'समर्थानाम्' इति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते—'अकृतव्यूहाः पाणिनीयाः' इति। तेन 'पपुषः' इत्यादावन्तरङ्गत्वात् पूर्वं कृतोऽपीडागमो निवर्तत इति वदन् 'न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैः' इत्यर्थमभिप्रैति। 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति यावत्। सूत्थितादिशि वृद्धौ दीर्घनिवृत्तौ सावुत्स्थितिर्मा भूदिति समर्थानामिति।**

**लोकन्यायसिद्धश्चायमर्थः। तथा हि लोके निमित्तं द्विविधं दृष्टम्—कार्यस्थितौ नियामकं तदनियामकं च।**

---

दीर्घो न स्यात्, तदा वृद्ध्या तन्निमित्तविनाशः स्यादिति। अत्र सम्भावनापोत्थापना [ त्यनेन ] यत्र साक्षान्निमित्तविनाशः, तत्र सुतरां प्रवृत्तिरिति सूचितम्।

**अत एवेति**। अन्तरङ्गनिमित्तविनाशसम्भावनाया अप्येतन्निनिमित्तत्वाङ्गीकारादेवेत्यर्थः। **आपत्तेरिति**। तथा सति प्रत्ययलक्षणेन नुम् स्यादिति भावः।

ननु निमित्तविनाशसम्भावनापि यद्येतत्प्रवृत्तौ निमित्तम्, तर्हि 'अल्लोपोऽनः' इति सूत्र तपरकरणं व्यर्थम्, अत आह—**तपरकरणं त्विति**। न च दान्शान्भ्यां क्विपि तत्र तपरकरणञ्चरितार्थमिति वाच्यम्, प्राचीनमतेऽर्थविशेष एव सन्विधानेनार्थान्तरे नित्यण्यन्तत्वेन तत्र णिलोपस्य स्थानिवत्त्वेनाल्लोपाप्राप्तेः। स्वमते नित्यण्यन्तत्वानङ्गीकारेऽपि यन्मते परिभाषास्वीकारः, तन्मते एतद्ग्रन्थस्य सौष्ठवात्। **इत्याहुरिति**। दीक्षितादय इति शेषः।

कैयटादिसम्मतार्थान्तरमाह—**समर्थेत्यादिना**। कैयट इत्यस्याभिप्रैतीत्यत्रान्वयः। **कृतोऽपीति**। क्रमिकान्वाख्यानपक्ष इति भावः। **निमित्तकारणविनाशेऽपीति**। निमित्तरूपकारणस्य तन्निमित्तादेशस्य च विनाश इत्यर्थः। आद्यम्-'सेदुषः' इति, अन्त्यम् सौत्थितिः। **निमितापाये इति**। निमित्त [ स्य ] निमित्तादेशस्य वाऽपाये इत्यर्थः।

**सावुत्स्थितिर्मा भूदिति**। ननु दीर्घरूपोकारस्याच्त्वेन निमित्तत्वं दीर्घत्वेन नैमित्तिकवृद्ध्याक्त्वावच्छिन्नस्यापाये तदवच्छिन्ननैमित्तिकदीर्घापायस्य स्वत एव सिद्धिरित्येतन्मते 'देवदत्तहन्तृहत' न्यायेन स्थानिभूतह्रस्वोज्जीवनासम्भवेन 'सौत्थितिः' इति रूपस्य सिद्धत्वात् कथमुक्तदोष इति चेत्, न; वृद्ध्या दीर्घनिमित्तस्यापायप्रसङ्गे दीर्घस्य पूर्वमेवापायाङ्गीकारेण ह्रस्वस्यापि दीर्घेण पूर्वमेव निवृत्तत्वादाद्यचोऽभावेन वृद्ध्यनापत्त्या 'सौत्थितिः' इत्यस्यानापत्तेरित्याशयात्। प्राचीनमते देवदत्तहन्तृहतन्यायस्यानित्यत्वेन स्थानिनोऽप्युज्जीवनमभ्युपेत्य वायं ग्रन्थो योजनीयः।

ननु वृद्ध्या दीर्घनिवृत्तौ सत्यां स्थानिनिवृत्तेरभावो वक्तव्यः। स च न युक्तः, ध्वंसाभावस्य जन्यविनाशित्वेन स्थानिन उज्जीवनासम्भवात्। तथा च सौत्थितिरित्यस्य सिद्ध्या सूत्थितादावेकस्मिन्नुकार एव निमित्तनैमित्तिकभावस्य

**आद्यं यथा न्यायनयेऽपेक्षाबुद्धिः, तन्नाशे द्वित्वनाशाभ्युपगमात् । वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव ।**

**द्वितीयं यथा दण्डादि, तन्नाशेऽपि घटनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधाद् व्यवस्था ।**

---

गौणतया तदभ्युपगम्य समर्थग्रहणेनोक्तार्थज्ञापनं न सहृदयाह्लादीत्यरुचेराह—**लोकन्यायेति** ।

**अपेक्षाबुद्धिरिति** । अनेकत्वावगाहिनी बुद्धिरपेक्षाबुद्धिः[1] । सा द्वित्वसंख्यां प्रति हेतुः । सा यावदस्ति तावद् द्वित्वादिस्थितिः । अपेक्षाबुद्धिविनाशे द्वित्वादिविनाश इति हि नैयायिकसरणिः ।

**प्रारब्धेति** । वर्तमानकालिकशरीरारम्भकशुभकर्मेत्यर्थः । **विक्षेप इति** । अविद्यांश इत्यर्थः ।

**प्रसिद्धमेवेति** । लोकेऽपि जपाकुसुमादिसांनिध्ये स्फटिके लौहित्यम्, तदभावेनेति प्रसिद्धम् ।

ननु वैपरीत्यं किं न स्यादत आह—**लक्ष्येति** ।

**न कश्चिन्न्याय इति** । ननु 'प्रक्षालनाद्धि' इति न्यायोऽस्तीति चेत्, न; नहि अनेन न्यायेनोक्तार्थो बोध्यते, किन्तु पूर्वमकरणं कृत्वा पश्चान्निवर्तनमित्यनयोर्लघुगुरुभावो बोध्यत इति भावः । **सम्प्रतिपन्न इति** । युक्त इत्यर्थः ।

---

१. 'अयमेकः, अयमेकः' इति नानैकत्वावगाहिनी बुद्धिरपेक्षाबुद्धिः । सा द्वित्वादिसंख्या निमित्तकारणम् । यावदपेक्षाबुद्धिस्तिष्ठति तावद् द्वित्वादिकमपि तिष्ठति । तन्नाशे च नश्यतीति न्यायनयेऽङ्गीकारादपेक्षाबुद्धिरूपं निमित्तं कार्यस्थितिनियामकम् । वेदान्तशास्त्रे च प्रारब्धाख्यं कर्म विक्षेपस्य भोगतत्साधनदेहादिरूपस्य स्थितिनियामकम् । कर्म त्रिविधम्—सञ्चितं, प्रारब्धं क्रियमाणं चेति । तत्रानेकजन्मसञ्चितानां कर्मणां ब्रह्मसाक्षात्कारेण नाशः, 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति श्रुतेः । वर्तमानजन्मनि क्रियमाणाना च श्लेषाभावः—फलोत्पादनसामर्थ्याभावः । 'तद् यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवविदि पापं कर्म न श्लिष्यते' इति श्रुतेः 'तदधिगम उत्तरपूर्वार्धयोरश्लेषविनाशौ' इति ब्रह्मसूत्राच्चावगम्यते । फलदानोन्मुखस्य वर्तमानदेहारम्भकस्य प्रारब्धकर्मणस्तु भोगादेव क्षयः, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेः, 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति ब्रह्मसूत्राच्च । एवञ्च यावञ्च यावत् प्रारब्धं तावद्विक्षेपस्थितिरिति प्रारब्धस्य विक्षेपस्थितिनियामकत्वं वेदान्तशास्त्रप्रसिद्धमिति बोध्यम् । यद्यप्यपेक्षाबुद्ध्यादिस्थले तत्तत्प्रमाणबलेनापेक्षाबुद्धिनाशत्वद्वित्वादिनाशत्वादिप्रातिस्विकरूपेणैव कार्यकारणभावः, न तु सामान्येन निमित्तनाशत्वेन नैमित्तिकनाशत्वेन रूपेण, दण्डनाशे घटनाशादर्शनेन व्यभिचारात् । तथाप्ययमर्थो लोकेऽपि क्वचिद् दृश्यते इत्येतावन्मात्रे ग्रन्थतात्पर्यम् ।

**भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायः, नापि संप्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकसिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम्।**

**परे तु 'सेदुषः' इत्यादौ पदावधिकेऽन्वाख्याने 'सेद्वस् अस्' इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात् पूर्वं सम्प्रसारणे बलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति स्पष्टम् 'समर्थानाम्' इति सूत्रे कैयटे, 'असिद्धवत्' सूत्रे कैयटे च स्पष्टमेतत्।**

---

**दृष्टान्त इति**। ननु वरपूजनादौ दैवज्ञमुखेन वरस्याप्यल्पायुष्ट्वादौ ज्ञाते विवाहादौ प्रवृत्त्यदर्शनाद् दृष्टान्तोऽपि प्रसिद्ध इति चेत्, न; सावित्र्युपाख्याने तत्रापि प्रवृत्तेः प्रसिद्धत्वेन व्यभिचार इत्याशयात्।

ननु ज्ञापकबलेन सोऽर्थः कल्प्यत इत्यत आह—**समर्थानामिति**। तदाशय इत्युत्तरमाहुरिति शेषः।

वस्तुतो दीक्षितकैयटोक्तपरिभाषार्थविचारोऽयुक्त एव, परिभाषाया भाष्यानुक्तत्वादिति वक्तुमुपक्रमते—**परे त्वित्यादिना**। पदावधिकेत्यस्य पदस्य विभागपूर्वकं स्थापनं कृत्वेत्यर्थः।

**प्रतिपदविधित्वादिति**। ननु नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिरिति सिद्धान्तादिडविधौ 'वस्वेकाच' इत्यत्र वस्वित्युक्तेरिटोऽपि प्रतिपदविधित्वमिति चेत्, न; 'वस्वेकाच' इति सूत्रे वलादेरित्यनुवर्तते। तेन वलाद्यर्थापेक्षत्वेन 'वस्वेकाच्' इति सूत्रार्थोपस्थित्यपेक्षया 'वसोः सम्प्रसारणम्' इत्यस्यार्थस्य शीघ्रोपस्थिकत्वात्। किञ्च, सद् लिट् असिति तस्मिन् पक्षे स्थितिः। अत्र द्वित्वक्वसोः प्राप्तौ प्रतिपदोक्तत्वात् क्वसावेत्वाभ्यासलोपमन्तरा कृतद्वित्वैकाचोऽभावेनेटोऽप्राप्त्या, द्वित्वात् प्राक् प्रतिपदोक्तत्वात् सम्प्रसारणेनेष्टसिद्धेः। यद्वा, इड्विधौ वलादेरित्यनुवृत्त्या तस्य प्रक्रियायां वलादित्वाव्यभिचारेण परिनिष्ठिते वलादेरित्यर्थकम्। तथा च परिनिष्ठिते वलादेर्वसोरेवेति नियमेन सम्प्रसारणेन वक्ष्यमाणवलादेर्व्यावर्तनात्।

केचित्तु, पूर्वमिडागमे सम्प्रसारणे पूर्वरूपे यणि सम्प्रसारणस्य बहिरङ्गत्वेन सिद्धत्वाद्धलि लोपे रूपं सिद्धमित्याहुः।

**नियामकमिति**। अत्र मानं त्वधिकारादेव विकारावयवयोर्लाभे पुनस्तदर्थम् 'मयड् वैतयोः' इति सूत्रस्थमेतयोरिति ग्रहणम्। तद्धि विल्याद्यणः चारितार्थ्यान्मयटा परत्वाद् विल्वाद्यणो बाधो भविष्यतीति तद्व्यर्थमेव स्यादिति भाष्ये स्पष्टम्। मम तु प्रतिपदविधेस्सावकाशत्वेऽपि पूर्वप्रवृत्तौ नियामकत्वेनाणः प्राप्तौ तद्विषयेऽपि मयटः प्रतिप्रसवार्थं तच्चरितार्थम्। यदि तत्रपवादस्य नित्यत्वेन स्वविषये सर्वत्र नित्यमेव प्रवृत्तावुत्सर्गस्य तद्विषयेऽप्राप्त्यैतयोरिति पुन-

**यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजम्, तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः। निरूपितं चैतद् बहुशः शब्देन्दुशेखरादौ।**

**'समर्थानाम्' इति सूत्रस्थसमर्थग्रहणं तु विषुण इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव।**

---

विधानमपवादविषयेऽप्युत्सर्गसमावेशार्थमिति न तज्ज्ञापकमित्युच्यते, तदा प्रति [ पद ] विधेर्बलवत्त्वं शीघ्रोपस्थिपिमूलकमेवेति बोध्यम्।

न चैवं स्त्रीणामियायेत्यादावियङ् 'इणो यण्' इति यण् च स्यादिति वाच्यम्, 'क्वचिदनवकाशत्वाभावेऽपि' इत्यत्र क्वचित्पदेन तस्य क्वाचित्कत्वमित्यर्थस्य मूल एव वक्ष्यमाणत्वात्।

ननु परिभाषानङ्गीकारे समर्थग्रहणं व्यर्थम्, अत आह—**समर्थग्रहणमिति। विषुण इत्यादाविति।** आदिना सौमेन्द्र इत्यादिसंग्रहः। **वारणायेति।** समर्थग्रहणाभावे विषुण इत्यादिप्रयोगेऽत्रकृतसन्धेः प्रत्ययदर्शनेन वैक्षमाणिरित्यादिप्रयोगेऽप्यकृतसन्धिभ्य एव प्रत्ययस्य प्रसङ्ग इति भ्रमः स्यात्। समर्थग्रहणे कृते त्वन्तरङ्गकार्यप्रवृत्त्युत्तरमेव तत्प्रवृत्तिरिति [ स्पष्टम् प्रतिपत्तिरिति ? ] तच्चरितार्थमिति भावः।

ननु 'विष्वगित्युत्तरपद'[1] इति वार्त्तिकेनोक्तस्थलेऽकृतसन्धेः प्रत्ययोत्पत्तावप्यन्यत्रान्तरङ्गपरिभाषाबाधे न मानम्, अत आह—**न्यायसिद्धार्थानुवाद एवेति।**

अत्र केचित्—वस्तुतस्तु समर्थग्रहणमन्तरङ्गस्यापि सन्धिकार्यादेः पूर्वमप्रवृत्तिज्ञापनाय। तेन समर्थाधिकारबहिर्भूततद्धितानामकृतसन्धेरुत्पत्त्याऽनुकम्पितो 'वायूढो वायुकः' इत्यादौ 'ठाजादावूर्ध्वम्' इत्यनेन ऊढशब्दस्य लोपे तस्य सिद्धिरित्याहुः। वस्तुतस्तत्र 'पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न' इति परिभाषया एकादेशात् प्राग् लोपप्रवृत्त्येष्टसिद्धेः समर्थग्रहणमनुवादकमेव। किञ्च, उक्तस्थलेऽन्तरङ्गत्वादेकादेशेऽपि 'ठाजादौ' इति द्वितीयादच ऊर्ध्वंभूतस्य ठशब्दस्य लोपे 'केऽणः' इति ह्रस्वेऽभिमतरूपसिद्ध्या तदनुवादकमेवेति दिक्।

---

१. अयं भावः—विषु नाना अञ्चतीति विष्वञ्चि न्यूनाधिकानि दिनानि, तानि सन्त्यस्येति विषुणः=विषुवदाख्यः कालः। यत्र दिनानि समतां यान्ति, तस्य स्वतो न्यूनाधिकदिनसम्बन्धाभावेऽपि तथाविधदिनमूलभूतत्वात् तथोक्तिः। अत्र 'विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः' इति वार्तिकेन मत्वर्थे न प्रत्ययः, सन्धेः प्रागेव चोत्तरपदलोपो विधीयते। सन्धिकार्योत्तरमुत्तरदपलोपे तु उकारस्य वकारे, वलिलोपे च विष्ण इत्यनिष्टरूपापत्तिः स्यात् एवञ्च तथा तत्राकृतसन्धेः प्रत्ययोत्पत्तिर्दृश्यते तथा सर्वत्रेष्टेति भ्रान्तिर्मा भूदित्यर्थं समर्थपदमन्तरङ्गत्वसिद्धार्थानुवादरूपमेवेति।

**ध्वनितं चेदम् 'विप्रतिषेध' सूत्रे भाष्ये। तत्र हि वैक्षमाणिरित्यन्तरङ्ग-परिभाषोदाहरणमुक्तम्।**

**किञ्च, विभज्यान्वाख्याने 'सु उत्थित अस् इ' इति स्थिते 'वार्णादाङ्गं बलीयः' इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम्।**

**अत एव 'सिद्धवत्' सूत्रे 'वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यम्, पपुष इत्यादौ वसोः संप्रसारणे कृते आतो लोपो यथा स्यात्' इति भाष्ये उक्तम्। पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं सम्प्रसारणे इटोऽप्राप्तावुस्-निमित्तक एवातो लोप इति तदाशयः। अन्यथान्तरङ्गत्वादिटि तन्निमित्तक एवातो लोप इति तदसङ्गतिः।**

---

अत एव **'असिद्धवत्'** इति। प्रतिपदोक्तत्वेनेटः पूर्वं सम्प्रसारणस्य प्रवृत्ति-स्वीकारादेवेत्यर्थः। परिभाषाया असत्त्वादेवेति तु नार्थः, तत्सत्त्वेऽपीटोऽप्रवृत्त्या सम्प्रसारणनिमित्तकत्वादालोपस्य तत्संगतेः। **तदसङ्गतिरिति।** उस्निमित्तकातो लोपाभावेनासिद्धत्वाप्राप्त्या वचनमसङ्गतमिति भावः।

वस्तुतः क्रमिकान्वाख्याने वार्त्तिकस्य 'अकृतव्यूह'परिभाषामन्तराऽसंगत्या परिभाषा भाष्याभिमतेति सूचितम्।

किञ्च, पदस्य विभज्यान्वाख्यानेऽपि 'पपुषः' इत्यादौ 'पा लिड् अस्' इति स्थिते द्वित्वक्वसोः प्राप्तौ प्रतिपदोक्तत्वात् क्वसौ 'पा वस् अस्' इत्यव-स्थायामिट्सम्प्रसारणयोरुभयोः प्रतिपदविधित्वस्य तुल्यत्वात् प्रतिपदविधेर्निर-वकाशस्यैव पूर्वप्रवृत्तिप्रयोजकत्वमित्यर्थस्य निरूपयिष्यमाणत्वाच्चान्तरङ्गत्वा-दिडागमे तन्निमित्तकालोपसिद्धया वार्त्तिकासंगतिः परिभाषामन्तरा दुष्परिह-रेति परिभाषा भाष्यसम्मतेति ध्वन्यते। एतेनैषा भाष्ये न दृश्यते इत्युक्तिर्भाष्ये कृतभूरिपरिश्रमत्वसूचनायेति सिद्धम्।

**अत एव वेति।** 'अकृतव्यूह' परिभाषाया असत्त्वादेव। 'च्वौ प्रत्यङ्गस्य' इति च्वौ लुप्ताकारनकारेऽञ्चतौ प्रत्यङ्गस्य=अन्तरङ्गस्येत्यर्थः। अस्योदाहरणम् 'प्रतीचः' इत्यादि स्फुटमेव।

वस्तुतः 'चौ' इति दीर्घविधानेन 'अकृतव्यूह' परिभाषाबोधनद्वारा चौ प्रत्यङ्गस्य प्रतिषेधोऽर्थतस्सिद्ध इत्येव वार्त्तिकाशयः, न त्वपूर्वप्रतिषेधे तस्य तात्पर्यमिति दोषकलङ्कलेशो न 'अकृतव्यूह'परिभाषास्वीकर्त्तॄणामिति बोध्यम्।

भाष्येऽपि 'नैष दोषः' एतदेव ज्ञापयत्याचार्यः—न च्वौ प्रत्यङ्गं भवतीति, यदयं च्वौ दीर्घत्वं शास्तीत्युक्तम्।

अस्यायं भावः—'च्वौ' इति दीर्घविधानेन च्वौ परतः प्राप्तान्तरङ्गस्य प्रतिषेधेऽपि 'अकृतव्यूह'परिभाषाज्ञापने न मानम्। यद्वा, भाष्ये 'च्वौ' इत्युप-लक्षणम्, निमित्तविनाशे सतीत्यस्येति। अपि चाङ्गसम्बन्धिन्याङ्ग एव 'वार्ण'

अत एव 'चौ प्रत्यङ्गस्य प्रतिषेधः' इति वचनं वार्त्तिककृतारब्धम्, भाष्य-कृता च न प्रत्याख्यातम्। प्रत्यङ्गम्=अन्तरङ्गम्। अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव।

अत एव 'च्छ्वोः' इति सूत्रे 'अवश्यमत्र तुगभावार्थो यत्नः कार्यः, अन्त-रङ्गत्वाद्धि तुक् प्राप्नोति' इति भाष्ये उक्तम्। एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नावश्यकत्वकथनमसङ्गतमिति स्पष्टमेव।

न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः। अवश्यमत्रेत्यक्षरस्वा-रस्यभङ्गापत्तेः।

किञ्चानयैव 'प्रत्ययोत्तरपदयोश्च' 'अदो जग्धिर्ल्यब् ति किति' इत्यन-योश्चारितार्थ्येन तज्ज्ञापकवशाल्लुग्ल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत।

---

परिभाषा प्रवर्तत इति मते 'प्रतीचः' इत्यादौ 'वार्ण' परिभाषाया अनुवादकं भवद्रीत्या 'च्वौ' इति वार्त्तिकम्। तथा 'अकृतव्यूह' परिभाषानुवादकं तदिति तुल्या कथाऽस्माकमिति बोध्यम्।

नन्वस्यानित्यत्वाभिप्रायेणापि योजयितुं शक्यत्वेनेदमसाधारणं गमक-मिति प्राचोक्तम् 'तुष्यतु दुर्जन' न्यायेनाभ्युपेत्याह—**किञ्चनयैवेति**। यद्यपि तयो-रत्रैवान्तर्भावः सम्भवति, तथापि विशिष्य ज्ञापकप्रदर्शनपूर्वकं तयोर्व्युत्पादन-वैयर्थ्यं दुर्वारमित्यत्र तात्पर्यम्। वस्तुतो वार्णपरिभाषास्थस्वोक्तरीत्या तयोर-त्रैवान्तर्भावस्य दूरतस्त्यक्तत्वेनेदं चिन्त्यम्।

यद्वा, 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण लाघवादेकमेव वचनं ज्ञापितम्।

तत्र सूत्रयोरन्तरङ्गनिमित्तविनाशकबहिरङ्गविधौ लुक्ल्यपाविवेति प्रदर्श-नार्थं लुक्ल्यपोरुपादानम्, न तु ज्ञापकस्वरूपम्। ज्ञापकस्वरूपं तु 'अकृतव्यूह' इत्येवेति गूढार्थो भाष्यस्येति सर्वमवदातम्।

ननु 'अकृतव्यूह' इत्यस्याभावे क्वचिदिष्टासिद्धिः। अतः फलबलादिय-मावश्यकीत्यत आह—**हरिः इत्यादाविति**। आदिना 'हरिर्हसति' इत्यादेः सङ्ग्रहः।

ननु 'विसर्जनीयस्य सः' इति सूत्रे भाष्ये खरीति नानुवर्तते, फलाभावात्। न चोभयत्र सत्त्वप्रसङ्गः, विसर्गविधेर्वैयर्थ्यापत्तेः। न चावसान एव सत्त्वापत्तिः, 'शर्परे विसर्जनीयः' इति ज्ञापकेन खर्यव तस्य प्रवृत्तेर्न दोष इत्युक्तम्। तन्मते 'हरिः गच्छति' इत्यत्र जिह्वामूलीयवारणाय 'कुप्वोः' इत्यत्र खरीत्यनुवृत्तेराव-श्यकत्वेन तदसङ्गतिरिति चेत्, न; इतोऽपि भाष्यात् 'अकृतव्यूह' परिभाषा-भाष्यसम्मतेति सूचनात्।

यद्वा, इतोऽरुचेराह—**पदसंस्कारपक्षानाश्रयेति**। न च 'अहिरहिर्बुध्यस्व, नृभिर्नृभिः' इत्यत्र विसर्गवारणायेयमावश्यकी।

**किञ्चैषा भाष्ये न दृश्यते। तदुक्तम् 'असिद्धवत्' सूत्रे कैयटेन 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषाया 'भाष्यकृतानाश्रयणात्' इति। पदसंस्कारपक्षे 'हरिः' इत्यादौ विसर्गे कृते ततो गच्छतीत्यादिसम्बन्धे 'हरिः गच्छति' इत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक्॥ ५६॥**

---

न च पूर्वं द्वित्वे पश्चाद्रुत्वेनेष्टसिद्धिः, 'पूर्वत्रासिद्धीयमद्वित्वे' इति वचनात् पूर्वं रुत्वविसर्गयोरेव प्रप्तिरिति चेत्, न; 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्यानित्यत्वेनादोषात्।

नन्वेवमपि 'स्थाता, स्नाति' इत्यत्र 'धात्वादेः षः सः' इति सत्वे ठत्वणत्वयोर्निवृत्त्यनापत्तिः, 'निमित्तापाये' इति परिभाषाया अभावात्।

न च धातुस्वरूपबोधनाय भ्वादिषु पठ्यमाने तस्मिन् लाघवेन शास्त्रप्रवृत्तये षोपदेशत्वबोधनार्थं षकारस्य निपातनेऽपि ठकारणकारयोर्लक्षणनिष्पन्नत्वेन 'तिष्ठतेः' इत्यादौ स्थाधातोरिव 'नकारजावनुस्वार' इत्यभियुक्तोक्त्या थकारघटितस्यैव बोधविषयतया प्रसज्यमाने 'स्थाता, स्नाति' इत्यादौ सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया सत्त्वात् पूर्वं ष्टुत्वादेरप्रवृत्त्या न दोष इति वाच्यम्, तथाङ्गीकारे 'औजिढत्' इत्यस्यासिद्धिप्रसङ्गात्। तथाहि सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यलक्ष्ये पूर्वत्रैपादिकस्याप्रवृत्त्यङ्गीकारे 'औजिढत्' इत्यादावन्तरङ्गढत्वादीनामप्रवृत्त्या हतिशब्दस्यैव द्वित्वे उत्तरखण्डे ढत्वादिषु कृतेषु ढलोपदीर्घप्रसङ्गः, उकारस्य दीर्घाप्रसङ्गश्च। ततश्च 'मा भवानुजीढत्' इति स्यात्। मम तु पूर्वमेव ढत्वदीर्घादिषु कृतेषु पुनर्न दीर्घत्वप्राप्तिः, द्विर्वचननिष्पन्नढकारस्य लोपानिमित्तत्वात्। न चाभ्यासे जकारश्रवणार्थम् 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्यानित्यत्वेन पूर्वं ढत्वादीनामप्रवृत्त्या तवापि जायमानद्विर्वचनहतिशब्दस्यैवत्युत्तरखण्डे ढत्वादिप्रवृत्त्या दीर्घो दुर्वार इति वाच्यम्, ढिशब्दस्य द्वित्वेऽप्यभ्यासकार्ये ढत्वलोपादीनामसिद्धत्वेन हकारबुद्धया चुत्वप्रवृत्त्या जकारश्रवणोपपत्तेः।

न च अभ्यासे श्रूयमाणस्य ढकारस्य प्रत्ययस्थानिकत्वेन हकारस्थानिकत्वाभावात् तस्यासिद्धत्वेऽपि हकारबुद्ध्यभावात् चुत्वाप्राप्त्या जकारस्य श्रवणापत्तिः, ढलोपस्यासिद्धत्वेऽपि हकारस्य श्रूयमाणत्वाभावेनोच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावादिति वाच्यम्, 'मनोरथः' इत्यत्र शब्दरत्नोक्तरीत्या लोपाभावस्य प्रतियोगिरूपतया हकारस्य प्रसक्तिसम्भवेन चुत्वसिद्ध्या जकारस्य श्रवणोपपत्तेः।

न च प्रत्ययरूपढिशब्दस्यैव द्वित्वेन प्रकृतिसम्बन्धिहकारस्याभ्यासानवयवत्वाच्चुत्वं न स्यादिति वाच्यम्, अभ्याससंज्ञायां ढत्वढलोपादेरसिद्धतया हतिशब्दस्यैवाभ्याससंज्ञाङ्गीकारेणादोषात्।

न चैवम् 'औडिढत्' इत्यस्यासिद्धिरिति वाच्यम्, 'पूर्वत्रासिद्धीयमद्विर्वचने'

## अन्तरङ्गादप्यपवादो बलवान् ॥ ५७ ॥

**तत्रापवादपदार्थमाह—**

---

इत्यस्य द्वित्वे कृते तदाश्रयस्य कार्यान्तरे कर्तव्येऽप्यसिद्धत्वं नेत्यर्थस्य 'णत्वं द्वित्वम्' इति प्रतीके शब्देन्दुशेखरे उक्तत्वेन तत्सिद्धेरिति चेत्, सत्यम्; त्रैपादिककार्यप्रतिबन्धकसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायामेव त्रैपादिकस्याप्रवृत्त्या द्वित्वस्य त्रैपादिकढत्वादिप्रतिबन्धकत्वाभावादिति दिक्। 'हृतिशब्दस्य द्वित्वम्' इति मूलमते तु 'औजिढत्' इत्यत्र द्वित्वस्य चङ्निमित्तत्वेन बहिरङ्गत्वेनासिद्धत्वान्न दीर्घ इति प्रागुक्तमिति तत एव सन्तोष्टव्यम्।

वस्तुतः सपादसप्ताध्यायीस्थेति स्वीकृत्य 'औजिढत्' इत्यादिसिध्यर्थं त्रैपादिककार्यप्रतिबन्धकेत्यपि तत्र निवेशनीयमिति गौरवम्। तस्माद् येन प्रमाणेन भवतां सपादसप्ताध्यायीस्थकार्येति वचनस्य स्वीकारः, तेनैवाकृतेत्यस्य स्वीकारे लाघवमिति तत्त्वम्।

भाष्यसंमतत्वं सपादेत्यस्य यथा तथाऽकृतेत्यस्यापीति वक्तुं शक्यमिति दिक्। एतस्या अनित्यत्वोदाहरणानि—अतिकुमारि। अन्यथा ह्रस्वस्य भावित्वात् 'यस्य' इति लोपानापत्तिः।

वस्तुतो लोपाभावे गुणे ह्रस्वे न रूपसिद्धिर्नानित्यफलमिदम्। 'अतिसखेरागच्छति' इत्यत्र लोपाभावे असखीति प्रतिषेधः स्यात्। तथा 'अतिभवकानुचिच्छिषति' इति। अत्राकजादिनिमित्तानुपसर्जनादेर्विनाशस्य भावित्वादकजादिर्न स्यात्। एवं 'प्राप्तजीवकः' इत्यादावित्वानापत्तिः, स्थानिवद्भावेन निमित्तसत्त्वबुद्धावपि वस्तुतो निनित्तविनाशसत्त्वात्। परिभाषाया उदाहरणम् 'सेदुषः, प्रतीचः' इत्यादि मूल एव प्रसिद्धम्। एवं रात्रिमटतीति रात्रिमट इति। अत्र 'रात्रेः कृति विभाषा' इत्यस्य 'रात्रिं चरः' इत्यादौ चारितार्थ्येनान्तरङ्गत्वाद् यण् नेति शिवम् ॥ ५६ ॥

**तत्रेति।** घटकत्वं सप्तम्यर्थः। अपवादो बलवानिति वाक्यार्थस्तत्पदार्थः। तस्य च प्रत्ययार्थे घटकत्वे निरूपितत्वसम्बन्धेनान्वयः। प्रत्ययार्थस्य घटकत्वस्याश्रयत्वसम्बन्धेनापवादपदार्थेऽन्वयः।

एवञ्चापवादो बलवानित्येतद्वाक्यार्थनिरूपितघटकत्वाश्रयापवादपदार्थकर्मकं कथनमिति बोधः। तत् कथनं तु 'येन नाप्राप्ते' इत्यारभ्य स इत्यनेन बोध्यम्।

**भावे क्त इति।** एवञ्च प्राप्त इत्यस्य प्राप्तावित्यर्थः। 'गत्यर्थ' इति अविवक्षितकर्मत्वेनाकर्मकतया 'नपुंसके भावे क्तः' इति वा विहित इत्यर्थो येनेति कर्तरि तृतीया, 'न लोक' इति निषेधात् 'कर्तृकर्मणोः कृति' इति षष्ठी न। 'नपुंसके भावे क्तस्य योगे षष्ठी' इति वार्त्तिकस्य तु न प्राप्तिः, तस्य शेषत्व-

**येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥ ५८ ॥**

**प्राप्त इति भावे क्तः, येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यप्राप्ताविरयर्थः, नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् ।**

**एञ्च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः ।**

---

विवक्षया भाष्ये प्रत्याख्यानात् । नाप्राप्त इत्यत्र नैकधेतिवद् नशब्देन समासात्, पृषोदरादित्वाद्वा 'तस्मान्नुडचि' इति नुडभावः । 'नाप्राप्ते' इति भाष्यप्रयोगोऽत्र मानम् । **प्रकृतार्थेति** । उत्तरपदार्थेत्यर्थः ।

अवश्यमित्यर्थलाभे बीजमाह—**दार्ढ्यमिति** । अवश्यमित्यर्थः । तदुक्तम् 'विनञ्भ्याम्' इति सूत्रे भाष्ये—'द्वौ प्रतिषेधौ प्रकृतार्थं सङ्गमयति' इति । अत एव 'येन प्राप्तः' इति विहाय 'येन नाप्राप्तः' इत्युक्तम् । प्राप्तावश्यकत्वं च कृताकृतप्रसङ्गित्वरूपम्, लौकिकदृष्टान्तेन तथैव लाभात् । तदाह—**यत्कर्तृकावश्यप्राप्ताविति** । यत्कर्तृकव्यापकत्वविशिष्टप्राप्ताविति फलितोऽर्थः । यत्कर्तृकप्राप्तिनिरूपित व्याप्यत्वम् । यत्कर्तृकप्राप्तिस्सम्भवति, स तस्यापवाद इति भावः ।

यथा 'आमि सर्वनाम्नः' एतद्विहितसुट्कर्तृकप्राप्तेः 'ह्रस्वनद्यापः' एतद्विहितनुट्कर्तृकप्राप्तिनिरूपितं व्याप्यत्वमस्तीत्यतः सुट् नुडपवाद इति गीयते । 'तस्य' इत्यस्य यत्कर्तृकावश्यप्राप्तिः, तस्येत्यर्थः । 'आवश्यकाधमर्ण्य' इति निर्देशेनादन्तस्याप्यवश्यशब्दस्य सत्त्वाद् यत्कर्तृकावश्यप्राप्ताविति निरनुस्वारपाठोऽप्युपपन्नः । मान्तस्यैव 'अवश्यम्' शब्दस्य सत्त्वे तस्य योपधत्वाभावेन ततः 'धन्वयोपधात्' इति वुञोऽसम्भवान्निर्देशासङ्गतिः स्यादिति बोध्यम् ।

एतेन 'आवश्यकाधम' इति निर्देशकल्पितमदन्तमवश्यशब्दमबुद्ध्वा कृत्यप्रत्ययाव्यवहितपूर्वत्वविशिष्टावश्यम्शब्दावयवस्यैव मकारस्य लोपविधानाद् यत्कर्तृकाऽवश्यप्राप्ताविति निरनुस्वारः पाठोऽयुक्त एवेति यदुक्तम्, तत् परास्तम् ।

'येन न' इत्यस्य विशकलितं सर्वमर्थमुक्त्वाऽनेन न्यायेन कस्य शास्त्रस्य केन शास्त्रेण बाधो भवतीत्युपसंहरति—**एवञ्चेत्यादिना** । **विशेषशास्त्रेति** । इदश्च विशेषधर्मावच्छिन्नेऽभेदेन विशेषणम् । प्रकृते विशेषशास्त्रोद्देश्यातिरिक्तस्य विशेषधर्मावच्छिन्नस्य ग्रहणासम्भवादिदं व्यर्थम् ।

**विशेषधर्मावच्छिन्नवृत्तीति** । तु सामान्यधर्मे विशेषणम् । विशेषधर्मावच्छिन्नावृत्तित्वविशिष्टस्य सामान्यधर्मस्य खपुष्पायमाणत्वादिदमपि व्यर्थम् ।

एवञ्चेत्यस्याग्रे सामान्यधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रेण बाध एव वक्तुमुचित एवेति बोध्यम् ।

एतेनोद्देश्यतावच्छेदकयोर्व्याप्यव्यापकभाव एव बाधप्रयोजक इति सूचितम् । सर्वेषामित्यत्रास्य समन्वयः ।

अत्र हि विशेषशास्त्रम् 'आमि सर्वनाम्नः' इति, तदुद्देश्योऽवर्णान्तसर्वनामाव्यवहितपरत्वसमानाधिकरणाम्त्वेन विशेषधर्मेणावच्छिन्नोऽवर्णान्तसर्वनामाव्यवहितपरत्वविशिष्ट आम्, तद्वृत्तिसामान्यधर्मो ह्रस्वान्ताबन्तान्यतराङ्ग्व्यवहितपरत्वसमानाधिकरणमाम्त्वम्, तदवच्छिन्नो ह्रस्वान्ताबन्तान्यतरतदाद्यव्यवहितपरत्वविशिष्ट आम्, तदुद्देश्यकम् 'ह्रस्वनद्यापः' इति शास्त्रम्, तस्य विशेषशास्त्रेण 'आमि सर्वनाम्नः' इत्यनेन बाध इति बोध्यम् ।

नन्वेवं प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन बाधो न स्यात्, प्रथमद्विर्वचनीयोद्देश्यतावच्छेदकस्य प्रथमैकाच्त्वस्य द्वितीयद्विर्वचनीयोद्देश्यतावच्छेदकावच्छिन्नादिभूताजव्यवहितपरत्वविशिष्टद्वितीयैकाज्वृत्तित्वाभावादिति चेत्, न; यतो न ह्यादिभूताजव्यवहितपरत्वविशिष्टं द्वितीयैकाचमुद्दिश्च धात्ववयवं प्रथमैकाचमुद्दिश्य वा द्वित्वं विधीयते, अपि त्वजादिधातुमुद्दिश्य द्वितीयैकाच्सम्बन्धित्वविशिष्टं द्वित्वं विधीयय इति द्वितीयद्विर्वचनीयोद्देश्यतावच्छेदकावच्छिन्नेऽजादिधातौ प्रथमद्विर्वचनीयोद्देश्यतावच्छेदकस्य धातुत्वस्य सत्त्वात् ।

वस्तुतस्तु व्यापकधर्मावच्छिन्नोद्देश्यताकं हि व्यात्यधर्मावच्छिन्नोद्देश्यताकेन बाध्यते । तत्र व्याप्यतावच्छेदको व्यापकतावच्छेदकस्तद्घटकसामानाधिकरण्यनियामकश्च तादृशोद्देश्यतावच्छेदकतावच्छेदक एव सम्बन्धो नापेक्षितः, किन्तु व्याप्यत्वेन व्यापकत्वेन च जिवृक्षितयोः शास्त्रयोरुद्देश्यदलीयविषयतावच्छेदकस्तत्समसंवित्तिवेद्यश्च । वर्तते चात्र स्वावच्छिन्नाव्यवहितोत्तरवर्तित्वसम्बन्धेन द्वितीयैकाचि प्रथमैकाच्त्वमिति नानुपपत्तिः ।

ननु प्रकृते उद्देश्यतावच्छेदकं साक्षाद् विवक्षितम्, उत, परम्परयापि ? नाद्यः, 'अनचि च' इत्येतच्छास्त्रीयसाक्षादुद्देश्यतावच्छेदकयर्त्वापेक्षया 'अचो रहाभ्याम्' इति शास्त्रीयसाक्षादुद्देश्यतावच्छेदकस्य यर्त्वस्याव्यवहितपरत्वसम्बन्धेन रेफस्य वा व्याप्यत्वाभावेन निमित्ततया कार्यिताया बाधासम्भवात् 'नेमौ रहौ कार्यिणौ, किं तर्हि ? निमित्तं द्विर्वचनस्य' इति भाष्यासंगतेः ।

नान्त्यः 'लोपो व्योः' इत्यत्र वत्वस्य परम्परयोद्देश्यतावच्छेदकवल्त्वापेक्षया व्याप्यत्वेन 'व' पदप्रयोज्यस्थानितया वलपदप्रयोज्यनिमित्तताया बाधात् 'जाहावः' जाह्वः इत्यादौ वकारे परे यलोपाप्रवृत्तेः ।

किञ्च, भाष्यकृता 'तद्धितेष्वचामादेः' इत्यादिवृद्धेरन्त्योपधावृद्धिबाधकत्वेऽनुशतकादिषु पुष्करसच्छब्दपाठो मानभित्यभ्यधायि, तन्न संगच्छेत, परम्परयोद्देश्यतावच्छेदकस्य ञ्णित्-तद्धितत्वस्य ञ्णित्-प्रत्ययत्वापेक्षया व्याप्यत्वस्य सत्त्वात् तक्रन्यायेनैव बाधसिद्धेरिति चेत्, अत्राहुः—प्रकृते उद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावो न बाधप्रयोजकः, अपि तु विषयतयोर्व्याप्यव्यापकभाव एव । 'अचो रहाभ्याम्' इत्यत्र रहाभ्यामित्येतद्घटकरपदप्रयोज्या विषयताऽजव्यवहितपरत्वयरव्यवहितपूर्वत्वैतदुभयविशिष्टरेफे, स रेफोऽजव्यव-

हितपरत्वविशिष्टोऽच्परत्वाभावविशिष्टोऽस्त्येवेति तत्र 'अर्नाच च' इत्यत्र यरूपपदप्रयोज्यविषयतायाः सर्वत्रैव सत्त्वाद् रपदप्रयोज्ययर्पदप्रयोज्ययोर्विषयतयोर्व्याप्यव्यापकभावेन रपदप्रयोज्यनिमित्ततया यपदप्रयोज्यकार्यितायाः बाधः।

अथैवम् 'अनचि च' इत्यस्य बाधेऽपि 'अचो रहाभ्याम्' इत्यस्य बाधे न बीजम्। तथा च 'मद्रह्लदः, भद्रह्लदः' इत्यादौ द्वित्वापत्तिरिति भाष्यविरोधतादवस्थ्यमिति चेत्, मैवम्; पूर्वोत्तरसूत्रयोर्यर्परस्य रेफातिरिक्तयर्परत्वात्। 'लोपो व्यो०' इत्यत्र 'व' इति पदप्रयोज्या विषयताऽव्यवहितपूर्वत्वसम्बन्धेन वल्विशिष्टे वकारे वलपदप्रयोज्यविषयता चाव्यवहितपरत्वसम्बन्धेन वकारयकारान्यतरविशिष्टे वलीति। तयोर्विषयतयोः सामानाधिकरण्यमेव नेति न व्याप्यव्यापकभावः। एवम् 'अचो ञ्णिति' 'अत उपधायाः' इत्येतच्छास्त्रद्वयीयञ्णित्पदप्रयोज्यविषयत्वाभाववति सुश्रुन्मरुच्छब्दाभ्यामणि तद्धितपदप्रयोज्यविषयतायाः सत्त्वेन तस्यामुक्तशास्त्रद्वयीयञ्णित्पदप्रयोज्यविषयतानिरूपितं व्याप्यत्वमेव नेति न तयोर्बाध्यबाधकभावशङ्कापि। 'आमि' इति शास्त्रघटकाम्पदप्रयोज्यविषयतायाम् 'ह्रस्व' इति शास्त्रघटकाम्पदप्रयोज्यविषयतानिरूपितव्याप्यत्वस्य सत्त्वात् सुटो नुट्बाधकत्वमुपपन्नम्। एवम् 'अजादेर्द्वितीयस्य' एतच्छास्त्रघटकाजादिपदप्रयोज्यविषयता धात्ववयवद्वितीयैकाजवधिके पूर्वत्वविशिष्टधातुनिरूपितादित्वविशिष्टेऽचि। तत्रैकाच्पदघटकाच्पदप्रयोज्यविषयतायाः सर्वत्रैव सत्त्वेनाजादिपदप्रयोज्यविषयतायामेकाचपदघटकाच्पदप्रयोज्यविषयतानिरूपितव्याप्यत्वस्य सत्त्वाद् द्वितीयद्विर्वचनेन प्रथमद्विर्वचनबाधोऽप्युपपन्न इति बोध्यम्।

एवमन्यत्रापि बाध्यत्वेन बाधकत्वेन च जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयतयोर्व्याप्यव्यापकभावः स्वयमुन्नेयः। लोकेऽपि 'ब्राह्मणेभ्यस्तत्तत्पत्नीनिमित्तं दधि दीयताम्, गौडेभ्यस्तक्रम्' इत्यत्र तक्रदानीयोद्देश्यतावच्छेदके गौडत्वे दधिदानीयोद्देश्यतावच्छेदकब्राह्मणत्वनिरूपितव्याप्यत्वस्य सत्त्वेऽपि तक्रदानेन दधिदानस्य बाधादर्शनेनोद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावस्याप्रयोजकत्वमिति दिक्।

नन्वेवमपि अचि रादेशस्य गुणदीर्घोत्वापवादत्वम्; 'उरृत्' इररारामपवादत्वम्; 'अकः सवर्णे' इति दीर्घस्य यण् गुणापवादत्वमनुपपन्नम्, बाध्यत्वेन बाधकत्वेन च जिघृक्षितशास्त्रीयोद्देश्यदलीययोः कयोरपि विषयतयोर्व्याप्यव्यापकभावापन्नत्वाभावादिति चेत्, अत्रोच्यते; तत्तच्छास्त्रीयविषयतात्वावच्छिन्ननिरूपितव्याप्यतैव बाधप्रयोजिकेति नाभिनिवेशः, बाध्यत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयतान्यतमत्वावच्छिन्नव्यापकतानिरूपितापि, अचिरादेशविधायकशास्त्रीयऋतपदप्रयोज्यविषयतायां गुणादिविधायकशास्त्रीयोद्देश्यदलीयविषयतान्यतमत्वावच्छिन्नव्यापकतानिरूपितव्याप्यत्वस्य सत्त्वात्। तस्य

त्रितयबाधकत्वमुपपन्नम्। एवम् 'उरृत्' इत्येतच्छास्त्रीयऋपदप्रयोज्यविषय-तायामिरादिविधायकशास्त्रीयविषयतान्यतमत्वावच्छिन्नव्यापकतानिरूपितव्या-प्यत्वसत्त्वात्तस्यापि त्रितयबाधकत्वनिर्वाहः। एवमेव सवर्णदीर्घस्यापि यण्गुणो-भयबाधकत्वमुपपादनीयम्। लोकेऽपि 'अनुपनीतेभ्यो ब्राह्मणेभ्यः पयो दीयताम् उपनीतेभ्यो दधि दीयताम्, गौडेभ्यस्तक्रम्' इत्यत्र तक्रदानीयगौडपदप्रयोज्य-विषयतायामुक्तवाक्यद्वयीयानुपनीतोपनीतपदप्रयोज्यविषयतान्यतमत्वावच्छिन्न-व्यापकतानिरूपितव्याप्यत्वस्य सत्त्वेन तक्रदानेन दधिपयसोर्दानस्य बाधो भवतीति विभावनीयं प्रेक्षावद्भिः।

केचित्तु उद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावस्यापि बाधप्रयोजकत्वे न किञ्चिद् बाधकम्। उद्देश्यतावच्छेदकञ्च साक्षात्परम्परासाधारणम्।

इयांस्तु विशेषः—बाध्यत्वेन बाधकत्वेन च जिघृक्षितशास्त्रीयोद्देश्य-दलीयविशेष्यविशेषणशृङ्खलापन्नैर्यावद्भिः पदार्थैः सङ्कुचितस्यैवोद्देश्यताव-च्छेदकस्य व्याप्यत्वं व्यापकत्वं वा बाधं प्रयोजयति। 'तद्धितेष्वचाम्' इत्यत्रादि-वृद्ध्युद्देश्यतावच्छेदकस्य ञ्णित्तद्धितस्य सङ्कुचितान्त्योपधावृद्ध्युद्देश्यता-वच्छेदकाजन्तादुपधान्यतराङ्गाव्यवहितपरत्वसमानाधिकरणञ्णित्प्रत्ययत्वाभा-ववद्वृत्तित्वेन व्याप्यत्वाभावान्न दोषः।

एवम् 'लोपो व्योः' इत्यत्रापि वत्वस्य स्वरूपतो वल्त्वापेक्षया व्याप्य-त्वेऽपि अव्यवहितपरत्वेन 'वय'—एतदन्यतरविशिष्टवल्त्वनिरूपितव्याप्यत्वा-भावेन न दोषः।

एवमन्यत्रापि बाध्यत्वेन बाधकत्वेन च जिघृक्षितशास्त्रीयसङ्कुचितो-द्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावे बाध्यबाधकभाव उपपादनीयः।

एवमनेकबाधस्थलेऽपि सङ्कुचितोद्देश्यावच्छेदकान्यतमत्वावच्छिन्न-व्यापकतानिरूपितव्यापत्वेन बाधो बोधनीयः। व्याप्यव्यापकभावश्च स्वरूप-सम्बन्धावच्छिन्न एवेत्याहुः।

नन्वेवमपि 'अनेकाल् शित्' इत्येतच्छास्त्रीयानेकाल्शिदित्येतदन्यतरपद-प्रयोज्यविषयतायाम् 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येतच्छास्त्रद्वयीयादेशपद-प्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वावच्चिन्नव्यापकतानिरूपितव्याप्यतायाः सत्त्वेन 'अलोऽन्त्य' 'आदेः परस्य' इत्येतदुभयापवादत्वं स्यादिति 'अलोऽन्त्यस्य' इत्येत-न्मात्रापवादत्वं तस्यानुपपन्नम्।

एवम् 'अभ्यासस्य' इत्येतच्छास्त्रीययूपदप्रयोज्यविषयतायाम् 'अकः सवर्णे दीर्घः' 'इको यणचि' इत्येतच्छास्त्रद्वययणिक्पदप्रजोज्यविषयताद्वयवृत्त्यन्यतम-त्वावच्छिन्नव्यापकतानिरूपितव्याप्यतायाः सत्त्वात् तस्य यण्सवर्णदीर्घोभया-पवादत्वं स्यात्, न तु यण्मात्रापवादत्वमिति सकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयादिति चानुपपन्नमिति चेत्, अत्राहुः—बाधकत्वेन जिघृक्षितशास्त्रीयोद्देश्य-

दलीयविषयतानिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकान्यतमत्वनिरूपितव्याप्यत्वासमानाधिकरणव्यापकत्वाभाववदन्यतमत्वावच्छिन्नव्यापकतावद्विषयताप्रयोजकपदघटितत्वं बाध्यत्वे बीजम्। 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येत्तच्छास्त्रीयादेशपदप्रयोज्यविषयताद्वयवृत्त्यन्यतन्यतमत्वे बाधकत्वेन जिघृक्षित 'अनेकाल् शित्' इत्येतच्छास्त्रीयोऽनेकाल्शिदित्येतदन्यतरपदप्रयोज्यविषयतानिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदक 'अलोऽन्त्यस्य' इत्येच्छास्त्रीयादेशपदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वनिरूपितव्याप्यत्वासमानाधिकरणव्यापकत्वस्यैव सत्त्वात् तदवच्छिन्नव्यापकताप्रयोजकपदघटितयोः 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्यनयोः शास्त्रयोर्नापवादत्वम् 'अनेकाल् शित्' इत्यतस्य, किन्तु सकललक्ष्यप्राप्त 'अलोऽन्त्यस्य' इत्येतस्यैव। एवम् 'अकः सवर्णे दीर्घः' 'इको यणचि' इत्येतच्छास्त्रद्वयीयाक्-इक्पदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वे बाधकत्वेनाभिमत 'अभ्यासस्य' इत्येतच्छास्त्रीययूपदप्रयोज्यविषयतानिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदक 'इको यणचि' इत्येततछास्त्रीयेक्पदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वासमानाधिकरणव्यापकत्वस्यैव सत्त्वेन 'अभ्यासस्य' इत्यस्य न सवर्णदीर्घोभयापवादत्वम्, किन्तु सकललक्ष्ययणपवादत्वमेव। स्वस्यापि स्वव्यापकत्वाव्यापकत्वावच्छेदाकान्यतमत्वनिरूपितव्यापकत्वाभाववदन्यतमत्वस्य सर्वत्रैवाप्रसिद्धिरिति शङ्कावारणार्थमभावप्रतियोगिनि व्यापकत्वे व्याप्यत्वासमानाधिकरणेति विशेषणम्।

ननु 'आदेः परस्य' 'अलोऽन्त्यस्य' 'ङिच्च' इति त्रितयशास्त्रीयादेशप्रयोज्यविषयतान्यतमत्वे व्यापकतावच्छेदक 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्येच्छास्त्रद्वयीयादेशपदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वनिरूपितव्याप्यत्वासमानाधिकरणव्यापकत्वस्य सत्त्वेन तदभावस्य 'आदेः परस्य' इत्यादिशास्त्रद्वयीयादेशपदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वेऽपि सुलभत्वात् तयोर्निरुक्तान्यतमत्वावच्छिन्नव्यापकतावद्विषयताप्रयोजकघटितत्वेन 'अनेकाल् शित् सर्वस्य' इत्यस्योभयापवादत्वं तदवस्थमिति चेत्, न; व्यापकत्वाभावेत्यत्राभावे धर्मिपारतन्त्र्येण व्यापकत्वस्यापि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयात् 'आदेः परस्य' इत्येतच्छास्त्रद्वयीयादेशपदप्रयोज्यविषयतान्यतमत्वे व्यापकतावच्छेदकयत्किञ्चिदन्यतमत्वनिरूपितव्याप्यत्वासमानाधिकरणव्यापकत्वस्य सत्त्वे व्यापकत्वावच्छिन्नप्रतियोगिताकाभावस्य वक्तुमशक्यत्वात्। नह्यत्र भूतले घटसत्त्वेऽन्यदेशस्य घटतात्पर्येणात्र भूतले घटाभाव इति वक्तुं शक्यते, अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात्। 'आदेः परस्य' इत्येतच्छास्त्रद्वयीयादेशपदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वे 'अलोऽन्त्यस्य' इत्येतच्छास्त्रीयादेशपदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वनिरूपितं व्याप्यत्वं न शङ्क्यम्, तत्तच्छास्त्रीयादेशपदप्रयोज्यविषयतायां शास्त्रद्वयीयादेशपदप्रयोज्यविषयतान्यतमत्वस्य सत्त्वादिति दिक्।

तदप्राप्तियोग्येऽचारितार्थ्यं ह्येतस्य बाधकत्वे बीजम्। अत एव 'आयादयः' इति सूत्रे 'गोपायिष्यति' इत्यादावायादीन् बाधित्वा परत्वात् स्यादयः प्राप्नुवन्ति इत्याशङ्क्य 'अनवकाशा आयादयः' 'गोपायति' इत्यादावपि शप्-स्यादिः प्राप्नोति।

न च सति शप्यसति वा न विशेषः, अन्यदिदानीमिदमुच्यते---नास्ति विशेष इति। यदुक्तम् 'आयादीनां स्यादिभिरव्याप्तोऽवकाश इति स नास्त्यवकाशः' इति भाष्ये उक्तम्।

---

तदप्राप्ति इति। इदञ्चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने तत्प्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोचबाधं प्रयोजयति।

अत एवेति। अचारितार्थ्यस्य बाधबीजत्वादेवेत्यर्थः। इति सूत्र इति। अस्य 'गुपूधूपविच्छिपणिपनिभ्य आयो वा' 'सार्वधातुके नित्यम्' इति न्यासमुपक्रम्येति शेषः।

स्यादयः प्राप्नुवन्तीति। न च 'सार्वधातुके नित्यम्' इति बाधित्वा परत्वात् स्यादिषु सत्स्वपि 'आयादयो वा' इत्यनेन वैकल्पिका आयादयो भविष्यन्तीतीष्टापत्तिरियमिति वाच्यम्, 'गोपायिष्यति' इत्यादौ स्याद्युत्तरं वैकल्पिकायप्रत्यये आर्धधाकोपदेशकालेऽङ्गस्यादन्तत्वाभावेनातो लोपानापत्तेः। आर्धधातुकोपदेशकाले यदकारान्तमित्यर्थस्त्वय्धातोः क्विपि यलोपे अदित्यादावलोपं वारयितुमावश्यक इति बोध्यम्।

एतेन 'गोपायिष्यतीत्यादौ स्याद्युत्तरं वैकल्पिका आयादयो न स्युरित्येवापत्तिरिति 'प्रत्ययः परः प्रयोक्तव्य एव' इत्यादिना यदुक्तं तन्नादरणीयमिति विभावनीयम्।

अनवकाशा इति। सार्वधातुके नित्यम्' इत्यनेन विहिता इति भावः।

शप्स्यादिरिति। एतेनान्यतमत्वावच्छिन्नव्यापकतानिरूपितं व्याप्यत्वमपि बाधं प्रयोजयतीति सूचितम्।

ननु 'गुपूधूपविच्छिपणिपनिभ्य आयो वा सार्वधातुके नित्यम्' इति न्यासे 'गोपायिष्यति' इत्यादौ स्यादीन् बाधित्वाऽपवादत्वाद् नित्यमायादय स्युरिति गोपायिष्यतीत्यादिरूपाणि न सिध्येरन्निति न्यासपक्षे सूत्रभेद एव दोषो न लक्ष्यासिद्धिरिति यदुक्तं भाष्ये, तन्न सङ्गच्छत इति चेत्, न; 'गुपूधूपविच्छिपणिपनिभ्य आयो वाऽऽर्धधातुके सार्वधातुके नित्यम्' इति न्यासे भगवतस्तात्पर्यात्। आर्धधातुकाव्यवहितपूर्वत्वविशिष्टगुपादिभ्यः 'गुपूधूप' इति वैकल्पिकायादीनां सिद्धौ 'आर्धधातुके' इत्यार्धधातुकसम्भावनायाम् 'उपसञ्जनिष्यमाणन्यायेन' 'सार्वधातुके नित्यम्' इत्यस्य प्रवृत्तेः प्रतिबन्धार्थम्। तेन 'गोपायिष्यति' इत्यादौ 'गुप् ति' अस्यामवस्थायाम् 'उपसञ्जनिष्यमाण' न्यायेन

**एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नास्तीति सममेव ।**

**किञ्चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्यं ताद्बाधबोधनम् । अन्यथानवकाशत्वेनैव बाधे सिद्धे एतत्कथननैयर्थ्यापत्तेः, तक्रकौण्डिन्यन्याय-प्रदर्शनस्यापि वैयर्थ्यापत्तेश्च । तथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः ।**

---

'आर्धधातुके' इत्यनेन बाधात् सार्वधातुके नित्यस्याप्रवृत्त्या अनैमित्तिकत्वेना-न्तरङ्गत्वात् परानपि स्यादीन् बाधित्वा 'गुपूधूप' इत्यनेन वैकल्पिकायप्रत्यये, ततः स्यादिषु 'गोपायिष्यति, गोपिष्यति' इत्यादिरूपसिद्धिरिति बोध्यम् ।

**एवमत्रेति ।** प्रथमद्विर्वचनप्रवृत्त्युत्तरं सावकाशस्यापि द्वितीयद्विर्वचनस्य प्रथमद्विर्वचनेन व्याप्तावकाशो नास्तीति भावः ।

ननु नुडुत्तरं सुटश्चारितार्थ्यस्य सम्भवात् सुटि तदप्राप्तियोग्येऽचारिता-र्थ्यरूपबाधबीजस्यासत्त्वात् सुटा नुड्बाधो न स्यात्, अत आह—**किञ्चेति ।** तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टकृते चारितार्थ्यमपि तत्प्रयोजकमिति भावः ।

अनेन च सामान्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने विशेषशास्त्रेण स्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन स्वविहितकार्याश्रयातिरिक्तत्वेन वा सङ्कोचरूपो बाधो भवति ।

किञ्च, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टकृतेऽचारितार्थ्यमपि तद्बी-जम् । इदमपि तदुद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचरूपं बाधं प्रयोजयति ।

इयांस्तु विशेषः—कृते चारितार्थ्यघटितबाधबीजेन कल्प्यमानं यत्तदुद्दे-श्यतावच्छेदकावच्छिन्नातिरिक्त इति तच्छुद्धतदप्राप्तियोग्येऽचारितार्थ्यरूप-बाधबीजकल्पिततत्प्रवृत्तियोग्यातिरिक्तांशेऽभेदेन विशेषणम् । कृते चारितार्थ्य-घटितबाधबीजेन कल्पितं तदुद्देश्यतावच्छेदकावच्छिन्न इति बीजान्तरकल्पिते तत्प्रवृत्तियोग्यांशेऽभेदेनान्वेति ।

न च तदप्राप्तियोग्येऽचारितार्थ्यस्य स्वातन्त्र्येण तत्प्रवृत्तियोग्यातिरिक्त-त्वेन सङ्कोचरूपबाधबीजे न किञ्चित् फलम् । विशिष्टस्यैव विशिष्टसङ्कोचरूप-बाधप्रयोजकत्वेनैव सकललक्ष्यसिद्धिरिति वाच्यम्, तत्फलस्य अत एव 'हे रमे' इत्याद्यग्रिमग्रन्थेन मूल एक स्पष्टत्वात् । कृते चारितार्थ्यघटितबाधबीजप्रयोज्य-सङ्कोचरूपबाधेनैव पूर्वं पश्चाच्च हल्ङ्यादिलोपाप्राप्त्या पूर्वमेत्वे 'एङ्ह्रस्वात्' इति सम्बुद्धिलोप इति मूलग्रन्थस्य भाष्यस्य च सङ्गतिरिति तु न शङ्क्यम्, 'हे अनड्वन्' इत्याद्यर्थं हल्ङ्यादिलोपविषये तद्बाधबीजप्रयोज्यसङ्कोचरूपबाधस्या-नित्यत्वाश्रयणेनाप्रवृत्तेः स्वीकरणीयत्वात् । तदप्राप्तियोग्येऽचारितार्थ्यविशिष्ट-

कृते चारितार्थ्यसमानाधिकरणवैयर्थ्यसम्भावनापि तद्बीजम् । अनेन चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वोयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचरूपबाधः ।

तथा चेत्थं समन्वयः—सर्वं आमित्यवस्थायां नुडप्राप्तियोग्ये सुटोऽचारितार्थ्यस्य सत्त्वान्नुडुत्तरं तद्विशिष्टे 'यदागमपरिभाषया' आम्त्वातिदेशेन सुट्प्रवृत्तसम्भावितत्वात् कृते चारितार्थ्यस्य च सत्त्वेन 'ह्रस्व' इति शास्त्रस्यावर्णान्तसर्वनामाव्यवहितपरत्वविशिष्टाम्त्वावच्छिन्नातिरिक्तो यो ह्रस्वान्ताबन्तान्यतराङ्गाव्यवहितपरत्वसमानाधिकरणाम्त्वावच्छिन्नः, तस्य नुडिति सङ्कुचिते वाक्यार्थबोधे जाते सुटः पूर्वं पश्चाच्च नुटोऽप्राप्त्या सुटि सर्वेषामित्यस्य सिद्धिः ।

एवम् 'एकाचो द्वे' इत्यत्रैकाच्पदघटकाच्पदार्थे धात्ववयवद्वितीयैकाजवधिकपूर्वत्वसमानाधिकरणादिभूताच्त्वाच्छिन्नातिरिक्तत्वेन सङ्कोचाद् 'उर्णुनाव' इत्यादौ द्वितीयद्विर्वचनात् पूर्वं पश्चाच्च न प्रथमद्विर्वचनप्रवृत्तिः । 'अनभ्यासस्य' इत्यनेन द्वितीयद्विर्वचनोत्तरं प्रथमद्विर्वचनाभावसिद्धिस्तु न शङ्कया, तस्यैकाज्विशेषणत्वात् ।

एवम् 'ङेराम्' इत्यस्य याडप्राप्तियोग्येऽचारितार्थ्यस्य सत्त्वात् तदुत्तरनिर्दिश्यमानयाटा व्यवधानादप्राप्त्या कृतेऽचारितार्थ्यस्य च सत्त्वेनाम्प्रवृत्तियोग्यो य आबन्ताङ्गाव्यवहितपरत्वविशिष्टो ङिः, तदरिक्तो य आबन्ताङ्गाव्यवहितपरत्वविशिष्टो ङिः, तस्येत्येवम् 'याडापः' इत्यस्य संकुचिते वास्यार्थे निष्पन्ने आमः पूर्वं तदप्राप्तावप्यामुत्तरं विशेषभेदप्रयुक्तविशिष्टभेदस्य सत्त्वाद् 'रमायाम्' इत्यादौ याट् सुलभः ।

एवम् 'आद्गुणः' 'इको यणचि' इत्येतच्छास्त्रद्वयीयेगात्पदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वावच्छिन्नव्यापकतानिरूपितव्याप्यतायाः 'अकः सवर्णे' इत्येतच्छास्त्रीयाक्पदप्रयोज्यविषयतायां सत्त्वान्निरुक्तशास्त्रद्वयीयाच्पदप्रयोज्यविषयताद्वयवृत्त्यन्यतमत्वावच्छिन्नव्यापकतानिरूपितव्याप्यतायाः सवर्णाच्पदप्रयोज्यविषयतायां सत्त्वे च व्याप्यतावच्छेदकं तत् 'अकः सवर्णे' इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकरूपं सवर्णाजव्यवहितपूर्वत्वसमानाधिकरणमक्त्वम्, अगव्यवहितपरत्वसमानाधिकरणं सवर्णाच्त्वम्, तदवच्छिन्नातिरिक्तत्वेनेगात्पदार्थयोरच्पदार्थे च सङ्कोचे जाते 'आद् गुणः' 'इको यणचि' इत्यनयोरित्थं संकुचितो वास्यार्थबोधो निष्पन्नः—सवर्णाजव्यवहितपूर्वत्वसमानाधिकरणाक्त्वावच्छिन्नातिरिक्तो योऽवर्णस्तस्मादगव्यवहितपरत्वसमानाधिकरणाक्त्वावच्छिन्नातिरिक्तेऽचि पूर्वपरयोर्गुणः । सवर्णाजव्यवहितपूर्वत्वसमानाधिकरणाक्त्वावच्छिन्नागभिन्नस्येकोऽगव्यवहितपरत्वसमानाधिकरणसवर्णाच्त्वावच्छिन्नाज्भिन्नेऽचि यणिति । तेन 'अयज इ इन्द्रम्' इत्यादौ 'आद् गुणः' इत्यस्य 'अकः सवर्णे'

इत्यपवादशास्त्रेणेदृशसङ्कोचरूपे बाधे जातेऽपि तत्प्राप्तेः सम्भवेन सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वात् पूर्वं गुणसिद्धिः ।

एतन्मूलक एव 'अपवादो यद्यन्यत्र चरितार्थः, तर्ह्यन्तरङ्गेण बाध्य एव' इत्युद्घोषः । स्ववैयर्थ्यसम्भावनाघटितबाधबीजस्य फलं तु ज्ञानमिति । अत्र हि 'अतोऽम्' इत्यपवादशास्त्रेण क्लीबत्वविशिष्टार्थविषयकबोधतात्पर्येणोच्चरितादन्ताङ्गाव्यवहितपरत्वविशिष्टस्वमतिरिक्तयोः 'स्वमोर्लुक्' इति 'स्वमोः' इत्युत्सर्गस्य संकुचिते वाक्यार्थबोधे जातेऽमादेशात् पूर्वं कृते तस्मिश्च लुगप्रवृत्तिः सिद्धेति विभावनीयम् ।

परे तु, तदप्राप्तियोग्येऽचारितार्थ्यस्य स्वातन्त्र्येण बाधप्रयोजकत्वे न किञ्चित् फलम् । तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टकृते चारितार्थ्यं तदुद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचस्तस्य प्रयोजकम् । 'हे रमे' इत्यत्रत्यशङ्कासमाधानपरं भाष्यं तु न प्रतिकूलम्, नित्यत्वाद्धल्ङ्यादिलोपं बाधित्वा पूर्वमेत्वे आकाररूपाबन्ततदादित्वाभावेन हल्ङ्यादिलोपाप्राप्त्या 'एङ्ह्रस्वात्' इति सम्बुद्धिलोप इत्याशयात् ।

किञ्च, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टकृते चारितार्थ्यरूपबाधबीजप्रयोज्यसङ्कोचस्य 'हे अनड्वन्' इत्यादिलक्ष्यनिर्वाहार्थं हलन्तविषयकवाक्येऽनित्यत्वाश्रयणेनाप्रवृत्तावप्याबन्तविषयकवाक्ये तदनित्यत्वे मानाभावात् कृते चारितार्थ्यघटितबाधबीजेन हल्ङ्यादिलोपं बाधित्वा पूर्वमेत्वे 'एङ्ह्रस्वात्' इत्यनेन सम्बुद्धिलोपः ।

किञ्च, अस्तु वा हलन्तविषयकवाक्येऽपि कृते चारितार्थ्यघटितबाधबीजप्रयोज्यसङ्कोचः । 'सावनडुहः' इत्यनेन बाधित्वाद् हल्ङ्यादिलोपाप्राप्तावपि 'सावपि पदं भवति' इति भाष्यसिद्धान्तितपक्षस्याश्रयणाद् द्विवारं संयोगान्तलोपेनेष्टसिद्धिः । 'लक्ष्ये लक्षण' न्यायस्य तु नात्र विषयः, 'एधते' इत्याद्यर्थं परिष्कृतलक्ष्यत्वस्याभावादित्याहुः ।

अन्ये तु, तत्प्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोचरूपबाधप्रयोजकत्वेन तदप्राप्तियोग्येऽचारितार्थ्यरूपबाधबीजेनैवोपपत्तौ कृते चारितार्थ्यघटितस्यैव बाधबीजत्वं न कल्पनीयम् । 'रमायाम्' इत्यादौ 'ङेराम्' इत्यस्य याडप्राप्तियोग्येऽचारितार्थ्यस्य सत्त्वादाम्प्रवृत्तियोग्यातिरिक्तो य आबन्ताङ्गाव्यवहितपरत्वविशिष्टो ङिः, तस्य याडित्येवम् 'याडापः' इत्यस्य सङ्कुचिते वाक्यार्थबोधे जाते आम्प्रवृत्तेः प्राक् तदप्राप्तावप्याम्प्रवृत्त्युत्तरं ङितस्तत्प्रवृत्तियोग्यातिरिक्तत्वस्यैव सत्त्वाद् याट् सुलभः । एवमन्यत्रापि यथायथं समन्वय उपपादनीयः ।

ननु 'अयज इ इन्द्रम्' इत्यादावपवादत्वात् सवर्णदीर्घेण बाधः स्यादिति चेत्, न; यत्रान्तरङ्गपरिभाषाप्रयोज्यासिद्धत्वबाधं विनापि स्वस्य चारितार्थ्यं न सम्भवति, तत्रोत्सर्गशास्त्रवदनवकाशत्वात् तद्बाधोऽपि । यत्र तु तद्बाधं विनापि

**यथा वा आदेरपि प्रवृत्त्या चरितार्थेन 'आदेः परस्य' इत्यनेन 'अलोऽन्त्यस्य' इत्यस्य बाधः। तदुक्तम् 'मिदचोऽन्त्यात्' इति सूत्रे भाष्ये। सत्यपि सम्भवे बाधनं भवतीति, अन्यथा 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात् तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवात्।**

---

स्वस्य चारितार्थ्यसम्भवः, तत्र तद्बाधे न मानम्। 'दैत्यारिः' इत्यादौ उभयोरपि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन कस्याप्यन्तरङ्गत्वाभावाद् बहिरङ्गपरिभाषायाः प्रवृत्त्यभावेनापवादत्वाद् गुणबाधनेन सवर्णदीर्घस्य चारितार्थ्यात्। प्रकृते सवर्णदीर्घस्य पदद्वयसंवन्धिवर्णद्वयापेक्षत्वेन वहिरङ्गतयाऽसिद्धत्वात्। तेनान्तरङ्गगुणवाधनस्य वक्तुमशक्यत्वात्। एतन्मूलकमेवापवादो यद्यन्यत्र चरितार्थः, तर्ह्यन्तरङ्गेण बाध्यत एवेति वदन्ति।

**आदेरपि प्रवृत्त्या चरितार्थेनेति।** वस्तुतः 'आदेः परस्य' इति शास्त्रं तदप्राप्तियोग्येऽचारितार्थ्यरूपबाधवीजेनैव 'अलोऽन्त्यस्य' इत्यस्य बाधकम्। कृते चारितार्थ्यघटितबाधबीजं तु नास्य विषयः, 'उदस्स्थास्तम्भोः' इत्यादावुद्देश्यभेदेन वाक्यभेदस्यान्याय्यत्वेन 'आदेः परस्य' 'अलोऽन्त्यस्य' इति परिभाषाभ्याम् 'आदेः परस्य' इत्युभयोपस्थितेर्वक्तुमशक्यत्वात्। 'आदेः परस्य' 'अलोऽन्त्यस्य' इति परिभाषाभ्यां विधिशास्त्रघटकसाक्षात्स्थानपदार्थान्वय्यर्थबोधकपदस्य स्वावयवाद्यलि, स्वावयवान्त्यालि लक्षणैव बोध्यते। लक्षणा च शक्यतावच्छेदकारोप एव। 'उदस्स्थास्तम्भोः' इत्यादौ स्थास्तम्भेत्येतत्पदशक्यतावच्छेदकयोः स्थाशब्दत्वस्तम्भशब्दत्वयोः स्वनिरूपितादित्वविशिष्टेऽलि स्वनिरूपितान्यत्वविशिष्टेऽलि चाक्षेपे आद्यन्तयोरुभयोरपि तदवच्छिन्नत्वेन तयोः पूर्वसवर्णप्राप्तौ 'आदेः परस्य' इत्यनेन कृते चारितार्थ्यघटितबाधवीजेनाप्यलोऽन्त्यस्य यथा कथञ्चिद् बाधनं सम्भवतीति बोध्यम्।

**अत एवेति।** द्वितीयद्विर्वचनस्य प्रथमद्विवचनापवादत्वादेवेत्यर्थः।

**विषयभेदेऽपीति।** साक्षादुद्देश्यभेदेऽपीत्यर्थः

**विन्मतोरिति।** 'प्रकृत्यैकाच्' इति सूत्रप्रयोजनान्यन्यथासिद्ध्युपपादनावसरे 'स्रजिष्ठः' इत्यादौ लुगुत्तरं टिलोपवारणाय लुकस्तदपवादवारणाय लुकस्तदपवादत्वमुक्तम्। तच्च लुक्टिलोपयोर्विषयस्य भेदादपवादत्वाभावेन सङ्गच्छेत इति भावः।

**कैयटेनेति।** अयं तस्याशयः—द्वित्वोत्तरं चारितार्थ्येन दिग्यादेशेन परत्वाद् द्वित्वबाध एव न्याय्यः, आख्याताश्रयकार्ये तक्रकौण्डिन्यन्यायस्यानित्यत्वादप्रवृत्तिस्वीकारात्। अन्यथा 'पिप्ये' इत्यादावपि द्वित्वोत्तरं चारितार्थ्येन प्यादेशेनापवादत्वाद् द्वित्वबाधे तदुत्तरं द्वित्वानापत्तिः। मम तु तत्रापि प्यादेशेन

**अत एव विषयभेदेऽप्यपवादत्वम्। अत एवाचिरादेशेन नुटोऽप्यपवादत्वाद् बाधमाशङ्क्य 'न तिसृ' इति ज्ञापकेन समाहितम् 'तृज्वत्' सूत्रे भाष्ये। तेन विषयभेदेऽपवादत्वाभाव एव बोध्यत इति कश्चित्, तन्न; विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः।**

**यत्तु 'दयतेर्दिगि' इति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तम्, तत् प्रौढ्या। ध्वनितञ्च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन।**

**'असम्भव एव बाधकत्वम्, विरोधस्य तद्बीजत्वात्' इति वार्त्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि।**

**'तक्रकौण्डिन्य' न्यायोऽपि तदप्राप्तियोग्येऽचरितार्थविषयो विधेयविषय एव चेति 'तद्धितेष्वचामादेः' 'धातोरेकाचः' इत्यादिसूत्रेषु भाष्ये स्पष्टम्।**

---

परत्वाद् द्वित्वबाधेन तदुत्तरम् 'पुनः प्रसङ्गविज्ञानात्' द्वित्वसिद्धिः। 'दिग्ये' इत्यादौ तु दिग्यादेशोत्तरम् 'सकृद्गति' न्यायान्न द्वित्वमिति।

नव्यानां त्वयं भावः-तन्न्यायस्यापवादत्वादेवानित्यत्वात् प्यादेशाग्रहणमेव कल्प्यम्। सामान्यत आख्यातनिमित्तककार्ये तदप्रवृत्तिस्वीकारे तु द्वितीयद्विर्वचनस्यापि प्रथमद्विर्वचनाबाधकत्वानुपपत्तौ भाष्यविरोध इति रहस्यं त्वनुपदमेवाभिधास्यते।

**असम्भव एवेति**। चारितार्थ्यासम्भव एवेत्यर्थः।

**विरोधस्येति**। अचारितार्थ्यस्येत्यर्थः।

**विधेयविषय एवेति**। विधेयताभेदविषय एवेत्यर्थः।

एतदुक्तं भवति—ययोर्व्याप्यव्यापकभावापन्नधर्मावच्छिन्नयोर्विषयतयोर्बाध्यबाधकभावप्रयोजकत्वम्, ते विभिन्नविधेयतानिरूपिते अपेक्षिते इति। तेन 'लोपो व्योर्वलि' इत्यत्र वपदप्रयोज्यवल्पदप्रयोज्ययोर्विषयतयोर्व्याप्यव्यापकभावापन्नधर्मावच्छिन्नत्वेऽपि तयोर्विभिन्नविधेयतानिरूपितत्वाभावान्न व्याप्यधर्मावच्छिन्नया कार्यितया व्यापकधर्मावच्छिन्नाया निमित्तताया बाध इति बोध्यम्।

इदमत्रावधेयम्—अयं न्यायस्त्रिपाद्यान्न प्रवर्तते, त्रिपाद्या असिद्धत्वात्, अन्तरङ्गपरिभाषादिवत्। तेन 'दधस्तथोश्च' इत्यस्य चर्त्वापवादत्वाभावादुत्तरं चर्त्वप्रवृत्त्या 'आधत्ते' इत्यादिसिद्धिः। झल्निमित्तस्य नहोधत्वस्य 'झलां जश् झशि' इत्येतद्बाधकत्वाभावात् 'नद्धम्' इत्यादिसिद्धिः। तस्यैव पदान्तनिमित्तकस्य 'झलां जशोऽन्ते' इत्येतज्जश्त्वानपवादत्वादुपादान……[ द् ] इत्यादिसिद्धिः, प्राप्तिमात्रस्यैव प्रकृतन्यायप्रवृत्तौ बीजत्वात्।

नन्वेवम् 'जश्त्वमिति बाधित्वेति शेषः' इति रामशब्दस्थशेखरोऽसङ्गत इति चेत्, का क्षतिः? नैव चर्त्वेन जश्त्वस्य बाधः प्रामाणिकः, येन तद्ग्रन्थं प्रमाणयेत्। अत एव रत्नमुष्शब्दस्यावसाने चर्त्वेन टान्तरूपसिद्धिः। अन्यथा

**क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वम्, यथा ङेरामो याडादि-बाधकत्वम्। न हि याडादिषु कृतेषु ङेराम् प्राप्नोति, निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव, यथा तत्रैव याडादयः। अप्राप्तौ तु न, यथा 'पचेयुः' इत्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः ॥ ५८ ॥**

---

जश्त्वात् पूर्वं प्रवृत्तावान्तरतम्यात् षकारस्य षकारेऽवसाने रत्नमुष् इत्यापत्तिः। 'ष्णान्ताः षट्' इत्यादिटान्तनिर्देशाश्चात्रोपोद्बलकाः।

कश्चित्तु टान्तामेव संज्ञां वर्णयति, तत्, न; 'स्वं रूपम्' इति सूत्रस्थ-भाष्यविरोधात्। तत्र हि षान्तसंख्यावाचकस्य षट्संज्ञाविधानं शब्दशास्त्र-सञ्ज्ञानां स्वरूपबोधकत्वाभावे ज्ञापकमुक्तम्।

नन्वेवमपि 'नेमौ रहौ इत्यादिभाष्यविरोधो दुष्परिहर एवेति चेत्, मैवम्; तद्भाष्यस्य 'यरोऽनुनासिके' इत्यत्रासवर्णपदापकर्षेणेतरबाधस्य विषयतावच्छे-दकसङ्कोचत्वाद् यर्पदस्य रेफातिरिक्तयर्परतयार्थाधिकारानुरोधेन द्वित्व-प्रकरणेऽपि तदतिरिक्तबोधकत्वमित्यत्रैव तात्पर्यात्।

अत एव 'मद्रह्रदः' इत्यत्र न रेफस्य द्वित्वम्। अत एव 'धात्रंशः' इत्यत्र न रेफस्य 'यणो मयः' इति द्वित्वम्, तत्रापि पर्युदासानुवृत्त्या रेफातिरिक्तपर-भिन्नस्यैव यणो ग्रहणादिति। त्रिपाद्यां वैयर्थ्येन बाधस्तु भवत्येव। यथा 'होढः' इत्यस्य 'दादेः' इति घत्वेन।

किञ्च, त्रिपाद्यामप्ययं न्यायोऽनित्यत्वान्न प्रवर्तते। अत्र च 'इदमो मः' इति सूत्रं मानम्। 'यः सौ' 'इदोऽय् पुंसि' इत्याभ्मां तक्रन्यायेन त्यदाद्यत्वस्य बाधे तु तद्वैयर्थ्यं स्पष्टमेव। तेन 'सावनडुहः' इत्यादिना हल्ङ्यादिलोपस्य बाधाभावात् 'अनड्वान्' इत्यादिसिद्धिः। अत एव 'अम् सम्बुद्धौ' इत्यनेन 'सावनडुहः' इत्यस्य 'अनाप्यकः' इत्यनेन त्यदाद्यत्वयासुडादिभिस्तिबादीनां न बाध इति।

वार्त्तिकारानुयायिनस्तु तक्रन्यायस्यात्र शास्त्रे आश्रयणे न फलम्' द्वितीय-द्विर्वचनप्रवृत्त्यभावश्च परत्वाद् द्विर्वचनप्रवृत्त्या 'सकृद्गति' न्यायात् सुवचः, 'अनभ्यासस्य' इति पर्युदासाच्च।

अथेदम् 'अनभ्यासस्य' इति धातोर्विशेषणम्, एकाचो वा? नाद्यः; उत्तरखण्डस्यैव धातुत्वेन नव्यमते 'बभूव' इत्यत्र पुनर्द्वित्वापत्तेः, भूशब्देऽभ्यास-भेदस्य सुलभत्वात्। न च 'लक्ष्ये लक्षणस्य' इति न्यायान्न दोष इति वाच्यम्, तदुपष्टम्भेन 'अनभ्यासस्य' इत्यस्य भाष्यकृता प्रत्याख्यानेनारम्भपक्षे तदुपन्य-सनस्यानर्हत्वात्।

**तदेतत् पठ्यते—**

**क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ॥ ५८ ॥**

**अपवादशब्दोऽत्र बाधकपरः। तदुक्तम् 'गुणो यङ्लुकोः' इत्यत्र भाष्ये। अभ्यासविकारेष्वपवादा उपसर्गान्न बाधन्ते। 'अजीगणत्' अत्र गणेरीत्वमपवादत्वाद्धलादिशेषं बाधते, न गणेरीत्वमपवादत्वाद्धलादिशेषं बाधते। किं तर्हि अनवकाशत्वादिति ग्रन्थेन? गण्रूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिशेषेण तन्निवृत्तौ तदनवकाशम्, ईत्वे तु कृते न तस्य प्राप्तिः, अन्त्यहलोऽभावात्। अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम्। तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः।**

---

नान्त्यः, 'आटिटत्, चिचन्द्रियिषति' इत्यादौ प्रथमैकाचो द्वित्वापत्तेः; न विद्यते अभ्यासो यस्मिन्निति बहुव्रीह्याश्रयणेन लिडाद्याक्षिप्तदादिविशेषणत्वाङ्गीकारेण च दोषाभावात्। न चैवममि 'सर्वेषाम्' इत्यादौ सुट्प्रवृत्त्युत्तरं नुडापत्तिः' नदी साहचर्येण ह्रस्वान्ताबन्तयोरपि सर्वनामभिन्नयोरेव ग्रहणात्, 'यदागम' न्यायस्यानित्यत्वाङ्गीकाराद् वा, 'त्रेस्त्रयः' इत्युत्तरसूत्रेऽनतिदिष्टस्यामो ग्रहणसम्भवात् तत्साहचर्यात्, अर्थाधिकारानुरोधाद् वा सुड्विधावप्यनतिदिष्टस्यैव तस्य ग्रहणाच्च। यासुट्प्रवृत्त्युत्तरं सीयुट्प्रवृत्तिस्तु परत्वाद् यासुटो बाधेन 'सकृद्गति' न्यायात् सुशका वक्तुम्। 'इदमो मः' इत्यादिसूत्रप्रणयनम्, 'स्वरितो वा' इत्यादिसूत्रस्थभाष्यग्रन्थाश्चैतन्न्यायानाश्रयणेनानुकूलम्। सिद्धाल्पतमफलकतन्न्यायं स्वीकृत्य शतशो लक्ष्येषु तदप्रवृत्तयेऽनित्यत्वस्वीकारापेक्षया वरं तन्न्यायानाश्रयणमेव। अन्यथा 'ऋदुशन' इत्यनङा हल्ङ्यादिलोपस्य, तथा 'सावनडुहः' 'असम्बुद्धौ' इत्याभ्याञ्च बाधापत्तौ उपधाह्रस्वेन द्वित्वस्य 'इड, र्यति' इत्यनेन गुणस्य 'तदोस्सः' इत्यनेन त्यदाद्यत्वस्य, त्रयादेशेन नुटः, चाक्षङ्ख्याञा लिङ्निमित्तकेन वैकल्पिकेन द्वित्वस्य, लुङ्निमित्तकवधादेशेन सिचः, 'ध्वसोः,' 'शाहौ' इत्याभ्यां घिभावस्य, यङ्निमित्तकच्नोभावेन द्वित्वस्य, सनि चेति गम्यादेशेन द्वित्वस्य, झस्य रना सीयुटश्च बाधापत्तौ महोपप्लव इति प्राहुः ॥ ५८ ॥

**तदेतदिति।** उत्सर्गस्य बाधकविषयभिन्नविषयत्वेन सङ्कोचाद् बाधकशास्त्रस्य पूर्वं प्रवृत्तौततस्सत्यां प्राप्तावुत्सर्गोऽपि प्रवर्तत इति यत्, तदेतदित्यर्थः।

ननु बाधकप्रवृत्त्युत्तरमुत्सर्गप्राप्तिस्थल एवापवादशब्दस्य शक्तिरिति प्रकृतिबाधकप्रवृत्त्युत्तरमुत्सर्गाप्राप्तेरपवाद इत्यसङ्गतम्, अत आह—**अपवाद शब्द इति।** अत्र=उक्तवाक्ये, बाधकपरः=सर्वथा निरवकाशपरः। **तदिति।** बाधकप्रवृत्त्युत्तरमुत्सर्गाप्राप्तिकस्थल एवापवादशब्दव्यवहार इति यत्तदित्यर्थः। **उक्तमिति।** इति ग्रन्थेनोक्तमित्यन्वयः। अत्र=अजीगणदित्यत्र। **अभ्यासान्त्यण-**

न च 'येन नाप्राप्ति' न्यायेनापवादत्वमप्यस्य सुवचम्, तस्य चरितार्थविषयताया उक्तत्वात् ।

'इको झल्' इत्यत्र भाष्येऽपि ध्वनितमेतत् । तत्र हि 'अज्झन' इति दीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद् गुणे बाधिते दीर्घोत्तरं गुणः स्यात्, दीर्घविधानं तु मिनोतेर्दीर्घे कृते 'सनि मीमा' इत्यत्र मीग्रहणेन ग्रहणेऽर्थवत्तत्र पश्चात् प्राप्तगुणबाधनार्थम् 'इको झल्' इति कित्त्वमित्युक्तम् । अन्यथापवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासङ्गतिरिति स्पष्टमेव ।

---

**स्येति** । 'ई च गणः' इत्यत्र अभ्यासस्येत्यस्य स्थानषष्ठीत्वेन 'अलोऽन्त्यस्य' इत्येकवाक्यतयेति भावः । **तन्निवृत्तौ**=नकारनिवृत्तौ । **तदनवकाशम्**=ईत्वमनवकाशम् । **तस्य**=हलादिशेषस्य । **अन्त्यहल** इति । प्रकृताभिप्रायेणेदम्, न तु तत्र तथा निवेशोऽस्ति । तथा च 'अजेगणत्' इति स्यादिति भावः ।

नन्वेवम् 'अजीगणत्' इत्यस्य कथं सिद्धिः, अत आह—**अभ्यासविकार** इति । **तस्मिंश्च सतीति** । 'अभ्यासविकारे' इति वचने सतीत्यर्थः । **लोपे कृते** इति । 'अभ्यासविकारेषु' इत्यनेन बाध्यस्य पूर्वं प्रवृत्तिबोधनादिति भावः । **सामर्थ्यात्**='ई च गणः' इति सूत्रारम्भसामर्थ्यात् ।

**'येन नाप्राप्तिन्यायेन इति** । 'निरवकाशस्थलेऽपि येन नाप्राप्तिन्यायेनैव बाधः' इतीदमयुक्तम्, 'तक्र' न्यायेनेति युक्तम् । तस्य='येन नाप्राप्ति' न्यायस्य ।

ननु यथा 'तक्र' न्यायस्थलेऽपवादेनोत्सर्गस्य सङ्कोचादपवादप्रवृत्त्युत्तरमुत्सर्गो न प्रवर्तते, तथा निरवकाशत्वेन बाधस्थल उत्सर्गसङ्कोचाभावेन बाधकप्रवृत्त्युत्तरं प्राप्तौ सत्यामुत्सर्गोऽपि प्रवर्तत एवेत्यत्र मानमाह—"**इको झल्**' इति । **तत्र** हीत्यस्य उक्तमित्यनेनान्वयः । **'अज्झन' इति दीर्घेणेति** । 'दिदीषति, चिचीषति' इत्यादावित्यस्यादिः । **फलाभावेनेति** । गुणस्य ततो दीर्घत्वेन दीर्घस्य दीर्घविधानं विफलमिति भावः ।

नन्वेवं सति दीर्घविधानं व्यर्थम्, अत आह—**दीर्घविधानं त्विति** । **ग्रहणे** इति । अन्यथा तस्य ह्रस्वान्तत्वेनामीति दीर्घान्तेन ग्रहणं न स्यादिति भावः ।

ननु 'अच्झनगमाम्' इत्यज्ग्रहणस्य एतावन्मात्रफलकत्वे हनिगम्योरिव मिनोतेरपि मिहनिगमामिति स्वरूपग्रहणमेवास्तु, किमज्ग्रहणेनेति चेत्, न; कुटादेर्गुधातोस्सनि ङित्त्वाद् गुणाप्राप्त्या 'जुगूषति' इत्यत्र अज्ग्रहणस्यावश्यकत्वात् । **अर्थवत्**=सार्थकम् । तत्र=अरिरिषतीत्यादौ । **अन्यथेति** । सर्वथानवकाशत्वाद् बाधस्थलेऽपि तक्रन्यायेन बाधस्थल इव बाधकप्रवृत्त्युत्तरमुत्सर्गाप्रवृत्त्यङ्गीकार इत्यर्थः । **अपवादत्वेनेति** । अत्राप्यपवादशब्दो बाधकपरः । **तद्विषये**=सर्वथानवकाशत्वेन बाधविषये, **भाष्यस्य**=उक्तभाष्यस्य, **सूत्रस्य**="इको झल्' इति सूत्रस्य । तस्मात् सर्वथानवकाशविषये तक्रन्यायविषय इव उत्सर्गस्य सङ्कोचो नेति भावः ।

**यत्तु काञ्चनीत्यादावपत्रादमयड्विषयेऽप्यण् भवति, 'क्वचिदपवाद-विषयेऽपि' इति न्यायादिति, तन्न, 'अण्कर्मणि च' इति सूत्रस्थभाष्य-विरोधात्। तत्र ह्यणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम् 'गोदायो व्रजति' इत्याद्युक्तम्।**

**'काञ्चनी' इत्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिकोऽण् बोध्यः।**

**अत्रेदं बोध्यम्—'येन नाप्राप्ते' इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यथः, तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद् बाध्यम्, विध्यन्यराप्राप्तविषयाभावात्।**

---

ननु 'क्वचिदनवकाशविषये उत्सर्ग एव भवति, नानवकाशशास्त्रम्' इति प्रकृतपरिभाषार्थ इति वदतां केषाञ्चिन्मतं दूषयति—**यत्त्विति**। **काञ्चनीति**। काञ्चनस्य विकार इत्यर्थे 'तस्य विकारः' इत्यणि टिड्ढाणञ्०' इति ङीपि रूपसिद्धिः। **मयडिति**। 'नित्यं वृद्धशरादिभ्यः' इति विहितः। **अणिति**। 'तस्य विकारः' इति विहितः। **पुनर्वचनमिति**। 'कर्मण्यण्' इत्येव सिद्धेरिति भावः।

**अनुवृत्त्यर्थमिति**। अन्यथा 'आतोऽनुपसर्गे कः' इति क एव स्यात्। ततश्च गोद इत्येव स्यात्, न तु गोदाय इति।

एतेनानवकाशविषये बाधकप्रवृत्त्युत्तरं यदि प्राप्तिर्भवति, तदोत्सर्गोऽपि प्रवर्तत एवेत्येव परिभाषर्थः, न तूत्सर्ग एव भवति नानवकाशशास्त्रमिति सिद्धम्।

नन्वेवं काञ्चनीत्यसाधुरेव स्यात्, अत आह—**काञ्चनीत्यादाविति**। **शैषिकोऽणिति**। ननु 'वृद्धाच्छः' इति छेनाणो बाधादिदमसंगतमिति चेत्, न; 'शेषे' इत्यस्य विधित्वस्यापि सत्त्वात् 'वृद्धाच्छः' इत्यस्य अधिकारे पाठात् 'शेषे' इत्यधिकारप्राप्ताण एव छो बाधकः, न तु 'शेषे' इति विहित [ स्य ] अणोऽपीत्यदोषात्।

**स्वेतरेणेति**। स्वम्=अनवकाशविधिः, तदितरेणेत्यर्थः। यथा भवन्तीत्यत्र स्वम्='अतो गुणे' इति पररूपम्, तदितरः='अकः सवर्णे' इति दीर्घः। अयञ्च पररूपविषये नाप्राप्त इति पररूपेण दीर्घो बाध्यः।

वस्तुत इदं चिन्त्यम्—पक्षद्वयेऽपि येनेत्यस्य स्वेतरेणेत्यर्थकस्यावश्यक-त्वात्। अन्यथा विशेषचिन्तापक्षे तदप्राप्तियोग्ये अचारितार्थ्यं दुरुपपादं स्यात्।

'एत्येधत्यूठ्सु' इत्यादौ 'एङि पररूपम्' इत्येतत्कर्तृकनाप्राप्तेर्दुर्निरूप-त्वात्। अत एवान्यतमत्वेन व्यापकताया एव बाधबीजत्वमित्यवोचाम। तस्माद् 'येन ना' इति वाक्यस्थतस्येति पदस्य विवरणभेदेन पक्षद्वयोत्थापनं युक्तमिति ध्येयम्। **यद्यदिति**। यथा 'अचि र ऋतः' इति रेफादेशविषये तिस्रस्तिष्ठन्ती-त्यत्र 'जसि च' इति गुणः, तिस्रः पश्येत्यत्र 'प्रथमयोः' इति पूर्वसवर्णदीर्घः, प्रियतिस्र आगत इत्यत्र, प्रियतिस्रः स्वमित्यत्र च; 'ऋत उत्' इत्युत्त्वमेव,

**इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते । अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति, विनिगमनाविरहात् ।**

**यदि तु येनेत्यस्य लक्षणेनेत्यर्थः कार्येणेत्यर्थो वा, तदा बाध्यविशेषचिन्ता । अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यम्, उत तद्बाधेनेत्येवं विशेषचिन्ता संभवति, यद्युदाहरणमस्ति ।। ५६ ।।**

**तत्र कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्-बाधकत्वे निर्णीते किं शास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह—**

---

'उर्ऋत्' इति ऋदादेशविषये अचीकृतदित्यादौ 'उपधायाश्च' इति उपधाभूत, ऋकारस्येत्वम् । अपीपृथदित्यत्र लघूपधगुणः, अमीमृजदित्यत्र 'मृजेर्वृद्धिः' एवम् 'अतो गुणे' इति पररूपविषये भवन्तीत्यत्र 'अकः सवर्णे' इति दीर्घः, रामा इत्यत्र 'प्रथमयोः' इति पूर्ववर्णदीर्घश्च । **तद्बाध्यमिति** । एतेन 'अचि र' इति रादेशेन गुणदीर्घोत्त्वानाम् 'उरत्' इत्यनेनेरारश्च बाध्यन्त इति सिद्धम् । 'अतो गुणे' इत्यनेन तु 'पुरस्तादपवाद' न्यायेन भवन्तीत्यत्र 'अकः सवर्णे दीर्घः' इत्येव बाध्यम्, न तु 'रामाः' इत्यत्र 'प्रथमयोः' इत्यपीति न कश्चिद् दोषः ।

**विध्यन्तराप्राप्तेति** । न प्राप्तः अप्राप्तः, अप्राप्तं विध्यन्तरं यत्र स विध्यन्तराप्राप्तः. आहिताग्न्यादित्वादप्राप्तशब्दस्य परनिपातः । विध्यन्तरं च निरवकाशेतरविधिः । स च उत्सर्ग एव । एवञ्चोत्सर्गप्राप्तिरहितो यो विषयः, तद्विषयत्वाभावात् स्वस्येत्यर्थः । बाधकस्योत्सर्गाप्राप्तियोग्ये अचारितार्थ्या-दिति यावत् ।

**इयमेवेति** । स्वेतरसर्वबाध एवेत्यर्थः । अनवकाशत्वेन बाधे एवास्याः प्रवृत्तिसत्त्वात् । वस्तुतस्त्वपवादेन बाधेऽप्येषा वक्तुं शक्या, यद्युदाहरणमस्तीति वक्तुं युक्तम् । **यद्युदाहरणमिति** । नास्त्येवेति भावः ।

इदं चिन्त्यम्—'अचि र ऋतः' इत्युदाहरणस्य सत्त्वात् । तत्र हि बाध्य-सामान्यचिन्तानाश्रयणे विशेषचिन्तया गुणदीर्घोत्त्वानां मध्ये कस्यचिदेव बाध इति तिस्रस्तिष्ठन्तीत्यत्र गुणं बाधित्वा रादेशश्चरितार्थं इति दीर्घोत्त्वानां विषये बाधकत्वाभावेन तयोः कृतयोः पश्चादृकाराभावेन रादेशाप्रवृत्तेः, तिस्रः पश्य प्रियतिस्र आगत इत्यादि न स्यात् । बाध्यसामान्यचिन्तायां तु गुणदीर्घोत्त्वानां सर्वेषामपि बाधकत्वात् सर्वत्र रादेश इतोष्टसिद्धिः । तस्मादनवकाशेन बाधेऽ-प्येषा आवश्यकी, एतदुदाहरणसत्त्वात् । एषा बाध्यसामान्यचिन्ता । **विरहा-दिति** । अनवकाशत्वेन बाधे एवैषा । अपवादत्वेन बाधे एवैषेत्यत्र विनिगमना-भावादित्यर्थः । एवञ्चोदाहरणसत्त्व उभयत्रापि बाध्यसामान्यचिन्ता भवत्येवेति सिद्धम् ।

लक्षणेन=शास्त्रेण । प्राधान्यादाह—**कार्येणेति** । **अनवकाशत्वेनेति** । इद-मपि पूर्ववदेव चिन्त्यम् । युक्तार्थोऽपि पूर्ववदेवेति बोध्यम् । प्राग्वद्विनिगमना-

## पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते, नोत्तरान् ॥ ६० ॥

**अवश्यं स्वपरस्मिन् बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ६० ॥**

**'नासिकोदरौष्ठजङ्घादन्त' इत्यस्यौष्ठाद्यंशे ङीष्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किं विहितस्येत्याकाङ्क्षायामाह—**

---

विरहमाह—**एतद्बाधेनेत्यादि**। **यद्युदाहरणमिति**। इदमपि पूर्ववदेव चिन्त्यम्। 'एत्येधत्यूठसु' इत्युदाहरणसत्त्वात्। यद्येतद्विषये विशेषचिन्तानाश्रियते, तर्हि सामान्यचिन्तया 'ओमाङोश्च' इत्यस्यापि बाधे अवैहीति वृद्धिघटितं दुर्वारं स्यात्। ततश्च 'पुरस्तादपवाद' न्यायेनैव वृद्धिरित्यादिः। अवैहीति वृद्धिरसाधुरेवेत्यन्तमूलग्रन्थोऽपि असंगत एव स्यात्। तस्मादनवकाशेन बाधे अस्मिन् विषये विशेषचिन्ता आवश्यकी। तथा च 'एङि पररूपम्' इत्यस्यैव बाधः, न तु 'ओमाङोश्च' इत्यस्यापीतीष्टसिद्धिः ॥ ५९ ॥

तत्र=येन स्वेतरेण; येन कार्येण इत्युक्तार्थत्रयमध्ये कार्येणेत्यस्य कार्यविशेषेणेत्यर्थेऽपि कार्यतावच्छेदको यो धर्मः, तद्धर्मावच्छिन्नसर्वकार्यग्रहणसंभवादाह—**पररूपत्वावच्छिन्नेति**। 'एङि पररूपम्' 'ओमाङोश्च' इत्युभयप्राप्ते इत्यर्थः। **आरभ्यमाणे इति**। 'एत्येधत्यूठ्सु' इत्यनेनेत्यर्थः। **तद्बाधकत्वे**=पररूपबाधकत्वे। **किं शास्त्रेति**। केन शास्त्रेणेत्यर्थः। **तद्विशेषेति**। अवान्तरकार्यविशेषेत्यर्थः।

अस्य न्यायस्य युक्तिसिद्धत्वमाह—**अवश्यमिति**। **स्वपरस्मिन् बाधनीये प्रथमोपस्थितेति**। यतोऽनन्तरम्, अतः प्रथमोपस्थितमित्यर्थः। तच्च 'एङि पररूपम्' इति बोध्यम्। ततः=अनन्तरात्। **आकाङ्क्षाया इति**। बाधकस्य बाध्याकाङ्क्षाया इत्यर्थः।

ननु उत्थिताकाङ्क्षानिवृत्तेरपि उत्थाप्याकाङ्क्षाया अनिवृत्तेस्तया जिज्ञासा भवत्येवेत्याह—**'विप्रतिषेध' शास्त्रबाधे मानाभावाच्चेति**।

ननु 'एत्येधत्यूठ्सु' इत्यस्यापवादत्वेनाधिक्यात् 'ओमाङोश्च' इत्यस्यापवादत्वेन न्यूनत्वाच्चोत्सर्गापवादयोरतुल्यबलत्वात् कथं विप्रतिषेध सूत्रप्रवृत्तिरिति चेत्, उच्यते; बाधकशास्त्रस्य प्राबल्यं तु वैयर्थ्यमूलकम्, तच्च 'एङि पररूपम्' इति प्रथमोपस्थितानन्तरशास्त्रबाधनेनोपक्षीणमित्यूत्तरशास्त्रे बाधनीये बाधकशास्त्रस्य वैयर्थ्यप्रयोज्यबलाधिक्यस्य वक्तुमशक्यत्वेन उभयोस्तुल्यबलत्वस्याव्याहतत्वात्। बाध्यसामान्यचिन्तायां तु युगपत् सर्वेषां बाध्यानां या स्वस्य बाधकत्वरूपवैशिष्टचाप्रतिसंधानार्थमुपस्थितिः, सैव सङ्कोचं प्रयोजयति। विशेषचिन्तायां तूपस्थितानामपि तेषां सङ्कोचकल्पनकाले विस्मरणमेवेत्येतत्सर्वं

**मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते, नोत्तरान् ॥ ६१ ॥**

तेनौष्ठादिषु पञ्चसु 'असंयोगोपधात्' इति प्रतिषेध एव बाध्यते, न तु सहनञ् विद्यमानलक्षण इति 'नासिकोदर०' इत्यत्र भाष्ये स्पष्टम् । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६१ ॥

ननु 'वा छन्दसि' इत्यनेन 'सेह्र्यपिच्च' इत्यनन्तरस्यापित्त्वस्यैव हेरपि विकल्पः स्यात् । तथा 'नेटि' इति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धि-मृजिवृद्ध्योरपि स्यात्, अत उक्तन्यायमूलकमेवाह—

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६२ ॥**

अत एव 'संख्याव्ययादेः' इति ङीब्ग्रहणं चरितार्थम् । तद्वचनन्तरस्य

---

मूलोक्तक्रमेणैवेति बोध्यम् । अत एवाकाङ्क्षाविवृत्तेरिति विप्रतिषेधसूत्रबाधे मानाभावादित्यत्र हेतुरुपन्यस्तः । चो हेतो भिन्नक्रम इति बोध्यम् ॥ ६० ॥

नासिकोदरयोरसंयोगोपधत्वादाह—**ओष्ठाद्यंश इति** । **निषेधत्वावच्छिन्न इति** । 'असंयोगोपधात्' इति 'सहनञ् विद्यमाने' इत्युभयविपयक इत्यर्थः ।

**तेनेति** । न्यायाङ्गीकारेणेत्यर्थः । **प्रतिषेध एव बाध्यत इति** । 'नासिकोदरोष्ठ' इत्यनेनेति शेषः ।

परिभाषायां मानमाह—**पूर्वोपस्थितेति** । अस्याः=न्यायरूपपरिभाषायाः ॥ ६१ ॥

विधिमुक्त्वा निषेधमाह—**तथा 'नेटि' इतीति** । **उक्तन्यायेति** । उक्त-प्रत्यासत्तिरित्यर्थः । सा च प्रथमोपस्थितानन्तरबाधे चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव इत्येतद्रूपेत्यर्थः ।

**अत एव**=न्यायाङ्गीकारादेव । तत्र विध्यंशे फलमाह —**संख्येति** । **ङीप् च ग्रहणं चरितार्थमिति** । अन्यथा 'संख्याव्यादेः' इत्युक्तौ 'बहुव्रीहेरूधसः' इत्यत्र ङीषोऽस्वरितत्वेनानुवृत्त्यभावात् 'ऋन्नेभ्यः' इत्यत्र ङीपि स्वरितत्वप्रतिज्ञानात् प्रकरणानुवृत्तङीप एवात्राप्यनुवृत्त्यैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

[1]'अनन्तरस्य विधिर्भवति' इत्यंशे 'संख्याव्ययादेर्ङीप्' इति ज्ञापकमुपन्यस्य 'अनन्तरस्य प्रतिषेधो भवति' इति द्वितीयांशे ज्ञापकमुपन्यस्यति—**'न क्तिचि' इतीति** । अयमाशयः—'यन्तिः, रन्तिः' इत्यादौ 'अनुदात्तोपदेश०' इति विहितानुनासिकलोपनिषेधार्थम् 'अनुनासिकस्य क्विझलोः' इति विहीतदीर्घनिषेधार्थञ्चात्र सूत्रे दीर्घग्रहणम् । प्रकृतन्यायाभावे तु दीर्घस्याप्यनुवृत्त्योभयनिषेधसिद्धेस्तद् व्यर्थं सत् द्वितीयांशं ज्ञापयति । ज्ञापिते तु न्यायेऽस्मिन्ननन्तरस्य 'अनुनासिकस्य' इति विहितदीर्घस्य निषेधो न स्यादिति तन्निषेधार्थं दीर्घग्रहणं स्वांशे चरितार्थम् ।

---

१. इत आरम्भ त्रिषष्टितमपरिभाषां यावत् सम्पादकसंकलिता व्याख्या प्रारभ्यते ।

**ङीषो विध्यभावाय। 'न क्तिचि' इति सूत्रे दीर्घग्रहणञ्च चरितार्थम्। तद्धचनन्तरस्यानुदात्तोपदेशेत्यस्यैव निषेधाभावाय। मध्येऽपवादन्यायाद्यपेक्षयाऽनन्तरस्येति न्यायः प्रबल इति 'अष्टाभ्यः' इति सूत्रे कैयटः। प्रत्यासत्तिमूलकोऽयम्। लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम्। तत्र तत्र क्वचित् स्वरितत्वप्रतिज्ञानात्, सामर्थ्येन वा बाध्यतेऽयं न्यायः। यथा 'टिड्ढा०' इति सूत्रेण डापा व्यवहितस्यापि ङीपो विधिः। 'न षट्' इत्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः। इयञ्च 'शि सर्वनामस्थानम्' इत्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः॥ ६२॥**

---

'मध्येऽपवाद'न्यायापेक्षया 'अनन्तरस्य' इति न्यायस्य प्राबल्ये कैयटोक्तिं प्रमाणयति—**'अष्टाभ्यः' इति सूत्रे कैयट इति**। अत्र हि 'अष्टपुत्रः; अष्टभार्यः' इत्यादौ नाप्राप्ते लुकारभ्यमाणत्वेन सामासिकलुकोऽपि वाधक औशादेशः स्यादिति तद्वारणाय भाष्यकृतोपन्यस्तस्य—

> औशद्यावस्तु[1] लुक् तत्र षड्भ्योऽप्येवं प्रसज्यते।
> अपवादो यस्य विषये यो वा तस्मादनन्तरः॥

इति श्लोकवार्त्तिकस्य व्याख्यानावसरे 'यो वा तस्मादनन्तरः' इति प्रतीकमुपादाय कैयटेनोक्तम्—ननु 'मध्येऽपवाद'न्यायेन द्वितीयाध्यायविहितसामासिकलुक एव बाधः प्राप्नोति। नैष दोषः, यत्र हि द्वावपि व्यवहितौ पूर्वोत्तरौ, तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्यारूढस्य पूर्वस्य युक्तो बाधः। इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितः सामासिको लुग् महता यत्नेन स्मरणीयः। अनन्तरस्त्वनुभवनीय इति स एव बाध्यते' इति। तथा च 'मध्येऽपवाद'न्यायापेक्षयाऽस्य प्रबलत्वं स्पष्टमेवोक्तम्।

**पक्षान्तरमिति**। अयं न्यायः प्रत्यासत्तिमूलकः। लक्ष्यानुरोधाच्च 'मध्येऽपवादः' 'अनन्तरस्य विधिर्वा' इत्यनयोर्न्याययोर्व्यवस्थेति पक्षान्तरमित्यर्थः। इदमपि कैयटेनोक्तभाष्यव्याख्यायामुक्तम्—'अथवा सत्यामसत्याञ्चोपलब्धौ प्रत्यासत्त्याऽनन्तरस्यैव बाधेन भाव्यम्' इति। एवञ्च तुल्यबलविरोधाभावाद् न्याययोरनयोर्बलाबलविचारो न महते फलाय कल्पेत। क्वचित् स्वरितत्वप्रतिज्ञानात्, सामर्थ्याद् वा न्यायस्यास्य बाधो दृश्यते। तत्र स्वरितत्वप्रतिज्ञानाद् बाधोदाहरणं प्रदर्शयति—**यथा 'टिड्ढा०' इतीति**। अत्र ङीप्पदे स्वरितत्वप्रतिज्ञानात् स्वरितेनाधिकं कार्यमित्यर्थाद् डाब्व्यवहितस्यापि ङीप एव विधिः। डाप एव विधाने त्वदन्तत्वाट्टापैव सिद्धे सूत्रमेव व्यर्थं स्यादिति भावः।

सामर्थ्यान्न्यायबाधमुदाहरति—**'न षट्' इत्यादिनेति**। 'न षट्स्वस्रादिभ्यः' इत्यत्र भाष्ये 'पञ्च इत्यत्र नलोपे कृतेऽदन्तत्वात् प्राप्तस्य टापो वारणाय 'स्त्रियाम्' इति वर्तते, 'स्त्रियां यत् प्राप्नोति तस्य प्रतिषेधः' इति व्याख्यान-

---

१. 'द्यु०' इति उत्तरपदस्य प्राचां सञ्ज्ञा, अद्यो=अनुत्तरपदे इत्यर्थः।

प० शे० ३०

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ स्थानिवत्त्वाभावादादेशो न स्यादिति तद्वैयर्थ्यापत्तिः, अत आह—

**पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६३ ॥**

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चय उत्सर्गेण तत्तल्लक्ष्यं संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः । अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । अपवादो यद्यन्यत्र चरितार्थं इति न्यायस्य तु नात्र प्राप्तिः, अन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥ ६३ ॥

---

सामर्थ्यात् ङीप्टापोरुभयोर्निषेधः । एवं 'प्रियपञ्चा द्रौपदी' इत्यत्र डापोऽपि निषेध इति ध्येयम् ।

**भाष्ये स्पष्टेति** । तत्र हि 'सुडनपुंसकस्य' इत्यत्र 'अनपुंवकस्य' इति यदि प्रसज्यप्रतिषेधः, तदा 'शि सर्वनामस्थानम्' इत्यस्यापि प्रतिषेधः प्राप्नोतीत्या-शङ्क्य, 'अप्राप्तेर्वा' अथवा—अनन्तरा या प्राप्तिः, सा निषिध्यते । कुत एतत्? 'अनन्तरस्य विधिर्वा भवति, प्रतिषेधो वा ? इति पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति' इत्युक्तम्[1] ॥ ६२ ॥

अपवादप्रसङ्गादाह—**नन्विति** । **अन्तरङ्गत्वादिति** । द्वित्वे कृतेऽभ्यस्त-संज्ञायां कृतायाञ्च 'अदभ्यस्तात्' इत्यस्य प्रवृत्त्यपेक्षया 'झोऽन्तः' इत्यस्य शीघ्रो-पस्थितिकत्वेनान्तरङ्गत्वमित्याशयः ।

नन्वस्तु पूर्वमन्तादेशः, स्थानिवद्भावेन तस्य झत्वबुद्ध्याऽदादेशो भविष्य-तीत्याह—**अल्विधाविति** । **तद्वैयर्थ्यमिति** । नन्वत्रानैमित्तिकत्वेनादावेव धातु-संज्ञासमकालमेवाभ्यस्तसंज्ञाप्रवृत्त्या ततोऽन्तादेशादेशयोरेककालप्राप्त्याऽन्ता-देशस्य बाधनेनादादेशस्य चारितार्थ्यात् कथं तद्वैयर्थ्यमिति चेत्, न; 'आयनेयी-नीयियः' इति सूत्रे भाष्ये 'आयन्नादिषूपदेशिवद् वचनं स्वरसिद्ध्यर्थम्' इति वार्त्तिकेनान्तादेशे उपदेशिवद्भाववचनादुपदेशावस्थायामेवान्तादेशप्रवृत्त्या द्वयोः समकालप्राप्तत्वाभावादन्तादेशस्यैव पूर्वं प्रवृत्तेः तद्वैयर्थ्यस्य सूपपादत्वात् । 'अदभ्यस्तात्' इत्यत्र त्वभ्यस्तात् परत्वस्योपदेशेऽसम्भवेनोपदेशिवद्भावस्य न प्रवृत्तिः । तथाऽभ्यस्तविषये 'अभ्यस्तानामादिः' इति स्वरस्यैव प्रवृत्त्याऽऽद्यु-दात्तस्वरनिवृत्तिरूपप्रयोजनाभावेन स्वरसिद्धिप्रयोजनमभिलक्ष्य प्रवृत्तस्य तस्य वार्त्तिकस्य निष्फलत्वान्नाभ्यस्तविषये प्रवृत्तिः ।

**लक्षणैकचक्षुष्क इति** । लक्षणमेवैकं मुख्यं चक्षुः=लक्ष्यसाधुत्वज्ञानसाधनं यस्य सः । भाष्ये तत्र तत्र निबद्धयोः पूर्वं ह्यपवादाः' 'प्रकल्प्य चापवादविषयम्' इत्यनयोर्न्याययोर्नागेशभट्टमतानुसारेणाधिकारिभेदेन व्यवस्थामाह—**अपवाद-विषयं पर्यालोच्येति** । लक्षणज्ञानाधीनलक्ष्यपरिज्ञानवान् पुरुषोऽपवादविषयमादौ

---

१. ६१, ६२, ६३ परिभाषां व्याख्यापत्राणि भ्रष्टान्यासन्निति सम्पादकेन तासां व्याख्या सङ्कलिता ।

**लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः तदाह—**

**प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ ६४ ॥**

**तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः। प्रकल्प्येत्यस्य परित्यज्येत्यर्थः। अत एव 'प्रातिपदिकार्थ' सूत्रे भाष्ये इदं द्वयमप्युक्त्वा न कदाचित् तावदुत्सर्गो भवति, अपवादं तावत् प्रतीक्षत इत्यर्थकमुक्तम् ॥६४॥**

---

पर्यालोच्य तदविषयत्वनिश्चये सत्युत्सर्गेण लक्ष्यसंस्कारं विदधाति। अपवादशास्त्रस्य पूर्वमनालोचने उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचाकरणे च 'असति बाधक उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयः' इति सिद्धान्तात् शास्त्रद्वयप्रामाण्यादन्यतरत्वेन रूपेण विधेयस्योद्देश्यव्यापकतापत्तौ पर्यायतापत्तिः स्यात्। 'विकल्पापत्तिः' इति मूलोक्तं तु न सम्यक्, पूर्वमुत्सर्गशास्त्रप्रवृत्तावपवादशास्त्रप्रवृत्तेर्दुर्घटत्वात्। तथा च 'दधति' इत्यत्रापवादस्यादादेशस्य विषये पूर्वमन्तादेशो न प्रवर्तत इति प्रघट्टकार्थः ॥ ६३ ॥

शास्त्रमन्तरापि लक्ष्यसाधुत्वज्ञानवान् लक्ष्यैकचक्षुष्कस्त्वपवादशास्त्रपर्यालोचनमृतेऽप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्कुरुते। तदभिप्रेत्य 'प्रकल्प्य च' इति न्यायान्तरं वक्तुमुपक्रमते-**लक्ष्यैकचक्षुष्कस्त्विति। तस्यापीति।** 'एकः शब्दः सम्यग् ज्ञातः, शास्त्रान्वितः; सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति कैयटोपदर्शितश्रुतेः, 'शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन' इति भाष्याच्च शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्त्यवगमाद् लक्ष्यैकचक्षुष्कस्यापि धर्मार्थं शास्त्रस्मरणमावश्यकमिति तात्पर्यम्।

**अत एवेति।** परिभाषाद्वयस्य सत्त्वादेव। **प्रातिपदिकार्थसूत्रे इति।** तत्र हि 'ओदनं पचति देवदत्तः' इत्यत्रापवादभूतयोः शतृशानचोः प्रवृत्तिविषयतया तिङोऽनुत्पत्तौ तिङाऽभिधानाभावेन 'अभिहिते प्रथमा' इत्यस्य विषयाभावात् प्रथमाया अनुत्पत्तिप्रसङ्ग इति शङ्कां समर्थयितुम् 'न चापवादविषय उत्सर्गोऽभिनिविशते, पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः, प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते। न तावदत्र कदाचित्तिङादेशा भवन्त्यपवादौ शतृशानचौ तावत् प्रतीक्षते' इत्युक्तम्।

इदमत्राकूतम्—'पूर्वं ह्यपवादाः', 'प्रकल्प्य चापवादविषयम्' इत्येतद्वचनद्वयम् 'प्रातिपदिकार्थ' सूत्रभाष्ये सर्वत्र सहैव पठ्यते। तेनैतद् वचनद्वयं संहत्यैव विशिष्टार्थबोधजनकम्, न त्वधिकारिभेदेन भिन्नार्थबोधजनकमित्यध्यवसीयते। तदनन्तरञ्च 'न तावदत्र कदाचित् तिङादेशो भवति, अपवादौ

**एतन्मूलकमेव नवीनाः पठन्ति—**

**उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति ॥ ६५ ॥**

**यत्त्वभ्यस्तसंज्ञासूत्रे कैयटेन 'प्रकल्प्य च' इति प्रतीकमुपादाय यथा 'न सम्प्रसारण इति परस्य यणः पूर्वं सम्प्रसारणम्, पूर्वस्य तु तन्निमित्तकः प्रतिषेधः' इत्युक्तम्, तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम् ।**

---

तावच्छतृशानचौ प्रतीक्षते' इत्यादिवचनेनापवादप्रतीक्षणमुच्यते । तदेतदनयोर्भिन्नाधिकारिकत्वे नोपपद्यते, लक्ष्यैकचक्षुष्कस्यापवादशास्त्रपर्यालोचनाभावात् । तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थोऽपि प्रसिद्धिविरुद्धः । प्रागादिपदाभावे तत इत्यनेन तदुत्तरमित्यर्थस्यैव परिस्फुरणात् । अतोऽत्र परित्यागात्मकप्रकल्पनोत्तरमित्येवार्थं उचितः । ल्यपा तदर्थसूचनेऽपि स्पष्टत्वार्थं तदुपादानात् । अत एव भाष्ये बहुस्थलेषु 'ततः' पदरहित एव पाठो दृश्यते ॥६४॥

**एतन्मूलकमेवेति ।** उत्सर्गस्य पूर्वं प्रवृत्तावपवादशास्त्रवैयर्थ्यापत्तिरिति 'पूर्वं ह्यपवादाः' इति परिभाषाऽवतरण उक्तम् । तन्मूलकमेवेत्यर्थः । अपवादशास्त्रवैयर्थ्यापत्तिमूलकमिति यावत् । नवीनाः=दीक्षितादयः ।

**उपञ्जनिष्यमाणेति ।** उत्सर्गशास्त्रप्रवृत्त्यभावसंभावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावनायामप्यपवाद उत्सर्गं बाधते । अपवादविषय उत्सर्गः पूर्वं न प्रवर्तत इति भावः ।

न्यायेनानेन भविष्यदपवादविषयातिरिक्तत्वेनोत्सर्गशास्त्रे सङ्कोचो विधीयते । यथा 'दधति' इत्यादौ यदि पूर्वमन्तादेशो न स्यात्, तर्ह्यदादेशः स्यादिति सम्भावनायाः सत्त्वादन्तादेशः पूर्वं न प्रवर्तते । तेनादादेशस्य प्रवृत्त्येष्टरूपसिद्धिर्भवति ।

**अभ्यस्तसंज्ञासूत्रे कैयटेनेति ।** अस्य कैयटग्रन्थस्यायमाशयः—यत्रोत्सर्गप्रवृत्त्युत्तरं प्राप्तिमताऽपवादेनोत्सर्गस्य विषयापहारः क्रियते, तत्रापवादस्य यथा प्रवृत्तिः सिद्ध्येत, तथैव पूर्वं प्रवर्तमानेनोत्सर्गेण लक्ष्यसंस्कारः सम्पादनीय इति 'प्रकल्प्य चापवादः' इति न्यायस्यार्थः । तेन 'यूनः' इत्यादौ युवन्शब्दस्य 'श्वयुव०' इति यकारवकारयोः संप्रसारणं न भवति, किन्तु परस्य वकारस्यैव । तेन 'न सम्प्रसारणे सम्प्रसारणम्' इत्यस्य विषयलाभादुक्तरीत्येष्टरूपसिद्धिर्भवतीति ।

**'तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणमिति ।** अस्यायम्भावः–'न सम्प्रसारणे' इति सूत्रे भाष्यकृता एतदेव ज्ञापयति—परस्य भविष्यति, न पूर्वस्येति, यदयम् 'न सम्प्रसारणम्' इति प्रतिषेधं शास्ति' इत्युक्त्या ज्ञापकाश्रयणेनैव परस्य यणः सम्प्रसारणस्य पूर्वं प्रवृत्तिसाधनात् । न्यायस्य तथार्थकत्वे तु ज्ञापकानुसरणस्यानौचित्यं स्यात् ।

**यत्त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थं इति तदर्थं इति तन्न, 'अभिनिविशतेऽपवादविषयम्' इत्यादिपदस्वारस्यभङ्गापत्तेः। पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च।**

**यत्र त्वपवादो निषिद्धः, तत्रापवादविषयेऽप्युत्सर्गः प्रवर्त्तत एव। 'यथा वृक्षौ' इत्यत्र 'नादिचि' इति पूर्वसवर्णदीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वाभावाद् वृद्धिः प्रवर्त्तते। अत एव 'तौ सत्' इत्यादि सङ्गच्छते। अत एव निर्देशाद् अष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणम्। ध्वनितं चेदम् 'इको गुण०' इति सूत्रे भाष्य इति भाष्यप्रदीपोद्द्योते निरूपितम्।**

**अत्र 'देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं न' इति न्यायस्य विषय एव नास्ति। हते देवदत्त उन्मज्जनं न देवदत्तहननोद्यतस्य हनने तु भवत्येवोन्मज्जनम्। प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननम्, किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रम्, प्रसक्तस्यैव निषेधात्।**

**प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम्। स्पष्टं चेदम् 'शेषाद् विभाषा' इति सूत्रे भाष्ये। तत्र हि शेषग्रहणमनर्थकम्, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्य, 'अनवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशाः, इत्युक्तम्।**

---

**स्वारस्यभङ्गापत्तेरिति।** तस्यार्थस्योक्तवचनघटकशब्दैरप्रतिपादनात् स्वरसस्य=स्वाभिप्रायस्य भङ्गापत्तिरित्यर्थः।

**अत एव**=अपवादे निषिद्ध उत्सर्गशास्त्रप्रवृत्तेरेव।

**उन्मज्जनं नेति। देवदत्तस्येति** शेषः। तदविषयत्वे हेतुमाह-**प्रकृतेऽपीति।** वृक्षावित्यादावित्यर्थः, अपिर्ह्यर्थे। प्रसक्तिमात्रम्=प्रसङ्गमात्रम्।

ननु प्रतिपदोक्तत्वस्य कथं बाधकत्वम्, उक्तेष्वपरिगणनात्, अपरिगणनेऽप्युक्तेष्वेवान्तर्भाव इति ब्रूषे ? तर्हि क्वान्तर्भाव इत्याह-**प्रतिपदोक्तत्वमिति। निरवकाशत्व इति।** अस्य सर्वथेत्यादिः। **सावकाशा इत्युक्तमिति।**

तथा च शेषग्रहणाभावे कप्पक्षे 'उपदंशाः' इत्यादौ 'बहुव्रीहौ संख्येये' इत्यादिना डजादेः कपश्चोभयोः प्राप्तौ परत्वात् कप्युपदंशका इत्यादि स्यात्, तन्मा भूदित्येतदर्थं शेषग्रहणम्। कृते च तस्मिन् कपोऽप्राप्त्या नित्यं डजादय एवेतीष्टसिद्धिरिति बोध्यम्।

**पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वमिति।** अत एव 'अप्तृन्' इति दीर्घस्य 'आपस्तिष्ठन्ति' इत्यत्र सावकाशत्वेऽपि शोभना आप एषु तडागेष्विति विग्रहे स्वांपीत्यत्र प्रतिपदोक्तत्वेन परं नित्यं च नुमं बाधित्वा पूर्वं दीर्घे ततो नुमि रूपसिद्धिः। अन्यथा उक्तहेतुभ्यां पूर्वं नुमि अकारस्यानुपधात्वेन दीर्घाप्राप्त्या स्वपीति स्यात्। नन्वत्र क्वचिदित्यस्याभावेऽनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकत्वं बलवत्त्वं प्रतिपदविधित्वे-

**क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वं प्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि,परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे कैयटेन पाठात् ।**

**अत एव 'रमे' इत्यादौ प्रतिपदोक्तत्वात् पूर्वमेत्व आकारप्रश्लेषाद्धल्ङ्या-दिलोपो न प्राप्नोतीत्याशङ्क्य 'एङ्ह्रस्वात्' इति लोपेन समाहितम् ॥ ६५ ॥**

**ननु 'अयजे इन्द्रम्' इत्यादावन्तरङ्गस्यापि गणस्यापवादेन सवर्णदीर्घेण बाधः स्यात्, अत आह--**

---

नापीत्युक्तौ 'इयाय' इत्यादौ 'इ ऐ अ' इत्यवस्थायां प्रतिपदोक्तेन इणः शतरि यन् इत्यत्र चरितार्थेन 'इणो यण्' इत्यनेन बाधात् परस्या अपि वृद्धेरप्राप्त्या 'इयाय' इति न स्यात् । किन्तु 'इ इ अ' इति स्थिते परस्येकारस्य 'इणो यण्' इति यणि 'इय' इत्यनिष्टं स्यात् ।

किञ्च, 'शेषाद् विभाषा' इति सूत्रस्थभाष्यासङ्गतिश्च स्यादिति मत्वा क्वचिदित्युक्तम् । वस्तुतश्चिन्त्यमेवैतत्—अनकाशत्वाभावेऽपि प्रतिपदोक्तस्थ पूर्वप्रवृत्तिप्रयोजकबलवत्त्वे 'शेषाद्विभाषा' 'उगवादिभ्यो यत्' इति सूत्रद्वयस्थ-भाष्यविरोधात् । **विरोधिसन्निपाते** इति । विरुद्धयोर्द्वयोश्शास्त्रयोः सन्निपाते एकस्मिन् लक्ष्ये प्रवृत्तौ यत्पराद्यन्यतमम्, तद् भवति, तेषां परादीनां मध्ये मिथः परमित्याद्योर्युगपत्प्रसङ्ग उपात्तक्रमेण तद्बलवदित्यर्थः । **कैयटेन पाठादिति ।** तथा च लब्धावकाशानामेव परनित्यान्तरङ्गापवादानां मध्ये उत्तरोत्तरस्य बली-यस्त्वात् तत्सहपठितस्य प्रतिपदस्यापि सावकाशत्वेऽपि प्राबल्यमेवेति स्वोक्ति-साधकं तदिति भावः । परन्त्वेतत् कैयटाशयविरुद्धम् ।

तथाहि 'परनित्यान्तरङ्गानापवादानामुत्तरोत्तरं बलीयः' इत्यत्रापवाद-ग्रहणमपनीय तत्स्थाने 'प्रतिपद' इति कैयेटेन पठितम् । तथा चापवादवदेव प्रतिपदविधिरपि । अपवादश्च निरवकाशत्व एव । तस्मात् प्रतिपदविधेरपि निरवकाशत्व एव प्राबल्यम्, न तु सावकाशत्व इति निष्कर्षः ।

**अत एव**=प्रतिपदविधेस्सावकाशत्वेऽपि बलवत्त्वादेव । **रमे इत्यादाविति ।** अत्रत्यं[1] गर्वष्ठिर इत्यत्र पूर्वमेव विशदीकृतम् । 'अनड्वान्, पन्थाः, गोमान्' इत्याद्यनुरोधेन तक्रकौण्डिन्य' न्यायस्य हल्ङ्यादिलोपे प्रवृत्तिर्नेति भावः । 'वार्णादाङ्गम्' इति तु न, विभिन्नस्थानिकत्वात् । नापि विप्रतिषेधः, चरितार्थ-योरेव तदङ्गीकारात् । न च एत्वे हल्ङ्यादिलोपस्याप्राप्त्या समासान्तकप इव बाध एवात्र । तथा च न बाधप्रयोजकमिति पूर्वग्रन्थासङ्गतिरिति चेत्, न; लोपरूपकार्येणैवात्र सम्प्रधारणाया अभिप्रेतत्वेन तस्यात्र न बाध इति तात्प-र्यात् ॥ ६५ ॥

---

१. रहस्यमिति शेषो बोध्यः ।

**अपवादो यद्यन्यत्र चरितार्थः, तर्ह्यन्तरङ्गेण बाध्यते ॥ ६६ ॥**

**निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात्। एवञ्च प्रकृतेऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादोऽपि बाध्यते। पूर्वोपस्थितनिमित्तत्वरूपान्तरङ्गत्वविषय इदम्।**

**यत्त्वागमादेशयोर्न बाध्यबाधकभावः, भिन्नफलत्वात्, अत एव 'ब्राह्मणेभ्यो दधि दीयताम्, कम्बलः कौण्डिन्याय' इत्यादौ कम्बलदानेन न दधिदानबाध इति 'च्छ्वोः' इति सूत्रे कैयटः, तन्न, 'अपवादो नुग्दीर्घत्वस्य' इति 'दीर्घोऽकितः' इति सूत्रभाष्यविरोधात् ॥ ६६ ॥**

---

**अन्तरङ्गस्यापीति**। पूर्वोपस्थितिनिमित्तकत्वेनेति भावः। **बाधकत्वबीजस्याभावादिति**।

अत्रेदमवधेयम्—बाधकत्वं नाम उत्सर्गस्यापवादविषयातिरिक्तविषयत्वेन सङ्कोचः। स च प्रकृतोदाहरणविषये 'आद्गुणः' इत्युत्सर्गेऽवर्णादचीत्यस्य सवर्णातिरिक्ताच्परत्वेनेति आद्गुणेन समुचितसङ्कोचविषये न प्रवर्तितव्यमित्येव बाधकत्वमिति 'अयजे इन्द्रम्' इत्यस्य सङ्कुचितसङ्कोचविषयातिरिक्तत्वेनात्रोत्सर्गस्य आद्गुणस्य प्रवृत्तौ बाधकाभावः। तस्मादत्रापवादविषयातिरिक्तत्वेन सङ्कुचितस्य सङ्कुचितसङ्कोचविषयातिरिक्तत्वेनाप्रवृत्तौ मानाभावादिति हेतुरुपन्यसनीयः, न तु निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावादिति। अस्तु नाम निरवकाशत्वम्, उत्सर्गः प्रवर्तत एवेत्युक्तौ तस्य मदुक्तरीत्यैव समाधेयत्वात्।

किञ्चैवम् 'प्रकृतेऽन्तरङ्गेण गुणेनेत्यारभ्य, अन्तरङ्गविषये इदम्' इत्यन्तग्रन्थोऽपि हेय एव, मदभिहितार्थ एव गतार्थत्वात्।

एवञ्च परिभाषास्वीकारे प्रकृते 'अयजे इन्द्रम्' इत्यत्र गुणो नेति। उत्सर्गेणेत्यर्थः।

**समानाश्रय इति**। 'दैत्यारिः, श्रीशः, विष्णूदयः' इत्यादौ। **इदम्**=परिभाषारूपं वचनम्।

**कम्बलदानेन दधिदानबाध इति**। वस्तुतश्चिन्त्य एवायं कैयटग्रन्थः, लोकव्यवहारविरुद्धत्वात्। लोके हि 'ब्राह्मणेभ्यो दधि दीयताम्, कम्बलः कौण्डिन्याय' इत्यादौ कौण्डिन्याय कम्बल एव दीयते, न दध्यपि। यत्र तु दातुः कौण्डिन्यायोभयदाने तात्पर्यम्, तत्र समुच्चयार्थश्चकार एव पठ्यते—कम्बलश्च कौण्डिन्यायेति। नह्यन्यथा लोके व्यवहारो दृश्यते। अतः कम्बलदानेन न दधिदानबाध इति तु शपथैकनिर्णय एवेति सुधियो विभावयन्तु। **भाष्यविरोधादिति**। लोकविरुद्धमपि कैयटोक्तमङ्गीकृत्य भाष्यविरोधं वदन् नागेशोऽपि तादृश एवेत्यपि सुधिय आकलयन्तु। वस्तुतोऽस्मदुक्तरीत्या कैयटोक्तिं दूषयित्वा, अत

**ननु 'अजीगणत्' इत्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिः शेषं बाधेत, तत्राह—**

**अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६७ ॥**

**'दीर्घोऽकितः' इत्यकिद्ग्रहणमस्या ज्ञापकम्। अन्यथा 'यंयम्यते' इत्यत्र नुकि कृतेऽनजन्तत्वाद् दीर्घाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव।**

**इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका। तेन 'अचीकरत् मीमांसते' इत्यादि सिद्धम्।**

---

एवापवादो नुग् दीर्घत्वस्येति 'दीर्घोऽकितः' इति सूत्रस्थं भाष्यं सङ्गच्छत इति तु वक्तुं युक्तमित्यवधेयम् ॥ ६६ ॥

**निरवकाशत्वादिति।** इदञ्च गणरूपाभ्यासस्येत्वमिति सामानाधिकरण्येनान्वयपक्षे। गणेरभ्यासावयवस्येत्वमिति वैयधिकरण्येनान्वय इति पक्षे तु हलादिशेषोत्तरमपीत्वप्राप्तेः सत्त्वात् तत्रन्यायेनेति बोध्यम्।

**बाधेतेति।** पक्षद्वयेऽपि णकारस्येकारादेशे 'ई च गणः' इत्येव वक्तव्ये दीर्घोच्चारणसामर्थ्याद् गुणाभावे 'अज ई गणत्' इत्यनिष्टरूपं स्यादिति भावः।

**नुकि कृते** इति। अनवकाशत्वादित्यर्थः। **अनजन्तत्वादिति।** ननु नुका-[1]ऽनुस्वारो लक्ष्यत इत्युक्तत्वादनुस्वारस्याच्त्वेनाजन्तत्वमस्त्येवेति वाच्यम्, नुग्विधानसामर्थ्यात् स्वापहारकादेशे कर्तव्येऽनुस्वारस्यानाक्षरसमाम्नायिकत्वज्ञापनेनानुस्वारस्य दीर्घे कर्त्तव्येऽनच्कत्वात्। लोपवद्दीर्घोऽपि स्वापहारक आदेश एव, दीर्घेणापि स्वस्यापहारात्। 'यंयम्यते' इत्यत्र परसवर्णस्य स्वापहारकादेशत्वेऽपि तस्यानुस्वारोद्देश्यकत्वेन तस्मिन् कर्त्तव्येऽनुस्वारस्यानाक्षरसमाम्नायिकत्वेऽप्यदोषः।

**तद्वैयर्थ्यमिति।** ननु 'ओहाक् त्यागे' इत्यस्माद् यङ्लुकि 'जहाति' इत्यत्र दीर्घवारणार्थमेव तत्स्यादिति चेत्, न; प्रत्यासत्त्याऽभ्यासोद्देश्यककित्समभिव्याहृतातिरिक्ताभ्यासस्यैव दीर्घविधानेन हाकः कित्वस्यातथात्वेनादोषात्। अत एव चाच्छायत इत्यस्य सिद्धिः। अन्यथा तु कः कित्त्वेनाकित इति निषेधाद् दीर्घानापत्त्या तदसिद्धिः स्पष्टैव। यदि तु षष्ठ्यंशविकलयोः 'तस्मादित्युत्तरस्य' 'तस्मिन्निति निर्दिष्टे' इत्यनयोरुपस्थित्या विकरणदीर्घात् परच्छकारात् पूर्वं तुग् भवति। आगमलिङ्गस्य कित्त्वस्य तु 'इत्यः, स्तुत्यः' इत्यादावागमत्वसम्पादकत्वेन चारितार्थ्यात् प्रकृते तदभावे न क्षतिः। 'दीर्घस्यायं तुक्, न तु छस्य' इति कौमुदीग्रन्थस्त्वनन्तरपदमध्याहृत्य दीर्घस्यानन्तरस्तुक्, न तु छस्येति योजयितुं शक्य इत्युच्यते? तदा तुकोऽभक्तत्वादभ्यासस्याभक्तत्वेन दीर्घः सुलभ एव :

---

१. हस्तलिखितपुस्तके 'अलुका' इति पाठ आसीत्, अर्थासङ्गत्या चोपेक्षितः।

ननु यङ्लुको दीर्घविधानेनोत्तरखण्डव्यवधानस्य नाप्राप्तत्वेऽपि तुग्व्यवधाने दीर्घः कथमिति चेत्, न; निर्दिष्टपरिभाषायां षष्ठ्यंशोपस्थित्या छे परे यो दीर्घः, ततः परस्य तुगित्यर्थेन छस्यैवावयवो भवतीत्यवयवावयविन्यायेन तुग्विशिष्टस्यैवोत्तरखण्डत्वेन तद्व्यवधाने दीर्घस्य सुलभत्वात्।

किञ्च, ह्वाको गित्करणेनादोषः। 'हश्च व्रीहिकालयोः' इत्यत्र ह्वाको ह्वाङश्च सामान्यग्रहणं तु कित्त्वे इव गित्त्वेऽपि भवत्येव। न च किद्ग्रहणस्या'भ्यासकार्येषु वैयधिकरण्यान्वयज्ञापनेनैव चारितार्थ्यात् कथं परिभाषाज्ञापनमिति चेत्, न; तावन्मात्रफलकत्वे तु 'दीर्घोऽनुकः' इति न्यासेन 'यंय्यम्यते' इत्यत्रानवकाशत्वान्नुकि कृते दीर्घाप्राप्त्या नोगादिषु तक्रन्यायेनैव बाधाच्च नुग्ग्रहणवैयर्थ्यादिवाभ्यासकार्येषु वैयधिकरण्यान्वयज्ञापनात्। अकित इत्यस्य परिभाषायामेव ज्ञापकत्वात्।

यद्वा, नुगत इत्यत्र तपरकरणस्य भूतपूर्वह्रस्वपरिग्रहणार्थत्वेन 'यंय्यम्यते' इत्यत्र दीर्घोत्तरमपि नुकः प्राप्तेः 'तक्रकौण्डिन्य' न्यायेन नुका दीर्घस्य बाधे पुनर्दीर्घाप्राप्त्याऽकिद्ग्रहणस्य परिभाषाज्ञापकत्वात्।

केचित्तु, नुगत इत्यत्र तपरकरणं मुखसुखार्थमेव। 'यंय्यम्यते' इत्यत्र तक्रन्यायेनैव नुका दीर्घस्य बाध इत्यकिद्ग्रहणं परिभाषाज्ञापकम्। न च नुगत इत्यत्र तपरसत्त्वे 'भाम क्रोधे' इत्यस्माद्यङि द्वित्वे हलादिशेषे ह्रस्वे मूलभूतह्रस्वत्वाभावेन नुकोऽप्राप्त्या 'बाभाम्यते' इति रूपम्, तपरकरणस्य मुखसुखार्थत्वे भूतपूर्वह्रस्वस्यैव नुगित्यर्थाभावेन 'भाम् भाम्' इत्यवस्थायां हलादिशेषह्रस्वदीर्घनुकां प्राप्तौ तक्रन्यायेन नुका इतरेषां बाधात् पूर्वं नुकि 'बाभाम्यते' इति रूपमिति तपरकरणस्य पक्षद्वये फलभेद इति वाच्यम्, तपरकरणस्य भूतपूर्वह्रस्वपरिग्रहार्थत्वपक्षेऽपि द्वित्वोत्तरं 'भाम् भाम्' इत्यत्र हलादिशेषह्रस्वदीर्घाणां प्राप्तौ तक्रन्यायेन ह्रस्वहलादिशेषयोर्दीर्घेण बाधाद् 'बाभाम्यते' इत्यस्यैव रूपत्वात्।

न च तपरकरणस्य मुखसुखार्थत्वपक्षे नुका हलादिशेषस्य तक्रन्यायेन बाधात् पुनस्तदप्रवृत्तावनुस्वारद्वयश्रवणापत्तिरिति वाच्यम्, 'उगिदचाम्' इति सूत्रभाष्यरीत्या अनुस्वारद्वयस्याप्येकपरसवर्णेन एकमकारस्यैव श्रवणात्।

यद्वा, परसवर्णेनानुस्वारद्वयस्य मद्वयादेशेऽपि 'नपुंसकस्य झलचः' इति सूत्रस्थभाष्यरीत्या व्यञ्जनात् परस्य सजातीयव्यञ्जनस्यैकस्यानेकस्योच्चारणे विशेषो नास्तीत्याहुः, तत्, न; 'नुकानुस्वारौ लक्ष्यते' इत्युक्तत्वेन तपरकरणस्य मुखसुखार्थत्वपक्षे मुकि तस्य 'वा पदान्तस्य' इति परसवर्णे मकारद्वयघटितरूपम्, परसवर्णाभावे अनुस्वारे मकारघटितरूपं चेति व्यञ्जनात् परस्येति भाष्याद् मद्वयघटितरूपमादाय पक्षद्वये फलभेदाभावेऽप्यनुस्वार उच्चारणकृतविशेषस्य सत्त्वादनुस्वारमकारघटितरूपमादाय फलभेदस्य सत्त्वात्।

**आद्ये सन्वद्भावप्रयुक्तेत्वस्य परत्वाद् दीर्घेण बाधः प्राप्नोति। अन्त्ये 'मान्बध' इति दीर्घेणान्तरङ्गत्वादित्वस्य बाधः प्राप्तः।**

**यत्तु यत्रैकैकप्रवृत्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमित्यतः 'एक०' इति सूत्रे कैयटः, तन्न, नुकि कृते दीर्घप्राप्त्या धर्मिग्राहकमानविरोधान्मान्बधादीनां दीर्घे कृते इत्वाप्राप्त्या 'गुणो यङ्लुकोः' इति सूत्रस्थभाष्योक्ततदुदाहरणासङ्गतेश्चेत्यन्यत्र विस्तरः॥ ६७॥**

---

ननु ज्ञापितायामपि परिभाषायामकिद्ग्रहणस्य स्वांशे चारितार्थ्यं दुर्निरूपम्, 'यंयम्यते' इत्यादावनया बाध्यबाधकभावाभावेन पूर्वं दीर्घे ततो नुकि कृतेऽप्यकिद्ग्रहणे निषेध्याभावादिति चेत्, न; किद्भाविनोऽभ्यासस्स दीर्घो नेत्यर्थेनादोषात्।

न च 'अतः' इति तपरकरणाद् दीर्घोत्तरं नुकः प्राप्त्यभावेन भाविमित्त्वं कथमिति वाच्यम्' तपरकरणस्यौपदेशिकह्रस्वपरिग्रहार्थत्वेन दीर्घोत्तरं नुक्प्रवृत्तेरव्याहतत्वात्।

परिभाषार्थस्तु 'बाध्यबाधकभावो न' इत्यस्याभ्यासविकारेषु बाध्यस्य पूर्वं प्रवृत्तिरित्यर्थः। यथाश्रुतार्थत्वे तु 'बोभूयते, लोलूयते' इत्यत्र 'भू भू य ते' 'लू लू य ते' इत्यवस्थायां ह्रस्वगुणयोः प्राप्तयोरनया बाध्यबाधकभावाभावेन गुणात् पूर्वम्, उत्तरं च गुणस्य च प्राप्त्या कस्यापि पूर्वप्रवृत्तौ गमकाभावेनोभयोः पर्यायेण पूर्वं प्रवृत्तौ 'भूभूयते, लूलूयते' इत्यपि रूपद्वयं दुर्वारं स्यात्। अतस्तन्निवृत्तये बाध्यबाधकभावो न' इत्यस्य तथार्थो वर्णनीयः।

अस्मिन्नर्थे उक्तदोषवारणं तु ढौकृधातोर्यङि 'डोढौक्यते' इत्यत्र ह्रस्वात् पूर्वं गुणाप्राप्त्या पश्चात् प्राप्तिकत्वेन गुणो बाधकः, ह्रस्वो बाध्य इति बाध्यस्य ह्रस्वस्य पूर्वं प्रवृत्तिः, पश्चाद् बाधकस्य गुणस्य प्रवृत्तिरिति 'बोभूयते' लोलूयते' इत्येकमेव रूपम्, न तु रूपान्तरमपीति बोध्यम्।

ननु व्यथ इत्यस्माल्लिटि द्वित्वे हलादिशेषसम्प्रसारणयोः प्राप्तौ बाध्यस्य हलादिशेषस्य पूर्वं प्रवृत्त्या यथयोर्निवृत्तौ वस्य 'व्यथो लिटि' इति सम्प्रसारणे 'उव्यथ इति स्यात्, न तु विव्यथ इतीति चेत्, न; 'लिटचभ्यासस्य' इत्यत्रोभयेषां ग्रहणसामर्थ्यात् सम्प्रसारणस्य पूर्वं प्रवृत्तिरिति सामान्यज्ञापनेन यस्य पूर्वं सम्प्रसारणे ततो हलादिशेषेण थस्य निवृत्तौ 'विव्यथ' इत्यस्य सिद्धेः।

नन्वेवमपि 'अमीमवत्, अलीलवत्' इत्यत्र द्वित्वह्रस्वयोरुत्तरं दीर्घत्वयोः प्राप्तौ बाध्यस्य दीर्घस्य पूर्वं प्रवृत्तौ पश्चादित्वे 'अमिमवत्, अलिलवत्' इत्येव स्यादिति चेत्, पिपविषति, यियविषति, मिमविषति' इत्यादावित्वस्य चारितार्थ्याद् दीर्घस्य सन्वद्भावमात्रविषयकत्वेनेत्वमेव बाध्यमिति तस्यैव पूर्वं प्रवृत्त्या ततो दीर्घे 'अमीमवत्, अलीलवत्' इत्यस्य सिद्धिरिति बोध्यम्।

**परत्वाद् दीर्घेण बाध इति।** सन्वद्भावस्य 'अचिक्षिपत्, अजिघ्रपत्' इत्यादौ चारितार्थ्यादिति भावः।

**ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपवादः, असरूपापवादस्य विकल्पेन बाधकत्वात् । अत आह—**

**ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ ६८ ॥**

**ण्वुलि सिद्धे 'निन्दहिंस' आदिसूत्रेणैकाजभ्यो वुञ्विधानमत्र ज्ञापकम्, तत्र ण्वुल्वुञोः स्वरे विशेषाभावात् । ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलिकैरताच्छीलैश्च वासरूपविधिर्नेति बोध्यम् ।**

---

**कैयटस्तन्नेति । एकैकप्रवृत्त्युत्तरमित्यस्य** बाध्यप्रवृत्त्युत्तरम्; **सर्वेषां प्रवृत्तिरित्यस्य** बाधकानां प्रवृत्तिरित्यर्थः । बहुवचनं तु बाध्यबाधकानामनेकत्वाभिप्रायेणेति कैयटाशयमजानतः । तत्, न; इति यत्कथनम्, तदेव नेति गुरुचरणाः ।

**नुकि कृते दीर्घाप्राप्त्येति ।** अनजन्तत्वादिति भावः । वस्तुतस्त्वभ्यासविकारेषु वैयधिकरण्यान्वयस्य क्लृप्तत्वान्नुगुत्तरमपि दीर्घप्राप्तेस्सत्त्वाच्चिन्त्यमेवैतत् । दीर्घे कृतेऽत इति तपरकरणान्नुकोऽप्राप्त्येति वक्तुमुचितम् ।

न च तपरस्य भूतपूर्वंह्रस्वार्थत्वेन दीर्घोत्तरमपि नुक् स्यादेवेति वाच्यम्, भूतपूर्वह्रस्वेत्यस्यानतिदिष्टमूलभूतह्रस्वाकारस्येत्यर्थाद् दीर्घेऽतिदेशमन्तरा ह्रस्वाकारत्वाभावात् । **धर्मिग्राहकमानविरोधादिति ।** धर्मिग्राहकमानम्=अकिद्ग्रहणम्, तद्विरोधात्=चारितार्थ्याभावादित्यर्थः । **इत्वाप्राप्त्येति ।** 'सन्यतः' इत्यत्रात इति तपरकरणाद् दीर्घोत्तरं तदप्राप्तिरिति भावः ।

**तदुदाहरणासङ्गतिरिति ।** तस्याः=परिभाषायाः, उदाहरणम् 'मीमांसते' 'दीदांसते' इति । तदसङ्गतिरित्यर्थः । **अन्यत्र**=शेखरे ॥ ६७ ॥

नन्वभ्यासविकारेषु बाध्यबाधकभावाभावकथनोपस्थितामसरूपोत्सर्गस्य पाक्षिकबाधाभावबोधिकाम् 'ताच्छीलिकेषु वासरूपविधिर्न' इति परिभाषामवतारयति—**नन्वित्यादिना । तृन्विषये इति ।** 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकृत्य 'तृन्' इति सूत्रविहितविषये इत्यर्थः । **ण्वुलपीति ।** 'ण्वुल्तृचौ' इति सूत्रविहित इत्यर्थः ।

**ण्वुलि सिद्धे इति ।** निन्दक इति रूपसिद्धावित्यर्थः **एकाजभ्यः** कण्ड्वादियगन्तासूयातिरिक्तेभ्यः । न च परिवाद्यातिरिक्तत्वमपि, णेर्लुप्यमानत्वात् । न च स्थानिवद्भावेनानेकाच्त्वम्, स्वरविधौ तन्निषेधात् । **स्वरे विशेषाभावादिति ।** उभयथाप्याद्युदात्तस्यैव सत्त्वादिति भावः ।

न च स्वरकृतविशेषाभावेऽपि वुञन्तनिन्दकशब्दादाचारक्विबन्तात् 'स्वरितञितः' इत्यात्मनेपदरूपविशेषोऽस्त्येवेति वाच्यम्, 'ब्राह्मणमाणववाडवाद्यन्' इति सूत्रस्थभाष्यप्रामाण्येनाचारक्विबन्तेभ्यस्तत्प्रकृतिनिष्ठानुबन्धप्रयुक्तकार्याभावज्ञापनात् ।

**नन्वेवम् 'कम्रा, कमना, इत्याद्यसिद्धिः 'मिकम्पि' इति रेण 'अनुदात्तेतश्च हलादेः' इति युचो बाधादिति चेत्, न; 'सूददीपदीक्षश्च' इत्यनेन दीपेर्युज्-निषेधेनोक्तार्थस्यानित्यत्वात् ।। ६८ ।।**

**नन्वेवम् 'हसितं छात्रस्य हसनम्' इत्यादौ घञ्, 'इच्छति भोक्तुम्' इत्यत्र लिङ्लोटौ, 'ईषत्पानः सोमो भवता' इत्यत्र खल् प्राप्नोतीत्यत आह—**

**क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ।। ६९ ।।**

**इदं च वासरूपविधेरनित्यत्वात् सिद्धम् । तदनित्यत्वे ज्ञापकं च 'अर्हे कृत्यतृचश्च' इति ।**

---

एवम्=परिभाषास्वीकारे । **उक्तार्थस्येति ।** धर्मिग्राहकमानात् ताच्छीलिकेषु वाऽसरूपविधिर्नेत्यस्येत्यर्थः ।। ६८ ।।

ननूक्तपरिभाषया ताच्छीलिकेषु वाऽसरूपविध्यभावेऽपि अताच्छीलिकेषु तत्सत्त्वात् 'हसितम्' इत्यादौ घञादिरपि स्यात्, तद्वारणार्थं 'क्तल्युट्तुमुन्खलर्थेषु' इति परिभाषामवतारयति—**नन्वित्यादिना । एवमपीति**[1] । उक्तपरिभाषया ताच्छीलिकेषु दोषवारणेऽपीत्यर्थः । **हसितमिति ।** 'नपुसके भावे क्तः' हसनमिति 'ल्युट् च' इति ल्युः । **आदाविति ।** 'नपुंसके भावे क्तः' 'ल्युट् च' इत्याभ्यां विहितक्तल्युडन्तेष्वित्यर्थः । **घञिति ।** 'भावे' इति सूत्रविहितः । **भोक्तुमिति ।** 'इच्छार्थेषु' इत्यनुवर्तमाने 'समानकर्तृकेषु' इति तुमुन् । लिङलोटौ= 'इच्छार्थेषु लिङलोटौ' इति सूत्रविहितौ ।

ननु सत्यामपि परिभाषयाम् 'इच्छति भोक्तुम्' इत्यत्र 'लिङ् च' इति सूत्रेण लिङ् भवत्येवेति 'लोट्' इत्येव वक्तव्ये 'लिङ्लोटौ' इत्युक्तिः कथमिति चेत्, न; तत्सूत्रस्यापि परिभाषाज्ञापकत्वात् । अन्यथोक्तोदाहरणे 'वाऽसरूप'-न्यायेनैव लिङि सिद्ध एतद्वैयर्थ्यं स्पष्टमेव । **ईषत्पान इति ।** 'ईषद्दुस्सुषु' इति 'कर्तृकर्मणोः' इति चानुवर्तमाने 'आतो युच्' इति कर्मणि युच् । **खलिति ।** ईषद्दुस्सुषु' इत्यनेन ।

इदम्=परिभाषारूपं वचनम् । **तदनित्यत्वे इति ।** तत्र 'अर्हे कृत्यतृचश्च' इत्यत्र बाधा माभूदिति कृत्यतृज्ग्रहणमिति ।

नन्वत्र सूत्रे कृत्यतृज्ग्रहणाभावे 'स्तुत्यः, स्तोता' इत्यादौ 'एतिस्तुशासु' इति 'ण्वुल्तृचौ' इति सूत्राभ्यामर्थसामान्ये क्यप्तृचोर्विधानेऽपि अर्हार्थे विशिष्य-विधानाभावात् तत्प्रतीतिर्न स्यात्, अतस्तयोरत्रावश्यकत्वेन कथं तद्वैयर्थ्यमिति चेत्, न; विशिष्य तयोरत्र विधानेऽपि अर्हार्थे न तयोर्विधानम्, किन्त्वर्हत्व-विशिष्टकर्तृकर्मविवक्षायां तद्विधानम् । तथा चाचार्हार्थप्रतीतिः । तथैवोत्सर्ग-

---

1. 'अपि' घटितः पाठष्टीकासम्मतः ।

**तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधा मा भूदिति कृत्यतृज्ग्रहणं क्रियत इत्यन्यत्र विस्तरः। 'वाऽसरूप' सूत्रे भाष्ये स्पष्टा ॥ ६९ ॥**

**ननु 'श्वः पक्ता' इत्यत्र वासरूपविधिना लृडपि प्राप्नोति, कृते आदेशे वैरूप्यात्, अत आह—**

**लादेशेषु वासरूपविधिर्नास्ति ॥ ७० ॥**

**आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः। अत्र च 'हशश्वतोर्लङ् च' इति लङ्विधानं ज्ञापकम्। अन्यथा 'परोक्षे लिट्' इति लिटा लङः समावेशोऽसारूप्यात् सिद्ध इति किं लङ्विधानेन? शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिः 'लिटः कानज्वा' इति वाग्रहणं च कृतम्, तज्ज्ञापयति**

---

शास्त्रेणापि अर्हत्वविशिष्टकर्तृकर्मविवक्षायां तद्विधानेन अर्हार्थप्रतीतेरप्रतिबन्धात् स्पष्टैवेति[1]।

एवं चानया नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्याम्, स्त्रीत्वविशिष्टे क्तिनादिभिश्च बाधेन परिशेषात् पुंस्त्वविशिष्टभाव एव घञादयो भवन्तीत्येतत्फलितार्थकथनमेव 'घञजपः पुंसि' इति। 'सम्बधमनुवर्तयिष्यते' इति 'इको गुणवृद्धी' इति सूत्रस्थभाष्यप्रामाण्यात् कर्तृकर्मणोस्तु घञाद्यन्तमपि विशेष्यलिङ्गमेव। एतेन 'शेषं रामवत्' इत्यत्र शेषमिति प्रतीकमादाय 'कर्मणि घञजपः पुंसि' इति प्रायोवाद इति शेखरस्तु चिन्त्य एव, विशेष्यस्य रूपशब्दस्य नपुंसकत्वेन विशेषणस्य कर्मघञन्तशेषशब्दस्यापि तल्लिङ्गकत्वात्। भाष्ये सम्बन्धमित्यत्र सम्बध्यत इति सम्बन्धम्, कर्मणि घञ्। नपुंसकस्याभिधेयत्वान्नपुंसकत्वनिर्देशः। आदैज्ग्रहणसम्बन्धं वृद्धिग्रहणम् 'अदेङ्गुणः' इत्यत्रानुवर्तत इत्यर्थः ॥ ६९ ॥

ननु वासरूपविध्यभावप्रसङ्गोपस्थितामुदाहृतविषयादन्यत्रापि पाक्षिकबाधाभावबोधिकाम् 'लादेशेषु वासरूपविधिर्न' इति परिभाषामवतारयति—**नन्वित्यादिना। पक्तेति।** लुडन्तमेतत्। **लृडपि इति।** 'लृट् शेषे च' इति भविष्यत्सामान्ये तद्विधानादि भावः।

नन्वनुबन्धकृतवैरूप्यस्याग्रहणात् कथं तत्प्राप्तिः? अत आह—**कृते आदेश इति।**

**किं लङ्विधानेनेति।** एवञ्च वाऽसरूपसूत्रे प्रयोगिकमेव सारूप्यं गृह्यत इति सिद्धम्। ननु काणोः प्रायोगिकासारूप्याभावादेव वाऽसरूपबाधाप्राप्त्या 'नानुबन्धकृतमसारूप्यम्' इति परिभाषां स्वीकृत्य 'वाऽसरूप' सूत्रेऽसारूप्यमौपदेशिकमेव गृह्यते, तदा लृलुटोरौपदेशिकासारूप्याभावादेव 'श्वः पक्ता' इत्यत्र लुटा नित्यमेव लृटो बाधे सिद्धे व्यर्थैवेयं परिभाषा। यदा त्वियं परिभाषा स्वी-

---

१. अहार्यप्रतीतित्यर्थः।

**'वासरूप' सूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम्। तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव, न तु पक्षे तिङिति बोध्यम् ॥ ७० ॥**

**ननु 'ङमो ह्रस्वाद्' इत्यादौ ङमः परस्याचोऽचि परतो ङम इति वेति सन्देहः स्यात्, अत आह––**

**उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७१ ॥**

**अचीति सप्तमीनिर्देशस्य 'मय उञो०' इत्युत्तरत्र चारितार्थ्यात् पञ्चमीनिर्देशोऽनवकाश इति 'तस्मादित्युत्तरस्य' इत्यस्यैव प्रवृत्तिः। यत्र तु 'ङः सि धुट्' इत्यादावुभयोरप्यचारितार्थ्यम्, तत्र 'तस्मिन्निति' इति सूत्रापेक्षया 'तस्मादित्युत्तरस्य' इत्यस्य परत्वात् तेनैव व्यवस्था। एवमुभयोश्चारितार्थ्येऽपि। यथा**

---

क्रियते 'वाऽसरूप' सूत्रे प्रायौगिकस्यैवासारूप्यस्य च ग्रहणम्, तदा सा व्यर्थेति। अन्यतरग्रहणेऽन्यतरवैयर्थ्यं दुर्निवारमिति बोध्यम्।

नन्वनया 'पचन्तं चैत्रं पश्य' इतिवत् 'पचति चैत्रं पश्य' इत्यादि न सिध्येत्, लादेशेन शत्रादिभिस्तिङां नित्यं बाधात्, अत आह—**शत्रादिभिरिति**। शतृविधायके 'लटः शतृशानचावप्रथमा' इति सूत्रे अनुवृत्तिः 'नन्वोर्विभाषा' इति सूत्रादित्यर्थः। ततो विभाषाग्रहणानुवृत्तिः, वाग्रहणञ्च। **आदेशत्वानाक्रान्त इति**। अत्रार्थेऽपीयं परिभाषा व्यर्थैव। अयमर्थस्त्वौपदेशिकासारूप्यग्रहणे वा, प्रायोगिकासारूप्यग्रहणे वा; पक्षद्वयेप्यावश्यक एवेति बोध्यम्। **तत्फलम्**= ज्ञापनस्य फलं बोध्यमिति।

ननु क्वसुतिङोर्लादेशत्वेन परिभाषयैव क्वसुविषये पाक्षिकतिङभावे सिद्धे कथं ज्ञापनस्येदं फलमिति चेत्, लकाराणामादेशकृतवैरूप्यमादाय प्राप्तवासरूपविध्यभावस्यापि फलत्वात्। प्रकृते त्वादेशयोरेव वासरूपविधिः प्राप्तः, न तु स्थानिनोर्लकारयोरिति बोध्यम् ॥ ७० ॥

ननु बाध्यबाधकभावप्रसङ्गोपस्थितामन्यामपि बाध्यबाधकभावबोधिकाम् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति परिभाषामवतारयति—**नन्वित्यादिना**।

**सन्देह इति**। ननु प्रकृतसूत्रे परिभाषाद्वयोपस्थितावपि ङमः परस्याचि परतः पूर्वस्य ङमुडित्यर्थेन प्रत्यङ् उ उक्तमित्यादौ ङमुटि लक्ष्यसिद्धेस्सन्देह एव नेति चेत्, उच्यते 'तस्मिन्निति' इत्यादिनिर्देशेन सूत्रोपात्तपदस्यैव विशेष्यत्वमिति ङमः परस्याचः, अचि परे ङम इति वेति सन्देह इत्याशयात्।

**सप्तमीनिर्देशस्येति**। आवृत्त्येति शेषः। अन्यथा 'सकृदुच्चरितः' इति न्यायेन पूर्वत्र लब्धार्थकेनोत्तरत्रान्यार्थबोधो न स्यात्। आवृत्तौ मानं तु—'अचि' इत्यत्र स्वरितत्वप्रतिज्ञैवेति बोध्यम्। **उत्तरत्र चारितार्थ्यादिति**। इदमुपलक्षणम्,

**'आमि सर्वनाम्नः' इत्यादौ। तत्रामिति सप्तमी 'त्रेस्त्रयः' इत्यत्र चरितार्था। आदिति पञ्चमी 'आज्जसेरसुक्' इत्यत्र चारितार्थ्येति स्पष्टम् 'तस्मिन्निति' इति सूत्रे भाष्ये कैयटे च ॥ ७१ ॥**

॥इति श्रीनागेशभट्टविरचिते परिमाषेन्दुशेखरे बाधबीजनामकं द्वितीयं प्रकरणम् ॥

---

प्रकृतसूत्रेऽप्यजादेः परस्य ङमुडित्यर्थसम्पादनेन चारितार्थ्यादित्यस्यापि। **इत्यस्यैव प्रवृत्तिरिति।** एवञ्च 'अचि' इत्यत्र षष्ठ्यर्थे सप्तमीति सिद्धम्। **भाष्ये कैयटे चेति।** परे तु, 'ङमो ह्रस्वात्' इत्यादौ 'तीषसह' 'सेऽसिचि' इत्यादाविव 'तस्मिन्निति' परिभाषा षष्ठ्यंशविकलैवोपतिष्ठते। तथा चाचि परे यो ङम्, तस्मात् परस्य ङमुडित्यर्थेन सर्वेष्टसिद्धिरित्ययमेव परिभाषार्थः। तेनोत्तरत्रानुवृत्त्यर्थमचीत्यस्यावृत्तिः, प्रकृतसूत्रे 'अचीति षष्ठ्यर्थे सप्तमी' इत्यादिकल्पनाया अनुपयोगात् तदभावप्रयुक्तलाघवञ्चेत्याहुः ॥ ७१ ॥

इति श्रीमन्महामहोपाध्यायपदवाक्यप्रमाणपारावारीण-
श्रीमद्‌यागेश्वरशर्मविरचितातां परिभाषेन्दु-
शेखरव्याख्यायाम्

हैमवत्याख्यायां बाधबीजनामकं द्वितीयं प्रकरणम्



## अथ शास्त्रशेषनामकं

### तृतीयं प्रकरणम्

ननु 'अतः कृकमि०' इति सत्वम् 'अयस्कुम्भी' इत्यत्र न स्यात्, कुम्भ-शब्दस्यैवोपादानात्, अत आह—

**प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७२ ॥**

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्ग-बोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम्। अपिना केवलस्यापीत्यर्थः। अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे 'कुमारश्रमणादिभिः' इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः। स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यम्, न तु कुमारशब्दस्येति तदेतज्ज्ञापकम्।

---

ननूभयनिर्देशप्रसङ्गस्मारितसप्तमीनिर्देशशेन विधीयमानकार्यबोधिकाम्'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि' इति परिभाषामवतारयति—**नन्विति**। **अयस्कुम्भीत्यत्रेति**। 'अतः कृकमिकंसकुम्भ' इत्यनेन कुम्भशब्दे उत्तरपदे परे विधीयमानं सत्वं कुम्भीशब्दे उत्तरपदे परे न स्यादित्यर्थः।

परिभाषार्थस्तु—प्रातिपदिकत्वरूपसामान्यधर्मप्रकारकोपस्थितिजनके प्रातिपदिकशब्दे, प्रातिपदिकत्वव्याप्यानुपूर्व्यादिधर्मप्रकारकोपस्स्थितिजनके कुम्भादिपदे वोच्चारिते सति स्त्रीत्वरूपलिङ्गबोधकटाबादिप्रत्यययुक्तस्यापि वोधनं तात्पर्यविषयीभूतं भवति। तदाह **सामान्यरूपेणेत्यादि**। सामान्यरूपेण=प्रातिपादिकत्वेन, **विशेषरूपेण**=प्रातिपदिकत्वव्याप्यकुम्भशब्दत्वादिनेत्यर्थः।

**अस्याश्च ज्ञापकमिति**। ननु 'कुमारः श्रमणादिभिः' इत्यत्र स्त्रीलिङ्गश्रमणादिशब्दपाठस्य ज्ञापकत्वं न सम्भवति, यतो हि कुमारशब्दरुपानुपूर्व्याः 'कुमार क्रीडायाम्' इति धातावति सत्त्वेन प्रातिपदिकत्वव्याप्तत्वाभावात् तदवच्छिन्नबोधके कुमारशब्दे 'लिङ्गविशिष्ट' परिभाषाया अप्रवृत्त्या ज्ञापनोत्तरमुक्तसूत्रे स्त्रीप्रत्ययान्तश्रमणादिपाठानुपपत्तेस्तादवस्थ्यादिति चेत्, न; 'कुमारः श्रमणादिभिः' इति समासविधायकसूत्रजन्यशाब्दबोधे कुमारप्रकृतिकसुबन्तस्यैव विषयीभावात् तत्रत्यकुमारपदप्रयोज्यविषयतायाः प्रातिपदिकत्वव्याप्यत्वात् तादृशविषयताप्रयोजककुमारशब्दस्य प्रातिपदिकग्रहणत्वात् लिङ्गविशिष्टग्रहणस्य सुलभत्वेनानुपपत्त्यभावात्। सामानाधिकरण्यञ्च भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकार्थप्रतिपादकत्वम्।

**इयं च 'द्विषत्परयोः' इत्याद्युपपदविधौ; समासान्तविधौ; महदात्त्वे; ञ्नित्स्वरे; राजस्वरे ब्राह्मणकुमारयोः 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यादौ; समाससङ्घातग्रहणेषु च न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये स्पष्टम्। विभक्तिनिमित्तककार्ये च नेत्यपि तत्रैव।**

---

एतत्परिभाषाश्रयणे यत्र यत्रातिप्रसङ्गः, तानि स्थलानि 'ङ्याप्प्रातिपदिकात्' इति सूत्रे भाष्ये परिगणितानि। तेषु परिभाषाऽनित्यत्वेनातिप्रसङ्गो वारणीय इत्याह—**इयञ्चेति। उपपदविधाविति।** उपपदनिमित्तको विधिरुपपदविधिः। तत्रास्या अप्रवृत्तौ यथा 'द्विषन्तपः' इत्यत्र 'द्विषत्परयोस्तापे' इति खश् भवति, न तथा 'द्विषतीतापः' इत्यत्र। **समासान्तविधाविति।** मद्राणां राजा' इत्यादौ 'राजाहः सखिभ्यष्टच्' इति यथा टच् भवति, तथा 'मद्राणां राज्ञी' इत्यादौ न भवति। तथा सति 'भस्याढे तद्धिते' इति पुंवद्भावे 'नस्तद्धिते' इति टिलोपे च 'मद्रराजी' इत्यनिष्टं रुपं स्यात्। **महदात्त्वे इति।** यथा महान् प्रियो यस्य स इत्यत्र'आन्महतः' इत्यात्त्वं न, तथा 'महती प्रिया यस्य सः इत्यत्र।

नन्वेवम् 'महती जङ्घा यस्य स महाजङ्घ' इत्यत्राप्यात्त्वं न स्यादिति चेत्, न; 'स्त्रियाः पुंवत्' इति पुंवद्भावे सति तत्रात्त्वप्रवृत्तेः सुलभत्वात्। तत्र तु 'अपूरणीप्रियादिषु' इति पुंवद्भावो न भवति। **ञ्नित्स्वरे इति।** 'दक्षस्यापत्यं दाक्षिः' इत्यत्र यथा 'ञ्नित्यादिर्नित्यम्' न तथा इञ् प्रत्ययान्तदाक्षिशब्दात् अपि दाक्षीत्यत्र। **राजस्वरे ब्राह्मणकुमारयोरिति।** 'राजब्राह्मणः, राजकुमारः' इत्यत्र यथा ब्राह्मणकुमारयोः परयो राजशब्दस्य प्रकृतिस्वरो भवतीत्यर्थकेन 'राजा च' इत्यनेन प्रकृतिस्वरः, न तथा 'राजब्राह्मणी' राजकुमारी' इत्यत्र **'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यादाविति।** उत्तरपदार्थभूयस्त्वे वर्तमानाद् बहुशब्दान् परं यत् पदं तस्य नञ इव स्वरो भवति बहुव्रीहौ इत्यर्थकेन 'बहोर्नञ्वत्' इत्यनेन 'बहवो गोमन्तो यस्मिन् स बहुगोमान्' इत्यत्र यथाऽन्तोदात्तत्वं भवति, न तथा 'बहवो गोमन्तो यस्यां सा बहुगोमती' इत्यत्राप्यनयोत्तरपदार्थगतबहुत्वार्थकबहुशब्दपूर्वपदकसमासत्वं समासीयान्तोदात्तत्वं भवति। **समाससङ्घातग्रहणेषु चेति।** इदं न स्वतन्त्रमप्रवृत्तिस्थलम्, अपि तु 'बहोर्नञ्वत्' इत्यनेन सम्बद्धम्। तेन स्वरातिरिक्तस्थले समाससङ्घातेऽपि परिभाषेयं प्रवर्तत एव। अत एव 'बहुव्रीहेरुधसः' इति सूत्रस्थभाष्यविरोधो न। तत्र हि 'कुण्डोध्नी' इत्यत्र ऊधश्शब्दान्तसंमुदायनिष्ठं बहुव्रीहित्वमनया ङ्यन्त आनीय कप्आपादितः। **विभक्तिनिमित्तककार्यं इति।** गोमती' इत्यत्र 'उगिदचाम्' नुम् नेति भावः।

**समासान्विधाववयवग्रहण एव नेति।** समासान्तविधौ कर्त्तव्येऽनया परिभाषया समासावयवपर्याप्तराजत्वादिधर्मस्यातिदेशो न भवतीति। **समाससङ्घातग्रहणे तु प्रवर्त एवति।** समासान्तविधौ कर्त्तव्ये समासरूपसमुदायपर्याप्तधर्मस्य

**तत्र समासान्तविधाववयवग्रहण एव न, समाससङ्घातग्रहणे तु प्रवर्तत एव, स्वरविधावेव समाससङ्घातग्रहणे तत्र दोषोक्तेः, 'बहुव्रीहेरूधसः' इति सूत्रस्थभाष्याच्च; 'एतावत्स्वेवानित्यत्वादप्रवृत्तिः, दोषाः खल्वपि साकल्येन परिगणिताः' इति भाष्योक्तेः ।**

**नन्वेवम् 'बहुव्रीहेरूधसो ङीष्' इति सूत्रस्थभाष्यासङ्गतिः तत्र हि 'कुण्डघ्नी' इत्यत्र 'नद्यृतश्च' इति कबापादितो नद्यन्तबहुव्रहेरित्यर्थात्, नद्यन्तस्य बहुव्रीहित्वाभावात् तदसङ्गतिः । नद्यन्तानां यः समास इत्यर्थेन च परिहृतम् ।**

---

वहुव्रीहित्वादेरतिदेसस्त्वनया भवत्येवेत्यर्थः । अप्रवृत्तौ फलं नास्ति, प्रवृत्तौ च 'बहुव्रीहेरुधसो ङीष्' इत्यत्र भाष्ये 'कुण्डोध्नी' इत्यत्र 'नद्यृतश्च'इति कवापादन-रूपपूर्वपक्षस्य सङ्गतिरूपं फलं ज्ञेयम् । अन्यत्र समासान्तविधौ समुदायग्रहणेऽस्याः प्रवृत्तावप्रवृत्तौ च फले कमपि विशेषं नावधारयामः। समाससङ्घातग्रहणेऽस्याः प्रवर्तनात् 'अतिशयितो भ्राता यस्याः सा' अतिभ्रात्री, आ=समन्तात् स्थिताऽतिभात्री' इत्यत्र नद्यन्तबहुव्रीहित्वात् प्राप्तस्य 'नद्यृतश्च' इति कपोऽनया पूजितार्थभ्रातृशब्दान्तबहुव्रीहित्वातिदेशेन 'वन्दिते भ्रातुः' इति निषेधः सिद्ध्यति । अत्र प्रथमसमासे ऋदन्तोत्तरपदकबहुव्रीहित्वस्य वर्णत्वव्याप्यधर्मघटितत्वेनानिदेशासम्भवात् कप्प्राप्त्याऽतिदेशस्य नोपयोग इत्यतो द्वितीयः समास उक्तः ।

'कुमारः श्रमणादिभिः' 'अतः कृकमि०' अत्रोभयत्र कुमारकुम्भेत्यानुपूर्वी-प्रकारकबोधजनके परिभाषायाः प्रवृत्तिर्दृश्यते । अतो ज्ञापकसाजात्यात् सर्वत्र प्रातिपदिकत्वव्याप्यो धर्म आनुपूर्वीरूप एव ग्राह्य इति शङ्कां निरसितुमाह—**नन्वेवमित्यादि । तत्र हीति ।** कुण्डोध्नीत्यत्रानया बहुव्रीहित्वमानीय 'नद्यृतश्च' इति सूत्रस्य 'नद्यन्ताद् बहुव्रीहेः कप् ' इत्यर्थे कबापादनं कृतम्, 'नद्यन्तप्रकृतिक-सुबन्तोत्तरपदकबहुव्रीहेः कप् इत्यर्थाश्रयणेन च समाहितम् । आनुपूर्वीमात्रग्रहणे तु 'नद्यृतश्च' इत्यत्रनुवृत्तस्य बहुव्रीहिपदकस्यानुपूर्वीप्रकारेण बोधजनकत्वाभावात् तदसङ्गतिः स्पष्टैवेति पूर्वपक्षाशयः ।

समाधानाशयस्तु—प्रातिपदिकत्वव्याप्यधर्ममात्रस्य ग्रहणम्, न त्वानुपूर्व्याः । अतो बहुव्रीहित्वस्य प्रातिपदिकत्वव्याप्यधर्मत्वेन परिभाषाप्रवृत्तिः सुलभेति ।

ननु प्रातिपदिकबोधकपदस्य लिङ्गबोधकप्रत्ययविशिष्टरूपेऽर्थे शक्तेर्लक्षणाया वाभावात् परिभाषयापि कथं तदर्थप्रतिपादनम्? स्त्रीलिङ्गश्रमणादिशब्द-पाठान्यथानुपपत्त्या लक्षणाङ्गीकारे तु केवलस्य ग्रहणं न स्यात्, एकेन पदेन युगपच्छक्यलक्ष्योभयार्थबोधनासम्भवात्; अत आह—**अतिदिश्यत इति ।** स्ववि-शिष्टे स्ववृत्तीनां वर्णत्वव्याप्यधर्माघटितधर्माणामारोपोऽनया बोध्यते । वै० स्वनिष्ठाद्यवयवतानिरूपकत्व, स्वविष्टोद्देश्यतानिरूपितविधेयताश्रयीभूतलि-

**नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति चेत्, न; अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात् ।। ७२ ।।**

**नन्वेवम् 'यूनः पश्य' इत्यत्रेव 'युवतीः पश्य' इत्यत्रापि 'श्वयुव०' इति सम्प्रसारणं स्यात्, अत आह--**

---

ङ्गबोधकप्रत्ययनिष्ठचरमावयवतानिरूपकत्व,एतदुभयसम्बन्धेन । सम्बन्धघटक-वैशिष्टयञ्च स्वपर्याप्तत्व, स्वघटितपर्याप्तत्व, एतदन्यतरसम्बन्धेन । यथा कुमारशब्दविशिष्टः कुमारीशब्दः । तत्र स्वम्=कुमारशब्धः, तदाद्यवयवकत्वस्य प्रथमसम्बन्धस्य, स्वपर्याप्तेत्यादिद्वितीयसम्बन्धस्य च सत्त्वात् स्ववृत्तिकुमार-त्वस्यारोपेण सूत्रस्थकुमारपदेन कुमारीशब्दस्य कुमारशब्दस्य च लक्षणां विनैव बोधोपपत्तिः । शक्यतावच्छेदकारोपस्य लक्षणात्वे तु न मत्सरः । द्वितीयसम्बन्ध-घटकोद्देश्यतायां स्वघटितपर्याप्तत्वनिवेशेन 'अयस्कर्णी' इत्तादौ अयस्कर्ण-प्रकृतिकङीषन्तकर्णीशब्दस्यार्थवत्त्वाभावेऽपि अनया कर्णशब्दगतार्थवत्त्वस्य कर्णीशब्द आरोपात् सत्वं भवति ।। ७२ ।।

'प्रातिपदिकग्रहणे' इत्यस्यापवादभूतां परिभाषामवतारयति-**नन्वित्यादि**। **एवम्**=लिङ्गविशिष्टपरिभाषया स्त्रीप्रत्ययान्तसमुदाये स्त्रीप्रत्ययप्रकृतिधर्माति-देशे । **'युवतीः पश्य' इति** । अत्र तिप्रत्ययान्ते युवन्शब्दत्वमतिदिश्य 'श्वयुवम-घोनामतद्धिते' इति सम्प्रसारणापत्तिः स्यात् ।

ननु 'मघवतः' इत्यादौ सम्प्रसारणवारणाय 'श्वयुव०' इति सूत्रे 'अल्लो-पोऽनः' इत्यतोऽन इत्यस्यापकर्षणेन नकारप्रश्लेषेण च नकारान्तानामन्नन्तानां श्वादीनां सम्प्रसारणविधानाद् नकारान्तत्वस्य च वर्णत्वव्याप्यधर्मघटितत्वेन लिङ्गविशिष्टपरिभाषयाऽतिदेशासम्भवाद् दोषाभावेनावतरणमिदमसङ्गतमिति चेत्, न; स्त्रीलिङ्गसखीशब्दे सखिशब्दत्वातिदेशेन ततः परस्य सर्वनामस्थानस्य 'सख्युरसम्बुद्धौ' इति णिद्वद्भावापत्तेः, सौ चानङादेशापत्तेः, सुपथीशब्दे च सुपथिन्शब्दत्वातिदेशेन 'पथिमथ्यृभुक्षामात्' इति सौ परे आत्वापत्तेश्चोप-लक्षणत्वादवतरणसङ्गतेः ।

परिभाषार्थस्तु—विभक्तावित्यत्य विषयसप्तमीत्वेन विभक्त्युद्देश्यके विभक्तिनिमित्तके चेति सर्वस्मिन्नपि विभक्तिसम्बन्धिकार्ये लिङ्गविशिष्ट-परिभाषा न प्रवर्तत इत्यर्थः । अत एव शुनीशब्दात् तृतीयैकवचने 'शुन्या' इत्यादौ गौरादिङीष्स्थानिकयणमाश्रित्य प्राप्तस्य 'उदात्तयणो हल्पूर्वात्' इति विभक्त्युदात्तत्वस्यानया शुनीत्यत्र श्वन्शब्दत्वमादाय 'न गोश्वन्' इत्यनेन प्रसक्तः प्रतिषेधो न, अस्य विभक्तिसम्बन्धित्वात् । एवं 'सख्यौ' इत्यत्र 'सख्युर-सम्बुद्धौ' इति णिद्वद्भावः; 'दीर्घाह्नी प्रावृट्' इत्यत्र ङीबन्ते अह्नीशब्दे लिङ्गविशिष्टपरिभाषया अहन्शब्दत्वमादाय 'अहन्' इत्यनेन रुत्वञ्च न, तस्य

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७३ ॥

**स्पष्टा चेयम् 'युवोरनाकौ' इत्यत्र भाष्ये। घटघटीग्रहणेन लिङ्गविशिष्ट-परिभाषाया अनित्यत्वात् तन्मूलेषेत्यन्ये ॥ ७३ ॥**

---

पदत्वद्वारा परम्परया विभक्तिनिमित्तककार्यत्वेन 'प्रातिपदिकग्रहण' परिभाषाया अनया निषेधात्।

ननु 'चित्रगवीणाम्' इत्यत्र 'कुमति च' इत्यनेन णत्वं न स्यात्, प्रत्यासत्त्या कवर्गवदुत्तरपदघटितसमासप्रकृतिकविभक्तिसम्बन्धिनकारस्यैव तेन णत्वम्। अत एव 'पूर्वंपाकानां विपाकः' इत्यत्र 'षष्ठ्या आक्रोशे' इत्यलुकि कवर्गवदुत्तरपदघटितसमासत्वेऽपि विभक्तेस्तत्प्रकृतिकत्वाभावान्न णत्वम्। ततश्च 'चित्रगवीणाम्' इत्यत्र ङीबन्ते कवर्गवदुत्तरपदघटितसमासत्वम् 'लिङ्ग-विशिष्ट' परिभाषयैवानीय तत्प्रकृतिकविभक्तित्वं वक्तव्यम्। सा च विभक्ति-कार्यत्वेनानया निषिद्धचेतेति चेत्, न; 'अट्कुप्वाङ्०' इत्यनेनैव सिद्धेः।

**भाष्ये इति।** 'युवोरनाकौ' इति सूत्रे भाष्ये 'विभक्तौ लिङ्गविशिष्टाग्रहणं न' इत्येषा परिभाषा कर्त्तव्या' इत्युपक्रम्यात्र प्रदर्शितानि; अन्यानि च प्रयोजनानि प्रदर्शितानि। ज्ञापकञ्च नोक्तम्। अतो वाचनिकीयम्।

**घटघटीग्रहणेनेति।** 'शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम्' इति वार्त्तिके घटग्रहणेनैवानया परिभाषया घटीग्रहणे सिद्धे द्वयोरुपादानम् 'लिङ्गविशिष्ट' परिभाषया अनित्यत्वे ज्ञापकम्। तदेवास्य वचनस्य मूलमित्यन्य आहुः। अत्रान्ये इत्यनेनारुचिः प्रदर्शिता। तत्र बीजं तु ज्ञापकस्यास्य भाष्याविचारितत्वमिति भावः ॥ ७३ ॥

ननु 'तस्यापत्यम्' इत्यनेन तत्सम्बन्ध्येकत्वनपुंसकत्वविशिष्टापत्यरूपार्थ-बोधकोऽणादिप्रत्ययो भवतीत्येवार्थो बोध्यते। एवञ्च 'गार्ग्यः; गार्ग्यौ' इत्यादौ यञ्प्रत्ययस्यैकत्वनपुंसकत्वविशिष्टापत्यबोधकत्वेनैकत्वविशिष्टवाचकादेकवचनम्; नपुंसकत्वविशिष्टवाचकात् परयो स्वमोरम्; इत्यर्थकाभ्याम् 'द्व्येकयोर्द्विवचनैकवचने' 'अतोऽम्' इति सूत्राभ्यामेकवचनस्य सारमादेशस्य च साधुत्वेन पुंल्लिङ्गताद्विवचनयोरनुपपत्तिरित्यत आह—**सूत्रे लिङ्गेति। अतन्त्रम्**=अविवक्षितम्। सूत्रघटकशब्दजन्यबोधविषयत्वेन तात्पर्यविषयत्वं लिङ्गस्य संख्यायाश्च नेत्यर्थः।

एवञ्च लिङ्गसंख्ययोः शास्त्रघटकपदजन्यशाब्दबोधविषयत्वं न, शाब्दबोधीयविषयतायास्तात्पर्यीयविषयताप्रयोज्यत्वात्। तथा चापत्यत्वावच्छिन्न-बोधकत्वमेव यञादीनामिति विशेष्यगतलिङ्गसंख्यानुसारेणैव लिङ्गसंख्याकार्य-मित्यर्थः।

**ज्ञापकमिति।** अयं भावः—नपुंसकग्रहणाभावे 'अर्द्धम्' इत्यस्य स्वरूप-

**ननु 'तस्यापत्यम्' इत्येकवचननपुंसकाभ्यां निर्देशात् 'गार्ग्यौ गार्ग्याः' इत्याद्ययुक्तम्, अत आह—**

**सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७४ ॥**

**'अर्द्धं नपुंसकम्' इति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ।**

---

सम्बन्धेन नपुंसकत्वविशिष्टोऽर्द्धंशब्द एकदेशिना समस्यत इत्यर्थकत्वे 'पूर्वापराधरोत्तरम्' इत्यत्र अर्द्धंशब्दपाठेनैव तस्य समाससिद्धेः 'अर्द्धम्' इति पृथग्योगकरणं व्यर्थं स्यात् । अतस्तत्सामर्थ्येन बोधकत्वसम्बन्धेन नपुंसकत्वविशिष्टोऽर्द्धंशब्दः समस्यत इत्यर्थलाभसंभवात् प्रकृतपरिभाषाया अभावे नपुंसकग्रहणं व्यर्थं सदेनां ज्ञापयति ।

नन्वेवं ज्ञापितायामप्यस्यां पृथग्योगकरणादेव 'नपुंसकत्वबोधक' इत्यर्थलाभसंभवात् कथं चरितार्थमिति, चेत्, न; सत्यत्वेऽस्याः पृथग्योगकरणाद् नपुंसकत्वस्य विवक्षा; तस्य चान्यत्र क्लृप्तस्वरूपसम्बन्धं विहाय बोधकत्वसम्बन्धेनान्वयः; इत्यर्थद्वयकल्पनापेक्षया 'एकदेशिना' इत्यस्यासम्बन्धकल्पनायामेव लाघवेनोक्तार्थलाभाय नपुंसकग्रहणस्य चारितार्थ्यात् । अस्या अभावे तु विवक्षायाः स्वतःसिद्धत्वेन बोधकत्वसम्बन्धेनान्वयमात्रस्यैव कल्पनीयत्वेन 'एकदेशिना' इत्यस्याननुवृत्तिकल्पनापेक्षया लाघवं बोध्यमिति भावः ।

ननु 'अर्द्धम्' इत्यत्र नपुंसकत्वस्य सत्त्वे पुनर्नपुंसकग्रहणात् 'द्विर्बद्धं सुबद्धम्' इति न्यायात् नित्यनपुंसकस्यार्द्धशब्दस्येत्यर्थं एव कस्माद् नेत्याह—**नित्यनपुंसकेति** । 'ए ओङ्' इत्यत्र भाष्ये 'नैव हि लोके, नान्यस्मिन् वेदे अर्द्ध एकारः, अर्द्ध ओकारो वास्ति' इति समांशवाच्यर्द्धशब्दस्य पुंल्लिङ्गे प्रयोगात् समांशवाचिनोऽप्यर्द्धशब्दस्य नित्यनपुंसकत्वमप्रामाणिकमिति बोध्यम् ।

भाष्यभाषितमस्या लोकन्यायसिद्धित्वमाह—**धान्यपलालेति** । 'तस्यापत्यम्' इति सूत्रे भाष्ये हि 'नान्तरीयकत्वादत्र पुंल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च । अवश्यं कयाचिद् विभक्त्या, केनचिद् वचनेन निर्देशः कर्त्तव्यः । तद्यथा 'कश्चिद् धान्यार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात् । स यावदादेयम्, तावदादाय तुषपलालान्युत्सृजति' दृष्टान्तममुं प्रदर्श्य 'एवमिहापि नान्तरीयकत्वात् पुंल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च, न ह्यत्र निर्देशस्तन्त्रम्' इत्युक्तम् ।

अत्रायं निष्कर्षः—यथा धान्यमात्रार्थिनापि धान्यमात्रस्यानेतुमशक्यतया पलालमप्यानीयते, तथाऽपत्याद्यर्थमात्रबोधेच्छोरप्याचार्यस्य शब्दात् लिङ्गसंख्याभ्यां विना प्रातिपदिकार्थमात्रबोधस्याशक्यतया तयोरुपादानमिति भावः। नान्तरीयकतया=आवश्यकतया । विनार्थकादन्तराशब्दाद् गहादित्वात् छप्रत्यये नैकधेत्यादिवद् नशब्देन समासे स्वार्थिके कनि नान्तरीयकशब्दः साधुः ।

**धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति 'तस्यापत्यम्' इत्यत्र भाष्ये स्पष्टम्। अत एव 'आकडार' सूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७४ ॥**

**ननु 'भृशादिभ्यो भुव्यच्वेः' इत्यादौ विधीयमानः क्यङ् क्व दिवा भृशा भवन्तीत्यत्रापि स्यात्, अत आह—**

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७५ ॥**

**नञ्युक्तमिवयुक्तं च यत् किञ्चिद् दृश्यते तत्र तस्माद् भिन्ने तत्सदृशेऽ-**

---

लिङ्गस्यातन्त्रत्वे ज्ञापकमुपन्यस्य वचनस्यातन्त्रत्वे प्रमाणमाह—**अत एवेति। चरितार्थमिति।** एकग्रहणाभावेऽपि 'पदम्, भम्' इत्यादावेकत्वविवक्षयैव 'संज्ञा' इत्यत्रैकत्वविवक्षयैव वा एकत्वार्थे सिद्धे एकग्रहणं व्यर्थमेव स्यात् ॥ ७४ ॥

लिङ्गसंख्याविषयकपरिभाषानिरूपणानन्तरं तदाश्रयद्रव्यविषयकपरिभाषाया उपस्थितत्वादाह—**ननु चेति। क्व दिवेति।** ये रात्रौ भृशाः=भूयिष्ठा नक्षत्रादयः, ते दिवा=दिवसे क्व भवन्तीति विवक्षायामपि भृशशब्दस्याच्व्यन्तत्वात् क्यङ् प्रसज्यत इति भावः।

**नञिवयुक्तमिति।** नञ्युक्तम्, इवयुक्तम्—इत्यर्थः, द्वन्द्वान्ते श्रूयमाणस्य पदस्य प्रत्येकं सम्बन्धात्। योगश्चात्र स्वद्योत्यार्थनिष्ठविशेष्यतानिरूपितप्रकारतावदर्थोपस्थापकत्वरूपः।

यत्तु भूतिकाराः—नञ्पदस्य पूर्वत्वरूपो योगः, इवपदस्य तु परत्वरूपः। स्वघटितसमासघटकत्वरूपस्तूभयसाधारण इत्याहुः, तत् प्रायिकम्, इवेन समासस्यानित्यत्वात्' 'उद्बाहुरिव वामनः' इत्यादौ तस्य पूर्वं प्रयुक्तत्वाच्च। एवञ्च नञ्समभिव्याहृतम्, इवसमभिव्याहृतञ्च पदं स्वसादृश्य-स्वभिन्नत्वोभयसम्बन्धेन स्वविशिष्टबोधकम्। नञ्पदम्, इवपदञ्च तात्पर्यग्राहकम्, निपातानां द्योतकत्वात्, अत एव 'अब्राह्मणः, चन्द्र इव' इत्यादौ ब्राह्मणभिन्नो ब्राह्मणसदृशः क्षत्रियादिः, चन्द्रभिन्नश्चन्द्रसदृशो मुखादिः प्रतीयते, न तु लोष्टादिः। अत्राधिकरणपदं द्रव्यवाचकम्। तच्चात्रार्थमात्रोपलक्षणम्, द्रव्यभिन्ने गुणक्रियादावपि भेदसादृश्यान्वसंभवात्, **तथा ह्यर्थगतिरिति।** हि=यतः शब्दशक्तिस्वभावात्, तथा=एवंरूपार्थगतिः, शब्दशक्तिस्वभावादेवार्थावगतिर्भवति। एवञ्च लोकसिद्धोऽयमर्थः, नात्र ज्ञापकजिज्ञासा कर्त्तव्या। अत्र विनिगमनाविरहाद् भेदविशिष्टसादृश्यम्, सादृश्यविशिष्टभेदश्चार्थः। अत एव—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥

**धिकरणे द्रव्ये कार्यं विज्ञायते। हि=यतः, तथार्थगतिरस्ति। नह्यब्राह्मणमानये-त्युक्ते लोष्टमानीय कृती भवति। अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भाव-विषये क्यङिति नोक्तदोषः।**

**'ओषधेश्च विभक्तावप्रथमायाम्' इत्यादौ विभक्तिग्रहणमेतन्न्यायसिद्धा-र्थानुवाद एव। एतेन विभक्तावित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः, अनित्यत्वे भाष्यसंमतफलाभावात्। अत एव 'अकर्त्तरि च'इति सूत्रे कारकग्रहण-भाष्ये प्रत्याख्यातमिति बोध्यम्। स्पष्टा चेयम् 'मृशादिभ्यः' इति सूत्रे भाष्ये। अत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति। निरूपितं चैतन्मञ्जू-षायाम् ॥७५॥**

---

इत्यभियुक्तोक्तौ सादृश्यभेदयोः पृथगुपादानम्। 'अब्राह्मणमानय' इत्या-दिदृष्टान्तेनास्या लोकसिद्धत्वं विशदीकरोति—**नहीति**। च्व्यन्तसादृश्यम्, अभू-ततद्भावविषयत्वेनेति तात्पर्यम्।

'अप्रथमायाम् इत्यनेनैव प्रकृतन्यायेन विभक्तिरूपार्थलाभेऽपि विभक्ति-ग्रहणममुं न्यायं ज्ञापयतीति केनचिदुक्तम्, तत् प्रत्याचष्टे—**एतन्न्यायसिद्धार्था-नुवाद एवेति**। **अनित्यत्वे इति**। ननु 'अनचि च' इत्यत्र नञा सादृश्यविरहित-भेदमात्रबोधनादज्भिन्नस्यावसानस्य प्रतीत्या 'वाक्क्' इत्यत्र द्वित्वेन ककारद्व-यविशिष्टरूपसिद्धिः। अत आह—**भाष्यसम्मतफलाभावादिति**। तत्र द्वित्वसिद्धये भाष्यकृता प्रसज्यप्रतिषेध आश्रित इति न तदनित्यत्वफलमिथि भावः। **अत-एवेति**। अनित्यत्वस्य भाष्यानभिप्रेतत्वादेवेत्यर्थः।

परिभाषायामस्याम् 'अन्यसदृश' इति पदेन भेदाघटितं सादृश्यं सूच्यते। सादृश्यस्य भेदघटितत्वनियमाङ्गीकारे सदृशपदादेव भेदार्थलाभेऽन्यपदवैयर्थ्याप-त्तिः। तद्बलात् तस्य भेदाघटितत्वं ज्ञाप्यते। स्पष्टं चेदं मञ्जूषायां विस्तरेण ॥७४॥

नञ्घटितपरिभाषार्थनिरूपणानन्तरं तादृशेन 'अतिङ्'पदेन ज्ञापितत्वात् 'गतिकारक०' इति परिभाषां वक्तुमुपक्रमते **नन्विति**। **व्याघ्रीति**। स्वार्थद्रव्य-लिङ्गसंख्याकारकाणां क्रमेणोपस्थितिः। येन क्रमेणार्थोपस्थितिः, तेनैव क्रमेण तत्तदर्थनिमित्तकार्योत्पत्तिरिति सिद्धान्ताद् व्याघ्रीत्यादौ व्याजिघ्रतीति विग्रहे घ्राधातोः 'आतश्चोपसर्गे' इति कप्रत्यये घ्रायोराकारलोपे घ्र इत्यत्र संख्याका-रकबोधकसुबपेक्षया लिङ्गबोधकप्रत्ययस्य पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाद् घ्रशब्दमात्रस्य जातिवाचककत्वाभावात् पूर्वं टापि, ततः सुपि, तदनन्तरम् कुगतिप्रादयः' इति समासेऽदन्तत्वाभावाद् जातिलक्षणो ङीष् न स्यादिति तात्पर्यम्।

ननु 'यद्यत्र पूर्वं टाप् न स्यात्, तदा समासोत्तरं ङीष् स्यात्' इति सम्भावनायाः सत्त्वेन 'उपसञ्जनिष्यमाण' न्यायेन टापो वारणसम्भवादवतर-णमिदमसङ्गतम्। न च भविष्यदपवादविषयातिरिक्तत्वेनाप्युद्देश्यतावच्छेदका-

ननु 'व्याघ्री' कच्छपी' इत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाट् टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीब् न स्यात्, अत आह—

**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७६ ॥**

'उपपदम०' इति सूत्रेऽतिङ्ग्रहणेन 'कुगति०' इत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थातयोः सूत्रयोः सुप्सुपेत्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्धेयम्। तेनाश्वक्रीतो सिद्धा। अन्यथा पूर्वं टाप्यदन्तत्वाभावात् 'क्रीतात्करणपूर्वात्' इति ङीष् न स्यात्।

---

वच्छिन्ने सङ्कोचस्य तन्न्यायतात्पर्यविषयत्वेन प्रकृते व्याघ्रशब्दस्यैव जातिवाचकत्वेन ङीष्रूपापवादविषयत्वाद् घ्रेत्यस्य तदतिरिक्तत्वेन तन्न्यायप्रवृत्तावपि टाप् स्यादेवेत्यवतरणं नासङ्गतमिति वाच्यम्, परिभाषास्वीकारे सुबुत्पत्तेः प्राक् समासेऽपि घ्रशब्दादन्तरङ्गत्वात् टाप् दुर्वारः स्यादिति तदनुरोधेन भविष्यदपवादविषयघटकचरमावयवातिरिक्तत्वेनापि सङ्कोचस्यावश्यकत्वेनात्र तत्प्रवृत्तौ टापो वारणस्य शक्यत्वात्। भविष्यदपवादविषयघटकातिरिक्तत्वेन ङ्कीचाङ्गीकारे तु अजया क्रीता=अजक्रीतीत्यत्र'क्रीतात् करणपूर्वात्'इत्यपवादविषयाजाक्रीतशब्दघटकत्वेनाजशब्दाट्टाब् न स्यात। अतश्चरमावयवनिवेशः। तस्मात् 'उपसञ्जनिष्यमाण' न्यायेनैव दोषवारणादवतरणमसङ्गतमिति चेत्, न; यत्र समकालप्राप्तिकापवादविषयातिरिक्तत्वेन सङ्कोचेऽपवादशास्त्रवैयर्थ्यापत्तिः। यथा 'दधति'इत्यादौ। तत्र भविष्यदपवादविषयातिरिक्तत्वेनापि सङ्कोच इति न्यायस्य तात्पर्येण प्रकृते एवं सङ्कोचेऽपि 'जातेरस्त्रीविषयात्' इत्यपवादशास्त्रस्य 'तरी' वृषली' इत्यादौ। चारितार्थ्यात् तदप्रवृत्तेरवतरणस्य सङ्गतत्वात्।

केचित्तु, भविष्यदपवादविषयान्तातिरिक्तत्वेन सङ्कोचे 'घन इव कपिला घनकपिला'इत्यत्र 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदप्रकृतिस्वरे कपिलेत्यस्यानुदात्तान्तत्वेन 'अन्यतो ङीष्' इत्यपवादविषयसमासचरमावयवात् कपिलशब्दात् पूर्वंटापोऽप्रवृत्तौ समासेऽदन्तत्वात् 'अन्यतो ङीष्' इति ङीषापत्तिः। भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचे तु घनकपिलेत्यस्यैवापवादविषयत्वात् केवलस्य कपिलेत्यस्य तथात्वाभावात् पूर्वं टाप्प्रवृत्त्या नोक्तदोषः इत्याहुः, तन्न; घनकपिलेत्यादौ घन इव कपिलेति कपिलशब्दाट्टापि च कृते एव समासप्रवृत्त्या टाप्प्रवृत्तिकाले कपिलशब्दस्यान्तोदात्तत्वेनापवादविषयान्तत्वाभावात्। अनुदात्तान्तस्यैव तद्वियान्तत्वात्।

परिभाषालाभोपायमाह—**'उपपदम्' इतीति। 'सुपा' इत्यस्य निवृत्त्येति।**

अयं भावः-'उपपदमतिङ्' 'कुगतिप्रादयः' इत्यनयोः सूत्रयोः 'सुपा' इत्यस्यानुवृत्तौ हि तिङन्तस्य समास एव न प्राप्नोति, यद्वारणार्थम् 'अतिङ्' ग्रहणं कृतार्थं स्यात्। अतः 'अतिङ्'ग्रहणं व्यर्थीभूय 'सुपा' इत्यस्य निवृत्तिं ज्ञापयति।

**अस्या अनित्यत्वात् क्वचित्सुबुत्पत्त्यनन्तरमपि समासः। यथा सा हि तस्य धनक्रीतेति।**

**अन्ये त्वनित्यत्वे न मानम्। तत्राजादित्वात् टाबित्याहुः। अत एव 'कुम्भकारः' इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव। षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति भाष्ये स्पष्टम्।**

---

एवञ्चोपपदं गतिश्च समर्थेनैव समस्यमानं बहिर्भूतसंख्याकारकसापेक्षोत्तरखण्डप्रकृतिकविभक्त्यपेक्षया शीघ्रोपस्थितिनिमित्तकत्वेनान्तरङ्गत्वात् सुबुत्पत्तेः पूर्वमेव समस्येत। स चोत्तरखण्डो गत्युपपदसमभिव्याहारात्, 'अतिङ्' इति निषेधाच्च कृदन्त एवेति परिभाषाया अंशद्वयं फलति।

ननु गत्युपपदांशे। अतिङ्' ग्रहणेन परिभाषासिद्धावपि कारकांशे किं मानम्? अत आह—**एकदेशानुमत्येति**। क्रीतात् करणपूर्वात्' इति सूत्रमप्यत्र ज्ञापकं बोध्यम्। तथाहि—कारकस्य कृदन्तेन सह सुबुत्पत्तेः प्राक् समासाभावे पूर्वं टाप्यदन्तत्वाभावाद् ङीषोऽसिद्धया तद्वैयर्थ्यस्य स्पष्टत्वात्।

**अनित्यत्वादिति**। अस्या अनित्यत्वे 'अम्बाम्बगोभूमि' इति गोभूम्यादिशब्दग्रहणं प्रमाणम्। नित्यत्वे हि गोभूम्यादीनाम् 'सुपि स्थः' इति विहितकप्रत्ययान्तेन स्थशब्देन साकम् 'उपपदमतिङ्' इति सूत्रेण सुबुत्पत्तेः प्रागेव समासे तस्य पदत्वाभावेन 'सात्पदाद्योः' इति निषेधाप्राप्त्या 'आदेशप्रत्यययोः' इत्यनेनैव षत्वसिद्धेस्तद्ग्रहणं व्यर्थं स्यात्। अतस्तदस्या अनित्यत्वज्ञापकम्। तेन क्वचित् सुबुत्पत्त्युत्तरं समासः। अतः पूर्वं टाप्यदन्तत्वाभावात् 'क्रीतात् करणपूर्वात्' इति ङीषोऽप्रवृत्त्या 'सा हि तस्य धनक्रीता' इत्यस्य सिद्धिः।

अस्या अनित्यत्वं प्रत्याचष्टे—अन्ये त्विति।

अयं भावः—उपपदसमासे दधिसेचावित्यादौ षत्वाभावाय 'सात्पदाद्योः' इत्यत्र पदात् परस्यादिः पदादिरिति पञ्चमीसमासाश्रयणाद् गोष्ठादिषु षत्वनिषेधप्राप्त्या, तत्र षत्वार्थं गोभूम्यादिग्रहणस्यावश्यकत्वेनोक्तार्थज्ञापकत्वं न सम्भवति। पूर्वपदान्तादिणः परस्य स्थशब्दावयवसकारस्य षत्वं चेत्, तर्हि गोभूम्यादिभ्य एवेति नियमार्थत्वेनापि गोभूम्यादिग्रहणस्य सार्थक्यं कल्पयितुं शक्यत्वात्। तेन हृदिस्थ इत्यादौ षत्वं न। एवञ्च गोभूम्यादिग्रहणं न तदनित्यत्वे ज्ञापकम्।

अनित्यत्वस्य फलमप्यन्यथा साधयति—**तत्रेति**। धनक्रीतेत्यादौ टाप्प्रत्ययस्तु अजादेराकृतिगणत्वात् 'अजाद्यतष्टाप्' इत्यनेनैव सिद्ध इति भावः।

अत एव=परिभाषायां कारकसामान्यवाचककारकपदोपादानस्य फलमाह—षष्ठीसमासोऽपीति। अत्र प्रमाणं दर्शयति—**षष्ठीति**। यदि सुबन्तेन षष्ठीसमासः, तदोपपदसमास एवान्तरङ्गत्वाद् भविष्यतीति भाष्यविरोधः स्पष्ट एव।

कारकांशे परिभाषाऽस्तीत्यत्र 'षष्ठीसमासादुपपदसमासः' इति वार्त्तिकं

तत्र हि 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' इति वार्त्तिकम्। 'अथवा विभाषाषष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमासः' इति तत्प्रत्याख्यानं च।

यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकम् 'न वा षष्ठीसमासाभावादुपपदसमासः' इति वार्त्तिककृतोक्तम्, तथापि तदुभयप्रत्याख्यानपरम् 'अथवा' इत्यादि भाष्यं परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन

---

प्रमाणम्। षष्ठीसमासाभावपक्षे उपपदसमासो भवति, न तु वाक्य तिष्ठतीत्यत्र 'अथवा' इति भाष्यञ्चेति विवेकः। **तत्प्रत्याख्यानमिति**। कृतमिति शेषः। 'षष्ठीसमासात्' इति वार्त्तिकप्रत्याख्यानमित्यर्थः।

**अन्तरङ्गत्वाभिप्रेति**। 'षष्ठी' इति सूत्रे सुपेति तृतीयान्तस्यनुवर्तनात् 'उपपदम्' इत्यत्र तदभावाच्चेति भावः। अत एव 'मातुः स्मरति' इत्यादौ षष्ठीसमासः। **वार्त्तिककृतोक्तमिति**। पूर्ववार्त्तिकप्रत्याख्यानायेत्यर्थः। उभयोर्मध्ये इति शेषः। तदुभयेति। 'षष्ठीसमासादुपपद' इति वार्त्तिकस्य चेत्यर्थः।

ननूपपदसमासस्यान्तरङ्गत्वाभिप्रायकेण 'न वा षष्ठीसमासादुपपदसमासः' इति वार्त्तिकेन 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' इति वार्त्तिकस्य प्रत्याख्यानेऽप्येकदेशानुमत्या कारकांशेऽप्यस्याङ्गीकारात् षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेवेत्युभयोरप्यन्तरङ्गत्वाविशेष इत्यभिप्रायकेण 'अथवा विभाषाषष्ठीसमासः, यदा न षष्ठीसमासः, तदोपपदसमासः' इति भाष्येण 'न वा षष्ठीसमासात्' इत्यस्य प्रत्याख्यानमसंगतम्, समासविधायके 'षष्ठी' इति सूत्रे षष्ठीत्यस्य कारकत्वेन कारकग्रहणाभावात्, अत आह—**परिभाषायामिति**।

**सामान्यतः कारकोपादानेनेति**। एवञ्च समासशास्त्रे कारकत्वेन कारकग्रहणे एवेति न नियमः। किन्तु समासशास्त्रेघटकपदं क्वचिदपि लक्ष्ये कारकत्वेन दृष्टं चेद्, तद्ग्रहणे परिभाषा प्रवर्तते एवेत्यर्थः। प्रकृते तु 'कुम्भ ङस् कार' इत्यत्र ङसन्तस्य क्रियान्वयित्वे कारकत्वात् समासविधायके षष्ठीति कारकग्रहणमेवेति नोक्तदोष इति भावः।

**एतेन**=सामान्यतः कारकोपादानेन। **तद्विशेषेति**।'कर्तृकरणे कृता बहुलम्' इत्यादाविति बोध्यम्।

ननु मास्तु समासशास्त्रे कारकग्रहणम्, यत्र लक्ष्ये पूर्वपदं कारकं दृश्यते, तत्र सुबुत्पत्तेः पूर्वं कृद्भिः सह समासो भवति, तथैव परिभाषार्थबोधनात्। तेन 'षष्ठी' इति सूत्रे कारकग्रहणाभावेऽपि न क्षतिरित्याह—तस्या विध्येकवाक्यत्वेति। तथा चास्याः परिभाषात्वेऽपि विध्येकवात्वाभावाद् गत्यादीनां कृद्भिः सह समासः प्राक् सुबुत्पत्तेरिति स्वस्थल एव स्वातन्त्र्येण बोधयतीति यत्र लक्ष्ये पूर्व पदं कारकम्, तत्र कृद्भिः समासो विभक्तेः पूर्वमित्येवार्थो लभ्यते, न तु समासशास्त्रे कारकग्रहणे सतीति। तेन 'षष्ठी' इत्यस्य कारकत्वाभावेऽपि न क्षतिरिति भावः।

**कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात्। एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम्। अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च ॥ ७६ ॥**

**ननु 'उगिदचाम्०' इत्यत्र धातोश्चेदुगित् कार्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थम्, अत आह—**

**सांप्रतिकाभावे भूतपूर्वगतिः ॥ ७७ ॥**

**तत्तद्वचनसामर्थ्यन्यायसिद्धेयम्। तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन**

---

अत्र केचित्—पूर्वपक्षिणा प्रथमम् 'षष्ठीसमासादुपपदसमासः' इति; तत्प्रत्याख्यातम्। तत्र षष्ठीसमासाभावात्' इत्यस्य गतिकारकोपपदानामिति तत्प्रत्याख्यातम् 'गतिकारकोपपदानाम्' इति प्राचीनपठितपरिभाषाया कारकांशेऽनङ्गीकारादित्यर्थः। अत एवाग्रे 'न वाऽर्थो विप्रतिषेधेन् किं कारणम्, षष्ठीसमासस्याभावादुपपदसमासो भविष्यति, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति समासवचनादिति व्याख्यातम्। तत्रोत्तरपदे विभक्त्युत्पत्त्यनपेक्षणादन्तरङ्गत्वादुपपदसमासो भवतीत्यर्थं इति कैयटेन स्पष्टमेवोक्तम्। यदि कारकांशेऽपि परिभाषाऽङ्गीकृता स्यात्, उभयोरप्युत्तरपदे विभक्त्युत्पत्त्यनपेक्षणादन्तरङ्गत्वाविशेषेणोपपदसमासस्यैवान्तरङ्गत्वप्रतिपादनमसङ्गतं स्यात्। अत एवारम्भभाष्ये 'अतिङ्' इति किमर्थम्? कारको व्रजति हारको व्रजति। अतिङिति शक्यमवक्तुम्। कस्मान्न भवति कारको व्रजति, हारको व्रजति? सुप्सुपेति वर्त्तते—इत्युक्त्वा तदग्रे एव तर्हि सिद्धे सति यत् 'अतिङ्' इति प्रतिषेधं शास्ति, तद् ज्ञापयत्याचार्यः—अनयोर्योगयोर्निवृत्तं सुप्सुपेति। किमेतस्य ज्ञापने प्रयोजनम्? गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः—इत्येषा परिभाषा न कर्त्तव्या भवति' इत्युक्तम्। तत्र गत्युपपदयोः कृदन्तेन समासो ज्ञापकादेव सिद्ध इति तद्विषये परिभाषायाः प्रयोजनाभावेऽपि कारकांशे तस्या आवश्यकत्वेन तत्प्रत्याख्यानमसङ्गतमेव स्यात्। अतः प्रत्याख्यानपरभाष्याच्च कारकांशे परिभाषा नास्त्येवेति सिद्धम्। तस्मात् 'अथवा' इति अग्रिमभाष्यं त्वेकदेशिन एव, उक्तरीत्या कारकांशे परिभाषाऽभावे सत्युभयोः समासयोर्विभक्तेः पूर्वं समकालप्राप्त्यभिप्रायेण 'यदा न षष्ठीसमासः, तदोपपदसमासो भविष्यति' इत्युक्त्यसंगतेः। एतेन 'तदुभयप्रत्याख्यानपरम् 'अथवा'—इत्यादिभाष्यम्' इति। शेखरस्तु चिन्त्य एवेत्याहुः ॥७६॥

**साम्प्रतिकाभावे भूतपूर्वगतिरिति**। संप्रतिभवं साम्प्रतिकम्, 'कालाट्ठञ्'।

एवञ्च तत्कार्यविधायकशास्त्रप्रवृत्तिवेलायां तत्तत्कार्यनिमित्तभूतधर्मस्याभावेऽपि तत्तद्वचनसामर्थ्यात् पौर्वकालिकं तद्धर्ममादाय कार्यं विधीयत इति परिभाषार्थः। . . . . . . . . . . .

**गोमत्यतेः क्विपि 'गोमान्' इत्यादौ नुम्सिद्धिः । 'नामि' इत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७७॥**

**बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥**

---

प्रकृते गोमत्यतेः क्विपि नुम्विधानकाले गोमदित्यस्याधातुत्वेऽपि भूतपूर्वधातुत्वमादाय नुम्सिद्धिः ।

**तत्तद्वचनसामर्थ्यन्यायसिद्धेति ।** 'उगिदचाम्' 'ह्रस्वनद्यापः' इत्यादावधातुग्रहणह्रस्वग्रहणादिसामर्थ्यरूपो यो न्यायः, तत्सिद्धेयमित्यर्थः ।

**तत्सामर्थ्यादिति ।** अधातुग्रहणसामर्थ्यादित्यर्थः ।

**इत्यादौ नुम्सिद्धिरिति ।** अधातुग्रहणसामर्थ्यान्नुम्विषय एव भूतपूर्वगत्याश्रयणम्, न तूगित्कार्यमात्रविषये । तेन 'गोमान् स्त्री' इत्येव रूपं भवति, न तु 'गोमती स्त्री' इति । उगित्कार्यमात्रविषयकत्वे त्वत्र 'उगितश्च' इति ङीप् दुर्वारः स्यात् । आदिना भेत्तेत्यस्य सङ्ग्रहः ।

तत्र क्वनोः कित्करणसामर्थ्याद् भूतपूर्वलघूपदत्वमादाय'पुगन्त०'इति गुण इति बोध्यम् । एवम् 'सन्यतः' 'आटश्च' लुङ्लङ्लृङ्क्षु' इत्याद्यनुबन्धनिर्देशेषु तत्तद्ग्रहणसामर्थ्याद्भूतपूर्वंसन्त्वाद्यादाय लक्ष्ये 'सन्यतः' इत्यादिनेत्वादि बोध्यम् । अन्यथा 'पिपठिषति'इत्यादिलक्ष्येषु सकारादेस्सत्त्वेन सनादिपरत्वाभावात् तत्कार्यं न स्यात् । एवमगलभादिभ्य आचारे 'अवगलभकोल्बहोढेभ्यः' इति क्विपि भूतपूर्वानेकाच्त्वमादाय 'अवगलभाञ्चक्रे' इत्यादिसिद्धेः । एतच्च नामधातुप्रकरणे कौमुद्यादिषु स्पष्टम् ।

**नामित्यादिसूत्रेषु भाष्ये इति । तत्र हि** 'किमर्थं सनकारस्य ग्रहणं क्रियते ? 'आमि दीर्घः' इत्येवोच्येत । 'यदागम'परिभाषया नुड्विशिष्टस्याम्ग्रहणेन ग्रहणं भविष्यति । अग्नीनाम्, इन्दूनाम्' इत्यादौ नित्यत्वात् पूर्वं दीर्घेऽपि ह्रस्वग्रहणसामर्थ्याद् भूतपूर्वगतिर्विज्ञास्यते – ह्रस्वान्तं यद्भूतपूर्वमिति । 'तिसृणाम्, चतसृणाम्' इत्यत्र सावकाशः 'षट्चतुर्भ्यः' इत्यत्र 'त्रेस्त्रयः' इत्यतः 'त्रेः' इत्यनुवृत्त्या तत्सिद्धेः । नापि 'नृणाम्' इत्यत्र नैकमुाहरणं ह्रस्वग्रहणं प्रयोजयति । अन्यथा 'नृनद्यापो नुट्' इत्येवब्रूयादित्युक्त्वोत्तरार्थं तदित्युक्तम् । न चानया 'पदाम्, दताम्' इत्यादौ भूतपूर्वंह्रस्वमादाय नुडापत्तिरिति वाच्यम्, ह्रस्वत्वं नाम मात्राकालिकाच्त्वम्, । तत्र सामर्थ्याद्विशेषणभूतमात्राकालिकत्वांश एव भूतपूर्वगत्याश्रयणम्, न तु विशेष्यभूताच्त्वांशेऽपीत्यदोषात् । न चैवमपि इना सहितः सेः, तत आमि सयामित्यत्र से आमित्यवस्थायां भूतपूर्वमात्राकालित्वमादाय नुट् स्यादिति वाच्यम्, आम्प्रवृत्तेः पूर्वं यन्मात्राकालिकत्वम्, तस्यैवाम्प्रवृत्त्युत्तरमाश्रयणमित्यदोषात् । सयामित्यत्र कृतसन्धेरेव प्रत्ययोत्पत्तेः पूर्वमपि तन्नास्तीति बोध्यम् ॥७७॥

**बहुव्रीहौ तद्गुणसंविज्ञानमपीति ।** षष्ठीसमासात् कर्मधारयो लघुरित्या-

**अपिना अतद्गुणसंविज्ञानम्। तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः।**

**यत्र समवायसम्बन्धेन सम्बन्ध्यन्यपदार्थः, तत्र प्रायस्तद्गुणसंविज्ञानम्। अन्यत्र प्रायोऽन्यत्। 'लम्बकर्णचित्रगू' उदाहरणे। 'सर्वादीनि, जक्षित्यादयः' इति चोदाहरणे। सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७८ ॥**

**ननु 'वदः सुपि क्यप् च' इति चेनानुकृष्टस्य यतः 'भुवो भावे' इत्यत्राप्यनुवृत्तिः स्यात्, अत आह—**

**चानुकृष्टं नोत्तरत्र ॥ ७९ ॥**

**णमुल्यनुवर्तनाने 'अव्ययेऽयथाभिप्रेत' इति सूत्रे पुनर्णमुल्ग्रहणमस्या ज्ञापकम्। अन्यथा 'क्त्वा च' इति वदेत्। तद्धि उत्तरत्रोभयोः सम्बन्धार्थम्। उदाहरणानि स्फुटानि।**

---

शयेनाह—तेषामिति। **विशेष्यान्वयिनान्वयित्वमिति**। अयमेव पाठः। 'लम्बकर्णमानय' इत्यादौ विशेष्यम्=आनयनक्रिया, तदन्वयी देवदत्तः, तेनान्वयित्वं विशेषणीभूतकर्णादिरित्यक्षरार्थः। **विशेष्यान्वयित्वमिति** पाठे विशेष्यम्=क्रिया, तदन्वयित्वमित्यर्थः। **तदर्थं** इति। तस्य तद्गुणसंविज्ञानमित्यस्यार्थ इत्यर्थः।

तद्गुणातद्गुणयोर्विषयविवेचनमाह—**यत्र समवायेति**। अत्र कैयटादिभिः संयोगोऽपि निवेशितः। 'लम्बकर्णं भोजय' इत्यादौ व्यभिचारादाह—**प्राय इति**-**अन्यत्रेति**। समवायातिरिक्तसम्बधेन सम्बन्ध्यन्यपदार्थो यत्र, तत्रेत्यर्थः। 'लोहितोष्णीष आनीयताम्'इत्यौदौ व्यभिचारादाह—**प्राय इति**। अन्यत्र=अतद्गुणसंविज्ञानम्। तथा चोभयमपि सम्भवाभिप्रायकमिति ध्येयम्।

**क्रमेणोदाहिरति—लम्बकर्णेति**। लौकिकोदाहरणमुक्त्वा शास्त्रीयमुदाहरति—**सर्वादिति**। **भाष्ये स्पष्टेति**।

तत्र हि सर्वादीनि सर्वनामानि कोऽयं समासः? बहुव्रीहिरित्याह। कोऽस्य विग्रहः? सर्वशब्द आदिर्येषां तानीमानीति। यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति, किं कारणम्? अन्यपदार्थत्वाद् बहुव्रीहेः, बहुव्रीहिरयमन्यपदार्थे वर्तते। तेन यदन्य सर्वशब्दात्, तस्य सर्वनामसंज्ञा प्राप्नोति। तद्यथा— 'चित्रगुरानीयताम्' इत्युक्ते यस्य चित्रा गावः, स एवानीयते, न तु गावः। नैष दोषः, सति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि। तद्यथा—चित्रवाससमानय, लोहितोष्णीषा ऋत्विजः प्रचरन्तीति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्तीत्युक्तम् ॥७८॥

समुच्चयार्थक अपि' प्रसङ्गादाह—**नन्विति**। **यतः**='अचो यत्' इति सूत्रस्थस्य। **अनुवृत्तिः स्यादिति**। ततश्च ब्रह्मणो भावो 'ब्रह्मभूयम्' इतिवद् ब्रह्मभव्यम्' इत्यपि स्यादिति भावः।

**इदमनित्यम्। अत एव तृतीया च होः' इत्यत्र चानुकृष्टाया अपि द्वितीयायाः 'अन्तरान्तरेण' इत्यत्र सम्बन्धः। 'लुटि च क्लृपः' इति सूत्रस्थेनानुवृत्त्यर्थकसकलचकारप्रत्याख्यानेन विरुद्धेयम्। व्याख्यानादेवानुवृत्तिनिवृत्योर्निर्वाह इति तदाशयः। 'कुलिजाल्लुक्खौ च' इति सूत्रस्थभाष्यविरुद्धा च। तत्र हि 'द्विगोः ष्ठंश्च' इति सूत्रात् ष्ठनः, तत्र 'चेनाप्यनुकृष्टस्य खोऽन्यतरस्याम्' इत्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम्॥ ७९॥**

---

**अनुवर्तमाने इति।** 'स्वादुमि णमुल्' इत्यतः। **अन्यथा**='चानुकृष्टं नोत्तरत्र' इत्यस्याभावे। **तद्धि**=पुनर्णमुल्ग्रहणं हि। **उत्तरत्र**='तिर्यच्यपवर्गे' इत्यादौ। **उभयोः**=क्त्वाणमुलोः, **स्फुटानि**=तिर्यक्कृत्व; तिर्यक्कृत्वा; तिर्यक्कारं गतः, --इत्यादीनि। समाप्य गत इत्यर्थः।

**इदम्**='चानुकृष्टम्' इति वचनम्। **अत एव**=अनित्यत्वादेव। **'तृतीया च होः'** इति। जुहोतेः कर्मणि तृतीया स्यात्, द्वितीया चेति तस्यार्थः। 'यवाग्वाग्निहोत्रं जुहोति' इत्युदाहरणम्। **द्वितीयाया** इति। तस्या एवेत्यर्थः,। न तृतीयायाः, अस्वरितत्वत्।

**अनुवृत्त्यर्थेति।** अनुवृत्तिफलमूलकेत्यर्थः,। तेनान्यफलकानां न प्रत्याख्यानमिति सूचितम्। **तदाशय इति।** प्रत्याख्यानपरभाष्याशय इत्यर्थः। **तत्र हीति।** उक्तसूत्रे इत्यर्थः। अस्य 'भाष्ये' इत्यनेनान्वयः। तत्र ='द्विगोः ष्ठंश्च' इति सूत्रे। **चेनापीति।** चेनानुकृष्टस्यापीत्यर्थः। इत्यस्य चेति पाठः। ष्ठन्समुच्चायकश्चः। निश्चकापाठे तु पूर्वोऽपिरत्र योज्यः।

**प्रत्याख्यातमिति।** इदमत्रावधेयम्--'कुलिजात्' इति सूत्रे लुकोऽपी विकल्पस्यवश्यकत्वेन पक्षे ठञ्घटितरूपवृद्धया सूत्रकृतां रूपचतुष्टयमभिमतमिति मूले वृत्तौ च रूपचतुष्टयमुक्तम्। भट्टस्तु लुक्स्वरप्रत्याख्यानविरोधाल्लुकि सूत्रकृतामपि विकल्पसंबन्धोऽनिष्ट एवेति द्वैकुलिजिकोति चतुर्थं रूपं चिन्त्यमेवेत्युक्तम्। कैयटस्वरसोऽप्येवमेव।

तत्रेदं चिन्त्यते--रूपचतुष्टयाभावे लुग्ग्रहणयोगविभागयो :सर्वथा निरर्थकत्वप्रसङ्गेनासम्भवदुक्तिकत्वापत्तिः, द्वन्द्वनिर्दिष्टे खमात्रे विकल्पसम्बन्धानुपपत्तिश्च। ण्वुलतृजादिवद् लुगादिविधानसामर्थ्येन तद्विकल्पकल्पने तु गौरवमेव। खमात्रे विकल्पसंबन्धे खश्रवणानुपपत्तिश्च। सहविधानात् खष्ठनोर्न लुगिति भट्टोक्तं तु न युक्तम्, साहित्योपलक्षितप्रत्येकवृत्तिधर्मावच्छिन्नविधेयताविशिष्टयोरन्यतरयोरन्यतरोद्देश्येन प्रवृत्तौ बाधकाभावात्।

किं बहुना, स्वविधेयस्यापि स्वोद्देश्यत्व-स्वोद्देश्यघटकत्वयोः 'ऊकालः' इत्यादौ; णिजन्तप्रकृतिकणिजादौ च दृष्टत्वादेकसूत्रविधेयस्य विधेयान्तरोद्देश्यत्वे न किमपि बाधकम्। 'कुलिजाच्च' इत्येव सिद्धे लुक्खग्रहणमनर्थकम्, पूर्वस्मिन् त्रिकभावात्।

**नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्य आह—**

**स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥**

**स्वरोद्देश्यके विधावित्यर्थः ।**

**'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः । अन्यथाः पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अत एव 'शतुरनुमो नद्यजादी' 'अचः कर्तृयकि' इत्यादावजादी, अच इत्यादेश्चा-**

---

पूर्वस्मिन् योगे त्रिकं निर्दिश्यते--द्व्याढकीना, द्व्याढकिकी, द्व्याढकी' इति भाष्येऽपि लुक्खग्रहणमात्रं प्रत्याख्यायते, न योगः । अन्यथाऽयं योगः शक्यो वक्तुं 'कुलिजाच्च' 'द्विगोः ष्ठंश्च' इत्येव सिद्धमिति वक्तुं युक्तं स्यात् । एवञ्च योगविभागसामर्थ्येनानुवृत्तान्यतरस्यामित्यस्यावृत्त्या एकस्य समुच्चयार्थत्वेन प्राकरणिकं लुकं समुच्चित्य ख-ष्ठन्-लुकां विकल्पं विधाय रूपचतुष्टयं भाष्यकृतामपि साध्यम् । ठञ एव समुच्चयस्तु न, फलाभावात्, तत्सामर्थ्येन, लुग्बाधकल्पनापेक्षया लुक्समुच्चयस्यैव न्याय्यत्वच्च । एतेन=योविभागसामर्थ्येन, नित्यावेव खष्ठनौ स्यातामित्यपि निरस्तम् । त्रिकं निर्दिश्यमेव द्रढयति-द्व्याढकीनेत्यादिना भाष्ये । तथा चान्यतरस्यामित्येतत्सहितष्ठन्खयोरनुवृत्त्योक्तयुक्त्याऽन्यतरस्यामित्यस्यावृत्त्या रूपचतुष्टयमत्रापि सेत्स्यतीति नारम्भप्रत्याख्यानयोः फलभेद इति । एतादृशदुरूहावृत्त्यादिक्लेशभयाल्लुग्ग्रहणं सूत्रकृता कृतमिति तत्सत्तार्थकं सत्सम्भवदुक्तिकमेव लुग्ग्रहणाकरणलाघवमात्रेण वार्त्तिककृता प्रत्याख्यानमिति त्वन्यदेतत् ॥ ७९ ॥

ननु 'अनुदात्तादेरञ्' इत्यादिना 'अन्नवतीनां समूह आन्नवतम्, उदुम्बरावतीनां समूहः औदुम्बरवतम्' इत्यादावेवाञ् स्यात्, न तु 'मायूरम्, कापोतम्' इत्यादौ, हलादित्वेनानुदात्तादित्वाभावात् । एवं 'बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञ् । षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वम्, तस्य व्याख्यानम्; तत्र भवो वा 'षात्वणत्विक' इत्यत्रैव स्यात्, न तु चर्त्वंभषोर्विधायकं शास्त्रम्, चर्त्वंभष्, तस्य व्याख्यानम्; तत्र भवो वा; 'चार्त्वंभषिकम्' इत्यत्र हलन्तत्वेनान्तोदात्तत्वाभावात् । अत आह—**नन्वित्यादिना** ।

**स्वोरोद्देश्यके विधाविति** । नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच्, ततः परा तृतीयादिर्विभक्तिरन्तोदात्ता वा स्यादित्यर्थकम् । 'अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' इत्यादौ, न तु 'समास्यस्य' 'धातोः' इत्यादिस्वरकर्मके विधिविरित्यर्थः ।

परिभाषायां ज्ञापकमाह--**'नोत्तरपदेऽनुदात्तादौ'** इति । 'पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे युगपत् प्रकृत्या नेति तदर्थः । 'देवताद्वन्द्वे च' इत्यनेनो-

**रितार्थ्यम्। अत एव 'राजवती' इत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वात् 'अन्तोऽवत्याः' इति स्वरो न, 'उदश्वित्वान्' इत्यत्र 'ह्रस्वनुड्भ्याम्' इति मतुबुदात्तत्वं च नेत्याकरः। स्पष्टं चेदम् 'समासस्य' इति सूत्रे भाष्ये।**

**'उच्चैरुदात्तः' इति सूत्रे कैयटस्तु-'इयमनावश्यकी, समभिव्याहृतानुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेः, इत्याह। तत्र भाष्येऽपि ध्वनितमेतत्॥ ८०॥**

---

भयोयुगपत्प्रकृतिस्वरे प्राप्ते तन्निषेधमिकदम्। 'इन्द्राग्निभ्याम्' इत्युदाहरणम्। **अन्यथा** = परिभाषाया अभावे। **अप्राप्तौ** = निषेधाप्राप्तौ ! तथा च 'देवताद्वन्द्वे च' इति पूर्वसूत्रेण पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरः सिद्ध इति भावः।

स्वरोद्देश्यकविधावित्यत्र मानमाह—**धर्मिग्राहेति**। उक्तपर्युदासरूपादित्यर्थः। 'नोत्तरपदे' इत्यस्य स्वरनिषेधविधित्वेन स्वरकर्मविधित्वाभावादिति भावः। इदम् = परिभाषारूपं वचनम्। तत एव = स्वरोद्देश्यकविधावित्यर्थाङ्गीकारादेव। **'शतुरनुमः'** इति। अनुम् = यश्शतृप्रत्ययः, तदन्तादन्तोदात्तात् परा नदी, अजादिश्च शदादिर्विभक्तिरुदात्ता स्यादिति तदर्थः। **'अचः कर्तृयकि'** इति। उपदेशे अजन्तानां कर्तृयकि परे आदिरुदात्तो वेत्यर्थः। 'लूयते केदारः स्वयमेव' इत्युदाहरणम्। **चारितार्थ्यमिति**। अन्यथा अत्राजादिग्रहणस्य हलादिव्यावृत्त्यर्थत्वेन परिभाषायाः स्वरकर्मकविधावेव प्रवृत्त्यङ्गीकारे तद्व्यावर्त्याभावेन तदानर्थक्यं स्पष्टमेव।

उक्तार्थे सूत्रसम्मतिमुक्त्वा भाष्यसम्मतिमाह—**अत एवेति**। प्राग्वत्[1]। आकार इत्यत्रान्वयः, तस्य च सङ्गच्छत इति शेषः। **'अन्तोऽवत्याः'** इति अवतीशब्दस्यान्त उदात्त इति तस्यार्थः। ङीपः पित्त्वादनुदात्तत्वे प्राप्ते तद्बाधनार्थमिदम्। **उदात्तत्वञ्च नेतीति**। ननूक्तार्थाङ्गीकारेऽपि 'ह्रस्वनुड्भ्याम्' इत्यस्य ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुप् उदात्त इत्यर्थकत्वेन स्वरोद्देश्यकविधिरेवायमिति तकारस्याविद्यमानवद्भावान्मतुबुदात्तत्वं दुर्निवारमिति चेत्, न; ह्रस्वान्तादन्तोदात्तान्मतुबित्यस्य ह्रस्वान्तान्तादन्तोदात्तात्परो मतुबुदात्त इत्यर्थेनान्तोदात्तपरत्वानयने तकारस्याविद्यमानवद्भावेऽपि ह्रस्वात् परत्वानयने तस्याविद्यमानवद्भावाभावात्।

**कैयटस्त्विति**[2]। तस्याहेत्यत्रान्वयः। **समभिव्याहृतेति**। समभिव्याहारश्च पूर्वपरयोरन्यतरेणेति बोध्यम्। उपरागेण=उपश्लेषेण। **तदुपपत्तेरिति**। हलादेर्हलन्तात् प्रत्ययोत्पत्तेरित्यर्थः। कैयटोक्तौ भाष्यसम्मतिमाह—**तत्र भाष्येऽपीति**। 'उच्चैरुदात्तः' इत्यत्रेत्यर्थः॥ ८०॥

---

१. स्वरोद्देश्यकविधावित्यर्थाङ्गीकारादेवेति पूर्वोक्तवदित्यर्थः।

२. 'उच्चैरुदात्तः' इति सूत्रे 'अथ प्रथमनिर्दिष्टमज्ग्रहणमनुवर्तते, उताहो न' इति भाष्यव्याख्यायाम् 'ननु को विशेषः? यावता यत्र स्वरो विधीयते, तत्र व्यञ्जनस्याविद्य-

नन्वेवमपि 'राजदृषत्' इत्यादौ समासस्येत्यन्तोदात्तत्वं षकाराकारस्य न स्यात्, अत आह--

**हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥**

अस्याश्च 'यतोऽनावः' इति सूत्रेऽनौप्रतिषेधो ज्ञापकः। नाव्यम्' इत्यत्रादिर्नकारो न स्वरयोग्यः, यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः। न चादिरेव नकार उदात्तगुणविशिष्टान्तरमाजूरूपोऽस्त्विति वाच्यम्, तथा सति निमित्तभूतद्वयच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेः; इत्यन्यत्र विस्तरः।

---

ननु 'समासस्य' इत्यादिनाऽन्तोदात्तत्व राजपुरुषादावजन्तेष्विव हृदन्तेष्वप्यन्त्यस्यैव स्यात्, अत आह—**नन्विति**।

**एवमपि** = उक्तपरिभाषया 'अनुदात्तादेः' इत्यादौ निर्वाहेऽपि। **अकारस्य न स्यादिति**। आनन्त्यत्वादित्यर्थः। ततश्च रकारस्यालृकारो[1]वक्ष्यमाणरीत्या स्यादित्यर्थः।

**'यतोऽनावः'** इति यत्प्रत्ययान्तस्य आदिरुदात्तो नावं विनेति तदर्थः। इटकिटकटीत्यत्र प्रश्लिष्टात् 'ई' धातोः, 'इण' गतावित्यस्मात् 'अय गतौ' इत्यादिर्णिजन्ताद् यत्प्रत्यये 'अय्यमाय्यम्' इत्यादीन्युदाहरणानि। **नाव्यमिति**। अस्यान्यथेत्यादि।

**अन्तरतमाजूरुप इति**। लृकार इत्यर्थः। **तथा सतीति**। उदात्तगुणविशिष्टधर्मिणो विधाने सतीत्यर्थः।

---

मानस्वदच एव भविष्यति। 'अनुदात्तादेरञ्' इत्यादावनुवादेऽपि न दोषः, स्वत एव हलोऽनुदात्तस्वं भवतु, अजुपरागवशाद् वा। तदनुवादेन कार्यविधाने न कश्चिद् विशेषः। एवं तर्हि न्यायव्युत्पादनार्थं एवायं विचारः इति कैयटेनोक्तम्। तत्र 'अनुदात्तादेरञ्' इत्यादावनुवादेऽपि न दोष इत्यादिग्रन्थेन प्रकृतपरिभाषाया अनावश्यकत्वाप्रदर्शनं स्पष्टम्।

ननूदातत्वादिविशिष्टाजुपरागवशाद् व्यञ्जनस्योदात्तादिवदवभासेऽपि वस्तुतस्तस्योदात्तत्वाद्यभावेन तदादाय शास्त्रप्रवृत्तिर्न युक्ता। अत आह—ध्वनितमेतदिति। तत्र हि 'नैते व्यञ्जनस्य गुणाः, किन्त्वच एव। तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभते। तद्यथा 'द्वयोरक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभते' इत्यादिनोदात्तत्वादीनामज्धर्मत्वम्, व्यञ्जनेषु तु समीप्यात् तवचमासात्रमिति व्यवस्थाप्य स्वरोद्देश्यकस्य 'अनुदात्तादेरञ्' इत्यादेर्व्यञ्जनादेर्व्यञ्जनाच्च प्रवृत्त्यर्थं न कश्चिदुपायः प्रदर्शितः। तेनानुदात्तत्वाद्यवभासमादायाप्युक्तशास्त्रप्रवृत्तिः कर्त्तव्येति सूचितम्। अतो भाष्यानुमतत्वात् कैयटोक्तिरप्यादरणीयैवेति तात्पर्यम्।

१. आन्तरतम्यादुदात्त लृकारः स्यादिति भावः।

स्पष्टा चेयम् 'समासस्य' इति सूत्रे भाष्ये ॥ ८१ ॥

ननु 'पूरणगुण०' इति निषेधस्तव्यत्यपि स्यात्, इति 'दिव औत्' इत्यौत्वम् दिवेः क्विप्यपि स्यात्, तथा 'यतोऽनावः' इति स्वरो ण्यत्यपि स्यात्, 'ऋदृशोऽङि गुणः' इति चङ्यपि स्यात्, अत आह—

**निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८२ ॥**

**आद्युदात्तत्वाप्राप्तेरिति**। ननु धर्मिविधानपक्षे 'नाव्यम्' इत्यत्र नकारस्य स्थाने उदात्तगुणविशिष्टलृकारः प्राप्नोतीति तद्व्यावृत्त्यर्थम् 'अनावः' इत्यस्यावश्यकत्वेन परिभाषाज्ञापकत्वं न सम्भवतीति वक्तुमयुक्तम्, उपजीव्यविरोधेन[1] धर्मिविधानस्य कर्तुमशक्यत्वात्, अतः सिद्धेः। स्थानिनि धर्मस्यैव विधानं कर्तव्यम्, ततश्चोदात्तादेः स्थानिवत्त्वेनाच एव क्लृप्तत्वाद् नकारस्यातथात्वात् स्वराप्राप्त्या हल्स्वरप्राप्तिद्योतकधर्मिग्राहकमानाभाववत्त्वात् स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येव सिद्धे हल्ग्रहणं व्यर्थमिति चेत्, न, 'द्विर्बद्ध सुबद्धम्' इति न्यायेन स्पष्टावगत्यर्थत्वात्। एतच्च 'समासस्य' इति सूत्रे भाष्ये प्रतिपादितम्। तत्र हि 'समासान्तोदात्तत्वे व्यञ्जनान्तेषुपसंख्यानं कर्तव्यम्' राजदृशत्, ब्राह्मणसमित्। 'हल्स्वरप्राप्तौ व्यञ्जनमविधमानवत्'। अथवा 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति इत्येषा परिभाषा कर्तव्या। किमर्थमिदमुभयमुच्यते? न 'हल्स्वरप्राप्तावविद्यनानवत्' इत्येवोच्येत, 'स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति' इति वा 'द्विर्बद्धं सुबद्धं भवति' इत्युक्तम् ॥ ८१ ॥

**दिवेः क्विपीति**। 'अक्षद्यूः' इत्यादौ औत्त्वविधायके तु निरनुबन्धकस्याव्युत्पन्नप्रातिपदिकस्य ग्रहणम्, अयं तु 'दिवु क्रीडा' इति सानुबन्धकः। अत्राद्यद्वयमाद्यपरिभाषाविषयम्, अन्त्यद्वयमन्त्यपरिभाषाविषयमिति बोध्यम्। **ऋदृशोऽङि गुणः' इतीति**। इति सूत्रादङीत्यनुवर्तमाने 'श्वयतेरः' इत्यनेनाकार इत्यर्थः। यथा श्रुतं तु न युक्तम्, ऋकारान्ताद् दृशेश्च चङोऽसम्भावात्।

१. ननु सन्निपातलक्षणो विधिः स्वनिमित्तसन्निपातविघातकस्य स्वातिरिक्तस्य स्वयं निर्मितं न भवतीत्येव परिभाषार्थः। अत एवादन्ताङ्गाभ्यां प्रत्ययसन्निपातेन जातस्य 'सुपि च' इति दीर्घस्य ह्रस्वत्वनिवृत्तिद्वारोक्तसन्निपातविघातकत्वेऽपि न बोधः। एवञ्चात्र स्वस्यैव स्वनिमित्तविघातकत्वेन तत्परिभाषाप्रवर्तनमयुक्तमिति चेत्, न; यस्य विधेः स्वनिमित्तविनाशं विना चारितार्थ्यमेव न सम्भवति, तस्य तन्नाशकत्वमवश्यमङ्गीकर्त्तव्यमित्येतन्मूलकमेव तत्र स्वातिरिक्तस्येत्युच्यते। प्रकृते स्वजादिशब्दे उक्तविधेश्चारितार्थ्यादुपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलकत्वात् तया स्वेन स्वनिमित्तसन्निपातविघातो नेत्यर्थस्य बोधनीयत्वात् तत्प्रवृत्तिरुचितैव ये तु 'पूर्वपरसम्बन्ध एक सन्निपातः, न तु विशेष्यविशेषणसम्बन्धोऽपि' इत्यभ्युपगच्छन्ति, तन्मते प्रकृते तादृशसम्बन्धाभावात् सन्निपातपरिभाषाया अप्रवृत्तावपि स्वरविधायकशास्त्रेण विद्यमानस्याच उदात्तत्वादिगुणविधानमेव क्रियत इति पक्षावलम्बनेन नकारस्योदात्तलृकारादेशापत्यभावात् 'नौ' प्रतिषेधस्य भाष्योक्ता ज्ञापकतोपपादनीया।

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८३ ॥

**'वामदेवाड्ड्यड्ड्यौ' इति सूत्रे ड्यड्ड्यतोर्ङित्त्वमनयोर्ज्ञापकम्। तद्धि 'ययतोश्चातदर्थे' इत्यत्र तयोरग्रहणार्थम्। नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः। एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति।**

---

**अनयोः** = परिभाषयोः। तयोः = ड्यड्यतोः। एवञ्चः' इत्यत्र ड्यड्यतोरग्रहणे च। **अव्ययपूर्वपदप्रकृतीति**। सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्येत्यर्थकेन 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इत्यनेनेत्यर्थः।

आद्यायाः स्पष्टार्थत्वेन तां विहाय द्वितीयार्थमाह—**तन्मात्रानुबन्धकेति**।

एते च=परिभाषे च। **सञ्चारितत्वादिति**। 'अक्षद्यूः' इत्यत्र 'निरनुबन्धक' परिभाषया दिव औत्वं वारितं तत्र भाष्ये।

**'ओङ आपः' इत्यत्रेति**। भाष्ये हि—'औङ आपः' किमर्थो ङकारः ? औ इत्युच्यमाने 'प्रथमाद्विवचनस्यैव ग्रहण स्यात्' इत्युक्त्वाग्रे 'वर्णग्रहणमिदं भवति, न चैतद्वर्णग्रहणेषु भवति, अननुबन्धकग्रहणे न सानुबन्धकस्येति' इत्युक्तम्।

ननु धर्मिग्राहकमानान्निरनुबन्धकग्रहणे एकानुबन्धकस्यैवाग्रहणम्, द्व्यनुबन्धकस्य तु ग्रहणं स्यादेव, 'ययतोश्चातदर्थे' इत्यत्र यपदेन यतोऽपि ग्रहणं दुवारं स्यादित्याशङ्क्य वारयितुमाह—**द्व्यनुबन्धकेति**। आदिग्रहण चिन्त्यमेव, ड्यतुप्मतुप्ङ्वनिपादीनां सत्त्वेऽपि न तद्ग्रहणम्, निरनुबन्धकस्योद्देश्यत्वेन क्वाप्यग्रहणात्। **धर्मिग्राहकमानादिति**। ड्यड्यतोर्ङित्करणादित्यर्थः।

तेन=उक्तार्थाङ्गीकारेण। **नैषेति**। इतिर्हेतौ। इतिहेतोर्न शङ्क्यमिति योजना। एवात्रेति। जश्शसोरित्यत्रेत्यर्थः।

एवम्=धर्मिग्राहकमानादेव। तेन=अन्यतरानुबन्धोच्चारेण एवेत्यर्थाङ्गीकारेण। **क्वनिपोरिति**। इदमुपलक्षणम् ङ्वनिपोऽपि।

अत्रेदमवधेयम्—'सानुबन्धकनिर्देशेषु प्रायोगिकरूपाभावादौपदेशिकरूपातिदेशः' इति भाष्यात् 'यतोऽनावः' इत्यत्र 'यतः' इति सानुबन्धकनिर्देशात् 'चेयम्, देयम्' इत्यादावौपदेशिकयत्त्वारोपेण 'यतोऽनावः' इति स्वरो यथा भवति, 'कार्यम्, वर्ष्यम्' इत्यत्र न भवति, तत्र ण्यतस्तकारस्य समुदायानुबन्धत्वेन यतोऽभावात्।

न चैकदेशे तत्त्वमस्त्येवेति वाच्यम्, समुदायावयवोः सन्निधानेऽनुबन्धस्य समुदायस्यैवोपकारकत्वेनावयवोपकारकत्वाभावात्। अत एव 'रमायै' 'सर्वस्यै' इत्यादौ याट्स्याटोष्टकास्य समुदायानुबन्धत्वेनेहाटोऽभावात् 'आटश्च' इति न वृद्धिरिति 'याडापः' इयि सूत्रे मनोरमायामुक्तम्, शब्दरत्ने तथैव व्याख्यातम्। अन्यथा तत्राप्येकदेशे आट्त्वमस्त्येवेत्याटोऽभावादित्युक्तिरसङ्गतैव स्यात्। 'पाक्यम्' इत्यत्र 'चजोः' इति कुत्वार्थं तकारस्य समुदायावयवत्वेन ण्यत्त्वमात्र-

तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः। एते च प्रत्ययाप्रत्ययसाधारणे, 'दिव औत्' इत्यादौ सञ्चारितत्वात्। पूर्वग्रहणे चानयोरप्रवृत्तिरिति स्पष्टम् 'ओङ आपः' इत्यत्र भाष्ये। येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारणे एवैषा, धर्मिग्राहकमानात्। तेन 'जश्शसोः' इत्यत्र नैषेति निरनुबन्धकत्वात् तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम्। एवमन्त्यान्यतरानुबन्धोच्चारणे एव। तेन 'वनो र च' इत्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धि। एकानुबन्धकग्रहणे सम्भवतीति त्वर्थो न भाष्यादिसम्मत इत्यन्यत्र विस्तरः॥ ८२, ८३॥

'ननु कुटीर' इत्यादौ स्वार्थिकत्वात् स्वार्थिनां प्रकृतितो लिङ्गवचनानु-

---

स्यैवारोपः, न तु स्वरार्थं यत्त्वस्यापि, तकारस्यावयवानुबन्धकत्वाभावात्। एवं चङि अङ्त्वारोपोऽपि न भवति, ङकारस्य समुदायावयवत्वेनावयवावयिवत्वाभावात्। तस्माण्ण्यदादौ यदादिकार्यासम्भवात् 'तदनुबन्धक' परिभाषा निष्फलैवेति।

यद्वा, धर्मिग्राहकमानाद् यत्सूत्रीयपदनिष्ठोद्देश्यता यद्धर्मावच्छिन्ना, तद्धर्मावच्छिन्नविधेयताश्रयस्यैवोद्देश्यवाचकपदेन तत्सूत्रे ग्रनणमिति यदोच्यते, तदा परिभाषाद्वयस्यापि प्रयोजनं नास्तीति। तथा हि—यत्सूत्रीयपदम् 'पूरगुण' इति सूत्रे तव्य इति, 'यतोऽनावः' इति सूत्रे यत इति, तन्निष्ठा योद्देश्यता, यद्धर्मावच्छिन्ना तव्यत्वरूपयत्त्वरूपधर्मावच्छिन्ना च, तव्यत्वरूपधर्मावच्छिन्ना या विधेयता 'तव्यत्तव्यानीयरः' इति सूत्रीयतव्यप्रत्ययनिष्ठा, 'अचो यत्' इति सूत्रीययत्प्रत्ययनिष्ठा च, न तु तव्यत्प्रत्ययनिष्ठा, ण्यत्प्रत्ययनिष्ठा च; तादृशविधेयताश्रयः, तव्यप्रत्ययः: यत्प्रत्ययश्च, न तु तव्यत्प्रत्ययो ण्यत्प्रत्ययश्च, तस्यैवोद्देश्यतावाचकपदेन 'पूरणगुण' इत्यत्र तव्यपदेन, 'यतोऽनावः' इत्यत्र यत्पदेन च ग्रहणम्। तत्सूत्रे=पूरणगुण' इति सूत्रे; 'यतोऽनावः' इति सूत्रे चेति लक्षणसमन्वयः।

एवं यत्सूत्रीयपदनिष्ठोद्देश्यता 'श्वयतेरः' इति सूत्रेऽनुवृत्ताङीतिपदनिष्ठा, सा यद्धर्मावच्छिन्ना अङ्त्वधर्मावच्छिन्ना, तद्धर्मावच्छिन्ना विधेयता 'जृस्तम्भु' इति सूत्रविहिताङ्निष्ठा, न तु 'विभाषा धेट्' इति विहितचङ्निष्ठा, तदाश्रयोऽङेव, न चङ्; तस्यैवोद्देश्यवाचकपदेन 'श्वयतेरः' इयनुवृत्ताङीति पदेन तत्र 'श्वयतेरः' इत्यत्र ग्रहणमिति लक्षणसमन्वयः।

न च 'द्यौः' इत्यत्र दिवित्यस्याव्युत्पन्नप्रातिपदिकत्वेन तस्य केना शास्त्रेण विधानाभावात् तन्निष्ठविधेयताया अभावेन दिवित्यस्य निरुक्तलक्षणाविषयत्वेनाक्षद्यूरित्यत्र 'दिव औत्' इत्यौत्त्वं दर्वारमिति वाच्यम्, 'दिव औत्' इत्यत्र 'लोपो व्योः' इति लोपेन वकारं प्रश्लिष्य वान्तस्य दिविति प्रातिपादिकस्यौत् स्यादित्यर्थेनादोषात्। क्विबन्तदिवेस्तूठाभवितत्वेन सौ परतो वान्तत्वाभावात्॥ ८२, ८३॥

वृत्तेर्न्यायप्राप्तत्वात् पुंस्त्वानुपपत्तिः, 'अप्कल्पम्' इत्यत्र नपुंसकैकवचनयोरनुपपत्तिश्चेत्यत आह—

**क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ॥ ८४ ॥**

'णचः स्त्रियाम्' इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका। अन्यथा 'कर्मव्यतिहारे णच् स्त्रियाम्' इति स्त्रियामेव विधानात् किं तेन? स्पष्टा चेयं बहुज्विधायके भाष्ये ॥ ८४ ॥

ननु 'सुपथी नगरी' इति 'युवोरनाकौ' इति सूत्रभाष्योदाहृत 'इनः स्त्रियाम् इति कप् स्यात्, अत आह—

**समासान्तविधिरनित्यः ॥ ८५ ॥**

'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तत्वायांश्वादिषु राजन्शब्दपाठोऽस्या ज्ञापकः। अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन? 'द्वित्रिभ्यां पाद्दन्मूर्द्धसु' इति स्वरविधायके भाष्ये स्पष्टेयम् ॥ ८५ ॥

ननु 'शतानि' इत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति, ततश्च लुक्स्यात्, तथोपादास्तेत्यत्रात्वे कृते 'स्थाध्वोरिच्च' इतीत्वं प्राप्नोतीत्यत आह—

---

**स्वर्थिकत्वादिति।** अस्य परस्येत्यादिः। **प्रकृतित इति।** आद्यादित्वात् षष्ठ्यन्तत्वात् तसिः। अनुवृत्तेः = प्राप्तेः, न्यायप्राप्तत्वात् = युक्तिसिद्धत्वात्। क्वचित् स्वार्थिका वर्तन्ते। बहुषु स्थलेषु तदनुवृत्तिः सूचिता।

अन्यथा=परिभाषाऽभावे। तेन=स्त्रियामिति ग्रहणेन। ज्ञापकस्य सामान्यापेक्षत्वाद् वचनांशेऽपि सिद्धिर्बोध्या ॥ ८४ ॥

सुपथीति – शोभनः पन्था यस्यामिति विग्रहः। 'ऋन्नेभ्यः' इति ङीपि 'भस्याढे:' इति टिलोपः। ननु सुपथोति कब्रहितोऽपप्रयोग एव, अनार्षत्वादिति शङ्कां निवारयितुमाह—**भाष्योदाहृत इति।** एवञ्च भाष्योदाहृतत्वे यथा तत्सिद्धिः स्यात्, तथा यतितव्यमित्यर्थः। **कप्स्यादिति।** ततश्च ङीप् स्यादिति भावः।

**'प्रतेरंश्वादयः'** इति प्रतेः परेंऽश्वदयोऽन्तोदात्ता इति तदर्थ। प्रतिगतोंऽशुः प्रत्यंशुः, 'प्रतिजनः, प्रतिराजा' इत्युदाहरणानि। तेन=अंश्वदिषु राजन्शब्दपाठेन ॥ ८५ ॥

नञ्पदघटितत्वसाधर्म्यात् सन्निपातपरिभाषामवतारयति—**नन्विति।** न च विभक्तिसापेक्षनुमो बहिरङ्गत्वेनासिद्धत्वात् षट्संज्ञा न स्यादिति वाच्यम्, संज्ञाया विधिनिमित्तनिमित्तकत्वाङ्गीकारेण षट्संज्ञाया अपि 'षड्भ्यो लुक्' इति विधिशास्त्रापेक्षितजस्शस्सापेक्षत्वेनोभयोः साम्यात्। 'उपदेशे नान्तस्य षट्संज्ञा' इत्यर्थकरणेनापि षट्त्वं वारयितुमशक्यम्, प्रातिपदकस्योपदेशाभावेन

## सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥

**सन्निपातः = द्वयोः सम्बन्धः, तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तम् । उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा । अत एवात्र सन्निपातशब्देन न पूर्वपरयोः सम्बन्ध एव, किन्तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते । अत एव 'ग्रामणि कुलम्' इत्यादौ नपुसकह्रस्वत्वेऽपि 'पिति कृति' इति तुग् न । प्रातिपदिकाजन्तत्वसन्निपातेन जातस्य ह्रस्वस्य तदविघातकत्वात् । तुक्यजन्तत्वविघातः स्पष्ट एव । न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वम्, अर्थंकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात् । किञ्च 'षत्वतुकोरसिद्धः' इत्येतद्बलात् कृतितुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः ।**

---

तादृशार्थस्य कर्तुमशक्यत्वात् । नुम्निमित्तविभक्तिविनाशसम्भावनया अकृतव्यूह' परिभाषया नुम् न स्यादिति दोषस्तु न, तस्या नवोनमतेऽसत्त्वात्, एतद्दोषवारणायापि सन्निपातपरिभाषायाः कर्त्तव्यत्वाच्च ।

**उपजीव्यविरोधस्यायुक्तत्वमिति ।** उपजीवयतीत्युपजीव्यः, ण्यन्तात् कर्त्तरि बाहुलकाद् यत् । उपकारक इत्यर्थः । तस्य यो विरोधः=नाशानुकूलो व्यापारः, स उपजीवकेन कर्त्तुमयोग्य इत्यर्थः । उपजीव्यविरोधस्य लोकेऽप्यन्याय्यत्वं प्रसिद्धम् । तदेवास्या मूलम्, न त्वियं ज्ञापकसिद्धा । 'न तिसृचतसृ' इति ज्ञापकसिद्धत्वाङ्गीकारे तु ज्ञापकसाजात्येन पूर्वंपरसम्बन्ध एवास्याः प्रवृत्त्यापत्तिः । 'शतानि' इत्यत्र नुमं प्रत्युपजीव्या विभक्तिः, तन्नाशो लुक्, तज्जनको व्यापारः षट्संज्ञाप्राप्तिः, सा उपजीवकेन नुमा न कर्त्तव्येति षट्संज्ञां प्रति न निमित्तं स्यात् ।

एवम् 'उपादास्त' इत्यत्र एज्विषयत्वमुपजीव्यजायमानात् त्वस्य घुसंज्ञाद्वारा स्वोपजीव्यैजविषयत्वविघातकम् 'स्थाघ्वोरिच्च' इति विहितं सिज्निष्ठर्मकित्त्वविनाशकं कित्त्वं प्रति निमित्तं न स्यादिति भावः ।

ननु कित्त्वस्याकित्त्वविनाशकत्वेनाभावेऽपीत्त्वं दुर्वारम्, तत्रोपजव्यविरोधाभावादिति चेत्, न; कित्त्वस्यानयाऽभावे तत्सन्नियोगशिष्टे त्वस्य 'सन्नियोगशिष्ट'न्यांयेन वारणात् । अत एव = उपजीव्यरोधस्यायुक्तमूलकत्वादेव ।

**विशेष्यविशेषणेति ।** विशेस्य विशेषणेन सह यः सन्निपातः= सम्बन्धः= अभेदरूप इति भावः, सन्निपातस्य निमित्तमात्रपरत्वात् । निमित्तमात्रविरोध उपजीव्यविरोधस्य सत्त्वात् । **अत एवेति ।** अभेदरूपसन्निपातस्य ग्रहणादेवेत्यर्थः । ग्रामणि कुलमिति । असमस्तमिदं पदद्वयम् । ग्रामण्यः कुलं ग्रामणिकुलमिति समासे तु 'इको ह्रस्वोऽङ्यो गालवस्य' इत्युत्तरपदनिमित्तकह्रस्वत्वे तु पूर्वपरसम्बन्धरूपसन्निपाताश्रयणेनैव तुग्वारणं सम्भवेत् । अत एव 'नपुसकह्रस्वत्वेऽपि' इत्युक्तम् । तत्र हि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे

**सर्वविधसन्निपातग्रहणादेव 'वर्णाश्रयः प्रत्ययो 'वर्णविचालस्यानिमित्तं स्यात्। इत्येतत्परिभाषादोषनिरूपणावसरे वार्तिककृतोक्तम्– 'न हि प्रत्ययः पूर्वपरसन्निपातनिमित्तकः, स एव च सन्निपातशब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपातनिमित्तकः इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तद्द्यंनिमित्तं स्यादित्येकदेशिनोक्तम्' इति न तद्भाष्यविरोधः।**

**किञ्चैवं 'शैवः, गार्ग्यः, वैनतेयः, इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्या वर्णाश्रय इत्यस्य वैयर्थ्यम्।**

---

'ग्रामणि' इति तुक् प्राप्तः। परिभाषायां विशेष्यविशेषणयोरभेदसम्बन्धस्यापि सन्निपातत्वाङ्गीकारेण 'ह्रस्वो नपुंसके' इति सूत्रेऽजन्तत्वस्य प्रातिपदिकविशेषणत्वेन तत्सम्बन्धप्रयुक्तो ह्रस्वः तद्विघातकस्य तुको निमित्तं न भवति, तुकि सति अजन्तत्वस्य विघातेनाजन्तप्रातिपदिकयोरभेदसम्बन्धस्यापि विघातात्। अतस्तत्र तुग् न भवति।

एवञ्च विशेष्यविशेषणसम्बन्धोऽपि सन्निपातोऽत्रावश्यमङ्गीकर्त्तव्य इति प्रघट्टकार्थः।

**तुक्यजन्तत्वविघात** इति। ननु 'यदागम'न्यायेन तुग्विशिष्टस्याजन्तत्वेन नात्र परिभाषाप्रवृत्त्यवसर इति चेत्, न; वर्णग्रहणे तस्या अप्रवृत्तेः। प्रातिपदिकत्वं तु तया स्यादेव। **अर्थकृतबहिरङ्गत्वेति।** **बहिरङ्गपरिभाषाया अप्रवृत्तेरिति**। कृति तुग्ग्रहणज्ञाप्य 'नाजानन्तर्यं' परिभाषयेत्यर्थः।

विशेष्यविशेषणसम्बन्धरूपस्यापि सन्निपातस्य ग्रहणे मानमाह— **सर्वेत्यादि**। **वर्णाश्रय** इति। "क्नमेजन्तः" इति सूत्रे भाष्ये सन्निपातपरिभाषादोषनिरूपणोपक्रमे 'तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य' इति वार्त्तिककृतोक्तम्। तस्यैतस्य लक्षणस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्। क्व ? "अत इञ्" 'दाक्षिः, प्लाक्षिः' इति। 'सन्निपात'परिभाषाश्रयणे 'दाक्षिः' इत्यत्रादन्तत्वनिमित्तक इञ् प्रत्ययः "यस्येति च" इत्यकारलोपस्य निमित्तं न स्यात्। तत्र चादन्तत्वप्रातिपदिकयोर्विशेष्यविशेषणभावरूप एव सम्बन्धोऽस्ति, न तु पूर्वपरसम्बन्धः। तस्यैव सन्निपातत्वेऽत्र तदभावेन दोषो न स्यादिति भावः।

ननु 'वर्णाश्रयः' इत्यादिवार्त्तिकोक्तं दूषणमयुक्तमेव, न प्रत्ययः सन्निपातनिमित्तकः' इति वक्ष्यमाणभाष्येण तस्य प्रत्याख्येयत्वादिति चेत् न; तस्यैकदेशित्वेन तस्य प्रत्याख्यानासम्भवात्।

एकदेशित्वमेवोपपादयति—**नहि प्रत्यय** इत्यादिना। **मत्वेति**। इत्यभिप्रायेणत्यर्थः। **तदभ्युपेत्यैवेति**। प्रत्ययस्य सन्निपातनिमित्तकत्वाभावं स्वानभिप्रेतमपि स्वीकृत्यैवेत्यर्थः। **अङ्गसंज्ञा तर्हीति**। वर्णाश्रयप्रत्ययनिमित्ताङ्गसंज्ञा प्रकृतिघटकवर्णनाशकम् "यस्येति" इति लोपं प्रत्यनिमित्तं स्यादिति।

**'ग्रामणिकुलम् ग्रामणिपुत्रः' इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथा-कथञ्चिद् बहिरङ्गपरिभाषयापि वारणं सम्भवतीति 'क्ङ्मेजन्तः' इत्यत्र 'ह्रस्वस्य पिति' इति सूत्रे चैकदेशिना तया परिभाषया तुग् वारितो भाष्ये। अत एव परिभाषाफलत्वेनेदमुक्तम् 'क्ङ्मेजन्तः' इति सूत्रे वार्त्तिककृतेति केचित्।**

**सन्निपातलक्षणविधित्वमस्या लिङ्गम्। स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातः, तद्विघातस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति।**

---

अत्र प्रथमदूषणे 'न प्रत्ययः' इति समाधानस्य 'अङ्गसंज्ञा तर्हि' इत्याशयान्तरवर्णनस्य चैकदेशित्वमित्यर्थः। एवञ्च 'वर्णाश्रयः' इति दोषदानमेव युक्तम्। तेन च विशेष्यविशेषणभावस्यापि सन्निपातपदेन ग्रहणमिति स्पष्टमेव लभ्यत इति भावः।

एकदेशित्वं साधयति—**किञ्चेति**। किमिति=कस्मादित्यर्थः। **एवमिति**। एवं सतीत्यर्थः। 'शैवः, गार्ग्यः' इत्यत्र वर्णमनाश्रित्य जायमानो यः प्रत्ययः, तन्निमित्तिका अङ्गसंज्ञा प्रकृतिघटकवर्णनाशे निमित्तं न स्यात्। लोपे हि तदन्तशिवशब्दे प्रत्ययाव्यवहितपूर्वत्वमदन्तस्याङ्गसंज्ञाया निमित्तं नङ्क्ष्यतीति भावः। तथैव 'दाक्षिः' इत्यत्राप्यङ्गसंज्ञाया अनिमित्तत्वात् तत्तात्पर्यकत्वे वर्णाश्रयत्वं प्रत्ययविशेषणं व्यर्थं स्यादिति न तदाशयकम् 'वर्णाश्रयः' इति भाष्यमिति तदाशयवर्णनमेकदेशिन एवेति स्पष्टम्।

न च 'न प्रत्ययः सन्निपातनिमित्तकः' इत्यस्य कथमेकदेशित्वमिति वाच्यम्, सिद्धान्तिना तस्य समाधानाकरणेन तस्य हेयत्वबोधनात्।

ननु 'ग्रामणि कुलम्' इत्यत्र 'वहिरङ्ग'परिभाषया तुको वारणासम्भवे तत्र तया तुको वारणपरभाष्यविरोध इत्यत आह—**ग्रामणिपुत्र** इत्यादि। **यथाकथञ्चिदिति**। 'नाजानन्तर्य'परिभाषास्मरणात् प्रागित्यर्थः। वस्तुतोऽयुक्त-मेवेत्यत आह—**एकदेशिनेति**। **अत एवेति**। वहिरङ्गपरिभाषाया अप्रवृत्तेरेवेत्यर्थः। परिभाषायाः फलत्वेन=सन्निपातपरिभाषायाः फलत्वेनेत्यर्थः। 'ई गतौ' इत्यस्मात् क्विपि नपुंसकह्रस्वत्वे 'इकुलम्' इत्यादौ तुको वारणायैतद्-विषये सन्निपातपरिभाषाश्रयणस्यावश्यकत्वेन क्वचिल्लक्ष्ये वहिरङ्गपरिभाषा-सञ्चारस्ते वृथेति भावः।

इति केचिदिति। इदञ्च मतं परिभाषेन्दुशेखरे 'उपजीव्यविरोधस्या-युक्तत्वम्' इत्यत आरभ्य 'केचित्' इत्यन्तग्रन्थेनोल्लिखितमस्ति।

अत्र मते 'न प्रत्ययः सन्निपातलक्षणः' इत्यादिभाष्यस्यैकदेशयुक्तित्वो-पवर्णनं बाधकाभावादयुक्तमित्यरुचिर्बोध्या।

**सन्निपातलक्षणविधित्वमिति**। सन्निपातनिमित्तकशास्त्रत्वमित्यर्थः।

स्वप्रवृत्तेः प्राक्="सुपि च" इत्यादिप्रवृत्तेः प्राक्, स्वनिमित्तभूतः="सुपि

नन्वेवम् 'रामाय' इत्यादौ 'सुपि च' इति दीर्घानापत्तिः, अदन्ताङ्गङे-सन्निपातेन जातस्य यादेशस्य तदविघातकत्वात्। न च यञादित्वसापेक्ष-दीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम् आरोपिता-सिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः। किञ्च, आन्तरङ्गे कर्त्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः।

किञ्चातिदेशिकसन्निपातविधाताभावमादायैतदप्रवृत्तौ 'गौरि' इत्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात् तत्रैतस्याति व्याप्तिपर कृन्मेजन्तः' इति सूत्रस्थभाष्यासङ्गतिः। सन्निपातस्याशास्त्रीयत्वा-न्नात्र स्थानिवत्त्वमिति चेत्; तर्ह्यत्रासिद्धत्वमपि कथमिति विभावय, 'अशा-स्त्रीयेऽसिद्धत्वाप्रवृत्तेः' 'ईदूदेद्' इति सूत्रे कैयटेन स्पष्टमुक्तत्वात्। एवञ्च

---

च" इत्यादिशास्त्रनिमित्तभूतः, स्वातिरिक्तशास्त्रस्य="सुपि च" इत्याद्य-तिरिक्तस्य "ङेर्यं" इत्यादिशास्त्रस्य।

एवञ्च स्वनिर्मित्तभूतः सन्निपातः स्वनिमित्तभूतसन्निपातसम्पादकस्य स्वातिरिक्तशास्त्रस्य निमित्तभूतः सन्निपातश्चेत्युभयविधोऽपि गृह्यत इति सूचितम्।

एतदुभयविधसन्निपातसंग्रहायैव 'स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतः' इत्यु-भयोपादानम्।

नन्वतिदेशस्थलेष्विव शास्त्रस्य प्रवृत्तौ निवृत्तौ वा निमित्तबुद्धेरेवापेक्षित-त्वेनाज्ञातः स्वरूपसन्निपातविघातोऽकिञ्चित्कर इत्यरुचेराह—**किञ्चेति**।

ननु "ङेर्यः" इत्यस्य जातत्वेन तत्प्रति दीर्घस्यासिद्धत्वं मा भूत्, परिभाषां प्रति तु दीर्घस्यासिद्धत्वं भविष्यत्येव, सन्निपातलक्षणविधित्वस्य परिभाषालिङ्गत्वेनास्याः "ङेर्यः" इति शास्त्रस्थत्वेन तन्निमित्तनिमित्तकत्वेन चान्तरङ्गत्वादजातत्वाच्च तां प्रति दीर्घविधेरसिद्धत्वबोधनसम्भवात्, अत आह—**किञ्चेति**।

**"कृन्मेजन्त." इति सूत्रस्थेति**। अत्र भाष्ये 'कुमारि नदि' इत्यादौ सम्बुद्ध्यानन्तर्यनिमित्तको ह्रस्वः सम्बुद्धिलोपस्यानिमित्तं स्यादिति 'सन्निपात' परिभाषाया अतिव्याप्तिदोष उक्तः। तत्र लोपोत्तरं स्थानिवद्भावेन ह्रस्व-निमित्तसन्निपातविघाताभावाङ्गीकारे भाष्यासङ्गतिः स्पष्टैवेति। तस्मादाति-देशिकसन्निपातविधाताभावमादायास्या अप्रवृत्तिर्न युक्तेति भावः।

**अनित्यत्वादिति**। 'कष्टाय' इति निर्देशादनित्यत्वज्ञापनेऽपि परिगणन-परभाष्यप्रामाण्याद् भाष्योपदर्शितस्थलेष्वेवास्या अप्रवृत्तिः। तदतिरिक्तस्थले प्रवृत्तिरेवेति नागेशभट्टेनात्र निर्णीतम्। एतद्विरुद्धं शब्देन्दुशेखरे 'गवाग्रम्' इत्यत्र सन्निपातपरिभाषाया अनित्यत्वाद् दीर्घः, 'अष्टानाम्' इत्यत्र तस्या

पूर्वत्रासिद्धीयेऽपि कार्य्यं एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत्, न 'कष्टाय' इति निर्देशेनैतस्या अनित्यत्वात्।

ययोः सन्निपातस्य विघातकं शास्त्रम्, तयोः सन्निपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः। अत एव दाक्षिः' इत्यत्राकारान्तप्रकृतोञ्सन्निपातनिमित्ताङ्गसंज्ञाऽनया परिभाषयाल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितम्' 'कृन्मेजन्तः' इति सूत्रे भाष्ये; 'न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञा' इत्युक्तमस्ति।

न च 'कुम्भकारेभ्यः, आधये' इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासङ्गतिः। अनया परिभाषया लुग् मा भूत्, अव्ययत्वं तु स्यादेव। लुका हि तदीयसन्निपातस्य विघातः, नाव्ययसंज्ञया। संज्ञाफलम् त्वकच् स्यादिति वाच्यम्, एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्तमित्यर्थनादोषात्। एतेनात्राकच् स्यादित्यपास्तम्।

न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम्, अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात्, लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात्।

'न यासयोः' इति निर्देशाच्चैषाऽनित्या। तेन नातिप्रसङ्गः। स्पष्टा चेयं 'कृन्मेजन्तः' इति सूत्रे भाष्ये। अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि—वर्णाश्रयः, प्रत्ययः वर्णविचालस्यानिमित्तम्, दाक्षिः। आत्वं पुग्विधेः—क्षापयति। पुग्ह्रस्वस्य—अदीदपत्। त्यदाद्यकारष्टाब्विधेः—या, सेति। इड्विधिराकारलोपस्य—पपिवान्। 'ह्रस्वनुड्भ्यां मतुप्'—'अन्तोदात्तादुत्तरपदात्' इति

---

अनित्यत्वाद् नुटि कृते आत्वमित्युक्तम्। तत् स्वग्रन्थविरोधाद् भाष्यविरोधाच्चायुक्तमिति रहस्यम्।

एतदुदाहरणपरभाष्यप्रामाण्येनेति। "कृन्मेजन्तः" इति सूत्रे भाष्ये 'आधये' इत्यादौ "घेर्ङिति" गुणे, 'कुम्भकारेभ्यः' इत्यादौ "बहुवचने झल्येत्" इत्येत्वे च एजन्तकृदन्तत्वेन प्राप्ताव्ययसंज्ञा सन्निपातपरिभाषया वारिता। तत्राव्ययसंज्ञा अङ्गसुपोः सन्निपातस्य साक्षान्न विघातिका, लुकैव तद्विघातात्। तथापि साक्षात् परम्परासाधारणस्य विघातकत्वस्य विवक्षितत्वात् "अव्ययादाप्सुपः" इति लुग्द्वारा तस्या उक्तसन्निपातविघातकत्वात् तत्र गुणादिकं न निमित्तं भवति, अतोऽव्ययसंज्ञा न भवति; अतस्तद् भाष्यं सङ्गच्छते। लुक इवाव्ययसंज्ञाया अप्यप्रवृत्त्या च तत्राकजपि न भवतीत्यर्थः।

क्षापयतीति। क्षीधातोर्णौ वृद्धौ 'क्रीङ्जीनां णौ' इत्येच आत्वं धातुणिचोरानन्तर्यरूपसन्निपातविघातकस्य पुको निमित्तं न स्यात्। अत्राङ्गस्य य

मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य—अग्निमान्, परमवाचा। नद्योर्ह्रस्वत्वं सम्बुद्धिलोपस्य—'नदि, कुमारि' इत्यादि। यादेशो दीर्घत्वस्य—कष्टाय। इतोऽन्यत्र प्रवृत्तिरेव, 'दोषाः खल्वपि साकल्येन परिगणिताः' इति भाष्योक्तेरित्यन्यत्र विस्तरः ॥ ८६ ॥

ननु 'पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः' इत्यादौ 'द्विगोर्लुक्' इत्यणो लुकि 'लुक्तद्धित०' इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिः, अत आह—

सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ॥ ८७ ॥

अत्र च 'बिल्वकादिभ्यश्छस्य लुक्' इति सूत्रस्थं छग्रहणम् ज्ञापकम्। तद्धि छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम्। कृतकुगामा नडाद्यन्तर्गता बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्दे।

---

आकारः, तस्य पुक् इत्यवयवभक्तं पुकं मत्वामं दोषोपन्यास इति कैयटः। द्योते तु 'यदागम'परिभाषया पुग्विशिष्टस्याङ्गस्यागमिग्रहणग्राह्यत्वेऽपि 'निर्दिश्यमान'-परिभाषया सूत्रोपात्ते निर्दिश्यमान एव निमित्तान्वयात् पुकोऽङ्गभक्तत्वेऽपि दोषोपन्यासो युक्त एवेत्युक्तम्। शेषं स्पष्टम् ॥ ८६ ॥

**पञ्चेन्द्राण्य** इति। पञ्चेद्राण्यो देवता अस्येति पञ्चेद्रः' इत्यत्र 'सास्य देवता' इति तद्धितार्थे विषये 'तद्धितार्थोत्तर' इति द्विगौ, ततोऽणि, तस्य 'द्विगोर्लुगनपत्ये' इत्यनेन लुकि 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुकि, आनुकः श्रवणापत्तिरित्यर्थः।

**सन्नियोगशिष्टानामिति**। ननु द्वयोर्मध्ये एकस्य निर्धारणेऽन्यतरशब्दप्रयोगात् 'सन्नियोगशिष्टानाम्' इति बहुवचनमनुपपन्नमिति चेत्, न; सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च सन्नियोगशिष्टौ चेत्यष्टाध्याय्यां यावन्तः सन्नियोगशिष्टाः, तेषामेकशेषेण बहुवचनोपपत्तेः।

ननु 'पञ्चेन्द्रः' इत्यत्रेन्द्रशब्दाकारस्यानुगाकारेण सह यो दीर्घैकादेशः, तद्विशिष्टस्य परादिवद्भावेनानुक्त्वादानुग्निवृत्तावकारस्यापि श्रवणं न स्यादिति चेत्, न; 'अन्तरङ्गानपि विधीन्' इति न्यायेन लुकः प्रागेकादेशाप्रवृत्तेः।

**छग्रहणं ज्ञापकमिति**। अयमाशयः—बिल्वादीनां नडाद्यन्तर्गतत्वात् तेभ्यः 'नडादीनां कुक् च'इत्यनेन चातुरर्थिकः कुक्सन्नियोगशिष्टः छप्रत्ययो विधीयते। तदुत्तरम् 'बिल्वकादिभ्यश्छस्य लुक्' इत्यनेन कृतकुगागमेभ्यस्तेभ्यः परस्य छस्य तद्धिते परे लुग् विधीयते। तेन बिल्वा यस्यां सन्ति, सा बिल्वकीया, तस्यां भवो 'बैल्वकः' इति सिद्ध्यति। तत्र लुक्शब्दस्य प्रत्ययमात्रलोपाभिधायकत्वात् छप्रत्ययभिन्नस्य च बिल्वकादिशब्दानुच्चार्यं विहितत्वरूपप्रतिपदोक्तत्वाभावात् 'वक्ष्यमाणप्रतिपदोक्त' परिभाषया छस्यैव लुग् भविष्यतीति छग्रहणं व्यर्थं सत् छस्यैव लुग् यथा स्यात् तत्सन्नियोगशिष्टकुको निवृत्तिर्मा भूदित्यर्थे पर्यवस्यति।

न चैवमपि छग्रहणं व्यर्थम्, कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः; अन्यथा 'बिल्वादिभ्यः' इत्येव वदेत्। लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम्, ततोऽपि प्रतिपदोक्तत्वेन 'बिल्वादिभ्योऽण्' इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात्। समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्यायसिद्धापीयम्।

यत्तु, 'णाविष्ठवत्' इत्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थम्, अन्यथा 'एतयति' इत्यादौ टिलोपेनैव ङीपि निवृत्ते 'सन्नियोगशिष्ट' परिभाषया तस्यापि निवृत्त्या 'एतयति' इत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति 'टेः' इति सूत्रे कैयटः, तत्, न, 'इडबिडमाचष्ट ऐडबिडयति' इत्यादौ पुंवत्त्वस्यावश्यकत्वात्। 'एनेयः श्यैनेयः' इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः ॥ ८७ ॥

---

प्रकृतपरिभाषाऽभावे तु कुग्निवर्तकवचनाभावादेव तदनिवृत्तेः सिद्धत्वात् तद्व्यर्थं सदेनां ज्ञापयति। ज्ञापितायां चास्यां छेन सह कुकोऽपि निवृत्तेः प्राप्त्या छस्यैव निवृत्तिः, न तु कुक इति बोधनेन तच्चरितार्थमिति।

ज्ञापितेऽस्मिन् न्याये छग्रहणस्य वैयर्थ्यमाशङ्कते—**न चैवमपीति**। इदं तात्पर्यम् 'बिल्वादिभ्यो लुक्' इत्येतावन्मात्रात्रोक्तावपि लक्षणप्रतिपदोक्तपरिभाषया 'नडादीनां कुक् च' इत्येतद्विहितबिल्वकादिप्रकृतिकच्छप्रत्ययव्यतिरिक्तस्य कस्यचिल्लुगप्राप्त्या 'बिल्वकादिभ्यः' इति कृतकुगागमानुवादसामर्थ्यादेव कुक्श्रवणं सेत्स्यति।

एवञ्च छग्रहणस्योक्तप्रयोजनाभावेन तन्निष्फलम्। समाधत्ते—**ततोऽपीति**। छप्रत्ययादपीत्यर्थः। नडादिपदेन नडादिगणान्तर्गतबिल्ववेण्वादिशब्दज्ञानापेक्षया विशिष्य निर्दिष्टबिल्वादिपदेन बिल्वव्रीह्यादिशब्दज्ञानस्य झटिति जायमानत्वात् तदुद्देश्यकस्य "बिल्वादिभ्योऽण्" इति विकारार्थकाणः शीघ्रतरोपस्थितिकत्वेन प्रतिपदोक्तत्वात्।

**समुच्चयार्थकेति**। अयं भावः—समुच्चयो हि साहित्यम्, तच्च प्रकृते विधेययोरेकप्रयोगघटकतया स्थितिमत्त्वरूपम्, तदेकस्य निवृत्तावपरस्य स्थितौ नोपपद्यते, द्वयोरेकप्रयोगे स्थित्यभावात्। अतस्तत्र चशब्देनैव परिभाषाबोध्यार्थलाभात् तत् फलितार्थरूपैवेयमिति।

"टेः" इति सूत्रे कैयटेनास्या अनित्यत्वं ज्ञापितम्। तदनूद्य प्रत्याचष्टे—**यत्त्वित्यादिना**। तत्र सूत्रे हि—'एनीमाचष्टे एतयति; श्येनीमाचष्टे श्येतयति' इत्यादौ णौ प्रातिपदिकस्येष्ठवद्भाववचनाट्टिलोपविधानेन ङीप्रूपे टिभागे लुप्ते ङीप्सन्नियोगशिष्टस्य नत्वस्यापि प्रकृतपरिभाषया निवृत्त्योक्तरूपसिद्धेस्तत्र पुंवद्भावो व्यर्थः। एवञ्च तत्र 'णाविष्ठवत् प्रातिपदिकस्य'

ननु 'चुरा शीलमस्याः सा चौरी' इत्यादौ शीलम् 'छत्रादिभ्यो णः' इति णे ङीप् न प्राप्नोतीत्यत आह--

**ताच्छीलिके णेऽनूकृतानि भवन्ति ॥ ८८ ॥**

'अन्' इत्यणि विहितप्रकृतिभावबाधनार्थम् 'कार्मस्ताच्छील्ये' इति निपातनमस्याः ज्ञापकम्। ताच्छीलिकणान्तात् 'अणो द्वयचः' इति फिञ्सिद्धि-रप्यस्या प्रयोजनमिति नव्याः। तच्छीलिक इत्युक्तेः 'तदस्यां प्रहरणम्' इति णे दाण्डेत्येव। कार्मः' इति सूत्रे भाष्ये स्पष्टा ॥ ८८ ॥

---

इतीष्ठवद्भावचनस्योक्तस्थले पुंवद्भावरूपं भाष्योक्तं प्रयोजनं न सङ्गच्छेत। अतः पुंवद्भाववचनमस्या अनित्यत्वज्ञापकम्। तेन 'श्यैनेयः' इत्यादि सिद्धचतीति कैयटेनोक्तम्। **तन्नेति।** इडविट्शब्दात् "जनपदशब्दात् क्षत्रियादञ्" इत्यपत्यार्थकस्याञ्प्रत्ययस्य स्त्रियाम् "अतश्च" इत्यनेन लुकि इडविडमाचष्टे इत्याचक्षाणार्थे णिचि पुंवद्भावेन स्त्रीत्वप्रयुक्तलुको निवृत्तौ 'एडविडयति'; एवं दरदोऽपत्यं स्त्री दरत्, तामाचष्टे 'दारदयति' इत्यादौ पुंवद्भावविधानस्य चारितार्थ्यात् कैयटोक्तज्ञापनमयुक्तमित्यर्थः।

नन्वस्या अनित्यत्वे 'एन्या अपत्यम्--ऐनेयः, श्येन्या अपत्यम्--श्यैनेयः; इत्यादौ "यस्येति च" इत्यनेनेकारलोपेऽपि तत्सन्नियोगशिष्टस्य नादेशस्या-निवृत्त्येष्टरूपं सिद्धयति। नित्यत्वे तु न सिद्धयेत्, अत आह--**ऐनेयः, श्यैनेयः' इत्यादीति। स्थानिवत्त्वेन सिद्धमिति।** ईकारलोपस्य स्थानिवत्त्वेनेकारबुद्धावी-कारापायाभावात् परिभाषाया अप्रवृत्तेः।

ननु तत्र स्थानिभूतादचः पूर्वत्वेन दृष्टस्य नकारस्य कार्यान्तराभावात् स्थानिवत्त्वमिति चेत्, न; पूर्वविधावित्यत्र विधानं विधिरिति भावसाधनस्यापि विधिशब्दस्याङ्गीकाराद् विधानं विधिः, भावः, सत्ता, पूर्वस्य विधौ सत्तायां कर्त्तव्यायामित्यर्थेनादोषात्। कर्मसाधनविधिशब्दाश्रयणेऽपि परिभाषया नकारस्य निवृत्तिरूपे कार्ये कर्त्तव्ये स्थानिवत्त्वप्रवृत्तेरव्याहतत्वाच्चेति दिक् ॥८७॥

**शीलमिति।** 'शीलम् इत्यनुवर्तमाने इत्यर्थः। **इति निपातनमस्या ज्ञापकमिति।**

अयमाशयः--कर्म शीलमस्येति कार्म इत्यत्र "नस्तद्धिते" इति टिलोपस्य वाधके "अन्" अणि अन् प्रकृत्या स्यादिति प्रकृतिभावे प्राप्ते तं बाधितुम् "कार्मस्ताच्छील्ये" इति टिलोपनिपातनमस्या ज्ञापकम्। अस्या अभावे अणि विहितस्य प्रकृतिभावस्य णेऽप्राप्त्या "नस्तद्धिते" इत्यनेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव।

**'दाण्डा' इत्येवेति।** ताच्छीलिकत्वाभावाद् दण्डः प्रहरणमस्यामिति 'दाण्डा क्रीडा' इत्यत्र अण्कार्याप्रवृत्त्या टाबेव भवतीत्यर्थः। शेषं सुगमम् ॥८८॥

ननु 'कंसपरिमृड्भ्याम्' इत्यादौ मृजेर्वृद्धिः' दुर्वारा, इत्यत आह—

धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८९ ॥

भ्रौणहत्ये तत्त्वनिपातनमस्या ज्ञापकम् ।

'धातो स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति पाठस्तु 'प्रसृड्भिः' इत्यादौ 'अनुदात्तस्य चर्दुपधस्य' इत्यमापादनेन भाष्ये दूषितः ।

यत्कार्यं प्रत्ययनिमित्तं तत्रेयं व्यवस्थापिका । तेन पदान्तत्वनिबन्धनं 'नशेर्वाः' इति कुत्वम् 'प्रणग्भ्याम्' इत्यादौ भवत्येव । इयङादिविधौ तु नैषा, 'न भूसुधियोः' इति निषेधेनानित्यत्वात् । 'मृजेर्वृद्धिः' इत्यत्र भाष्यं स्पष्टा ॥ ८९ ॥

---

ननु प्रत्ययसामान्ये विहिता "मृजेर्वृद्धिः" "कंसपरिमृड्भ्याम्" इत्यादौ विभक्तिसंज्ञकप्रत्ययेऽपि प्रवर्तेत ? इत्यत आह—**नन्विति** । भ्यामि शङ्काकरणं भाष्योक्तोदाहरणानुरोधेन विभक्तिमात्रे दोषः शङ्कनीयः ।

**धातोः कार्यमुच्यमानमिति** । धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं कार्यं धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये परे भवतीत्यर्थः । धातुत्वव्याप्यमृजत्वावच्छिन्नोद्देश्यताकं कार्यं मृजेरुच्यमाना वृद्धिर्धातुत्वावच्छिन्नोद्देश्यताकप्रत्यये परे स्यात् । प्रकृते भ्यामस्तथात्वाभावाद् वृद्धिर्न भवति । क्विपस्तथात्वेऽपि "क्ङिति च" इति निषेधात् तन्निमित्ता वृद्धिर्न भवति ।

**ज्ञापकमिति** । भ्रूणं हतवान् 'भ्रूणहा' "ब्रह्मभ्रूण०" इति क्विप् । भ्रूणघ्नो भावः कर्म च 'भ्रौणहत्यम्' "गुणवचनब्राह्मणादिभ्यः" इति ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । अत्र "हनस्तोऽचिण्णलोः" इत्यनेनैव हनस्तकारादेशे सिद्धे "दाण्डिनायन" इति तत्त्वनिपातनं व्यर्थं सदस्या ज्ञापकमित्यर्थः । ज्ञापिते च ष्यञो धातुविहितप्रत्ययत्वाभावात् तत्त्वाप्राप्तौ निपातनं चरितार्थम् ।

**धातोः स्वरूपग्रहण इति** । धातुत्वव्याप्यानुपूर्व्यवच्छिन्नोद्देश्यताकं कार्यमित्यर्थः ।

**भाष्ये दूषित इति** । तत्र हि— यदि स्वरूपग्रहण इत्युच्यते, 'प्रसृड्भ्याम्; प्रसृड्भिः' "अनुदात्तस्य चर्दुपध०" इति अम् प्राप्नोति । एवं तर्हीयं परिभाषा कर्त्तव्या 'धातोः कार्यमुच्यमानम्' इत्युक्तम् । सिद्धान्ते त्वनुदात्तत्वविशिष्ट ऋदुपधत्वस्य धातुत्वव्याप्यत्वाद् न दोषः ।

**यत्कार्यं प्रत्ययनिमित्तमिति** । धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्यनिमित्तत्वेनाश्रीयमाणः प्रत्ययो धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रय एव गृह्यत इत्यर्थः । तेन 'प्रनग्भ्याम्' इत्यत्र प्रत्ययस्य निमित्तत्वेनाश्रयणाभावाद् नास्याः प्रवृत्तिरिति भावः ।

**ननु 'सर्वक, उच्चकैः' इत्यादौ सर्वनामाव्ययसंज्ञे न स्याताम्, अत आह—**

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ९० ॥**

**'नेदमदसोरकोः' इति सूत्रे 'अकोः' इति निषेधोऽस्या ज्ञापकः । 'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति 'येन विधिः' इति सूत्रे भाष्ये पाठः ॥ ९० ॥**

**ननु 'गातिस्थाघुपाभूभ्यः' इति सिचो लुक् 'अपासीत्' इत्यादौ पातेरपि स्यात्, अत आह—**

**लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९१ ॥**

---

वस्तुतो धातूद्देशतकप्रत्ययस्य क्विपः सत्त्वात् "नशेर्वा" इत्यादौ परिभाषाप्रवृत्तावपि न क्षतिः ।

**अनित्यत्वादिति** । "एरनेकाचः" इत्यत्रास्याः प्रवृत्तौ सुपि यणादेशाप्राप्त्या सुधीशब्दस्य यण्निषेधो व्यर्थः, 'अचिश्नुधातुभ्रुवाम्' इत्यत्र प्रवृत्तौ च 'सुधियोः' इति निर्देशोऽसङ्गतः स्यात् । अत इयमनित्येतीयङादिविधौ नास्याः प्रवृत्तिरित्यर्थः ।

यदि तु ज्ञापकसाजात्याद् धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नबोधकपदोपादान एवैतस्याः प्रवृत्तिरिति मन्यते, तदा "अचिश्नुधातुभ्रुवाम्" इत्यादौ धातुपदोपादनादेवास्या न प्रवृत्तिरित्यनित्यत्वज्ञापनाभावेऽपि न दोषः ॥८९॥

**निषेधोऽस्या** इति । 'अकोः' इति निषेध इत्यर्थः । अन्यथा 'इमकैः, अमुकैः' इत्यत्र साकच्कयोरिदमदसोः शब्दान्तरत्वेन "नेदमदसोः" इति निषेधस्य तत्राप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव ।

यदा तु "नेदमदसोः" इति सूत्रे भाष्ये 'इमौ द्वौ प्रतिषेधावुच्येते, उभौ शक्यावक्तुम् । कथम् ? एवं वक्ष्यामि—इदमदसोः कादिति । "अतो भिस ऐस्" इत्येव सिद्धे नियमार्थं भविष्यति इदमदसोर्भिस ऐः स्यात्, तर्हि कादेव, नान्यत इत्यको ग्रहणं प्रत्याख्यातम्' इत्युच्यते, तदा तु "एतत्तदोस्सुलोपः" इत्यत्रत्याकोरिति प्रतिषेधोऽस्या ज्ञापकः । स चैषक इत्यत्र सुलोपाभावार्थः, तस्य शब्दान्तरत्वादेव सुलोपाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव । विप्रतिषेधसूत्रेऽकोरित्यस्य ज्ञापकत्वोपपादनपरं भाष्यं तु सूत्ररीत्येति बोध्यम् ।

**तदेकदेशभूतमिति** । एकदेशशब्दस्यावयवत्वपरत्वेनाकच्यवयवत्वारोपात् तदवयवत्वारोपात् तदवयवस्तद्ग्रहणेन गृह्यत इति तस्यार्थः । न चाकच्यवयत्वारोपे मानाभावः, अस्यैव भाष्यस्य मानत्वात् । 'भिनत्ति' इत्यादौ श्नमोऽवयवत्वं तु "मिदचोऽन्त्यात्" इति सिद्धमेव ।

एवञ्च 'तन्मध्यपतितः' इति 'तदेकदेशः' इति चैकैवेति सिद्धम् ॥९०॥

**अपासीदिति** । 'पा रक्षणे' इत्यस्माल्लुङि सिचि "यमरमनमाताम्" इति सगिटोः; "इट ईटि" इति सिज्लोपे च रूपं बोध्यम् ।

**अस्याञ्च ज्ञापकः 'स्वरतिसूति०' इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ् निर्देश इति कैयटः। तत्, न; साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासम्भवात्।**

**ध्वनिता चेयं परिभाषा 'यस्य विभाषा' इत्यत्र भाष्ये। तत्र हि विदितः' इति प्रयोगे निषेधमाशङ्क्य 'यदुपाधेर्विभाषा, तदुपाधेर्निषेधः 'विभाषा गमहनविदविशाम्' इति सूत्रे 'शविकरणस्य ग्रहणं लुग्विकरणश्चायम्' इत्युक्तम्। तत्र चो हेतौ; यतोऽयं लुग्विकरणः, अतो विशिसाहचर्याच्छविकरणस्य ग्रहणम्, न तु हनिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति तदाशयः।**

---

**सूतिसूयत्योरिति**। 'षूङ् प्राणिप्रसवे, षूङ् प्राणिगर्भविमोचने' इत्यनयोरित्यर्थः। **साहचर्यादलुग्विकरणस्यैवेति**। पूर्वोत्तरसाहचर्यादित्यर्थः।

ननु 'स्वरतिधूञूदित्सूङोः' इति न्यासे ऊदितां लुग्विकरणालुग्विकरणसाधारण्यात् स्वरतिधूञोर्व्यवहितत्वाच्च साहचर्यासम्भवात् षूङित्युक्तावुभयोर्ग्रहणसम्भवे पृथङ् निर्देशो ज्ञापक एव।

न च तथा न्यासे पृथङ् निर्देशेन ज्ञाप्या परिभाषा 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य' इति, उत 'लुग्विकरणस्यैव' इत्यत्र गमकाभाव इति वाच्यम्, 'यस्य विभाषा' इति सूत्रस्थभाष्यप्रामाण्यात्, 'अलुग्विकरणस्यैव ग्रहणम्' इत्यस्य ज्ञापनादिति चेत्, न; पृथङ्निर्देशस्य परिभाषाज्ञापकत्वम् 'अलुग्विकरणस्यैव' इत्यत्र भाष्यगमकत्वञ्चेत्युभयकल्पनापेक्षया तद्भाष्यप्रामाण्यात् ध्वननकल्पनाया एव न्याय्यत्वात्।

वस्तुतस्तु ध्वनितत्वपक्षे 'लुग्विकरणालुग्विकरणयोरलुग्किरणस्य' इति त्वपूर्ववचनमङ्गीकरणीयं भवति।

ज्ञापकसिद्धत्वपक्षे तु ज्ञापकसिद्धस्यापूर्वत्वाभावेन लाघवमिति कैयटोक्तं सम्यगवेति केचित्।

**विदित इति**। वेत्तेर्निष्ठान्तस्येदं रूपम्। दिवादिरुधाद्योरनुदात्तत्वादिटो निषेधः स्यात्।

**निषेधमाशङ्क्येति**। 'विभाषागमहनविदविशाम्' इति क्वसोरिड्विकल्पविधानात् 'यस्य विभाषा' इत्यनेनेटो निषेध इत्यर्थः।

**अस्यापि**=लुग्विकरणस्यापि। अत एव ज्ञापकसिद्धत्वाभावादेवेत्यर्थ।

अस्या उक्तभाष्येण ध्वननादित्यर्थो वा। **नोक्तमिति**। ज्ञापकसिद्धत्वे गमकाभावात् 'लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्य' इत्येव वदेदिति भावः।

ध्वननमेव द्रढयति—**कण्ठतस्त्विति**। नन्वनया परिभाषया 'गातिस्था' इति लुग् भवतेः सिचः स्यात्, न त्वस्तेर्भू भावे ततः परस्यापीति चेत्, न; धर्मिग्राहकमानेनादेशत्वानाक्रान्त एवैतत्प्रवृत्तेः। घटादौ च परिभाषाद्वयबलाद् द्वयोर्ग्रहणमिति बोध्यम्॥ ६१॥

अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम्। कण्ठतस्तु भाष्ये एषा क्वापि न पठिता।

'गातिस्था' इति सूत्रे 'पिबतेर्ग्रहणं कर्तव्यम्' इति वार्त्तिककृता, 'सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणम्' इति भाष्यकृता चोक्तम्। 'स्वरतिसूति' इति सूत्रे कैयटेन च स्पष्टमुक्ता॥ ९१॥

ननु 'प्रजिघाययिषति' इत्यादौ 'हेरचङि' इति विधीयमानं कुत्वं न स्यात्, अत आह--

**प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्॥ ९२॥**

---

**प्रजिघाययिषतीति।** प्रपूर्वात् हि गतौ, वृद्धौ चेत्यस्माद्धेतुमण्णिचि वृद्धावायादेशे, ततः सनि द्वित्वहलादिःशेषयोर्ह्रस्वे च 'कुहोश्चुः' इति चुत्वे 'सन्यतः' इतीत्वे 'हेरचङि' इति उत्तरखण्डहकारकुत्वे, लटि, शपि 'सार्वधातुकार्धधातुकयोः' इति गुणेऽयादेशे सनः सस्य 'आदेशप्रत्ययोः' इति षत्वे च रूपं बोध्यम्। **न स्यादिति।** ण्यन्तस्य शब्दान्तरत्वेन 'हि' रूपत्वाभावादिति भावः।

ननु स्थानिवद्भावेन यान्ते; इकारान्ते वा तत्त्वमस्त्येवेति चेत्, न; प्रत्यासत्त्याऽभ्यासाङ्गसंज्ञयोरेकप्रत्ययनिमित्तकत्व एवाभ्यासकार्यविज्ञानादत्राङ्गसंज्ञाया णिनिमित्तकत्वेनाभ्याससंज्ञायाःसन्निमित्तकत्वेनोभयोरेकप्रत्ययनिमित्तकत्वाभावात्। अत एव हन्धातोर्ल्युटचनादेशे तदन्तात् क्यचि, 'क्यचि च' इत्यस्येत्वे हननीयेत्यस्मात् सनि इटि च 'अतो लोपः' इत्यलोपे ततो द्वित्वहलादिःशेषाभ्यासह्रस्वकुत्वेषु 'जिहननीयिषति' इत्यत्र 'अभ्यासाच्च' इति कुत्वं न।

ल्युण्णिमित्तिका—अङ्गसंज्ञा, अभ्याससंज्ञा सन्निमित्तिकेति उभयोरेकप्रत्ययनिमित्तकत्वाभावः स्पष्ट एव।

न चात्र प्रत्यासत्त्याश्रयणे मानाभावः, 'ह्वः सम्प्रसारणम्' इति सूत्रस्य मानत्वात्। तथाहि—ह्वेञ् स्पर्धायाम्, शब्दे च—इत्यस्माद् 'हेतुमण्ण्यन्ताल्लुङि' अनेन सम्प्रसारणे द्वित्वादावडागमे च' 'अजूहवत्' इति जाते तत्र 'जुहाव जुहुवतुः' इत्यादाविव 'अभ्यस्तस्य च' इत्यनेनैव सम्प्रसारणे सिद्धे तद्व्यर्थं सदुक्तार्थे ज्ञापकं भवति।

'अजूहवत्' इत्यत्राङ्गसंज्ञाया णिनिमित्तकत्वेनाभ्याससंज्ञायाश्चङ्निमित्तकत्वेन चोभयोः संज्ञयोर्भिन्नप्रत्ययनिमित्तकत्वेन 'अभ्यस्तस्य च' इति सम्प्रसारणाप्राप्तौ संज्ञयोर्भिन्ननिमित्तकत्वेऽपि सम्प्रसारणार्थम् 'ह्वः सम्प्रसारणम्' इति सूत्रमावश्यकमिति स्वांशेऽपि चारितार्थ्यम्।

जुहाव, जुहुवतुः; इत्यत्र तूभयोः संज्ञयोरेकप्रत्ययनिमित्तकत्वेन 'अभ्यस्तस्य च' इति सम्प्रसारणमिति बोध्यमिति दिक्।

**अचङीति प्रतिषेध एवास्या ज्ञापकः। इयं च कुत्वविषयैव। 'हेरचङि' इति सूत्रे भाष्ये स्पष्टेयम् ॥ ९२ ॥**

**ननु 'युष्मभ्यम्' इत्यादौ 'भ्यसः' इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोपे एत्वं स्यात, अत आह—**

**अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९३ ॥**

**अङ्गे = अङ्गाधिकारे वृत्तम् = निष्पन्नं यत्कार्यम्, तस्मिन् सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ = प्रवृत्तावविधानं भवतीत्यर्थः।**

**एषा च 'ज्यादादीयसः' इत्याद्विधानेन ज्ञापिता। अन्यथेकारलोपेन**

---

प्रकृतिग्रहणे = प्रकृतिबोधकशब्दग्रहणे सति। तेन ण्यधिकस्य ग्रहणम्। अपिना केवलस्यापीत्यर्थः। णिचो लोपेऽपि प्रवृत्तये ण्यन्तस्येति विहाय ण्यधिकस्येत्युक्तम्।

**ज्ञापक** इति। अन्यथा 'अजीहयत्' इत्यत्रापि ण्यन्तस्य प्रकृत्यन्तरत्वेनेव कुत्वाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव। अन्यत्रानुपयोगाद्धर्मिग्राहकमानाच्चाह—**इयञ्च कुत्वविषयैवेति।** 'हेश्चङि प्रतिषेधानर्थक्यम्; अङ्गान्यत्वात्। ज्ञापकं त्वन्यत्र ण्यधिकेऽपि कुत्वविज्ञानार्थम्' इति भाष्योक्तेरिति भावः। तदेतदाह—**हेरचङीति सूत्रे भाष्ये स्पष्टमिति** ॥ ९२ ॥

**अन्त्यलोप** इति। 'शेषे लोपः' इत्यन्यस्य लोपे च कृते इत्यर्थः।

एषा चेति। चशब्दस्तु विधानेनेत्युत्तरं योज्यः। स च 'ज्ञाजनोर्जा' इति जादेशविधानसमुच्चायकः। अन्यथा जभावे कृते 'अतो दीर्घो यञि' इति दीर्घेण 'जानाति इत्यस्य सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। **इत्याद्विधानेनेति**। इति = सूत्रेण, 'ज्यायान्' इत्यत्रेति बोध्यम्। अन्यथा=आद्विधानाभावे। **इकारलोपेनेति**—'बहोर्लोपो भू च' इत्यतो लोप इत्यनुवतमाने 'ज्यायादोयसः' इत्यनेनेति भावः **सिद्धे**=ज्यायानिति रूपे सिद्धे। **अत एव**=धर्मिग्राहकमानादेव। **भिन्नस्थानिकेति**। अत एव 'यूयम्, वयम् इत्यत्र यूयवयादेशोत्तरममादेशस्य स्थानिवद्भावेन जस्त्वेन' जशः शी न। अपिना 'ज्ञाजनोर्जा' इति ज्ञापकात् सामानस्थानिकाङ्गकार्यविषयत्वसमुच्चयः तेन 'युष्मभ्यम् इत्यादौ 'शेषे लोपः' इत्यन्तलोपोत्तरं 'वहुवचने झल्येत्' इत्येत्वं न। एतेन धर्मिग्राहकमानाद्भिन्नस्थानिकाङ्गकार्यविषयैवैषा, न तु समानस्थानिकाङ्गविषयापीति शङ्का निरस्ता।

नन्वनया 'द्वाभ्याम्, ताभ्याम्' इत्यादौ त्यदाद्यत्वोत्तरम् 'सुपि च' इति दीर्घो न स्यात्, 'तस्मै, कस्मै' इत्यत्र त्यदाद्यत्वकादेशोत्तरं स्मायादेशो न स्यात्, अत आह—**इयञ्चानित्येति**। **द्वयोरिति निर्देशादिति**। 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' इति सूत्रे इत्यर्थः।

तत्र त्यदाद्यत्वोत्तरमनया 'ओसि च' इत्यस्याप्राप्तौ निर्देशासङ्गतिः स्पष्टैव।

**'अकृत्सार्व' इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अत एव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा। इयं चानित्या द्वयोरिति निर्देशाद्। अनित्यत्वबललभ्यार्थमादायैव 'भ्यसोऽभ्यम्' इति सूत्रे भाष्ये निष्ठितस्येति पठितम्।**

**केचित्तु, अनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते, अत एव 'ज्ञाजनोर्जा' 'ज्यादादीयसः' इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः, स न वक्तव्य इत्येव प्रयोजनमुक्तम् न तु लक्ष्यसिद्धि-**

---

इदमुपलक्षणम्। 'यत्तदेतेभ्यः' 'हलि सर्वेषाम्' इत्यादेरपि। **अर्थमादायैवेति।** न तु ज्ञाप्यकुक्षौ पठितमिति। तत्रास्य प्रवेशोऽङ्गाधिकारस्थे कार्ये प्रवृत्ते सति यत्र परिनिष्ठितं रूपं भवति, तत्र पुनरङ्गाधिकारस्थं कार्यं न भवतीत्यर्थात् 'शेषे लोपः' इत्यन्यलोपे कृते 'युष्मभ्यम्' इत्यस्य परिनिष्ठितत्वेन तत्रानयैत्त्वाप्राप्त्या लक्ष्यसिद्धावपि 'ज्यायान्, जानाति' इत्यत्रेकारलोपजभावयोः 'ज्यायान्, जानति' इत्यनयोः परिरिष्ठितत्वाभावेनैतस्या अप्रवृत्तौ 'अकृत्सार्व' इति 'अतो दीर्घो यञि' इत्याभ्यां दीर्घेण रूपसिद्धेः, तस्य स्वांशे चारितार्थ्याभावः स्पष्ट एव।

**केचित्त्विति।** अत्रारुचिबीजं तु 'युष्मभ्यम्' इत्यत्रैव वारणाय 'भ्यसो भ्यम्' इत्यत्र 'अभ्यम्' इति च्छेदः; 'पिब' इत्यत्र स्थानिवद्भावेनाङ्गत्वं स्वाश्रयं लघूपधत्वञ्चाश्रित्य जायमानलघूपधगुणवारणाय पिबादेशोऽदन्तः, अथवा कुरुबधपिबां प्रतिषेधो वक्तव्यः' इति स्थानिवत्त्वप्रतिषेधः' 'यूयम्' इत्यत्र जसः शीवारणाय 'ङे प्रथमयोरम्' इत्यत्र मकारान्तरं प्रश्लिष्य 'अम्' मान्त एवावशिष्यते; तथवा 'जसः शी' इत्यत्र सकारान्तरं प्रश्लिष्य 'जसः शी' इत्यादि तत्र तत्रानेककल्पनापेक्षया परिभाषाश्रयणमेव वरमिति। **न किञ्चल्लक्ष्यमिति।** वृक्षं वृश्चतीति, तमाचष्टे वृक्षवयतोति; वृत्रहणमाचष्टे वृत्रहयति; जगदाचष्टे जगयतीत्यादौ 'तत्करोति' इति णिचि 'णाविष्ठवत्' इत्यतिदेशात् 'टेः' इति टिलोपोत्तरम् 'अत उपधायाः' इति प्राप्तवृद्धिवारणाय। एवं दूरशब्दाण्णिचि 'स्थूलदूर' इत्यादिना यणादिपरस्य लोपे पूर्वस्य गुणेऽवादेशोत्तरम् 'अत उपधायाः' इति प्राप्तवृद्धिवारणाय। एवं दूरशब्दाण्णिचि 'स्थूलदूर' इत्यादिना यणादिपरस्य लोपे पूर्वस्य गुणेऽवादेशोत्तरम् 'अत उपधायाः' इति वृद्ध्यभावाय परिभाषाया आवश्यकत्वेनानेकफलसत्त्वाच्चिन्त्यमेवैतत्। **अत एव** =अस्य लक्ष्यसाधकत्वादेव। **न तु लक्ष्यसिद्धिरूपमिति।** 'दवयति' इत्यादावित्यर्थः।

अवतरणोक्तलक्ष्यस्यान्यथासिद्धिमाह—**तदुक्तमिति।** भाष्ये इति शेषः। अस्या लक्ष्यसाधकत्वमभिप्रेत्योक्तमित्यर्थः। **अभ्यमिति च्छेद इति।** अत एव 'न चादेशो हलादिरस्ति' इति 'युष्मदस्मदोरनादेशे' इति सूत्रस्थं भाष्यं सङ्गच्छते। **अन्त्यलोप एवेति।** अत एव 'लिङ्गाभावाट्टिलोपवचानानर्थक्यम्' इति 'साम आकम्' इत्यत्र भाष्ये उक्तम्। शेषग्रहणं तु भाष्ये प्रत्याख्यातमेव।

रूपम्। तदुक्तम्---'भ्यसो भ्यम्' इत्यत्र 'अभ्यम्' इति च्छेदः 'शेषे लोपः' चान्त्यलोप एव'अतो गुणे'इति पररूपेण सिद्धम् 'युष्मभ्यम्' इत्यन्यत्र निरूपितम्।

एवञ्च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यम् 'भ्यसो भ्यम्' इति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ।। ९३ ।।

यत्तु 'ओरोत्' इति वाच्ये 'ओर्गुणः' इति गुणग्रहणात्--

संज्ञापूर्वकविधेरनित्यत्वम् ।।९४ ।।

इदञ्च विधेयकोटौ संज्ञापूर्वकत्व एव। तेन 'स्वायम्भुवम्'इत्यादि सिद्धम् ।। ९४ ।।

तथा निलोडित्येव सिद्ध आनिग्रहणात्--

आगमशास्त्रमनित्यम् ।।९५।।

तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ।। ९५ ।।

---

'त्यदादीनामः' इति सूत्रस्थम् 'टिलोपष्टाबभावार्थः' इति त्वेकदेश्युक्तिररिति न तद्विरोधः । अन्यत्र= उद्द्योतादौ ।

**एवञ्चेति।** अस्या निष्फलत्वेनेत्यर्थः । **सूत्रद्वयस्थमिति** । 'ज्ञाजनोर्जा' 'ज्यादादीयसः' इति सूत्रद्वयस्थमित्यर्थः । भाष्यमिति । अभ्यमिति च्छेद इति भाष्यमित्यर्थः । **एकदेश्युक्तिरिति** । पिबादेशस्यादन्तत्वेनैव गुणप्रतिषेधाद् वार्त्तिकप्रत्याख्यानसम्भवे परिभाषया तत्प्रत्याख्यानस्यातिगौरवग्रस्तत्वादिति भाव. ।

वस्तुतस्त्वनुपदोक्तदवयतीत्यादिलक्ष्यसिद्धयर्थं सूत्रद्वयज्ञापितपरिभाषाया आवश्यकत्वेन सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं तु सिद्धान्तिन एव । अभ्यमिति च्छेद इति भाष्यमात्रं त्वेकदेशिन इति विवेकः ।। ९३ ।।

प्राचीनोक्तपरिभाषाणामनुपयोगात् तत्खण्डनायाह—**यत्त्विति** । 'ओरोत्' इति 'वाच्ये' इति । ओद्ग्रहणम् 'अव्' इत्यस्योपलक्षणम् 'ओरव्' इति वाच्ये इत्यर्थः' । अन्यथा 'औपगवो माधव्यो बाभ्रव्य' इत्यादावपत्येऽर्थे 'तस्यापत्यम्' 'मधुबभ्र्वोः' इत्यण्यञोः 'ओरोत्' इत्योकारादेशे 'एचोऽयवा' इति, 'वान्तो यि' इत्याभ्यामवादेशे प्रक्रियागौरवं स्पष्टनेव ।

**इदञ्चेति** । अनित्यत्वमित्यर्थः । संज्ञापूर्वकत्वे एवेति । धर्मिग्राहकमानादति भावः । तेन=परिभाषायाः सत्त्वेन । 'स्वायम्भुवम्' इत्यादीत्यादिना स्रजयतीत्यादेर्ग्रहणम् 'स्रग्विन्' शब्दात् 'तत्करोति' इति णिचि 'णाविष्ठवत्' इत्यतिदेशात्' 'विन्मतोर्लुक् इति विनो लुक्यनया 'अत उपधायाः' इति वृद्धिर्नेति बोध्यम् ।। ९४ ।।

**आनिग्रहणादिति** । आकारविशिष्टग्रहणादित्यर्थः । आकारग्रहणादिति यावत् ।

तथा तनादिपाठादेव सिद्धे 'तनादिकृञ्भ्यः' इति सूत्रे कृञ्ग्रहणात्--

**गणकार्यमनित्यम् ।। ९६ ।।**

तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् ।। ९६ ।।

तथा चक्षिङो ङित्करणात्--

**अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ।। ९७ ।।**

तेन 'स्फायन्निर्मोकः' इत्यादि सिद्धम् ।। ९७ ।।

तथा विनार्थनञा समासेन 'अनुदात्तं पदमनेकम्' इत्येव सिद्धे वर्ज ग्रहणात्--

**नञ्घटितमनित्यम् ।। ९८ ।।**

---

**तर्तुकामस्येति ।** 'तॄप्लवनतरणयोः' इत्यस्मात् तुमुनि, अनयेडागमाप्राप्ते सार्वधातुकार्धधातुकयोः' इयि गुणे रूपसिद्धिः । इदमुपलक्षणमपि 'शाकं पचानः' इत्यस्यापि । अत्र आनेर्मुक्' इति मुगभावः ।। ९५ ।।

**सूत्रे कृञ्ग्रहणादिति ।** इदमुदलक्षणम् । क्षमुधातोर्घटादौ पाठकरणेन 'घटादयः षितः' इति वार्त्तिकादेव षित्त्वे सिद्धे पुनः षित्त्वमत्र ज्ञापकमित्यस्यापि। सामर्थ्यात् 'षिद्गौरादि' इति ङीषर्थं तु न, 'क्षमायाम्' इति निर्देशेन तदभावज्ञापनात् ।

ननु 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया कृञ्ग्रहणेन कृञ् हिंसायामित्यस्य स्वादेरेव ग्रहणात् कथं तनादिपाठादेव सिद्धे तनादिसूत्रे कृञ्ग्रहणाद् गणकार्यमनित्यमिति चेत्, न; तनादिसाहचर्यात्, प्रसिद्धत्वाच्च डुकृञ् करणे इत्यस्यैव ग्रहणात् । अत एव तनादित्वादेव सिद्धे कृञ्ग्रहणमनर्थकमिति भाष्योक्तं सङ्गच्छते ।

न विश्वसेदिति । विपूर्वकश्वसस्धातोर्विधिलिङि कर्तरि शपि गणकार्यस्यानित्यत्वात् 'अदिप्रभृतिभ्यः' इति शपो लुग् न । इदमुपलक्षणम् 'शयामि किमतः परम्' इत्यस्यापि ।। ९६ ।।

**चक्षिङो ङित्करणादिति ।** ननु चक्षतीत्यादावन्त इदित्त्वाभावसम्पादनद्वारा नुम्वारणाय ङकारस्यावश्यकत्वात् कथं परिभाषाज्ञापकत्वमिति चेत्। न; चक्ष इत्यनुदात्तपाठेनापि विचक्षण इत्यादौ 'अनुदात्तेतश्च हलादेः' इति युचः सिद्धत्वेनानिमित्तवान्मुमोऽत्राप्राप्त्या च ङकारवैयर्थ्यस्य स्पष्टत्वात् । शयामीति प्रयोगस्तु चिन्त्य एव ।

**स्फायन्निति ।** स्फायी वृद्धावित्यस्माल्लटि अनुदात्तेत्त्वलक्षणात्मनेपदस्यानित्यत्वात् लटः स्थाने शतैव, न शानजिति भावः । आदिनोदयतीत्यस्य संग्रहः ।। ९७ ।।

**तेन 'नेयङुवङ्' इत्यस्यानित्यत्वात् 'हे सुभ्रु' इति सिद्धमिति। तत् न; भाष्येऽदर्शनात्, भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात्, भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थंकत्वकल्पनाया एवौचित्यात्।**

**किञ्च ज्ञापितेऽप्यानीत्यस्य न सार्थक्यम्, आडागमशून्यप्रयोगस्याप्रसिद्धेः।**

**आङ्ग्रहणं तु लोङ्ग्रहणवदिति बोध्यम्। अत एव 'घोर्लोपो लेटि वा' इति सूत्रे वेति प्रत्याख्यातम्। लोपेऽप्याट्पक्षे आटः श्रवणं भविष्यति दधादिति—अटि दधदिति। आगमशास्त्रस्यानित्यत्वे त्वाटचसति दधादित्यसिद्धचया वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः स्पष्टैव। एतेन यत्कैयटेन केचिदित्यादिनास्यैव वाग्रहणस्य तदनित्यत्वज्ञापकतोक्ता, सापि चिन्त्या, प्रत्याख्यानपरभाष्यविरोधात्; तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च। चक्षिङो ङकारस्यान्तेदित्वाभावसम्पादनेन चारितार्थ्याच्च ॥९८॥**

**एवमेव—**

## आतिदेशिकमनित्यम् ॥ ९९ ॥

## सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०० ॥

---

**अनेकमित्येव सिद्धे** इति। एवञ्चानेकमित्यत्र नञो विनार्थकत्वेन तमेकमचमित्यर्थेनेष्टसिद्धचा वर्जग्रहणं व्यर्थमिति भावः।

तेन **सुभ्रु इति सिद्धमिति**। अनित्यत्वेन 'नेयङुवङ्' इनि निषेधाप्रवृत्त्या 'यूस्त्र्याख्यौ' इति नदीसंज्ञायाम् 'अम्बार्थ' इति ह्रस्वे सिद्धमित्यर्थः।

सामान्यतो दूषयति—**भाष्येऽदर्शनादिति**। संज्ञापूर्वकः' इत्यादि पञ्चानामित्यर्थः।

विशेषतः पार्थक्येन च दूषयति—**किञ्चेत्यादिना**। नन्वेवं तादृशसौत्राक्षराणामुक्तरीत्या वैयर्थ्यापत्तिः, अत आह—**भाष्याविचारितप्रयोजनानामिति। न सार्थक्यमिति**। प्रनिकुलम् इत्यत्र प्रपूर्वकणोञ् प्रापणे इत्यस्मात् क्विपि 'ह्रस्वो नपुंसके' इति ह्रस्वोत्तरं णत्ववारणाय त्वानिग्रहणं न सार्थकम्, तस्य 'ह्रस्वो नपुंसके' इति ह्रस्वनिष्पन्नत्वेन लाक्षणिकत्वात् 'लक्षणप्रतिपदोक्त' परिभाषया 'मेर्निः' इत्यस्यैव ग्रहणात्। अप्रसिद्धेरिति। तथा च ज्ञापकत्वमेव नेति भावः।

नन्वेवमानीत्यत्राकारग्रहणं व्यर्थम्, अत आह—**आङ्ग्रहणं त्विति**। आङ्बोधकाकारग्रहणमित्यर्थः। **बोध्यमिति**। तथा च लोडाटोरुभयोरपि ग्रहणमदृष्टार्थमेवेतिसिद्धम्। अत एवेति। 'आगमशास्त्रमनित्यम्' इत्यस्याभावादेवेत्यर्थः। **लोपेऽपीति**। 'घोर्लोपो लेटि' इत्यनेन घ्वोरन्त्यस्य नित्यं लोपे कृतेऽपीत्यर्थः। **आट्पक्ष** इति। 'लोटोऽडाटौ' इत्यनेनेत्यर्थः। दधादिति। डुधाञ् धारणे इत्यस्मात्

**इत्यादि भाष्यानुक्तं बोध्यम्। 'स्वायम्भुवम्' इत्यादि लोकेऽसाध्वेवेत्यन्यत्र विस्तरः ॥ १०० ॥**

**यद्यपि--ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यात्, अत आह--**

**प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०१ ॥**

**षाष्टद्वित्वस्य द्विः प्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम्। अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति। तदपि न, भाष्येऽदर्शनात्।**

---

'लिङर्थे लेट्' इति लेटि, तिपि, शपः श्लौ'श्लौ इति द्वित्वेऽभ्यासकार्ये च,'इतश्च लोपः परस्मैपदेषु' इति तिप इकारलोपे 'लेटोऽडाटौ' इति तिप आडागमे रूपम्। अग्रिमरूपमप्येवमेव। अत्राट्, अग्रिमे तु अड् इति भेदः। **एतेनेति**। वाग्रहणप्रत्याख्यानेनेत्यर्थः। **यत्** इति। सामान्ये नपुंसकम्। चिन्त्यमित्यत्र हेतुमाह—**प्रत्याख्यानपरभाष्येति**। तृतीये दूषणमाह—**तनादिसूत्र** इति। **प्रत्याख्यानाच्चेति**। तत्र भाष्ये तनादित्वादेव सिद्धे कृञ्ग्रहणमनर्थकमित्युक्तम्। तुरीये दूषणमाह—**चक्षिङ** इति। **चारितार्थ्याच्चेति**। चक्ष इत्यकारान्तपाठे नुमोऽप्राप्तिरेवेति चिन्त्यमेतत् ॥ ९८ ॥

अन्या अपि खण्डयति—एवमेवेति ॥९९ ॥

**भाष्यानुक्तमिति**। 'प्रत्ययलोपे' इत्यस्य नियामकत्वस्य सिद्धान्तितत्वात्। 'आशीः' इत्यादौ क्विबादेरन्तरङ्गत्वाल्लोपे इत्वाद्यर्थं तस्योपक्षीणत्वात्।

नन्वेवं स्वायम्भुवादेः का गतिः? इत्यत आह—**स्वायम्भुव इत्यादीति**। लोके इत्यनेनार्षप्रयोगाणां साधुता सूचिता। **असाध्वेवेति**। बहुशिष्टप्रयोगात्, महाकविप्रयोगाच्च पृषोदरादित्वात् साध्वेवेति केचित् ॥ १०० ॥

**न स्यादिति**। समुदायस्य हन्रूपत्वाभावादित्यर्थः।

यङ्लुगन्तस्यापीत्यपिः केवलसमुच्चायकः।

इदम्=परिभाषावचनरूपम्। **न्यायसिद्धमिति**। युक्तिसिद्धमित्यर्थः। **अत एव**=प्रयोगद्वयरूपे समुदाये प्रकृतिरूपबोधनादेव। **धित्वसिद्धिरिति**। अन्यथा 'जुहु' इत्यस्य हुरुपाङ्गत्वाभावात् ततः परस्य हेर्धित्वं न स्यादिति भावः।

भाष्यादर्शनरूपसामान्यदूषणमुक्त्वा विशेषेणाह—**किञ्चेति**। **तेनसिद्धान्तेनेति**। षाष्ठद्वित्वस्य द्विः प्रयोगत्वसिद्धान्तेन। **द्वयोः**=द्विरुच्चरितभागयोः। तत्त्व**बोधनेऽपि**=प्रकृतिरूपत्वबोधनेऽपि। **अत एव**=समुदायस्य तत्त्वबोने मानाभावादेवेत्यर्थः। **परत्वादिति**। भूभावात् परत्वादित्यर्थः। **विषयसप्तमीति**। आर्धधातुक इत्यस्येत्यर्थः। **अन्यथा**=परिभाषाङ्गीकारे। **त्वदुक्तरीत्या**=प्रयोगद्वयरूपे समुदाये प्रकृतिरूपबोधनरूपया। **समुदायस्यैवेति**। इदं तु न युक्तम्, 'निर्दिश्यमान' परिभाषया समुदायस्यादेशाप्राप्तेः।

किञ्च, तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः। अत एव 'दयतेर्दिगि' इति सूत्रेऽस्तेः परत्वाद् द्वित्वे कृते परस्यास्ते-र्भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये। अन्यथा त्वदुक्तरीत्या 'एकाज्द्विर्वचन' न्यायेन समुदायस्यैवादेशापत्तौ तदस ङ्गतिः स्पष्टैव। तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या।

'भूसुवोः' इत्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः। तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः॥ १०१॥

यदपि ननु 'वृद्धिर्यस्याचामादिः' इत्यत्रेक्परिभाषोपस्थितौ शालीयाद्य-सिद्धिः, अत आह—

**विधौ परिभाषोपतिष्ठते नानुवादे॥ १०२॥**

---

बिभेदेत्यादौ 'न धातु, इति निषेधस्तु न, 'हलादिश्शेषः' इत्यत्र प्रत्यया-क्षेपे मानाभावात्। **तदसङ्गतिः**। पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्कासङ्गतिर्विषय-सप्तम्याश्रयणेन परिहारासङ्गतिश्चेत्यर्थः। तस्मात्=समुदाये तत्त्वाभावात्।

नन्वेवम् 'बोभूतु' इवत्यत्रोत्तरखण्डेऽङ्गत्वस्याभावात् प्रकृतपरिभाषाया अभावेऽप्राप्तगुणाभावसम्पादकतया साफल्ये 'बोभूतु' इति निपातनस्य लोटचेव नियामकत्वं भाष्योक्तं विरुध्येत, अत आह—**भूसुवोरिति**। **तदन्ताङ्गस्येति**। भूत्वादेरुत्तरखण्डस्येवाङ्गत्वस्य समुदाय एवाङ्गीकारादिति भावः॥ १०१॥

**शालीयाद्यसिद्धिरिति**। ततश्चोपगोरपत्यम् 'औपगवः', तस्यापत्यम् 'औपगवीयः', विभोरपत्यम् 'वैभवः', तस्यायम् 'वैभवोयः' इत्यादावेव "वृद्धाच्छः" स्यादिति भावः।

**विधाविति**। "मृजेर्वृद्धिः" इत्यादौ साक्षाद् विधेये वृद्धाविक्परिभाषोप-स्थितेरसम्भवाद् विधावित्यस्य साक्षाद् विधेयविशेषणे इत्यर्थः।

**अनूद्यमानविशेषणेषु इति**। अनूद्यमानं नामोद्देश्यम्, साक्षाद्विधेय-विशेषणमिति यावत्। अनूद्यमानस्य विशेषणेषु साक्षात्तद्विधेयविशेषणविशेष-णेष्वित्यर्थः। **तन्नियामकपरिभाषेति**[1]। तस्य नियामकं तन्नियामकम्। नियामकमिति सामान्ये नपुंसकम् तन्नियामकञ्च तत्परिभाषा चेति विग्रहः। तथा चानूद्यमाननियामकेत्यर्थः।

एवञ्चानूद्यमाननियामिका परिभाषाऽनूद्यमानविशेषणेषु नोपतिष्ठते इत्यर्थः।

**विध्यङ्गेति**। अङ्गत्वमुपकारकत्वं विध्युपकाराणामित्यर्थः। **असिद्धतयेति**। विधेयस्यासिद्धत्वेनेत्यर्थः। एवञ्च विधेयस्यासिद्धत्वेन परिभाषाणां विधेयेन

---

१. बहुषु पुस्तकेषु 'तन्नियामिका परिभाषा' इत्येव पाठ उपलभ्यते।

अनूद्यमानविषेषणेषु तन्नियामिका परिभाषा नोपतिष्ठत इति तदर्थः।

विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवेऽपि तद्विशेषणव्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम्।

किञ्च 'उदीचामातः स्थाने' इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्। अन्यथा 'षष्ठीस्थाने' इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति, तत्, न; 'उदात्तस्वरितयोर्यणः' इत्यादौ 'ष्यङः संप्रसारणम्' इति सूत्रभाष्योक्तरीत्या 'अल्लोपोऽनः' इत्यादौ चैतस्या व्यभिचरितत्वात्, भाष्यानुक्तत्वाच्च। स्थानसंबन्धो न परिभाषालभ्य इत्यर्थस्य 'षष्ठीस्थाने' इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासंभवाच्च। तत्र स्थानेग्रहणं तु स्पष्टार्थमेव।

किञ्च, 'विधौ परिभाषा' इति प्रवादः, 'इको गुणवृद्धी' 'अचश्च' इत्यनयोर्विधीयत इत्यध्याहारमूलकः, अन्यत्र तु नास्याः फलमित्यन्यत्र विस्तर.॥ १०२॥

---

सम्बन्धाभावेऽपीति योजना। तद्विशेषणेति। विधेयविशेषणेति। तर्कमूलेयमिति।

युक्तिसिद्धेऽर्थे ज्ञापकमप्याह—किञ्चेति।

"उदात्तस्वरितयोः" इति। उदात्तस्वरितयोः स्थाने यो यण्, ततः परस्यानुदात्तस्य स्वरितः स्यादिति तदर्थः।

अत्र विधेयम्—स्वरितः, तद्विशेषणमनुदात्तः, तद्विशेषणं यण्, तद्विशेषणमुदात्तस्वरितयोरिति। तत्र "षष्ठीस्थाने" इति परिभाषयोदात्तस्वरितयोः स्थाने इत्यर्थलाभ इत्यनूद्यमानविशेषणविशेषणे परिभाषोपस्थित्या विधेयविशेषणातिरिक्ते व्यभिचारः स्पष्ट एव।

भाष्योक्तरीत्येति। तत्र हि भस्येत्याक्षिप्तयजादिभिरनो विशेषणाद् यजादिस्वादिपरेऽव्यवहितपूर्वो योऽन्तः, तस्याकारस्य लोप इत्यर्थादनस्तक्ष्णेत्यादावाद्यानोऽकारस्य लोपो नेत्युक्तम्। तत्र विधेयश्च लोपः, तद्विशेषणमनिति, तद्विशेषणं भस्येत्याक्षिप्तो यजादिः, तत्र निर्दिष्टपरिभाषोपस्थित्या विधेयविशेषणातिरिक्ते व्यभिचारः स्पष्ट एव। स्थानसम्बन्ध इति। स्थानशब्दार्थनिरूपितसम्बन्ध इत्यर्थः। न परिभाषालभ्य इति। "षष्ठीस्थाने" इति परिभाषालभ्यो नेत्यर्थः, किन्त्वन्तरङ्गलभ्य इत्यर्थः।

नन्वेवम् "उदीचामातः स्थाने" इत्यत्र स्थानेग्रहण व्यर्थम्, अत आह—तत्रेति। "उदीचामातस्स्थाने" इति सूत्रे इत्यर्थः।

अध्याहारेति। अनुवृत्त्यैव सिद्धे सूत्रे गुणवृद्धिग्रहणसामर्थ्याद् विधीयत इत्यध्याह्रियत इत्यर्थः। अत एव शालीयादिसिद्धिः। अन्यत्रेति। "उदीचाम्" इति सूत्रादन्यत्रेत्यर्थः। अन्यत्रेति। उद्द्योतादावित्यर्थः॥ १०२॥

ननु 'नमस्करोति देवान्, नमस्यति देवान्' इत्यादौ 'नमः स्वस्ति०' इति चतुर्थी दुर्वारा, इत्यत आह—

उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

कारकविभक्तित्व च क्रियाजनकार्थकविभक्तित्वम्। तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति 'सहयुक्ते' इत्यादिसूत्रेषु भाष्ये ध्वनितम्।

इयं च वाचनिक्येव। अत एव 'यस्य च भावेन' इति सप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन, तत्र च 'दीयते' इति सूत्रे भाष्ये ध्वनितम्; कैयटेन च स्पष्टमुक्तम्। एतेन 'क्रियान्वयित्वं कारकत्वम्' इत्यपास्तम् 'यस्य च भावेन' इति सप्तम्या अपि क्रियान्वयित्वात्।

ये तु प्रधानीभूतक्रियासंबन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति; तेषामुभयोरपि क्रियासंबन्धनिमित्तकत्वेन तदसङ्गतिः स्पष्टैव। 'नमोवरिव०' इति सूत्रे 'नमस्यति देवान्' इत्यादौ चतुर्थीवारणाय भाष्ये उपन्यासस्यासङ्गतेश्च।

एतेन क्रियाकारकसंबन्धोऽन्तरङ्गः' इति तन्निमित्ता विभक्तिरन्तरङ्गा उपपदार्थेन तु यत्किञ्चित् क्रियाकारकभावमूलकः संबन्ध इति तन्निमित्ता, विभक्तिर्बहिरङ्गेत्यपास्तम्, 'नमस्यति' इत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात्। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव।

'सहयुक्ते' इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्ये उपन्यस्तेत्यन्यत्र विस्तरः ॥ १०३ ॥

ननु 'अदमुयङ्' इत्यादौ पूर्वस्यापि मुत्वापत्तिः, अत आह—

अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०४ ॥

---

नमस्करोतीति—नमश्शब्दस्य "साक्षात्प्रभृतीनि च" इति गतिसंज्ञायाम् "नमस्पुरसोर्गत्योः" इति सत्वे रूपसिद्धिः।

ननु नमःशब्दस्य स्वरादौ साक्षात्प्रभृतिषु च पाठात् "नमःस्वस्ति०" इति सूत्रे स्वस्त्यादिसाहचर्यात् स्वरादिपठितस्यैव नमःशब्दस्य ग्रहणात् 'नमस्करोति' इत्यत्र कृञ्समभिव्याहृतनमःशब्दस्य साक्षात्प्रभृतित्वेन तद्योगे चतुर्थ्याः प्राप्तिरेव नेत्याह—नमस्यति देवानिति। नमश्शब्दात् पूजार्थे "नमोवरिवश्चित्रङः क्यच्" इति क्यचि रूपसिद्धिः ॥ १०३ ॥

अदमुयङिति। अमुमञ्चतीति विग्रहे 'अदस् अञ्च' इति स्थिते "विष्वग्देवयोः" इति टेरद्र्यादेशे 'अदद्रि अञ्च' इति स्थिते यणि, "अदसोऽसेः" इति परस्य मुत्वे रूपसिद्धिः।

पूर्वस्यापीति। पूर्वदकारस्य, तत्परस्य चेत्यर्थः। मत्वापत्तिरिति। अत्र

**अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः। अन्यथा धात्वादेर्नत्वसत्वे 'नेता, सोता' इत्यादावेव स्याताम् न तु 'नमति, सिञ्चति' इत्यादौ।**

**अनन्त्यविकार इति च लिङ्गम्।**

**अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः। तत्त्वं चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम्। अत एव विद्ध इत्याद्यर्थम् 'न संप्रसारणे' इति चरितार्थम्।**

---

हि मत्वविषये एव परिभाषोपतिष्ठते, नोत्वविषये। उत्वस्य 'अमू' इत्यादावन्त्यस्यापि कार्यत्वेनानन्त्यस्यैव कार्यत्वाभावात्। यत्रानन्त्यस्य कार्यम्, तत्रेयमुपतिष्ठते इति त्ववश्यं वक्तव्यम्, अन्यथा 'जरसौ' इत्यादौ "जराया जरसन्यतरस्याम्" इति जरसादेशोऽनया परिभाषयाऽन्त्यसदेशरेफस्यैव स्यात्, न तु सर्वस्यापीति बोध्यम्।

**अनन्त्यविकार** इति। विकारः=कार्यम्, अन्त्यभिन्नस्य कार्ये प्राप्त इत्यर्थः।

**युगपत्प्राप्ताविति**। कार्यस्येति शेषः। अन्यथा=उक्तार्थानङ्गीकारे। **धात्वादेरिति**। अस्य विधीयमाने इति शेषः। 'नेता, सोता' इत्यत्रान्त्यसदेशस्य, 'नमति; सिञ्चति' इत्यत्रानन्त्यसदेशस्य च कार्याप्राप्तिरित्यन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्कार्यप्राप्तिर्नास्तीति बोध्यम्।

परिभाषाप्रवृत्तौ बीजमाह—**अनन्त्यविकार इति च लिङ्गमिति**। एवञ्च यत्रानन्त्यस्य कार्यम्, तत्रेयमुपतिष्ठते इत्यर्थः।

वस्तुतस्त्वनन्त्यविकारप्रापकं यदन्त्यसदेशानन्त्यसदेशयोः क्वचिल्लक्ष्ये युगपत्कार्यप्रापकं शास्त्रम्, तच्छास्त्रे इयमुपतिष्ठत इत्यर्थः। अन्यथा विप्रतिषेधशास्त्रवदस्यापि विध्यङ्गकत्वं न स्यात्।

किञ्च, त्वदुक्तार्थेऽनस्तक्षणेत्यादौ चरितार्थस्य "अल्लोपोऽनः" इत्यस्यानशब्दोपपादकात् 'अन प्राणने' इत्यस्मात् क्विपि "अनुनासिकस्य क्वि" इति दीर्घे 'अन आन इत्यत्रान्त्यसदेशस्याकारस्य दीर्घत्वेन "अल्लोपोऽन" इत्यत्र तपरकरणाल्लोपाप्राप्त्यानन्त्यविकाराभावेन परिभाषानुपस्थित्याद्याकारस्य लोपो दुवारः स्यात्। मम तु क्वचिल्लक्ष्येऽनस्तक्षणेत्यत्र लोपविधायकशास्त्रे परिभाषोपस्थित्या तेन शास्त्रेण सर्वत्रान्त्यसदेशस्यैव लोपविधानमिति न दोषः।

**अन्त्यसदेश** इति। निपातनाद् बहुव्रीहिः, समानस्य सादेशश्चेति भावः। अन्त्यसदेशत्वञ्चेतराव्यवधानेनेति :

'ननु अदमुग्ङ्' इत्यत्रान्त्यवर्णतद्वर्णयोरितरेण रेफेण व्यवायात् कथमिदमिति चेत्, न;. धर्मिग्राहकमानेनेतरस्यान्त्यवर्णतद्वर्णोभयविजातीयस्यैव ग्रहणादन्त्यवर्णतद्वर्णान्त्यतरसजातीयव्यवायेऽपि कार्यप्रवृत्तेः। 'अदयमुङ्' इत्यत्र

**'अल्लोपोऽनः' इत्यादेरनस्तक्षणेत्यादावाद्याकारादावप्रवृत्तिरव्यस्याः फलम्, यजादिस्वादिपरानन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षातयौचित्यादङ्गावयवयजादिस्वादिपरस्यान इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयास्या उचितत्वात् ।**

**न चैषा 'ष्यङः संप्रसारणम्' इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्, वार्त्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि यान्यतस्याः परिभाषायाः प्रयोजनानि, तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषेषु, प्रतिविधानं**

---

रेफस्यान्त्यवर्णविजातीयत्वेऽपि तद्वर्णसजातीयत्वेन न दोषः। अत एव 'हंसशिरांसि' इत्यत्र नकारस्य तद्वर्णविजातीयत्वेऽप्यन्त्यवर्णसजातीयत्वात् तेन व्यवायेऽपि "सान्तमहतः" इति दीर्घसिद्धिः। अन्त्यवर्णतद्वर्णोभयविजातीयव्यवाये तूदाहरणं चलीक्लृप्यत इति। तत्र त्वन्त्यवर्णः पकारः, तद्वर्णस्तु ऋकारैकदेशो रेफः, तयोर्विजातीयोऽज्भक्तिरिति, तद्व्यवाये परिभाषाया अप्रवृत्त्योभयोर्लत्वसिद्धिः। 'व्यध ताडने' इत्यस्मात् क्तप्रत्यये "न सम्प्रसारणे" इत्यस्य परस्यैव सम्प्रसारणविधानार्थत्वेन 'विद्धः' इत्यत्रान्त्यवर्णतद्वर्णोभयविजातीयेनाकारेण व्यवायादस्याः परिभाषाया अप्रवृत्त्योभयोः सम्प्रसारणे प्राप्ते स्त्रांशे चारितार्थ्यं बोध्यम्। अत एव=एतादृशान्त्यसदेशत्वाङ्गीकारादेव। **चारितार्थ्यमिति।** अन्यथाऽनयैव परस्य यणः सम्प्रसारणे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः।

ननु अः, सेः=सकारस्य स्थाने यस्य सः 'असिः' इति व्याख्यानात् त्यदाद्यत्वविषय एवमुक्तम्, नान्यत्रेति सिद्धान्तात् 'अदद्र्यङ्' इत्येव रूपम्, न 'अदमुयङ् इति मत्वास्या फलान्तरं दर्शयति—**"अल्लोपोऽनः"** इत्यारभ्य फलमित्यन्तेन। आदिना "सान्तमहतः" इत्यस्य 'हंसशिरांसि' इत्याद्याकारे प्रवृत्तिर्बोध्या।

नन्वङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन्, तस्याकारस्य लोप इति व्याख्याने त्वनस्तक्षणेत्यपि नेत्याशङ्क्य नेत्याह—**यजादिस्वादीत्यादिना।** **अस्या उचितत्वादिति।** परिभाषाया उचितत्वादित्यर्थः।

**वार्त्तिकोक्तफलानामिति।** 'प्रयोजनम्' "न सम्प्रसारणे सम्प्रसारणम्" इत्यादितत्सूत्रस्थवार्त्तिककारोक्तफलानामित्यर्थः। **उदात्तनिर्देशादिति।** तत्र भाष्ये 'नेता, सोता' इत्यादौ नत्वसत्वे स्याताम्, 'नमति, सिञ्चति' इत्यादौ न स्यातामित्याशङ्क्य, 'यत्रैषा परिभाषेष्यते, तत्रोदात्तनिर्देशः कर्तव्यः, ततो वक्तव्यम् "अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवत्युदात्तनिर्देशः' इति परिभाषा वाच्येत्युक्तम्। **मिमार्जिषतीति।** मृजू शुद्धावित्यस्मात् सनि "स्वरति०" इटः पूर्वं परत्वात् प्राप्तमृजेर्वृद्धिं बाधित्वा "सन्यङो" इत्यस्य षष्ठ्यन्तत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाद् द्वित्वे वृद्धेः परत्वादुरदत्वे "हलादिः शेषे" "सन्यतः"

चोदात्तनिर्देशात् सिद्धमित्युपसंहारात्। 'मिमार्जिषति' इत्यर्थं चैषा। तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्वे परत्वादभ्यासकार्ये, ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी। न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः, 'लक्ष्ये लक्षणस्य' इति न्यायेन पुनरप्रवृत्तेः।

यत्तु 'न संप्रसारणे' इति सूत्रे भाष्ये 'नैतस्याः परिभाषयाः प्रयोजनानि' इत्युक्तम्। तस्यायमर्थः—एतत्सूत्रे प्रयोजनान्येतस्याः परिभाषाया न भवन्ति, व्यधादावन्त्यसमानदेशयणोऽभावादिति। 'नैतान्येतस्याः प्रयोजनानि' इति पाठोऽपि क्वचिद् दृश्यते।

वाचनिक्येवैषा। स्पष्टा च 'ष्यङः' इति सूत्रे 'अदसोऽसेः' इति सूत्रे च 'केचिदन्त्यसदेशस्य' इत्यनेन भाष्य इत्यन्यत्र विस्तरः॥ १०४॥

ननु 'अव्यक्तानुकरणस्यातः' इति पररूपम्, 'पटत्' इति 'पटिति' इत्यादौ 'अलोऽन्त्यस्य' इत्यन्त्यस्य प्राप्नोतीत्यत आह—

---

इतीत्त्वे च रूपम्। एषा=परिभाषा। 'मिमार्जिषति' इत्यत्र परिभाषाया आवश्यकत्वमेवोपपादयति—तत्रेति। मिमार्जिषतीत्यत्रेत्यर्थः।

वस्तुस्तु प्रतिपदोक्तत्वेन वृद्धेरप्यन्तरङ्गत्वाद् द्वित्ववृद्ध्योरुभयोरप्यन्तरङ्गत्वाविशेषेण परत्वात् पूर्वं वृद्धौ, ततो द्वित्वेऽभ्यासकार्ये च रूपसिद्धिरिति नेदमप्यस्या असाधारणं फलमिति बोध्यम्। न चेत्त्वोत्तरं पुनर्वृद्धिर्दुर्वारेति वाच्यम्, 'लक्ष्येलक्षणम्' इति न्यायेन पुनरप्रवृत्तेः।

एतत्सूत्रे प्रयोजनानीति। "न सम्प्रसारणे" इति सूत्रविषयाणीत्यर्थः। यणोऽभावादिति। अकारेण व्यवधानादिति भावः। एवमर्थकरणे मानं सूचयन्नाह—नैतान्येतस्या इति।

सूत्रे चेति। 'केचिदन्त्यसदेशस्य' इति श्लोकवार्तिकेन "अदसोऽसेः" इति सूत्रे भाष्ये स्पष्टेत्यन्वयः अन्यत्र=भाष्यादौ॥ १०४॥

अअन्त्यस्य प्राप्नोतीति। ननु 'अतः' इत्यस्य पञ्चम्यन्तत्वेन षष्ठ्यन्तत्वाभावात् कथम् 'अलोऽन्त्य' परिभाषाया उपस्थितिः? कथं वा ऽन्त्यादेशः? इति चेत्, न; अत इत्यस्य पञ्चम्यन्तत्वे "एकः पूर्वपरयोः" इत्यधिकारात् 'पूर्वस्य' इत्यस्य षष्ठ्यन्तत्वेन 'अलोऽन्त्य' परिभाषोपस्थित्यान्त्यस्यैवादेशापत्तेः।

'नानर्थकेऽलोऽन्त्य' इति। अभ्यासविकारविषयभिन्नार्थकेऽलोऽन्त्यविधिर्नेत्यर्थः। इत्यादौ; "भृञामित्" इत्यादि; इत्यादिभ्याम् 'अजीगणत्' इत्यत्र 'ई च गणः' इत्यस्य संग्रहः।

ननु परिभाषायाम् 'अनभ्यासविकारे' इति व्यर्थम्, अभ्यासस्यार्थवत्त्वेना-

## नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥

**अनभ्यासेत्युक्ते 'बिभ्रति' इत्यादौ 'भृञामित्' इत्याद्यन्त्यस्यैव। अभ्यासोऽनर्थकः, अर्थावृत्त्यभावात् किं तूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम्।**

**एषा 'अलोऽन्त्यात्' सूत्रे भाष्ये स्पष्टा। फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यताम्। ॥ १०५ ॥**

---

नर्थकत्वाभावान्निषेधाप्राप्तेः, अत आह—**अभ्यासोऽनर्थक** इति। **अर्थावृत्त्यभावादिति**। शब्दद्वयश्रवणवत्ततोऽर्थद्वयाप्रतीतेरिति भावः।

समुदायस्यैवार्थवत्त्वमिति भ्रमनिरासायाह—**किन्तूत्तरखण्ड एवेति**।

ननु विनिगमनाविरहादभ्यास एवार्थवान् उत्तरखण्डोऽनर्थक एवास्तु। न च 'मित्सति, धित्सति, पेचतुः' इत्यादौ चाभ्यासस्याभावेऽप्यर्थबोधादुत्तरखण्ड एवार्थवानिति वाच्यम्, तत्रापि मित्सति, धित्सति, यातिरित्यादावुत्तरखण्डस्याभावेन पूर्वखण्ड एवार्थवत्त्वाङ्गीकारात्। यदि तु 'यः शिष्यमाणः, स लुप्यमानार्थाभिधायी' इति न्यायेनोत्तरखण्डाभावाच्छिष्यमाणस्यैवार्थबोधजनकत्वमित्युच्यते? तर्हि ममापि तेन न्यायेन मित्सतीत्यादावभ्यासाभावेऽपि शिष्यमाणस्यैवार्थबोधजनकत्वौचित्यादिति चेत्, न; 'दयतेर्दिगि' इति सूत्रस्थभाष्यप्रामाण्यादुत्तरखण्डस्यैवार्थवत्त्वात्। तत्र हि 'आर्धधातुके' इति परसप्तमीत्वे भूभावात् पूर्वं परत्वाद् द्वित्वे कृते परस्यास्तेर्भूभावे पूर्वस्य श्रवण प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतम्। 'अर्थवत एव स्थान्यादेशभावः' इति सिद्धान्तात् त्वन्मते परस्यार्थवत्त्वाभावादादेशप्राप्तौ परस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्यस्यासङ्गतिः स्पष्टैव। अन्यत्र=शेखरादौ।

**अलोऽन्त्यात्सूत्रे** इति। उपधासंज्ञासूत्रे इत्यर्थः। **अन्यथा सिद्धिकरणेनेति**। 'नाम्रेडितस्यान्त्यस्य तु वा' इति ज्ञापकादव्यक्तानुकरणस्येति सर्वादेशः; 'अनाप्यकः' इति सर्वत्रानादेशे 'हलि लोपः' इति नलोपे 'आभ्याम्' इत्यस्य सिद्धिः; द्विशकारकनिर्देशेन 'श्वसोः' इति लोपः सर्वादेशः; 'अत्र लोपोऽभ्यासस्य' इत्यत्रत्रग्रहणात् सर्वादेशो लोपः; 'तस्य लोपः' इत्यत्र तस्यग्रहणात् सर्वादेशः; इत्यादिप्रकारेणेत्यर्थः। तत एव='अलोऽन्त्यात्' सूत्रादेव।

इयं वाचनिकीति केचित्। परे तु, 'इदमो मः' 'इदश्च' 'यस्सौ' 'अय पुंसि' इति न्यासेन सिद्धे 'दश्च' इति सूत्रम् 'नानर्थकेऽलोऽन्त्यविधिः' इत्यत्र ज्ञापकम् 'अर्तिपिपर्त्योः' इति निर्देशः 'अनभ्यासविकारे' इत्यंशे इति ज्ञापकसिद्धैवेयम्। एतत्फलानामन्यथासिद्धयेऽनेकत्रानेकल्पनापेक्षया परिभाषास्वीकार एव ज्यायान्। किञ्चैतत्परिभाषादरणे 'तस्य लोपः' इत्यत्र 'तस्य' इति; इति; अत्र 'लोपोऽभ्यासस्य' इत्यत्रात्रेति न कर्तव्यमिति महल्लाघवम्। 'अलोऽन्त्यात्' सूत्रे एतत्प्रत्याख्यानं त्वस्य वाचनिकत्वाभिप्रायेण, न तु ज्ञापकसिद्धत्वाभिप्रायेणेति न तद्भाष्यविरोध इत्याहुः ॥ १०५ ॥

**ननु 'ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च' इत्यादौ 'पुमान् स्त्रिया' इत्येकशेषापत्तिः, स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावात्, अत आह—**

**प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ १०६ ॥**

**तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः। स्पष्टा चेयं 'पुमान् स्त्रियाः' 'नपुंसकमनपुंसकेन' इत्यनयोर्भाष्ये ।**

**'अनन्तरङ्गोपजीव्यादपि प्रधानं प्रबलम्' इति 'हेतुमति च' इत्यत्र भाष्यकैयटयोः ॥ १०६ ॥**

**ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यात्, अत आह—**

---

**वत्सश्चेत्यादाविति** । आदिना 'क्षत्रियवत्सा, क्षत्रियावत्सश्च' इत्यादिपरिग्रहः । **प्राधानाप्रधानयोरिति** । प्रधानं विशेष्यम्, अप्रधानं विशेषणम् ।

तेन=परिभाषाङ्गीकारेण । **अप्रधानस्त्रीपुंस्त्वेति** । ब्राह्मणनिष्ठेत्यर्थः । न दोष इति । नैकशेषापत्तिरित्यर्थः । लौकिकन्यायसिद्धेयम् । यथा बहुषु गच्छत्सु कोऽयमिति प्रश्ने राजेत्युत्तरम्, सेनाकृतजयपराजयावपि राज्ञ एव प्रतीयेते, तद्वत् प्रधानाप्रधानयोर्मध्ये प्रधान एव कार्यमिति । **इत्यनयोर्भाष्ये** इति । आद्येऽनया परिभाषयैकशेषो वारितः । अन्त्येऽनया परिभाषया नपुसकशेषमङ्गीकृत्य तत्सूत्रं प्रत्याख्यातम् । अनिर्ज्ञातेऽर्थे गुणसंदेहे विदूरेऽव्यक्तरूपे लोके नपुंसकलिङ्गस्यैव प्रयोगात् तस्य प्राधान्यमित्युक्तम् ।

**अन्तरङ्गोपजीव्यादिति** । अन्तरङ्गादुपजीव्याच्चेत्यर्थः । **हेतुमति चेत्यत्रेति** । तत्र हि ग्रामं गमयति देवदत्तं यज्ञदत्तः' इत्यत्र देवदत्तस्य गमनाश्रयत्वेन कर्तृसंज्ञायां णिजर्थं प्रति कर्मत्वेन कर्मसंज्ञायाञ्च प्राप्तायां पूर्वोपस्थितत्वेनान्तरङ्गामपि कर्तृसंज्ञां बाधित्वा प्रधानत्वात् कर्मसंज्ञेत्युक्त्वा 'गतिबुद्धि' इत्यस्य नियामकत्वमुक्तम् । तेन 'पाचयत्योदनं देवदत्तेन' इत्यादौ न कर्मत्वम् । एतत्परिभाषाङ्गीकारादेव मूलकस्योपदंशनक्रियां प्रति करणत्वाच्च परामपि करणसंज्ञां बाधित्वाऽनया करणे तृतीयासिद्धिः ।

नन्वनया 'प्रियतिस्रः' इत्यत्र स्त्रीत्वस्याप्राधान्यात् तिस्रादेशः, 'प्रियत्रयाणाम्' इत्यत्राप्रधानस्य त्रेस्त्रयादेशः । 'बहुश्रेयसी' इत्यत्र स्त्रीत्वस्याप्राधान्यान्नदीत्वञ्च न स्यादिति चेत्, न; भाष्येऽस्या एकशेषप्रकरणे पठितत्वात् 'हेतुमति च' इति सूत्रेऽनयैव कर्मत्वादिसिद्धिरिति 'गतिबुद्धि' इत्यस्य नियमार्थत्वप्रदर्शनपरभाष्याच्चास्या एकशेषप्रयोजकविभक्तिप्रयोजकसंज्ञान्यतरविषयत्वाङ्गीकारादुक्तोदाहरणेषु तदप्रवृत्तेरदोषात् । अत एव 'कुमारी' इत्यादौ नदीत्वार्थम् 'अवयवस्त्रीविषयत्वात् सिद्धम्' इति वार्त्तिकं पक्षद्वयेऽपि संगच्छत इति दिक् ॥ १०६ ॥

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥**

**तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणम्, न परिच्छेत्तृवाचकस्य। 'योगजबोधे तदनालिङ्गितशुद्धिरूढिजोपस्थितिः प्रतिबन्धिका' इति व्युत्पत्तिरेव तद्बीजम्।**

**रथकाराधिकरणन्यायसिद्धोऽयमर्थः।**

**कश्चित्तु 'दीधीवेवीटाम्' इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणम्, न दीङ्धीङ्वेवीनामिति, तत्, न तथा सति 'दीवेधीवीटाम्' इत्येव वदेदित्यन्ये ॥ १०७ ॥**

**ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद् 'गोक्षः' इत्याद्यपि स्यात्, अत आह—**

---

**परिच्छेत्रिति**। मीयतेऽनेनेति माता, करणे तृच्। धान्यमातेत्यर्थः। **तेन**= समुदायप्रसिद्धेर्बलवत्त्वाङ्गीकारेण।

परिभाषायां वीजमाह—**योगजबोध** इति। रूढ्यर्थतावच्छेदकानाक्रान्तयोगजवोध इत्यर्थः। **तदनालिङ्गितेति**। यौगिकमिश्रितेत्यर्थः। पङ्कजशब्दे योगार्थेन निर्वाहे इदं विशेषणम्।

**रथकाराधिकरण** इति। तत्र हि 'रथकार'शब्दो न यौगिकः, किन्तु रूढ्या जातिविशेषपर इत्युक्तम्—

माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्।
शूद्रायां करणो वैश्याद् विधिरेष सनातनः॥

'माहिष्येण करिण्यां तु रथकारः प्रजायते' इति मनुः।

**न्यायसिद्धोऽयमिति**। ननु रथकाराधिकरणन्यायस्य सप्रमाणकत्वे स न्यायो भवदुक्तार्थे मानमास्तां नाम, तदेव न सम्भवति, तस्य निष्प्रमाणकत्वात्, अतः प्रमाणान्तरं मृग्यमेव भवतेति चेत्, न; अवयवापेक्षया सामुदायार्थस्य शीघ्रोपस्थितकत्वेनान्तरङ्गत्वादन्तरङ्गन्यायमूलकरथकारन्यायस्यापि सप्रमाणकत्वादिति भावः। **अयमर्थ इति**। प्रतिवन्ध्यप्रतिवन्धकरूपोऽर्थः।

कौस्तुभोक्तिं खण्डयति—**कश्चिदिति**।

**अन्ये** इति। ननु इत्येव वक्तव्ये तथा न्यासेन दीधीङ्वेवीङोरेव ग्रहणमितीदमपि द्वयोरेव ग्रहणे परिभाषावत् साधकान्तरमेव जातम्, न त्वनया परिभाषया दीधीङ्वेवीङोरेव ग्रहणमित्यंशस्यखण्डनम्, उपायस्योपायान्तरादूषकत्वात्। अतस्तन्नेत्येव नेति बोध्यमिति चेत्, न; योगार्थरूढार्थयोर्यत्र प्रतीतिः, तत्रैवास्याः प्रवृत्तेः, 'दीधीवेवीटाम्' इत्यत्र योगार्थाभावेन परिभाषाया अप्रवृत्त्या कौस्तुभोक्तमयुक्तमेवेत्याशयात्॥ १०७ ॥

**व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ १०८ ॥**

**लक्ष्यानुसाराद् व्यवस्था बोध्या। 'शाच्छोः' इति सूत्रे 'लटः शतृ' इत्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०८ ॥**

**विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥**

**नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात् परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद् विधिरेवेति बोध्यम्। 'यस्य हलः' इत्यत्र 'इजादेः सनुमः' इत्यादौ च भाष्ये स्पष्टेयम् ॥ १०९ ॥**

**ननु 'आशंसायां भूतवच्च' इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यात्, अत आह—**

**सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥**

---

**वातायनार्थे इति**। वातायनमर्थो यस्येति बहुव्रीहिः। वातायनार्थकगवाक्षशब्दे इत्यर्थः। **गोक्ष इत्याद्यपीति**। वातायनार्थ इति भावः।

विशिष्टविषये व्यवस्थिततया विभाषया विकल्पो नेत्यर्थः। अपिः सार्वत्रिकव्यवस्थितविभाषासमुच्चायकः। **क्रियन्त इति**। क्वचिदिति शेषः।

**लक्ष्यानुसारादिति**। लक्ष्यानुसारमेव दर्शयन्नाह–शाच्छोरिति। तत्र हि–

देवत्रातो गलो ग्राह इति योगे च सद्विधिः।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः॥

इत्यादिना तासां परिगणनं कृतम् ॥ १०८ ॥

[ [1]सिद्धे इति। अल्लोपे सिद्धे इत्यर्थः। सर्वलोपार्थमिति।

अयं भावः—पूर्वसूत्रादत इत्नुवर्त्य हलः परस्य यशब्दस्य लोप इत्यर्थे 'आदेः परस्य' इति यकारस्य लोपे, लकारस्य 'अतो लोपः' इति लोपे चोभयोरपि लोप इत्येवंरीत्या। नियमार्थं वेति। पूर्वसूत्रादत्त इत्यनुवर्त्य हलः परस्य यशब्दाकारस्य लोप इत्यर्थे तु पूर्वसूत्रेणैवाकारस्य लोपे सिद्धे नियमार्थमिदं यशब्दाकारस्य लोपश्चेत्, तर्हि हलः परस्यैव यशब्दाकारस्येति। अत्र पक्षे 'जागदिता' इत्यत्रैव लोपः, न तु 'लोलयिता' इत्यादाविति बोध्यम्। ]

ननु विनिगमनाविरहान्नियम एव ज्यायानिति किं न स्यादिति शङ्कायां विधेर्ज्यायस्त्वे एव हेतुमाह—**नियमे हीति**। **दोषश्चेति**। चकारः प्राप्तबाधसमुच्चायकः। तथा च दोषत्रयमिति सिद्धम्। **लाघवादिति**। उक्तदोषतयाभावरूपलाघवादित्यर्थः। **भाष्ये इति**। तत्र हि 'यस्य' इति संघातग्रहणपक्षे पूर्वसूत्रेणान्त्यलोपे सिद्धे प्राप्तसर्वलोपो विधेयः, उत हल एव यशब्दाकारलोपः, नान्यत्र। 'लोलूयते' इत्यादाविति संशयेऽनया परिभाषया विधिरेवेत्युक्तम् ॥ १०९ ॥

---

1. कोष्ठान्तर्गतः पाठोऽप्रासङ्गिकः।

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः । इयमनित्या, 'न ल्यपि' इति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि ।

स्पष्टं चैतत् सर्वम् 'स्थानिवत्' सूत्रे भाष्ये ॥ ११० ॥

ननु 'तित्स्वरितम्' इति स्वरितत्वम् 'चिकीर्षति' इत्यादौ स्यात्, अत आह—

प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥

---

अतिदेशः स्यादिति । तयोरपि भूते विधानेन व्याप्तिन्यायादिति भावः ।

परिभाषायां बीजमाह—सामान्योपस्थितीति । तदुपस्थापकसामग्रीकाले इत्यर्थः । क्वचित् स्थले 'अनद्यतने लङ्' इत्यादौ अनद्यतनविशेषणरूपसामग्री-सत्त्वेन विशेषस्याप्युपस्थितेराह—नियमेनेति । सामग्र्यभाव इति । 'अनद्यतन' इत्यादि विशेषणरूपेत्यर्थः । तेन=परिभाषाङ्गीकारेण । विहितयोः=लङ्लिटोः । 'न ल्यपि' इति लिङ्गादिति । 'न क्त्वा सेट्' इति निषेधेन सेटः कित्वाभावात् । कित्त्वस्येड्रहितक्त्वाविशेषधर्मत्वादनतिदेशेनेक्त्वाप्राप्त्या तद्वैतर्थ्यं स्पष्टमेव ।

वस्तुतस्तु 'अन्तरङ्गानपि विधीन् बहीरङ्गो ल्यब्बाधते' इति न्यायेनेटः पूर्वमेव ल्यपः प्रवृत्त्या ल्यप्स्थानिभूतक्त्वायाः क्वापि सेट्क्त्वाभावेन तत्कित्त्वस्य तत्सामान्यधर्मत्वात् 'स्थानिवत्' सूत्रेण तदतिदेशात् 'प्रधाय' इत्यादावीत्त्ववारणाय 'न ल्यपि' इत्यस्यावश्यकत्वेन परिभाषाया अनित्यत्वे ज्ञापकं चिन्त्यमेव । तेन=परिभाषाया अनित्यत्वेन ॥११० ॥

[1]किरतीत्यादाविति । 'कॄ विक्षेपे' इत्यस्मात् लटि, तिपि, तुदादित्वाच्छे 'ॠत इत्' इतीत्त्वे रपरत्वे रूपम् । स्यादिति । 'ॠत इत्' इति विहितेकारस्य तित्त्वादिति भावः ।

ननु 'सनाशंसभिक्ष उः' इति सन्धातोरप्युः स्यात्, 'अत आह' इति पाठान्तरम् ।

इयश्चाङ्गसंज्ञासूत्रे इति । अङ्गसंज्ञोद्देश्यकाङ्गस्येति सूत्रे इत्यर्थः । अङ्गस्येति सूत्र इति पाठः साधीयान् । पठितेति । अनेन वाचनिकत्वं सूचितम् ।

नन्वयया परिभाषया 'इको यणचि' इति यण् 'हर्यनुभवः' इत्यत्रैव स्यात् 'सुद्ध्युपास्यः' इत्यत्र न स्यात् । एवम् 'एचोऽयवायावः' इति 'हरये, चिकीर्षवे' इत्यादावेव स्यात्, न नु 'नायकः, पावकः' इत्यादौ, अत आह—वर्ण-ग्रहणे इति ।

तत्रैव—'अङ्गस्य' इति सूत्रे एव । कैयटे स्पष्टमिति । 'न भूसुधियोः'

---

१. भूतिभूषिते 'परिभाषेन्दुशेखरे' तु 'चिक्रिर्षति' इति पाठः ।

**इयं च 'अङ्गस्य' इति सूत्रे भाष्ये पठिता। वर्णग्रहणे च न प्रवर्तते इति तत्रैव कैयटे स्पष्टम्। अत एव 'सनाशंसभिक्ष उः' 'वले' इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम्।**

**परे तु 'तित्स्वरितम्' इति सूत्र एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम्। 'अङ्गस्य' इति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता। अत एव 'तितिप्रत्ययग्रहणं कर्तव्यम्' इति वार्त्तिककृतोक्तम्। उक्तसूत्रयोर्व्याख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः॥ १११॥**

---

इति, 'नेदमदसोरकोः' इति च ज्ञापकमिति भावः। अन्यथा 'सुधियोः' इत्यत्रेयङनापत्तेः, एभिरित्यत्रानयैवैसश्च वारणसम्भवे तद्वैयर्थ्यं स्पष्टमेव। **अत एव**=परिभाषाङ्गीकारादेव। **'सनाशंस'** इति। अत्र शशभिक्षोः साहचर्यात् 'षणु दाने' 'षणसम्भक्तौ' इत्यस्य वा ग्रहणे प्राप्ते षण्धातोः 'धात्वादेः षः' इति निष्पन्नत्वेन लाक्षणिकत्वात् 'लक्षणप्रतिपदोक्त' परिभाषया प्रतिपदोक्तसन्प्रत्ययस्य ग्रहणे प्राप्ते तयोः परिभाषयोः परस्परोपमर्दकत्वेनोभयोरप्यनुपस्थित्या कस्याप्यग्रहणे प्राप्तेऽनया सनः प्रत्ययस्यैव ग्रहणमिति बोध्यम्।

**तत्प्रत्याख्यानाय**='अङ्गस्य' इति सूत्रप्रत्याख्यानाय। **एकदेशिनेति**। परिभाषाङ्गीकारापेक्षयाङ्गाधिकारे लाघवात् परिभाषाङ्गीकारेऽपि वेञ्धातोः क्ते, 'ग्राहिज्या' इति सम्प्रसारणे 'निरुतम्' इत्यत्र 'हलः' इति दीर्घवारणार्थम् 'अङ्गस्य' इत्यस्यावश्यकत्वाच्चास्यैकदेश्युक्तित्वम्। **अत एव**=परिभाषाङ्गीकारादेव। **उक्तसूत्रयोः**='सनाशंभिक्ष उः' 'बले' इति सूत्रयोः। **व्याख्यानादिति**। आद्ये,गर्गादिगणे 'चिकीर्षुः, जिगीषु' शब्दपाठरूपव्याख्यानात् 'मतौ' इत्युत्तरसूत्रस्थमतुसाहचर्यरूपव्याख्यानाच्चेत्यर्थः।

परे तु, अस्या लक्ष्यसंस्कारकत्वाभावे वाचनिकीमिमां स्वीकृत्य 'अङ्गस्य' इत्यस्य प्रत्याख्यानेऽथवा 'अङ्गस्य' इत्यङ्गीकृत्य परिभाषानङ्गीकारे को विशेषः? अन्यतरानङ्गीकारेऽन्यतरावश्यकत्वात्।

किञ्च, गुरुभूतपरिभाषाङ्गीकारापेक्षया लघुभूतसूत्राङ्गीकार एव ज्यायानित्यनयैव सिद्धे 'अङ्गस्य' इति न कर्तव्यमिति प्रत्याख्यानपरभाष्यमसङ्गतमेव स्यात्। अतोऽन्यार्थमियमावश्यकीति वक्तव्यम्। ततश्चावश्यिकयानयैव सिद्धे 'अङ्गस्य' इति न कर्तव्यमिति प्रत्याख्यानं सङ्गच्छते। परिभाषानङ्गीकारे तु 'वनो र च' इत्यत्र 'वन सम्भक्तौ' इत्यस्मात् क्विपि वनित्यस्य च 'वसुस्रंसुध्वंस्वनडुहां दः' 'वसोः सम्प्रसारणम्' इत्यनयोः, 'वसु स्तम्भे' इति क्विबन्तस्य च, 'न पदान्ताट्टोः' इति नामाचष्टे नामयतीति क्विपि नामित्यस्य, 'सनाशंसभिक्ष उः' इत्यत्र क्विबन्तषणसम्भक्तावित्यस्य च, 'वले' इत्यत्र वलशब्दस्य च, 'षष उत्वं दतृदशधासु' इत्यत्रधा इत्यनेन डुधाञः क्विपि धा इत्यस्य च, 'हृदयस्य हृल्लेखयदण्लासेषु' इत्यत्र यदण्भ्यां

ननु 'विपराभ्यां जेः' इत्यात्मनेपदं परा सेना जयतीत्यर्थके 'पराजयति सेना' इत्यत्र प्राप्नोतीत्यत आह--

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥ ११२ ॥

---

क्विबन्तयोः 'यति प्रयत्ने' 'अण् गतौ' इत्यनयोश्च ग्रहणं दुर्वारं स्यात्। तस्मादुक्तस्थलेषु प्रत्ययस्यैव ग्रहणार्थमियमावश्यकी। 'अङ्गस्य' इत्यपि 'निरूतम्, दुरुतम्' इति सिद्धये आवश्यकमेव। न चैतदर्थम् 'अङ्गस्य' इत्यऽस्यावश्यकत्वेऽर्थवत्प्रत्ययग्रहणाभ्यां सिद्धे इदं न कर्तव्यमिति प्रत्याख्यानपरभाष्यविरोधः, 'निरुतम्' इत्याद्यर्थमावश्यकत्वमजानता पूर्वपक्षिणा तथोक्तम्:, ततः सिद्धान्तिनेदं तर्हि प्रयोजनं 'निरुतं दुरुतम्' तदर्थमवश्यमेतत्कर्तव्यमित्युक्त्वा प्रत्याख्यानस्य पूर्वपक्ष्युक्तित्वेनादोषादित्याहुः।

ननु परिभाषाङ्गीकारे 'परेश्चघाङ्कयोः' इत्यत्र घस्य प्रत्ययस्यैव ग्रहणं स्यात्, ततश्च 'परिघः, पलिघः' इत्यत्र न स्यादिति चेत्, न; अङ्कशब्दसाहचर्याद् घस्यापि शब्दस्यैव ग्रहणेनादोषात्। नापि 'तिति प्रत्ययग्रहणं कर्तव्यम्' इति वार्त्तिकविरोधः, प्रत्ययाधिकारे विधेयतावच्छेदकधर्मो यः, तद्धर्मावच्छिन्नस्यैव विध्यन्तरे निमितत्वेनोद्देश्यत्वेन वोपादानं यत्र, तत्रैवेतत्परिभाषाप्रवृत्तेः। 'छन्दसो यदणौ' 'अचो यत्' 'उगवादिभ्यो यत्' इत्यादौ प्रत्ययाधिकारे यत्त्वस्यैव विधेयतावच्छेदकत्वेन क्वापि तित्त्वस्य तत्त्वाभावात् 'तित्स्वरितम्' इत्यत्र तित्त्वस्योद्देश्यतावच्छेदकत्वेन च प्रत्ययाधिकारे विधेयतावच्छेदको यो धर्मः, तद्धर्मावच्छिन्नस्य स्वरितविधावुद्देश्यत्वेनानुपादानात् प्रकृतपरिभाषाया अप्रवृत्त्या 'तित्स्वरितम्' इत्यत्रोभयग्रहणे प्राप्तेऽप्रत्ययव्यावृत्त्यर्थं तद्वार्त्तिकस्यावश्यकत्वात्। एतादृशार्थाङ्गीकारे मानं तु 'वान्तो यि' इत्यत्र लाघवाद्यादावित्येव सिद्धे प्रत्यय इत्येव। अन्यथाऽनयैव 'तोयम्' इत्यादौ वारणसम्भवे प्रत्यय इत्यनेन किं कृतं स्यात्? तथा न्यासे प्रत्ययाधिकारे 'अचो यत्' इत्यादौ यत्त्वस्य विधेयतावच्छेदकत्वेन वान्तोयादाविति वान्तादेशविधौ यादित्वस्य निमित्ततावच्छेदकत्वेन च प्रत्ययाधिकारे विधेयतावच्छेदकधर्मो यः, तद्धर्मावच्छिन्नस्य वान्तादेशविधौ निमित्ततावच्छेदकत्वेनानुपादनात् परिभाषाया अप्रवृत्त्या 'तोयम्' इत्यादौ प्राप्तवान्तादेशवारणार्थं प्रत्ययग्रहणमिति स्वांशे चारितार्थ्यमिति बोध्यम् ॥ १११ ॥

**परा सेनेति**। उत्कृष्टेत्यर्थः। **इत्यत्रेति**। अपीति शेषः।

**तेन** = परिभाषाङ्गीकारेण। **विशब्दसाहचर्यादिति**। ननु सम्बुद्धयन्तो विः पक्षिवाची, ततोऽव्यवहितपर 'जि' धातौ वे ? 'जयति देवदत्तः' इत्यादौ सम्भवतीति तत्कथं साहचर्यान्निर्णय इति चेत्, न; वीत्यटाबन्तसाहचर्यादटाबन्तपराशब्दस्योपसर्गस्य ग्रहणम्, अटाबन्तपराशब्दस्यासत्त्वार्थस्य साहचर्याद्

**तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम्।**

**सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते। 'रामलक्ष्मणौ' इत्यादावपि सादृश्यमेव नियामकम्। सदृशयोरेव सहविवक्षा, तयोरेव सहप्रयोग इत्युत्सर्गाच्च। ध्वनितं चेदम् 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रे भाष्ये। तत्र हि 'पञ्चम्यपाङ्परिभिः' इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य 'यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने च, अयं खल्वपशब्दोऽदृष्टापचारो**

---

विशब्दस्याप्यसत्त्वार्थकस्यैव ग्रहणमिति परस्परसाहचर्येणोपसर्गयोरेव तत्र ग्रहणात्।

ननु टावन्तपराशब्दस्य लाक्षणिकत्वेन 'लक्षणप्रतिपदोक्तपरिभाषयोपसर्गस्य पराशब्दस्य ग्रहणेनैतत्साहचर्यात् पक्षिवाचकविशब्दस्य व्यावृत्तवँक्तव्यत्वेन तदर्थमावश्यिकया 'सहचरित' परिभाषयैव तत्र दोषवारणसम्भवे परिभाषान्तराश्रयणस्यानुपयोगात्। अत एवेदम् 'लक्षणप्रतिपदोक्त' परिभाषाया नासाधारणमुदाहरणमिति बोध्यम्। तत्रैव='विपराभ्यां जेः' इति सूत्रे एव।

अस्या लोकसिद्धत्वं सूचयति—**सहचरणमिति**। सहगमनं सहप्रयोगादिरूपमित्यर्थः।

ननु लोके रामशब्दस्य परशुरामादावपि वृत्तेः 'रामलक्ष्मणौ' इत्यत्र कथं दशरथापत्यस्य रामशब्दवाच्यतेत्यत आह—**रामलक्ष्मणावित्यादाविति**। **नियामकमिति**। तथा च दशरथापत्यादन्यस्य लक्ष्मणस्याभावेन तत्साहचर्याद् रामशब्दोऽपि दशरथापत्यस्यैव वाचको गृह्यत इति भावः।

सहचरणं सदृशयोरेवेत्यत्र हेत्वन्तरमाह—**सदृशयोरेवेति**। 'अस्थिदधिसक्थ्यक्षणाम्' इत्यादावित्यर्थः। 'श्वयुवमघोनाम्' इत्यत्रासदृशामपि प्रयोगदर्शनेन क्वचिद् व्यभिचारादाह—**इत्युत्सर्गाच्चेति**। प्रायश इत्यर्थः।

नन्वेवमेषां साहचर्यसम्बन्धो न क्वापि गृहीत इति कथं प्रकृतार्थसिद्धिः, अत आह—**ध्वनितञ्चेदमिति**। **दृष्टापचार इति**। दृष्टोऽपचारः=अर्थान्तरं यस्येति बहुव्रीह्यर्थः। अनियतार्थक इति यावत्। अनियतार्थकत्वमेव दर्शयति—**वर्जने, चावर्जने चेति**। 'लक्षणेत्थंभूताख्यानभागवीप्सासु' इत्यर्थः। अस्यापि कर्मप्रवचनीय इत्यत्रान्वयः।

अदृष्टापचारत्वमेवाह—**वर्जनार्थ एवेति**। **अन्य इति** अर्थः [ इति शेषः ]। **सहायेनार्थ** इति। अर्थः=प्रयोजनम्। अस्य गोः सहायेन प्रयोजनमस्तीत्यर्थः। ध्वनितत्वमेव दर्शयति—**तेन होति**। भाष्येण होत्यर्थः।

**क्त्वोऽर्थानामिति**। तदर्थकचतुःशब्दस्येत्यर्थः।

बहुवचनं त्वर्थापेक्षया प्रयोगापेक्षया वेति बोध्यम्। क्वचित् क्त्वोर्थस्ये-

**वर्जनार्थ एव कर्मप्रवचनीयः, तस्य कोऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थात्, यथास्य गोः सहायेनार्थं इति गौरेवानीयते, नाश्वः, न गर्दभ इत्युक्तम्। तेन हि सदृशानामेव प्रयोगे सहायभावो बोधितः :**

**'द्विस्त्रिश्चतुः' इति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषाऽनित्या। तेन 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः॥ ११२॥**

**ननु 'अस्थि०' इत्यनङ् 'प्रियसक्थ्ना ब्राह्मणेन' इत्यत्र न स्यात्, अङ्गस्य नपुंसकत्वाभावात् अत आह—**

**श्रुतानुमितयोः श्रुतसंबन्धो बलवान्॥ ११३॥**

**श्रुतेनैव संबन्धः, नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः। प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः।**

---

त्येव पाठः। तेन=परिभाषाया अनित्यत्वेन। **आगमस्येट** इति। नन्वनित्यत्वात् परिभाषाया अप्रवृत्ताविट्पदेन धात्वागमयोरुभयोरपि ग्रहणसम्भवात् कथमागमस्येटो ग्रहणमित्युक्तिरिति चेत्, न; तथा सति त्रयाणामपि धातुत्वाविशेषेण समत्वात् 'अल्पाच्तरम्' इतीटः पूर्वनिपातापत्त्या 'इट् दीधीवेव्या' इत्येव वदेत्। तस्मादागमस्यैव ग्रहणमिति बोध्यम्।

नन्वागमवाचकत्वेऽपीटः पूर्वनिपातः कुतो नेति चेत्, आगमत्वेनेटोऽनर्थकत्वाद् दीधीवेव्योः क्रियावाचकत्वेनाभ्यर्हितत्वात् 'अल्पाच्तरम्' इति बाधित्वा 'अभ्यर्हितञ्च' इति तयोः पूर्वनिपात इति बोध्यम्॥ ११२॥

**अङ्गस्य नपुंसकत्वाभावादिति।** 'अस्थिदधि' इति सूत्रे नपुंसकानुवृत्तिफलं त्वनपुंसकसंज्ञाशब्दव्युदासः। यत्तु, अत्र 'अभिव्यक्तपदार्था ये' इति न्यायानुसरणे गौरवप्रसङ्गान्नपुंसकानुवृत्तिराश्रितेति। तन्न; तन्न्यायस्य पदकार्यविषयत्वेनात्राप्रवृत्तेः। 'ई च द्विवचने' इत्युत्तरार्थं च तदनुवृत्तिः। तत्र 'नपुंसकस्य' इति, 'पुंवत्' इति चानुवर्तते। तेन छन्दसि नपुंसकस्य पुंवद्भावविधानात् 'मधोर्गृम्णामि, मधोस्तृप्ता' इत्यादौ नुम् न। इदमुपलक्षणं त्रिचतुरोरित्यस्य।

**श्रुतेनैव**=साक्षादुच्चारितशब्देनैव, व्यवहितप्रकरणादनुवृत्तिलब्धेन वेत्यर्थः। तेन 'वा नपुसकस्य' इत्यत्र 'नाभ्यस्तात्' इत्यतोऽनुवृत्तः शतापि श्रुत एवेति तस्यापि गृह्यमाणपदेन ग्रहणसिद्धिः।

एवकारव्यवच्छेद्यमाह—**नानुमितेनेति।** अनुमितेत्यस्यार्थमाह—**प्रकरणप्राप्तेनेति। श्रुतेर्बलवत्त्वादिति।** 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्' इति न्यायेनेति भावः।

एवञ्च=श्रुतेर्बलत्त्वेन। **अत एव**=परिभाषाङ्गीकारादेव। तत्र 'नपुंसकग्रहणं हि' इत्येवमर्थमित्यन्वयः।

एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणम्, नाङ्गस्य, शिशीलुग्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम्। अत एव 'वा नपुंसकस्य' इति सूत्रे 'वा शौ' इति न कृतम्। तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्यात्' 'बहवो ददतो येषु तानि कुलानि बहुददति' इत्यत्र मा भूत्; 'बहूनि ददन्ति येषु ते बहुददन्तः' इत्यत्र यथा स्यादित्येवमर्थम्।

स्पष्टं चेदम् 'स्वमोर्नपुंसकात्' इत्यत्र भाष्ये।

केचित् तु, 'अचो रहाभ्यां द्वे' इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितेन कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः, तत्, न; 'तक्रकौण्डिन्यन्यायेन 'सिद्धेः' इत्यन्यत्र विस्तरः॥ ११३॥

ननु 'तत्पुरुषे तुल्यार्थः' इति स्वरः 'परमेण कारकेण, परमकारकेण' इत्यादौ स्यात्, तथा 'गातिस्थाघुपाभूभ्यः' इति लुक् 'पैशोषणे' इत्यतः कृतात्त्वात् परस्यापि स्यात्, अत आह—

---

**स्पष्टं चेदमिति।** इदम्=परिभाषारूपं वचनं स्पष्टमिति ध्वनितमित्यर्थः। अनुपसर्जनाधिकारज्ञापकात् 'स्त्रियाम्' इति 'वनो रच' इत्यादीनाम्, 'अतिधीवरी' इत्यादावपि प्रवृत्तिसिद्धिः। एतेनेयं चानित्या, अनुपसर्जनाधिकारात्। तेन 'वनो र च' इत्यादीनाम्, 'अति धीवरी' इत्यादावपि प्रवृत्तिसिद्धिरिति, तन्न; मदुक्तरीत्यैवैतत्सिद्धौ परिभाषानित्यत्वस्वीकारे प्रयोजनाभावात्।

**न्यायेन सिद्धेरिति।** परे तु, श्रुतेन निमित्तेनानुमितकार्यत्वस्य बाधे 'तक्रकौण्डिन्य' न्यायोऽपि साधकान्तरं जातम्। एतावता प्रकृतन्यायेन श्रुतेन निमित्तत्वेनानुमितं कार्यित्वं बाध्यते इत्यस्य नेदं खण्डनम्, उपायस्योपान्तरादूषकत्वात्। अतस्तन्नेति यदुक्तं तदेव नेति प्राप्नोति। खण्डनप्रकारस्तु-श्रुतानुमितयोरुभयोरपि विशेषणसंबन्धे प्राप्ते तत् कस्य विशेषणं कर्तव्यमिति संशये श्रुतेर्बलवत्त्वाच्छ्रुतेनैव संबन्धः, नानुमितेनेति सम्बन्धिनियामिकेयमिति बाध्यबाधकभावबोधिकेति नानया तत्र निर्वाह इति तु युक्तमित्याहुः॥ ११३॥

**परमेण कारकेणेति।** परिनिष्ठितविभक्त्या 'विशेषणं विशेष्येण बहुलम्' इति समासः। आदिना परमे कारके, परमकारकः; इत्यस्य परिग्रहः। 'परमे कारके परमकारकः' इति पाठोऽपि क्वचित्। **परस्यापीति।** सिच इति शेषः।

**उपचारादिति।** लक्षणञ्च प्रतिपदञ्चेति द्वन्द्व कृत्वोक्तं चोक्तं चेत्येकशेषं कृत्वोक्तशब्देन तृतीयासमासे द्वन्द्वान्ते श्रूयमाणत्वेनोक्तस्य प्रत्येकमभिसम्बन्धादुपचारमन्तराप्युक्तार्थलाभ इति केचित्।

**विभक्तिविशेषाद्यनुवादेनेति।** 'द्वितीयाश्रितातीत' इति 'तृतीया

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ११४ ॥

**लक्षणम् लाक्षणिकम्, उपचारात् ।**

**तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तः, तस्यैव ग्रहणम्, शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । पै इत्यस्य पा इति रूपं लक्षणानुसन्धानपूर्वकं विलम्बोपस्थितिकम्. पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत् परिभाषाबीजम् ।**

**इयं च वर्णग्रहणेऽपि, 'श्रोत्' सूत्रे भाष्ये सञ्चारितत्वात् ।**

---

तत्कृतार्थे०' इति 'चतुर्थी तदर्थार्थे' इति 'कृत्यतुल्याख्या अजात्या' इति विशेषानुवादेनेत्यर्थः । **द्वितीयो हीति** । 'विशेषणं विशेष्येण' इत्यादिभिः सामान्येन विहित इत्यर्थः । **इदमेवेति** । विलम्बोपस्थितिकत्वं शीघ्रोपस्थितिकत्वञ्चेत्यर्थः **बीजमिति** । तथा च लोकसिद्धलाघवगौरवमूलकोऽयमिति भावः ।

वस्तुतः 'कर्तरि भुवः खिष्णुच्खुकञौ' इत्यत्र खिष्णुचीकारोच्चारणाज्ज्ञापकसिद्धैवेयम् । तद्धि 'भविष्णुः' इत्यादिरूपसिद्धयर्थम् । तत्र खष्णुचं कृत्वा तस्येडागमे च तत्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

ननु 'कृत्योकेष्णुच्चार्वादयश्च' इति सूत्रे प्रतिपदोक्तस्य 'अलङ्कृञ्' इति सूत्रविहितस्येष्णुचो ग्रहणम्, न खिष्णुचः, द्वयनुबन्धकत्वादिति चेत्, न; यावतानुपपत्तिः, तत्सर्वं ज्ञाप्यते इतीकारोच्चारणेन तद्बाधस्यापि ज्ञापनात् ।

वर्णग्रहणेस्या अप्रवृत्तिरिति प्राचीनोक्तं दूषयति—**इयं च वर्णग्रहणेऽपि** इति । अन्यथा 'एचोऽयवायावः' इत्ययवादयो धेट् पाने—धयति, कै गै शब्दे—'कायति, गायति' इत्यादावेव स्युः, न तु जि जये—'जयति; भवति, भावयति' इत्यादौ । एवम् 'इको यणचि' इति यण् 'हर्यनुभवः' इत्यादावेव स्यात्, न तु 'सुद्ध्युपास्यः; अक्षद्युः' इत्यादौ, ईकारोकारयोः सम्प्रसारणनिष्पन्नत्वेन लाक्षणिकत्वात् । एवमन्यत्रापि बोध्यम् ।

**'श्रोत्' सूत्रे भाष्ये** इति । तत्र हि 'ओतश्चिवप्रतिषेधः, ओदन्तो निपात इत्यत्र 'च्व्यन्तस्य प्रतिषेधो वक्तव्यः' अनदः अदोऽभवत्, तिरोऽभवत्, न वक्तव्यः; 'लक्षणप्रतिपदोक्तयोः प्रदिपदोक्तस्य' इत्येवं भविष्यतीत्युक्तम् ।

**उपदेशग्रहणादिति** । तद्धि 'चेता, स्तोता' इत्यादावात्ववारणार्थम् । तत्र चैचो गुणनिष्पन्नत्वेन लाक्षणिकत्वात् प्रकृतपरिभाषयैव वारणसम्भवे तद्वैयर्थ्यं स्पष्टमेव ।

**तत एवेति** । तत्र हि धातुग्रहणानुवृत्तावुत्सृष्टानुबन्धस्यैव धातुत्वान्नकारसत्त्वे आत्वाप्राप्त्या 'उदीचां माङः' इति निर्देशानुपपत्तेः, 'अणिञोः' इति सूत्रे भाष्येऽपि धातोरित्यस्याननुवृत्तिध्वनाच्चोपदेशग्रहणेनेव 'गांभ्याम्' इत्यादावात्वं न 'उद्देश्च प्रातिपदिकानां नोपदेशः' इत्युक्तम् ।

**यत्तु, वर्णग्रहणे नैषा 'आदेचः' इत्यत्रोपदेशग्रहणादिति, तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम्।**

**अनित्या चेयम् 'भुवश्च महाव्याहृतेः' इति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ ११४ ॥**

**नन्वेवं देङो दोधातोश्च कृतात्वस्य घुसंज्ञा न स्यात्, तथा मेञ आत्वे 'प्रणिमाता' इत्यादौ 'नेर्गदनद०' इति णत्वं न स्यात्, तथा गै इत्यस्यात्वे 'घुमास्था०' इतीत्वं न स्यात्, अत आह—**

---

एवञ्चोक्तहेतोर्धातुग्रहणानुवृत्तेः कर्त्तुमशक्यत्वेन 'गोभ्याम्' इत्यादावात्ववारणायोपदेशग्रहणस्यावश्यकत्वेन ज्ञापकासङ्गतिः स्पष्टैव।

**अनित्या चेति।** तेन 'भोभगो' इत्यत्र 'विभाषा भवद्भगवत्' इति वार्त्तिकनिष्पन्नभोसादीनामपि ग्रहणम्। **महाव्याहृतिग्रहणादिति।** तद्धि भवतीति भूः, तस्माज्जसि, ङसि वोवङादेशे च निष्पन्नभुवसित्यस्याग्रहणार्थम्। तस्योवङादिनिष्पन्नत्वेन लाक्षणिकत्वात् परिभाषयैव वारणसम्भवे तद्वैयर्थ्यं स्पष्टमेव। कृते तु तस्मिन् 'भूः, भुवः, स्वः' इत्यव्ययपठितस्य प्रतिपदोक्तस्यैव ग्रहणमिति भावः। एवम् 'यावत्पुरानिपातयोर्लट्' इत्यत्र निपातग्रहणमपि ज्ञापकम्। तद्धि 'यत्तदेतेभ्यः' इति वतुपि 'आ सर्वनाम्नः' इत्यात्वादेशे च निष्पन्नम्। 'यावद्दास्यते' इत्यत्र; तथा नगरवाचकपुर्शब्दस्य तृतीयान्तस्य योगे करणभूतया पुरा यास्यतेत्यत्र मा भूदित्येवमर्थम्। अनयोर्लाक्षणिकत्वेनैव वारणसम्भवे तद्वैयर्थ्यं स्पष्टमेव। कृते तु तस्मिन्नव्ययपठितयोः प्रतिपदोक्तयोरेव ग्रहणमित्यन्यदिति दिक् ॥ ११४ ॥

**एवमिति।** 'लक्षणप्रतिपदोक्त'परिभाषाङ्गीकारे। **प्रणिमातेत्यादाविति।** वस्तुत इदं चिन्त्यम्—मेङ् धातौ 'प्रणिमयते' इत्यत्रैव 'नेर्गद' इति णत्वस्य कौमुद्युक्तत्वेनास्यापि माप्रकृतित्वात् तत एवात्रापि णत्वसिद्धेः, मेङः कर्मणि लटि तङि यकि च 'प्रणिमीयते' इत्यत्र 'घुमास्था' इतीत्वं न स्यादिति तु युक्तम्।

गामादाग्रहणं येषु शास्त्रेषु तानि गामादाग्रहणानि, तेष्वित्यर्थः। एवम् 'दाधाध्व' इति सूत्रे धांशेऽपि लाक्षणिकस्य धेटो ग्रहणम्। [अत एव] 'दो दद्घोः' इत्यत्र दाग्रहणं चरितार्थम्। तद्धि धेटः, डुधाञश्च निवृत्त्यर्थम्। तत्र हि धाञस्तादौ किति 'दधातेर्हिः' इति विशिष्य ह्यादेशविधानात्, धेटः 'लक्षणप्रतिपदोक्त'परिभाषया च वारणसम्भवे तद्व्यर्थमेव स्यात्।

**अन्यथा** = परिभाषाया अभावे। तद्ग्रहणे = दैपो ग्रहणे। **तेन चेति।** दैपः पित्त्वेन चेत्यर्थः। **एकदेशानुमितिद्वारेति।** अत्र हि गाग्रहणेषु 'लुग्विकरण' निरनुबन्धक'परिभाषाभ्यां गा स्तुतौ; गै शब्दे इत्यनयोः, 'प्रतिपदोक्त'परिभाषया गा स्तुतौ; गाङ् गतौ इत्यनयोश्च, एवं माग्रहणेषु 'निरनुबन्धक' प्रतिपदोक्तपरिभाषाभ्यां मा माने; माङ् माने इत्यनयोः 'लुग्विकरण'परिभाषया मेङ्

गामादाग्रहणेष्वविशेषः ॥ ११५ ॥

अत्र च ज्ञापकं दैपः पित्त्वम्। तद्धि 'अदाप्' इति सामान्यग्रहणार्थम्। अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन ? तेन चैकदेशानुमितिद्वारा संपूर्णा परिभाषा ज्ञाप्यते।

इयं च 'लक्षणप्रतिपदोक्त' 'परिभाषा' निरनुबन्धक 'परिभाषा' लुग्विकरणपरिभाषाणां बाधिका। 'दाधा घु०' इति सूत्रे भाष्ये स्पष्टा।

'गातिस्था०' इति सूत्रे इणादेशगाग्रहणमेवेष्यत इति न दोष इत्यन्यत्र विस्तरः॥ ११५॥

ननु वृद्धयादिसंज्ञाः समुदाये स्युः, अत आह—

प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११६ ॥

'देवदत्तादयो भोज्यन्ताम्' इत्यत्र भुजिवत् ॥ ११६॥

नन्वेवं संयोगसंज्ञासमाससंज्ञाऽभ्यस्तसंज्ञा अपि प्रत्येकं स्युः, अत आह—

---

प्रणिदाने, मीञ् हिंसायाम्, डुमिञ् प्रक्षेपे; माङ् माने, शब्दे चेत्येषाम्, तथा दाग्रहणेषु'लुग्विकरण'प्रतिपदोक्तपरिभाषाभ्यां डुदाञ् दाने दाण् दाने इत्यनयोः, 'लुग्विकरण' निरनुबन्धक'परिभाषाभ्यां दो अवखण्डने इत्यस्य, 'प्रतिपदोक्त-परिभाषया' दाप् लवने इत्यस्य, लुग्विकरणपरिभाषया देङ् रक्षणे, दीङ् क्षये, दैप् शोधने, इत्येषां च ग्रहणे प्राप्ते परिभाषाणां परस्परोपमर्दकत्वेन 'सुन्दोप-सुन्द'न्यायेन कस्या अप्यप्रवृत्त्या सामान्यतः सर्वेषां ग्रहणमिति तु युक्तम्। एतेन 'एकादेशानुमतिद्वारा' इति यदुक्तम्, तदसमञ्जसमेवेति बोध्यम्।

**बाधिकेति**। न तु 'अर्थवद्ग्रहण' परिभाषया अपि। तेन दृन्धातोर्णिचि 'प्रणिदारयति' इत्यत्र णत्वं नेति केचित्। वस्तुतस्तदबाधकत्वेऽयुक्तस्थले दारूनिरूपितोपसर्गत्वेऽपि घुनिरूपितोपसर्गत्वाभावान्न दोष इति भाष्ये स्पष्टम्।

नन्वेवम् 'गातिस्था' इति सूत्रेऽप्यनया गा स्तुतौ, गे शब्दे, इत्यनयोरपि ग्रहणापत्तिः, अत आह—**गातीति। इष्यत इति**। गाङ् गतौ इत्यस्य हरदत्ता-दिमते आदादिकत्वेऽपि तस्यात्मनेपदित्वेन ततः परस्मैपदासम्भवात्, गै शब्दे, इत्यस्य 'गायति' इति रूपाच्च, गा स्तुतौ इत्यस्य जिगातीति रूपाच्च। गातीति 'रूपेणादेशगातेरेव ग्रहणमिति भावः॥ ११५॥

**वृद्धयादीति**। गुणसंख्यासंज्ञादिपरिग्रहः।

लोकसिद्धोऽयं न्याय इत्याह—**देवदत्तादय इति। भुजिवदिति**। भोजनव-दिति तु समीचीनः पाठ इति केचित्।

'आहौ प्रभूतादिभ्यः' इत्यादिवार्त्तिके धात्वर्थनिर्देशेऽपीक्स्तिपोदर्शनेना-त्रापि धात्वर्थनिर्देशे इकः सत्त्वेन सादृश्यासङ्गतेरभावाद्युक्त एव पाठ इति परे॥ ११६॥

## क्वचित् समुदायेऽपि ॥ ११७ ॥

**'गर्गाः शतं दण्डयन्ताम्, अर्थिनश्च राजानो हिरण्येन भवन्ति इत्यादौ दण्डनवत् । लक्ष्यानुरोधेन च व्यवस्था ॥ ११७ ॥**

**ननु 'यूस्त्र्याख्यौ०' इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यात्, अत आह—**

---

एवम् = प्रत्येकं वाक्यपरिसमाप्तिस्वीकारे ।

अयमपि लोकसिद्धन्याय एवेत्याह—**गर्गाः शतमिति** । अत्रार्थिनो राज्ञो धनाकर्षण एव तात्पर्यम्, न तु गर्गदण्डने इति शतं प्रधानम्, गर्गा अप्रधानम् । यदि प्रत्येकं समाप्तिः शतदण्डनस्य स्यात्, तर्ह्यप्रधानगर्गानुरोधेन प्रधानशतावृत्तिः स्यात् । तस्मात् प्रधानानुवृत्तेरनुचितत्वेन समुदाय एव परिसमाप्तिरिति भावः । अमुमर्थमेव सूचयितुमाह—**अर्थिनश्च राजान** इति ।

ननु निर्णयाभावात् क्व प्रत्येकम्, क्व च समुदाय इत्यत आह--**लक्ष्यानुरोधेन चेति** ॥ ११७ ॥

**'यूस्त्र्याख्यौ'** इति । ईश्च ऊश्च यू 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । जातिपक्षेऽस्याः प्रयोजनाभावादाह—**व्यक्तिपक्ष** इति । **दीर्घनिर्देशादिति** । व्याख्यानादिति भावः । **अन्यस्वरकस्येति** । उच्चारितस्वरभिन्नस्वरकस्येत्यर्थः । **संज्ञा** = नदीसंज्ञा ।

**यत्ने** इति । उदात्तादिपदोच्चारणरूपे इत्यर्थः । **स्वरूपेणेति** । तत्तद्रूपेणे-त्यर्थः ।

**अत्र चेति** । अस्यां परिभाषायां चेत्यर्थः । 'अस्थिदधि' इत्यादिना 'चतुरनडुहोः' इत्यादिपरिगहः । एवो भिन्नक्रमः । उच्चारणेनैवेत्यर्थः ।

**अनुनासिक एवेति** । स्थान्यनुरूपतयेत्यर्थः । **एतदर्थमेवेति** । 'उञ ऊँ' 'पथिमथ्यृभुक्षामात्' इत्याद्यर्थमेवेत्यर्थः :

एवम् = 'असति यत्ने' इति विशेषणोपादाने । **अनुदात्त एवेति** । अस्थ्यादीनाम् 'नब्विषयस्य' इत्याद्युदात्तानां शेषनिघातेनान्तानुदात्त इति भावः । अस्य = उदात्तग्रहणस्येत्यर्थः । **कथमस्य ज्ञापकत्वमिति** । स्वस्मिन्नचारितार्थ्यादिति भावः । **अन्तोदात्त** इति । समासस्वरेणेति भावः । **स्थानित्वेनेति** । स्थान्यनुरूपोच्चारणस्यैव सत्त्वेन यत्नविशेषरूपमानाभावात् तद्विवक्षेति भावः ।

ननु परिभाषाङ्गीकारे चतसर्याद्युदात्तनिपातने कृतेऽपि स्थानगुणक एवादेशो भविष्यतीति तत्र तत्राद्युदात्तादिनिपातनं भाष्यकृतोऽपि विफलमेव स्यादित्यत--**चतसर्याद्युदात्तेत्यादिना** । चतसरि समासस्वरेणान्तोदात्त एवोच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम्; हन्तेरनुदात्तत्वेन वधादेशे स्थान्यनु-

## अभेदका गुणाः ॥ ११८ ॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदकः, न विवक्षित इत्यर्थः ।

अत्र च 'अस्थिदधि०' इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्धे उदात्त-ग्रहणं ज्ञापकम् । स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादि-शब्दोच्चारणे विवक्षैव ।

'उञ उँ' इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिको-च्चारणाद् विवक्षा बोध्या । 'पथिमथ्यृभुक्षाम्' इत्यादौ स्थान्यनुरूपतयानु-नासिक एवोच्चारणीये निरनुनासिकोच्चारणात् तद्विवक्षा । एतदर्थमेवासति यत्न इत्युक्तम् ।

न चैवमस्थ्यादीनाम् 'नब्विषयस्य' इत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्, परमास्थिशब्दादावन्तोदात्त उदात्तगुण-कस्यापि स्थानित्वेन विवक्षायां मानाभावात् ।

---

गुणे उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम्, पादादीनां सहस्य च फिट्स्व-रेण शेषनिघातेन चोदात्तानुदात्तोभयगुणकतया पदादयोऽपि स्थान्यनुरोधेन स्वरितगुणका एवोच्चारणीया इत्युदात्तोच्चारणं विवक्षार्थम् ।

नन्वेवं ज्ञापकपरभाष्यासङ्गतिः, तत्राप्युक्तरीत्या तदुच्चारणे विवक्षार्थ-त्वस्य सम्भवात्, अत आह—**त्रैस्वर्येणेति । पाठ इति** । अस्याष्टाध्यायीत्यादिः ।

पूर्वत्रारुचिप्रदर्शनाय स्वसिद्धान्तमाह--**परे त्विति । अन्यत्रेति** । वधादे-शादावित्यर्थः ।

नन्वेकश्रुत्यैवाष्टाध्यायीपाठे तत्र तत्राद्युदात्तनिपातनं भाष्योक्तमसङ्गत-मेवेत्याशङ्क्याह—**सम्पूर्णेति । पदस्येति** । ननु गुणानामभेदकतया त्रैस्वर्येण पाठेऽपि दोषाभावादेकश्रुत्या पाठाश्रयणं भाष्यकृतो व्यर्थमेव स्यादिति चेत्, न; 'गुणा अभेदकाः' इत्याश्रित्यैकश्रुत्या पाठाश्रयणस्य परिहारान्तरपरत्वेनादोषात् ।

**अत एवेति** । 'अप्रत्ययः' इति निषेधाद् विधेयाऽणि 'गुणा अभेदकाः' इत्यस्याप्रवर्तनादेवेत्यर्थः । 'अप्रत्ययः' इत्यनेन 'गुणा अभेदकाः' इत्यस्यापि बाधे प्रमाणमाह—**अत एवेति** । गुणाभेदकप्राप्तस्य 'अप्रत्ययः' इति निषेधादेवेत्यर्थः । **निर्देश इति** । सङ्गच्छत इति शेषः । **अस्य**='गुणाभेदकाः' इत्यस्य ।

ननु जातिपक्षे 'यूस्त्र्याख्यौ' इत्यनेन ह्रस्वयोरपि नदीसंज्ञा दुर्वारा स्यात्, इत्वादिजातेस्तत्रापि सत्त्वात्, अत आह—**यू इत्यादौ दीर्घमात्रेति । अन्यत्रेति** ।

विस्तरार्थस्तु, 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्यत्र भाव्यमानपदं भाव्यमानत्वाश्रयपरम्, सवर्णपदं स्वरभिन्नसवर्णपरम् । ततश्च भाव्यमानाश्रयः स्वरभिन्नः सवर्णस्य ग्राहको नेत्यर्थः । भूयादित्यत्र यासिति समुदायस्य भाव्य-

'चतसर्याद्युदात्तनिपातनं करिष्यते, वधादेशे आद्युदात्तनिपातनं करिष्यते पदादयोऽन्तोदात्ता निपात्यन्ते, सहस्य स उदात्तो निपात्यते' इत्यादि भाष्यं त्वेकश्रुत्याऽष्टाध्यायीपोठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन।

त्रैस्वर्येण पाठः' इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः।

परे तु, निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्, तत्तद्रूपाद् यत्नात् तत्र तत्रोदात्तादिविवक्षा। 'तिसृचतसृ' इत्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणम्-अन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम्।

संपूर्णाष्टाऽध्याय्याचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्पदस्यैकश्रुत्यापि पाठः, यथा दाण्डिनायनादिसूत्रे ऐक्ष्वाकेति। यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्, तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः।

विधेयाण्विषये तु 'अप्रत्ययः' इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम्, अत एव 'घटवत्' इत्यादौ मतोर्मस्य नानुनासिको वकारः। अत एव 'तद्वानासाम्' इति सूत्रनिर्देशः। अन्यथा 'प्रत्यये भाषायाम्' इति नित्यमनुनासिकः स्यात्।

---

मानत्वेन यमात्रस्यातथात्वाद् 'भाव्यमान' इति निषेधाप्राप्त्या सानुनासिकयकारघटितोऽपि यासुट् स्यात्। अतस्तन्निवृत्तये भाव्यमानत्वाश्रय एवेति। तथा च भाव्यमानत्वाश्रयत्वं यासवयवयकारस्यापीति 'भाव्यमानेन' इति निषेधान्नानुनासिको यकारः। 'त्यदादीनामः' इत्यत्र 'भाव्यमानेन' इति निषेधादुच्चारितगुणकस्यैव विधानेन स्थान्यनुरूपस्वरो न स्यात्। अतस्तत्सिद्धये 'इमम्' इत्यादावनुनासिकव्यावृत्तये चोदात्तग्रहणस्य स्वांशे चारितार्थ्याय च स्वरभिन्नेति विशेषणमिति नव्यमते दोषोद्धारः।

वस्तुतस्तु धर्मिग्राहकमानात् 'गुणा अभेदकाः' इत्यत्र गुणपदं स्वरोपलक्षणम्। 'भाव्यमानेन' इति निषेधस्तु 'अणुदित्' सूत्रप्राप्तस्य; जातिपक्षप्राप्तस्य चेति 'त्यदादीनामः' इत्यादावनुनासिकस्य स्वरभिन्नत्वेन भेदकत्वात् 'इमम्' इत्यादौ नानुनासिकः। उदात्तानुदात्तयोः स्वरत्वेनाभेदकत्वाद् द्विशब्दे स्थान्यनुगुणक उदात्तः, एतच्छब्देऽनुदात्तश्च भवत्येवेति न कश्चिद् दोषः। अत एवोपक्रमभाष्ये 'स्वरा अभेदकाः' इत्येवोक्तम्। प्राचीनमते क्वचित् अभेदका गुणाः' क्वचित् 'भेदकाः' इति यासुटि, 'त्यदादीनामः' इत्यादौ च न दोषः।

नन्वेवम् 'इमम्' इत्यादौ तन्मते स्थान्यनुगुणकोदात्तादिस्वर इवानुनासिकाकारोऽपि स्यादिति वाच्यम्' 'पथिमथि' इत्यादाविव 'त्यादादीनामः' इत्यत्र शकन्ध्वादित्वात् पररूपेणाकारप्रश्लेषेण शुद्धाकारस्यैव विधानेनादोषात्। परन्त्वेतन्मते क्वचिद् भेदकत्वम्, क्वचिदभेदकत्वं चेत्यननुगमरूपो दोषः।

जातिपक्षे तु नास्योपयोग इति बोध्यम् । 'यू' इत्यादौ दीर्घमात्रवृत्ति-जातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ॥ ११८ ॥

ननु 'सर्वनामानि' इत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यात्, अत आह—

बाधकान्येव निपातनानि ॥ ११९ ॥

तत्तत्कार्ये नाप्राप्ते निपातनारम्भात् ।

'पुराणप्रोक्तेषु' इति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम् ।

पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये ।

इयं 'सर्वादि' सूत्रे भाष्ये स्पष्टा ।

---

नव्यमते भाव्यमानपदस्य भाव्यमानाश्रयत्वे; सर्वणपदस्य स्वरभिन्ने च लक्षणारूपो दोषः । तृतीयपक्षे तु न कश्चिद् दोष इति दिक् ॥ ११८ ॥

ननु सर्वनामपदे कथं णत्वाभाववत्संज्ञाप्रणयनम्, आधुनिकसंकेतानां शास्त्रसिद्धत्वे एव साधुत्वमिति 'पूर्वपदात् संज्ञायाम्' इति णत्वं कृत्वैवाचार्येण संज्ञायाः कर्तव्यत्वादित्याशङ्कायामाह—**ननु सर्वेति । निपातनेऽपीति ।** अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं तत् । तथा च सणत्वसर्वनामपदप्रयोगे प्राप्ते तदभाववत्सर्वनामशब्दप्रयोगरूपम् । **लोके सणत्वप्रयोगस्येति ।** यद्यपि 'पूर्वपदात् संज्ञायाम्' इत्यस्य यत्र णत्वघटितेन संज्ञा गम्यते तत्र णत्वं भवतीत्यर्थः । यत्र तु णत्वरहितेन संज्ञावगमः, तत्र णत्वं न भवतीत्यर्थः, यथा रघुनाथशब्दे । तद्वदत्रापि । तेन लोके णत्वघटितस्य साधुत्वाभाव एव । तथापि अनादिसंज्ञा-विषये तथा स्वीकारेणात्र तदभावात् प्रश्नः । सर्वनामेत्यस्यानादित्वाश्रयणे तूदाहरणान्तरं स्वयमूह्यम् ।

**बाधकान्येवेति ।** अयं भावः—निपातनविषये सामान्यशास्त्रस्य निपातन-भिन्नत्वेन संकोचः क्रियते । तथा च प्रकृतेऽपि 'पूर्वपदात्' इत्यस्य सर्वनाम-भिन्नविषयत्वेन संकोचात् सर्वनामशब्दे क्वापि णत्वस्य प्राप्तिरेव नेति ।

नन्वेवंरीत्या यत्र 'भोभगो' इत्यादावसन्धिः सौत्रः इत्युक्तम् । तत्रापि सामान्यशास्त्रतद्भिन्नत्वेन संकोच एवेति 'एङः पदान्तादति' इत्यादीनां लोकेऽपि तद्विषये प्रयोगेऽप्रवृत्तिः स्यादिति चेत्, न; सौत्र इत्यस्य 'एङः पदान्तात्' इति पूर्वरूपे प्राप्ते 'बहुलं छन्दसि' इति तदभाव इत्यर्थे सामान्यशास्त्रस्यासंकोचात् ।

एवञ्च यत्र निपातनविषयः, तत्र सामान्यशास्त्रे संकोचः; यत्र सौत्रत्वा-श्रयणम्, तत्र 'बहुल छन्दसि' इति तदभाव इति विवेकः ।

परिभाषायां बीजमाह—**नाप्राप्ते इति ।**

'अबाधकान्यपि निपातनानि' इति तु भाष्यविरुद्धम ।। ११९ ।।

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात् पूर्वमभ्यासह्रस्वाप्रवृत्तौ हलादिः-शेषे सवर्णदीर्घे ह्रस्वापत्तिः, अत आह--

पर्जन्यवल्लक्षणप्रवृत्तिः ।। १२० ।।

एवं च ह्रस्वस्यापि ह्रस्वे कृते 'लक्ष्ये लक्षणस्य' इति न्यायेन न पुनर्ह्रस्वः। तदुक्तम् 'इको झल्' इति सूत्रे भाष्ये--'कृतकारि खल्वपि शास्त्रं पर्जन्यवत्' इति। सिद्धेऽपि ह्रस्वादिकारीत्यर्थः।

---

नन्वेतत्परिभाषाङ्गीकारे लोके पुरातनशब्दप्रयोगो न स्यात्, अत आह-**पृषोदरादित्वादिति**। एवञ्च सूत्रे निपातनात् पुराण इति, पृषोदरादिपाठात् पुरातन इत्युभयसिद्धिः।

नन्वेकस्य सूत्रे निपातनम्, परस्य गणे पाठश्चेत्यर्द्धजरतीयन्यायविरोधो निपातनप्रयुक्तं गौरवं चेत्यत आह—**पुराणेति**। **पृषोदरादिरिति**। पुराणेत्यस्य गणे पाठान्निपातनाभावप्रयुक्तं लाघवम्। **अन्ये** इति। अत्रारुचिबीजं तु पाठाभावप्रयुक्तं लाघवं चेति पुरातनेत्यस्य 'सायं चिरम्' इत्यनेनैव सिद्धौ पृषोदरादिपाठो व्यर्थः।

**भाष्यविरुद्धमिति**। 'बाधकान्येव' इत्यादितत्रोक्तेरिति भावः ।। ११९ ।।

**एवञ्चेति**। परिभाषास्वीकारे। **न पुनर्ह्रस्व** इति। सवर्णदीर्घोत्तरमिति शेषः। भङ्ग्यन्तरेण भाष्यरूढेयमित्याह—**तदुक्तमिति**। **पर्जन्यवदिति**। पर्जन्यो हि जले, स्थले च वर्षति तद्वच्छास्त्रमपि सिद्धेऽसिद्धे च सर्वत्र प्रवर्तते इति भावः। **सिद्धेऽपीति**। स्वतः सिद्धे इत्यर्थः।

ननु ह्रस्वस्य ह्रस्वे कृते पुनर्न ह्रस्वः, 'लक्ष्ये लक्षणस्य' इति न्यायादित्युक्तम्। तदेव न सम्भवति, तन्न्यायसत्त्वे मानाभावात्, इत्याशङ्कते—**न च लक्ष्ये लक्षणस्येति**। **न मानमिति**। तथा च पुनर्ह्रस्वापत्त्या 'पर्जन्यवत्' इति परिभाषा निष्फलैव स्यादिति भावः।

'समो वा' इत्यस्य केषाञ्चिन्मतत्वेन शाकल्यमते सर्वत्र द्वित्वाभावोक्तेस्तन्मते द्विसकारकरूपसिद्धयर्थं च 'समस्सुटि' इत्यस्यावश्यकत्वादाह—**सम्प्रसारणाच्चेति**। एतेनास्य वाचनिकत्वं सिद्धम्।

वस्तुतः 'इरयो रे' इति सूत्रे इरयोरिति द्विवचनान्तनिर्देशो ज्ञापकः। तद्धि दध्र इत्यत्र रेभावस्येडागमे कृते पुनरपि रेभावार्थं तत्र प्रकृतन्यायस्याभावे 'इरयोरे' इत्यस्य पुनः प्रवृत्तौ बाधकाभावेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम्।

न च 'इरयो रे' इत्यस्य पुनः प्रवृत्तावपीडागमोत्तरमस्य लाक्षणिकत्वेन 'लक्षणप्रतिपदोक्त'परिभाषया रेभावे प्राप्ते तद्बाधनार्थं द्विर्वचननिर्देशश्चरितार्थ

**'न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इत्यत्र न मानमिति वाच्यम्, 'समो वा लोपमेके' इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ 'समः सुटि' इति सूत्रस्यैव मानत्वात्, 'संप्रसारणाच्च' 'सिचि वृद्धिः' इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च।**

**अत्र विकारकृतो लक्ष्यभेदो नेति 'सिचि वृद्धिः' इति भाष्यात् प्रतीयत इत्यन्यत्र विस्तरः ॥ १२० ॥**

**ननु स्यन्दूधातोः 'स्यन्त्स्यति' इत्यादावात्मनेपदनिमित्तत्वाभाव-निमित्तत्वात् 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वा-दूदिल्लक्षणस्येड्विकल्पस्यापत्तिः, अत आह—**

---

इति वाच्यम्, रे इत्यस्य स्थानिवद्भावेनेरशब्दत्वादिडागमोत्तरमिरे इत्यस्य 'यदागम'न्यायेन रेशब्दत्वादतिदेशविषये 'प्रतिपदोक्त'परिभाषाया अप्रवृत्तेः सिद्धान्तितत्वाच्च। स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वाभावात् स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वार्थं द्विर्वचननिर्देश इति शब्दरत्नोक्तं तु न युक्तम्, तथा सति स्वविधेयसवर्णदीर्घस्य स्वस्मिन्नुद्देश्यत्वाभावात् 'ऊकाल' इति निर्देशासंगतेः, ण्यन्ताण्णिचोऽनापत्त्या 'गतिबुद्धि' इति सूत्रेऽणावित्यस्य वैयर्थ्यापत्तेश्च।

ननु 'लक्ष्ये लक्षण'न्यायस्याश्रयणेऽपि 'ऊखतुः' इत्यत्र विकारकृतलक्ष्य-भेदात् पुनर्ह्रस्वापत्तिरूपदोषतादवस्थ्यम्, अत आह—**विकारेति**। तेन 'सर्वेषाम्' इत्यादौ सुटि कृते न पुनः सुट् भूयात्–इत्यादौ तु स्थानिभेदात् पुनः संयोगादिलोप इति बोध्यम्। **भाष्यादिति**। तद्धि 'उदवोढाम्'इत्यत्र 'सहिवहोरोत्' इत्योत्त्वोत्तरं ढलोपस्यासिद्धत्वात् 'वदव्रज' इति वृद्धिमाशङ्क्यानया समाहितत्वात् 'वदव्रज' इति वृद्धौ तात्परत्वेऽपि वर्णग्रहणादोत्त्वेनेष्टसिद्धिरित्युक्तम्। अन्यथा पुन-र्वृद्ध्यापत्त्या भाष्यासंगतिः स्पष्टैव।

अत्र तल्लक्ष्यत्वं स्वीयप्राथमिकप्रवृत्तावुद्देश्यत्वेनाश्रितो यावान् शब्द-समुदायः, तदतिरिक्तो यो विकारागमातिरिक्तः, तदघटितत्वे सति तत्पद-जन्यप्रतीतिविषयत्वम्। अत एव 'यूनः, एधेत, भवेताम्' इत्यादौ न तल्लक्ष्यत्वम्, स्वीयप्राथमिकप्रवृत्त्युद्देश्यघटितत्वात्। 'न संप्रसारणे' इति तु न व्यर्थम्, 'यूनः' इत्यादौ पूर्वस्य यणः सम्प्रसारणाभावार्थमावश्यकत्वात्। 'वव्रश्च' इत्यादौ तु न दोषः, 'अजर्घाः' इति भाष्योदाहरणाद्धलादिशेषविषये 'लक्ष्ये लक्षण'न्यायस्याप्रवृत्तेः। अत्र लक्षणे विकारशब्देन स्वीयप्राथमिकप्राप्त्युद्देश्य-ताक्रान्तघटितमात्रस्थानिकविकारस्यैव ग्रहणम्। अत एव 'काण्डे; कुड्ये' इत्यादौ नपुंसकत्वस्य प्रातिपदिकधर्मत्वादेव तल्लाभे 'ह्रस्वो नपुंसके' इत्यत्र नपुसकग्रहणात् सत्त्वप्रधानस्यैव प्रातिपदिकस्य ह्रस्वः, नाधिकरणप्रधानस्येति नपुसकह्रस्ववारणपरं भाष्यं संगच्छते। अन्यथा 'काण्डे' इत्यादौ तल्लक्ष्यत्वादेव वारणसम्भवे प्रकारान्तरेण वारणासङ्गतिः स्पष्टैव। एतदर्थफलं तु ज्ञानस्य

## निषेधाश्च बलीयांसः ॥ १२१ ॥

**अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ।**

**चतुर्भ्य इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते ।**

**अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात् तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः । अत एव 'द्वन्द्वे च' 'विभाषा जसि' इति चरितार्थम् ।**

---

'अः ज्ञानम्' इत्यत्र सवर्णदीर्घस्य तन्मात्रस्थानिकत्वाभावेन लक्ष्यभेदात् पुनर्ह्रस्वसिद्धिः । प्रथमप्रवृत्तिप्रयोज्यप्राप्तिविषयो यः, तत्तद्विकारावयवो यः, तदुभयान्यतरत्वे सति प्रथमप्रवृत्तावाश्रितसमुदायातिरिक्तनिमित्तकत्वं तल्लक्ष्यत्वमिति दिक् ॥ १२० ॥

**स्यन्स्यतीत्यादाविति ।** 'वृद्भ्यः स्यसनोः' इति परस्मैपदम् । **बहिरङ्गत्वेनेति ।** अस्य सकारादिविशेषापेक्षत्वेन, 'स्वरति०' इत्यत्र बलादिविशेषापेक्षत्वेन चोभयोः समत्वेऽप्यात्मनेपदनिमित्ताधिक्याद् बहिरङ्गत्वमिति भावः । **अन्तरङ्गत्वादिति ।** अपरनिमित्तकत्वेनेति भावः । **इड्विकल्पस्याप्राप्तिरिति ।** तथा च 'न वृद्भ्यः' इति सूत्रं तु 'येन नाप्राप्ति' न्यायेन 'आर्द्धधातुकस्येड् वलादेः' इत्यस्यैव बाधकमिति भावः ।

ननूक्तफलस्य चतुर्ग्रहणसामर्थ्यादेव सिद्धिः, अत आह—**चतुर्भ्य इति । स्पष्टार्थमेवेति ।** 'न वृद्भ्यः' इत्येतावता सिद्धेरिति भावः । कृपिव्यावृत्तिस्तु न 'चतुर्भ्यः' इत्यस्य फलम्, 'तासि च' इति येन सादावार्द्धधातुकेऽपीति तेन निषेधात् । नाप्यन्यनिवृत्त्यर्थम्, वृत्करणेन द्युतादेरिव वृतादेऽपि समाप्तिबोधनात् । **अत एवेति ।** उक्तफलस्य चतुर्ग्रहणसाध्यत्वाभावादेव । **तत्प्रत्याख्यानमिति ।** चतुर्ग्रहणप्रत्याख्यानम् । **सङ्गच्छते** इति । वृतादिभ्यो यद्यत्प्राप्तं तन्नेति वचनव्यक्त्या सर्वनिषेधसिद्धेरिति भावः ।

एवमन्तरङ्गान्निषेधस्य बलवत्त्वमुक्त्वोपजीव्यादपि तद्बलवत्त्वं प्रतिपादयति—उपजीव्यादपि तत्प्राबल्यादेवेत्यर्थः । **अत एवेति ।** उपजीव्यादपि तत्प्राबल्यादेवेत्यर्थः । **निषेधविषय** इति । 'नाज्झलौ' इत्यादिनिषेधविषय इत्यर्थः । अन्यथा=उपजीव्यान्निषेधस्य बलवत्त्वाभावे । **मीमांसकरीत्येति ।** 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे । उदिते जुहोति, अनुदिते' इत्यादौ विधेरुपजीव्यत्वेन प्राबल्यात् सर्वथा बाधाद् विकल्प इत्युक्तं तैः । **अत एव**= विकल्पाभावादेव । अनुपदोक्तरीत्या 'द्वन्द्वे च' इत्यनेनैव विकल्पे सिद्धे तद्व्यर्थं स्यादिति भावः ।

परिभाषायां बीजमाह—**विध्युन्मूलनायेति ।** प्राप्तविधेर्निवर्तनायेत्यर्थः । प्रवृत्तिः=निषेधप्रवृत्तिः ।

प० शे० ४०

विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् । 'न लुमता' 'कर्मेणिङ्' इत्यनयोर्भाष्ये स्पष्टैषा ।। १२१ ।।

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिः, अत आह—

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ।। १२२ ।।

यस्यार्थः प्रकृत्या प्रत्याय्यते, सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात् तस्य प्रत्ययत्वमिति न दोषः ।

स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः ।

महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् । 'सुपि स्थः' इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ।। १२२ ।।

## योगविभागादिष्टसिद्धिः ।। १२३ ।।

इष्टसिद्धिरेव, न त्वनिष्टापादनं कार्यमित्यर्थः । तत्तत्समानविधिक-द्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ।। १२३ ।।

---

वस्तुतो बहिर्भूतशब्दनिमित्तस्यैव बहिरङ्गत्वमिति 'स्यन्त्स्यति' इत्यत्र 'न वृद्भ्यः' इत्यस्यान्तरङ्गनिमित्तसमुदायात् स्यन्द स्य इत्यस्माद् बहिर्भूत-शब्दनिमित्तकत्वाभावेन परत्वात् 'न वृद्भ्यः' इत्यनेनोदिल्लक्षणस्येटो बाधादिदमवतरणमयुक्तमेव ।

किञ्चोदाहरणस्याप्यसम्भवात् परिभाषा निष्फलैवेति बोध्यम् ।।१२१।।

अत्यन्तस्वार्थिकानामिति । 'देवात्तल्' 'यावादिभ्यः कन्' इत्यादि-विहितानामित्यर्थः ।

प्रत्याय्यते=उच्यते । इत्यस्यापीति । प्रत्ययपदार्थस्य । अपिना प्रत्ययेति स्वीयमर्थं बोधयति यः, स प्रत्यय इत्यर्थबोधकस्य 'तस्यापत्यम्' इत्यादि-विहितस्य परिग्रहः । तस्य=अत्यन्तस्वार्थिकस्य ।

नन्वेवं स्वीयार्थाभावात् 'स्वार्थे' इत्यनुपपन्नम्, अत आह—स्वार्थे इत्यस्येति । स्वशब्दोऽत्रात्मीयवाची, नान्यवाचीति भावः ।

अस्या न्यायसिद्धत्वमाह—महासंज्ञेति । टिघुभादिवल्लघुसंज्ञाया एव कर्तव्यत्वेन प्रत्यय इति महासंज्ञाकरणादित्यर्थः । अन्यानुपस्थितिरिति । प्रकृत्यर्थभिन्नार्थानुपस्थितिरित्यर्थः । 'सुपि स्थः' इति । तत्र ह्याखूनामुत्थान-माखूत्थमित्याद्यर्थम् । 'सुपि' इति योगविभागेन भावे एव कप्रत्ययः, न कर्मादावनेन न्यायेनेत्युक्तम् ।। १२२ ।।

'सर्वं वाक्यम्' इति न्यायेनाह—इष्टसिद्धिरेवेति । एवकारव्यवच्छेद्यमाह—न त्वनिष्टेति । परिभाषायां बीजमाह – तत्तत्समानविधीति । विभक्तस्येति । पूर्वस्येत्यर्थः ।। १२३ ।।

## पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ १२४ ॥

तत्र तत्रान्यतरस्याम् 'विभाषा वा' इति सूत्रनिर्देशज्ञापितमिदम् ॥१२४॥

## ज्ञापकसिद्धं न सर्वत्र ॥ १२५ ॥

स्पष्टमेव पठितव्येऽनुमानाद् बोधनमसार्वत्रिकत्वार्थमित्यर्थः। तेन ज्ञापकसिद्धपरिभाषयाऽनिष्टं नापादनीयमिति तात्पर्यम्। भाष्येऽपि ध्वनितमेतद् 'ङ्याप्' सूत्रादौ।

ज्ञापकेति न्यायस्याप्युपलक्षणम्। न्यायज्ञापकसिद्धानामपि केषाञ्चित् कथनमन्येषामनित्यत्वबोधनायेति भावः। यथा 'तत्स्थानापन्ने तद्धर्मलाभः' इति न्यायसिद्धं स्थानिवत्सूत्रम्, ज्ञापकसिद्धं च तत्र 'अनल्विधौ' इति ॥ १२५ ॥

---

तत्र तत्रेति। बहुषु सूत्रेष्वित्यर्थः। सूत्रनिर्देश इति। अन्यथा लाघवात् सर्वत्र 'वा' इत्येव वक्तव्ये 'अन्यतरस्याम्' विभाषा' इत्यादिनिर्देशासङ्गतिः स्पष्टैव ॥ १२४ ॥

ज्ञापकसिद्धमिति। तेन करस्य करभो बहिरिति सिद्धम्। समासविधायके 'अपपरिबहिरञ्चवः पञ्चम्या' इति सूत्रे पञ्चमीग्रहणाद् बहिर्योगे पञ्चमी भवतीति ज्ञापने षष्ठ्यनुपपत्तेः, अपपरियोगे 'पञ्चम्यपाङ्परिभिः' इति, अञ्चूत्तरपदे 'अन्यारात्' इति पञ्चम्या एव विधानेन न तत्र प्रयोजनम्, बहिर्योगे तु पञ्चम्येव न प्राप्नोतीति तद्वैयर्थ्यं स्यादिति ज्ञापकं सुस्थं बहिर्योगे पञ्चमीविधानाय।

परिभाषायां बीजमाह—स्पष्टमेवेति। ज्ञापकशब्दार्थमाह—अनुमानादिति।

अयं भावः—'असिद्धं बहिरङ्गमन्तरङ्गे' 'वार्णादाङ्गं बलीय' 'तन्मध्यपतितस्तद्ग्रहणेन' इत्यादीनामपूर्ववचने एव कर्तव्ये उठ्ग्रहणादसवर्णग्रहणादकोरिति निषेधादिज्ञापकाश्रयणेन तत्परिभाषाबोधनमसार्वत्रिकत्वार्थमिति।

न च ज्ञापकसिद्धत्वापेक्षयाऽपूर्ववचनपाठे गौरवमिति वाच्यम्, अपूर्ववचनपाठे कण्ठताल्वादिव्यापारस्य ज्ञापकसिद्धत्वे तत्तत्पदवैयर्थ्याद्यनुसंधानरूपमनोव्यापारस्य सत्त्वेन लाघवगौरवयोरभावात्। कण्ठव्यापार एव गुरुभूतः, न मनोव्यापार इत्यत्र राजाज्ञास्ति। तेन=परिभाषाया असार्वत्रिकत्वेन। अनिष्टमिति। इष्टस्थलेऽप्यप्रवृत्तिरूपम्। अस्याः सप्रमाणकत्वमाह—भाष्येऽपीति। 'ङ्याप्' सूत्रे 'स्वं रूपम्' इति सूत्रे च भाष्ये इत्यर्थः।

नन्वेवं न्यायसिद्धानां सार्वत्रिकत्वापत्तिः, अत आह—ज्ञापकेति। न्यायस्यापीति। न्यायज्ञापकसिद्धानामिति। न्यायसिद्धानां ज्ञापकसिद्धानाञ्चेत्यर्थः। पूर्वनिपातो न्यायशब्दस्यात्र चिन्त्यः। केषाञ्चित्='स्थानिवत्' सूत्रप्रभृतीनाम्। अन्येषाम्=ज्ञापकन्यायसिद्धानाम्।

ननु 'द्रोग्धा द्रोग्धा, द्रोढा द्रोढा' इत्यादौ घत्वादेरसिद्धत्वात् पूर्वं द्वित्वे एकत्र घत्वम्, अपरत्र ढत्वमित्यस्याप्यापत्तिः, अत आह —

**पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥**

**द्वित्वभिन्ने पूर्वत्र कर्तव्ये परं नसिद्धमित्यर्थः । 'पूर्वत्रासिद्धम्' इत्यधिकारभवं शास्त्रमस्या लिङ्गम् ।**

**यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषः, तत्रैवेयम् । 'कुड्गर्धिः' इत्यादौ जश्त्वात् पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः । 'सर्वस्य द्वे' इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२६ ॥**

---

अस्योदाहरणमाह--**यथेति । न्यायसिद्धमिति ।** यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते, तद्वदत्रापि सिद्धिरिति भावः । **ज्ञापकेति ।** 'अदोजग्धिर्ल्यप्ति किति' सूत्रे ल्यब्ग्रहणात् । अन्यथा ल्यपः स्थानिवत्त्वेन तादिकित्परत्वमेवेति ल्यप्यपि स्यादेवेति तद्वैयर्थ्यं स्पष्टमेव । तदेतज्ज्ञाप्यस्वरूपमाह--**अलविधौ स्थानिवद्भावेनेतीति ।** वस्तुतः 'युष्मदस्मदोरनादेशे' इत्यादेशग्रहणात् 'स्थानिवत्' सूत्रं ज्ञापकसिद्धमपीति बोध्यम् ॥ १२५ ॥

**द्रोग्धा द्रोग्धेति ।** 'सर्वस्य द्वे' इत्यनुवर्तमाने 'नित्यवीप्सयोः' इति द्वित्वे सिद्धम् । एवं 'द्रोढा द्रोढा' इति बोध्यम् । घत्वादीनामित्यादिना ढत्वपरिग्रहः । पूर्वद्वित्वे इति । द्रोह् ता इत्यवस्थायमिति भावः । **इत्यस्यापत्तिरिति ।**

अयं भावः--द्रोह् ता इत्यवस्थायां घत्वादेरसिद्धत्वात् पूर्वं द्वित्वे द्रोह् ता द्रोह् तेति खण्डद्वयेऽपि पाक्षिके घत्वे तदभावे ढत्वे सिद्धान्ताभिमतयोः 'द्रोग्धा द्रोग्धा, द्रोढा द्रोढा' इत्यनयोः सिद्धावपि पूर्वखण्डे घत्वे, उत्तरखण्डे ढत्वे च सिद्धान्ताभिमतरूपापेक्षयाधिकस्यानिष्टस्य 'द्रोग्धा द्रोढा' इत्यस्यापत्तिः । इदमुपलक्षणं पूर्वखण्डे ढत्वे उत्तरखण्डे घत्वे च 'द्रोढा द्रोग्धा' इत्यस्यापि ।

**पूर्वत्रासिद्धीयमिति ।** 'गहादिभ्यश्छः' यत्पूर्वत्रासिद्धीयं शास्त्रम्, तत्राद्वित्वे इत्युपतिष्ठते इत्यर्थः ।

परिभाषाणां फलवत्त्वनियमादाह--**यत्र चेति ।** अनित्या चेयम्, 'उभौ साभ्यासस्य' इति लिङ्गात् । तेन 'प्रणिनाय' इत्यादिसिद्धिः । अन्यथा द्वित्वात् पूर्वम् 'उपसर्गादसमासे' इति णत्वे 'प्रणिनाय' इति स्यात् । **भाष्ये स्पष्टमिति ।** वार्त्तिकत्वेन पठितेत्यर्थः । वस्तुतः 'पूर्वत्रासिद्धम्' इत्यत्र 'अद्वित्वे' इति पठनीयम् । तत्र 'अद्वित्वे' इति पूर्वत्रेत्यस्य विशेषणम् । तथा च द्वित्वभिन्ने पूर्वस्मिन् कर्तव्ये परमसिद्धमित्यर्थान्न क्वापि दोष इति व्यर्थेयं परिभाषेति बोध्यम् ॥ १२६ ॥

**गोष्वश्वेषु स्वामीत्यादीति ।** आदिना गवामश्वानां च स्वामीत्यादिपरिग्रहः ।

ननु 'गोष्वश्वेषु च स्वामी' इत्यादिवत् 'गोष्वश्वानां च स्वामी' इत्यपि स्यात् 'स्वामीश्वर०' इति सूत्रेण, षष्ठीसप्तम्योर्विधानात्, अत आह—

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२७ ॥**

यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना, तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः। 'कृञ्चानुप्रयुज्यते' इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२७ ॥

ननु 'विव्याध' इत्यादौ परत्वाद्धलादिःशेषे वस्य सम्प्रसारणं स्यात्, अत आह—

**सम्प्रसारणं तदाश्रयं च कार्यम् बलवत् ॥ १२८ ॥**

तदाश्रयम् 'सम्प्रसारणाच्च' इति पूर्वरूपम्। वस्तुतः 'लिट्यभ्यासस्य'

---

एकस्या आकृतेः=स्वरूपस्येति। यतोऽत इति शेषः। यत एकस्या आकृतेः स्वरूपस्य प्रयोगश्चरितः=कृतः, अतो द्वितीयस्यास्तृतीयस्याश्च प्रयोगो नेति परिभाषार्थः।

प्रकृतोदाहरणे त्वेकस्या आकृतेः सप्तम्याः प्रयोगः कृत इति द्वितीयस्या आकृतेः षष्ठ्याः प्रयोगो न भवतीति गोशब्दादश्वशब्दाच्चोभयत्र सप्तम्येव, न तु षष्ठीसप्तम्यावुभे अपि। एवमेव 'गवामश्वानां च स्वामी' इत्यत्रापि न षष्ठीसप्तम्यावुभे अपि, किन्तूभयत्रापि षष्ठ्येवेति बोध्यम्।

लोकप्रसिद्धोऽयं न्यायः। तथाहि—यदा लोके यत्स्वस्वामिभावप्रतिपादनाय गवां स्वामीति षष्ठी उपक्रम्येत, तदाश्वानां चेत्यत्र तत्प्रतिपादनाय सैव निर्वाच्येति। अन्यथा 'अश्वेषु च' इत्युक्तेऽधिकरणप्रतिपत्तिः स्यात्, अश्वेषु च तिष्ठतीति। तस्माद् योऽर्थो यया शब्दाकृत्या प्रतिपादयितुमुपक्रान्तः, तयैवासौ निर्वाच्यः, न त्वन्यया शब्दाकृत्येत्यर्थः।

परिभाषायां बीजं ध्वनयन्नतिप्रसक्तिं वारयति—**यत्रेत्यादिना भिन्नार्थत्वसम्भावनेति**। एतदनेन बीजकथनमपीति बोध्यम्।

अस्ति चात्र गोष्वश्वानाञ्चेत्युक्ते 'अश्वानां स्वामी गोषु तिष्ठति' इत्यर्थान्तरप्रतीतिरिति बोध्यम् ॥ १२७ ॥

**परत्वादिति**। अस्य सम्प्रसारणत्वादित्यादिना। **सम्प्रसारणं स्यादिति**। ततश्चोव्याधेत्यनिष्टं स्यादिति भावः।

**तदाश्रयञ्चेति**। अस्य बलवत्त्वेऽन्तरङ्गमेव बीजम्।

अस्ति च विव्याधेत्यत्र सम्प्रसारणानन्तरं हलादिःशेषनिमित्तभूतो यः समुदायो वि अधीति तदन्तर्भूतनिमित्तकत्वं सम्प्रसारणपूर्वरूपस्येति बोध्यम्।

इति सूत्रे 'उभयेषां ग्रहणस्योभयेषां सम्प्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्था' इति 'लिटचभ्यासस्य' इति सूत्रे भाष्ये स्पष्टम् ।

फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा ।

'णौ च संश्चङोः' इत्यादौ संश्चङोरित्यादिविषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२८ ॥

यत्तु--

**क्वचिद् विकृतिः प्रकृतिं गृह्णाति ॥ १२९ ॥**

तेन 'निसमुपविभ्यो ह्वः' इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥१२९॥

तथा--

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥**

तेन 'दादेर्धातोः' इत्यत्रौपदेशिकधातोरेव ग्रहणमिति, तत् न; तयोर्निर्मूलत्वात्, भाष्याव्यवहृतत्वाच्च 'न च विकृतिः प्रकृतिं गृह्णाति' इति

---

**सम्प्रसारणमेव यथेति।** अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेनेति भावः । इदम्=विव्याधेति रूपम् । **इत्यादाविति।** आदिना 'विभाषाश्वेः' 'ह्वः सम्प्रसारणम्' इत्यादिपरिग्रहः ।

**विषयसप्तमीति।** अत्रार्थे 'लिटचभ्यासस्य' इति सूत्रस्थभाष्यमेव मानमिति बोध्यम् ॥ १२८ ॥

प्राचीनोक्ताः काश्चित् परिभाषा खण्डयति--**ह्वाग्रहणेनेति।** ह्व इत्यस्य कृतात्वस्य 'आतो धातोः' इत्यालोपेन विकृतत्वेऽपि तेन ग्रहणमित्यर्थः । **ह्वेञ इति।** ह्व इत्यस्य प्रकृतिभूतस्य 'ह्वेञ स्पर्धायाम्' इत्यस्येत्यर्थः । **ग्रहणसिद्धिरिति।** तथा च 'निह्वयते' इत्यादावात्मनेपदसिद्धिः ॥ १२९ ॥

द्वितीयमाह—**औपदेशिक इति।** उपदेशे भव औपदेशिकः । अध्यात्मादित्वात् ठञ् । एवं प्रायोगिक इति बोध्यम् ।

**औपदेशिकधातोरेव ग्रहणमिति।** तेन'अधोग्' इत्यत्र लावस्थायामेवाटि अकारादित्वेन प्रायोगिकदादित्वाभावेऽप्यौपदेशिकदादित्वस्य सत्त्वाद् घत्वसिद्धिः दामलिहमात्मन इच्छति दामलिह्यति, ततः क्विप्, अल्लोपयलोपौ, 'दामलिट्' इत्यत्र प्रायोगिकदादित्वस्य सत्त्वेऽपि न घत्वम्, अस्य प्रातिपदिकप्रकृतिकधातुत्वेऽप्यौपदेशिकदादिधातुत्वाभावात् । साधारणदोषमाह—**तयोर्निर्मूलत्वादिति।** ननूक्तयोर्मूलम् 'श्वीदितो निष्ठायाम्' इत्यत्रस्थश्विग्रहणम् । तद्धि शून इत्यत्रानया औपदेशिकोगन्ते 'युतम्, क्षुतम्, पुतम्' इत्यादौ चरितार्थस्य 'श्युकः किति' इत्यस्य प्रवृत्तौ सार्थकम् । नहि 'श्युकः' इत्यत्रोपदेशग्रहणानुवृत्तिरस्ति । तथा च 'न व्यो लिटि' इति विकृतनिर्देश इति आद्ये ज्ञापक इति कथं तयोर्निर्मूलत्वम् ? अत आह—**भाष्याव्यवहृतत्वाच्चेति।**

**'ग्रहिज्या' इति सूत्रस्थभाष्येणाद्यायास्तिरस्काराच्च। 'निसमुपविभ्यो ह्वः' इत्यादौ ह्वेञोऽनुकरणे सौत्रः प्रयोगः। आत्त्वविषय एवात्मनेपदम्, प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये। अन्त्यापि तत्र तत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चासम्मता।**

**'इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रियते—यत्रास्यैतद्रूपमिति। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, क उपदेशो नाम' इति घसंज्ञासूत्रस्थभाष्येण प्रायोगिकासम्भवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासम्मता च।**

---

ननु तयोर्ज्ञापकसिद्धत्वेन भाष्यकृतोऽपि सम्मतिरेव स्यात्, अव्यवहृतमात्रेण किम्? अत आह—**'न च विकृतिः'** इति। नहीत्यर्थः।

न चैवम् 'निसमुपविभ्यः' इत्यत्र ह्व इति विकृत्य ह्वेञः कथं ग्रहणम्? अत आह—**'निसमुपविभ्यः'** इति। **ह्वेञ इति**। औपदेशिकस्येत्यर्थः। **सौत्रप्रयोग इति**। सौत्रमात्रमित्यर्थः। अन्यथा शितीति प्रसज्यप्रतिषेधेनात्त्वं न स्यात्।

'निसमुपविभ्यः' इत्यत्र प्राचीनमते निर्वाहमुक्त्वा स्वमते आह—**आत्त्वविषय एवेति**। कृतात्त्वस्यानुकरणादिति भावः। एवञ्च 'निह्वयते' इत्यादावात्मनेपदं नैव भवेत्, किन्तु 'निह्वाता, निह्वास्यते, निजुहुवे' इत्यादावेवेति बोध्यम्। आत्त्वविषय एवेत्यत्र हेतुमाह—**प्रयोगस्येति**। एवं च फलाभावान्नेयमिति भावः। **तत्र तत्रोपदेशग्रहणमिति**। 'उपदेशेऽजनुनासिक इत्' 'उपदेशेऽज्झनग्रहदृशाम्' 'उपदेशेऽशिति' 'उपदेशेऽत्वतः' 'एकाच उपदेशे' इत्यादावित्यर्थः।

सूत्रवार्त्तिककारयोरसम्मतिमुक्त्वा भाष्यासम्मतिमप्याह—**इह हीति**। 'क्तक्तवतू निष्ठा' 'दाधाघ्वदाप्' 'न क्त्वा सेट्' इत्यादावित्यर्थः।

रूपम्=अनुबन्धविशिष्टं क्त इत्याकारकम्। रूपनिर्ग्रहः=रूपनिश्चयः। शब्दस्य रूपनिश्चयो लौकिकप्रयोगमन्तरा न भवतीति योजना। **द्वितीय इति**। अनुबन्धरहितलौकिकप्रयोगापेक्षया द्वितीयत्वम्। कोऽसौ द्वितीय इति शङ्कते—**क इति**। उपासितो द्वितीयः प्रयोगः क इति प्रश्नः। तस्योत्तरमाह—**उपदेशो नामेति**। औपदेशिकसानुबन्ध आश्रियत इत्यर्थः। तद्ग्रहणम्=औपदेशिकग्रहणम्। **भाष्यासम्मता चेति**। प्रायोगिकाभाव एवौपदेशिकस्य ग्रहणम्। सति प्रायोगिके औपदेशिकस्य ग्रहणमिति भाष्याशयादसम्मतत्वं स्पष्टमेव।

ननु भाष्ये सानुबन्धकेष्वित्युक्त्या निरनुबन्धकेषु सत्यपि प्रायोगिके औपदेशिकस्य ग्रहणापत्तिः, अत आह—**प्रकृताभिप्रायेणेति**। घुसंज्ञासूत्रे 'अदाप्' इत्याभिप्रायेण।

**भाष्ये सानुबन्धकेत्यादिप्रकृताभिप्रायेण । 'दादेः' इति सूत्रे दादिपदस्यौ-पदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः ।। १३० ।।**

---

ननु प्रायोगिकासम्भवे औपदेशिकस्य ग्रहणम्, सति प्रायोगिके तु नेत्यर्थे 'दादेः' इत्यनेन घत्वम् 'अधोक्' इत्यत्र न स्यात्, 'दामलिट' इत्यत्र तु स्यात्, इत्यव्याप्त्यतिव्याप्ती स्याताम्, अत आह—**दादिपदस्येति** ।

अयं भावः—एतच्चैतत्सूत्रभाष्ये ध्वनितम् । तत्र हि 'घत्वस्यासिद्धत्वाड्-ढत्वं प्राप्नोतीत्याशङ्कामपवादत्वेन समाधाय, एवं वक्ष्यामि 'होढोऽदादेः' इति, ततः 'धातोः' इति, 'दादेः' इति वर्तते, नेति निवृत्तम्' इत्युक्तम् । द्रुहेस्तु 'वा द्रुह०' इत्यादिना ढत्वस्यापि विधानात् तत्र न दोष इति तदाशयः । तत्र 'धातोः' इति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेश-वद्दादिलक्षकं सामर्थ्यादिति शेखरोक्तमेवेति ।

वस्तुतो दामपूर्वाल्लिहेः क्विपि 'दामलिट्' इत्यत्र 'अदादेः' इति निषेधेन ढत्वाप्राप्तौ 'धातोर्घः' इति प्राप्तघत्वस्य वारणाय 'दादेः' इत्युवृत्तेरावश्य-कत्वात् फलान्तराभावेनेत्यादि चिन्त्यमेव ।

न च दादिभिन्नस्य हस्य ढत्वमित्यर्थाद् दादिभिन्नस्य लिहो हस्य घत्वस्या-सिद्धत्वाड्ढत्वेन तत्र 'धातोः' इति सूत्रे 'दादेः' इत्यानुवृत्तेर्न फलान्तरमिति वाच्यम्, 'परमधुक्' इत्यादौ दादिभिन्नपरमधुगित्यस्य सत्त्वात्; घत्वस्या-सिद्धत्वात् प्राप्तढत्ववारणाय दादेर्न ढत्वमिति प्रसज्यप्रतिषेधस्यैवाङ्गीकारात् ।

न च पूर्वोक्तस्थलेऽस्मिन् न्यासे ढत्वस्य 'अदादेः' इति निषेधेनाप्राप्त्या-पवादपक्षेण समानार्थकत्वं न स्यादिति वाच्यम्, उत्तरसूत्रे दादिधातोरेव ग्रहणेन उत्साहचर्यान्निषेधसमर्पकेऽपि दादिधातोरेव निषेधाड्ढत्वसिद्धिः ।

ननु निषेधसमर्पके दादिधातोर्निषेधाङ्गीकारे पूर्वोक्तलिडित्यादौ दादि-धातुत्वाभावेन निषेधाप्राप्तौ घत्वस्यासिद्धत्वाड्ढत्वेन रूपसिद्धेरुत्तरसूत्रे दाद्यनु-वृत्तेः फलान्तराभावेन तदौपदेशिकदादित्ववल्लक्षकमेवेति चेत्, न; सत्यां तदनुवृत्तौ साहचर्याश्रयणम्, अननुवृत्तौ तु साहचर्यस्य वक्तुमशक्यत्वात् तदर्थमेव तदनुवृत्तेः सार्थकत्वात् ।

न च यदि निषेधसमर्पके दादिधातोर्ग्रहणार्थमेवोत्तरसूत्रे दादेरित्यनुवृत्तिः, तर्हि 'होढोऽदादेर्धातोः' इत्येव वक्तव्यमिति वाच्यम्, 'दामलिट्' इत्येतत्सिद्धये पृथक्करणेन तत्रानुवृत्तेः फलस्य पूर्वमुपपादनात् ।

किञ्च, दादिपदस्योक्तार्थत्वे 'दादेः' इति सूत्रे धातुग्रहणवैयर्थ्यापत्तिः, अपि च 'घोऽदादेः' इत्युच्यते, कथम् 'अधोक्' इत्युक्तभाष्यासङ्गतिश्चेति परास्तम्, 'धातोर्घः' इति सूत्रसत्त्वे तदनुवृत्त्या साहचर्यादेवंक्तुं शक्यत्वात् । दामलिहमात्मन इच्छति दामलिगित्येवेति न युक्तम्, धातुग्रहणमावश्यौपदेशिक-धातोर्ग्रहणात् ।

यदपि ननु 'अजर्घा, बेभिदीति' इत्यादौ 'तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युः, तथा यङ्लुकि 'बेभेदिता' इत्यादावेकाच इतीण्निषेधः स्यात्, अत आह—

**श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च।**
**यत्रैकाज्ग्रहणं चैव पञ्चैताति न यङ्लुकि॥ १३१॥**

अनुबन्धनिर्देशो द्विधा—स्वरूपेण, 'ङित'इत्यादिपदेन च। हन्ति, याति वाति, 'सनीवन्त' इति सूत्रे भरेति, 'दीङो युडचि' 'अनुदात्तङितः' दिवादिभ्यः श्यन्' 'एकाच उपदेशे' इत्युदाहरणानि।

---

न चोत्तरत्र वैयधिकरण्यमावश्यकमिति वदता भाष्यकारेण दादिपदस्योक्तार्थत्वमुक्तप्रायमिति वाच्यम्, 'यदागम' परिभाषया 'अधोक्' इत्यत्र दादित्वातिदेशेनेष्टसिद्धेर्वैयधिकरणस्येहानावश्यकत्वमिति भाष्याशयादित्यलं बहुविस्तरेण।

केचित्तु, 'दादेः' इति कर्मधारयात् पञ्चमी; 'धातोः' इत्यवयवषष्ठी; धातोरवयवो य आदिर्दकारः, तस्मात् परस्य हस्य घ इत्यर्थः। धुगित्यत्र दात्पराव्यवहितहकारासम्भवेन 'येन नाव्यवधान' न्यायेनैकव्यवायेऽपि घत्वम्, 'दामलिट्' इत्यत्र बहूनां व्यवायत्वान्न भवतीति, तत्, न; 'अधोग्' इत्यत्र धात्वयवीभूतादिदकाराभावेन घत्वानापत्तेः।

किञ्च, गां ददातीति गोदः, गोदश्चाहश्चानयोस्समाहारः 'गोदाट्' इत्यत्रोक्तार्थे धात्वयवहस्यापि घत्वापत्तेः। सिद्धान्ते तु दकारादिर्यो धातुः, तदवयवीभूतहकाराभावान्नोक्तदोष इति दिक्॥ १३०॥

अन्यामपि परिभाषां खण्डयितुमाह—**यदपीति**। **अजर्घा** इति। 'गृधु अभिकाङ्क्षायाम्' इति दैवादिकाद् यङ्लुगन्तात् सिपि 'यङो वा' इतीडभावे, गुणे, हल्ङ्यादिलोपे, भष्भावे, जश्त्वे, 'दश्च' इति रुत्वे, 'रो रि' इति लोपे 'ढ्रलोपे' इति दीर्घे च रूपसिद्धिः। **विकरणा** इति। श्यन्श्नमादयः। **इण्निषेध** इति। **उपदेशे एकाच्त्वस्य सत्त्वादिति**।

श्तिपेत्यादिनिर्देशक्रमेणोदाहरति—हन्ति, याति, वातीति। तेन प्रनिजङ्घनीतीत्यत्र 'नेर्गद०' इति णत्वम्, जङ्घहीत्यत्र 'हन्तेर्जः' इति जादेशश्च न। **भरेति**। बिभर्त्तेः सनि बिभरिषतीत्यत्र 'सनीवन्त' इतीड्विकल्पो न, किन्तु नित्यमेवेट्। 'एकाचः' इति निषेधाप्रवृत्तेः स्वरूपेणानुबन्धनिर्देशादाह—**भरेति**। **दीङो युडचीति**। तेन देदीयतीत्यत्र युट्, शेशीयतीत्यत्र 'शीङः सार्वधातुके' इति गुणश्च न। ङित इत्यस्योदाहरणमाह—**अनुदात्तङित** इति। तेन स्पर्धशीङादिभ्यः 'अनुदात्तङितः' इत्यात्मनेपदं न—पास्पर्द्धीति शेशीयति।

द्वित्वम् 'सनाद्यन्ता०' इति 'भूवादयः' इति धातुत्वं च भवत्येव, 'गुणो यङ्लुकोः, इत्यादिभिर्निषेधानित्यत्वकल्पनात्। तेन भष्भावोऽपि 'अजर्घा' इत्यादौ भवति। अत एव 'श्वीदितः' इति सूत्रे कैयटे—यत्रैकाज्ग्रहणं किञ्चित्' इति पाठः। 'एकाच उपदेशेऽनुदात्तात्' इति सूत्र एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते। अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति। तदपि न, भाष्यानुक्तत्वात्। एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च।

न च वधिस्स्थान्युपदेश एकाजेवेति वाच्यम्, साक्षादुपदेशसम्भवेनैतद् विषये स्थान्युपदेशाग्रहणात्, उपदेशत्वावच्छेदेनैकाजित्यर्थाच्च।

किञ्च, उत्तरार्थमेकाज्ग्रहणम्। अत एव 'जागरिवान्' इत्यादावुपदेश उगन्तत्वमादाय 'श्युकः किति' इतीण्निषेधो न। तत्रोपदेशे इत्यनुवृत्तिश्च 'स्तीर्णम्' इत्यादाविण्निषेधायेत्याकरे स्पष्टम्।

न च भाष्ये यङ्लोपे 'बेभेदिता' इत्यादाविड्प्रवृत्त्यर्थमुपदेशेऽनुदात्ता-देकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यः, 'बिभित्सति' इति दोषोपन्यासवद् यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः।

---

इयनिति। 'अजर्घा' इत्यादौ नेत्यर्थः। एकाच उपदेशे इति। तेन बेभिदिता, 'चेच्छिदिता' इत्यादाविण्निषेधो न।

नन्वेवम् 'एकाचो द्वे' इति विहितद्वित्वम्, गणेन निर्दिष्टत्वाद् धातुत्वं च यङ्लुकि न स्यात्, अत आह द्वित्वम् 'सनाद्यन्ता' इति।

सनीट्प्रतिषेध इति। श्रूयमाणादेकाच इत्यर्थेन यङ्लोपे दोषवारणाय चेत्यर्थः।

असङ्गतिरिति। अयं भावः—'बिभित्सति' इत्यत्रैवंरीत्यैव 'एकाच उपदेशे' इतीण्निषेधे सिद्धे तदर्थमारब्धम् 'सनीट्प्रतिषेधो वक्तव्यः' इति वार्त्तिकमसङ्गतमेवेति 'बेभिदिता' इत्यादाविट्प्रवृत्त्यर्थं श्रूयमाणादेकाच इत्यर्थाङ्गीकारेऽप्येतद्रीत्या तत्राप्युत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवेति 'एकाचः' इतीण्निषेधस्य दुर्वारत्वेन 'भक्षितेऽपि लशुने' इति न्यायेन श्रूयमाणादेकाच इति भाष्यमप्यसङ्गतमेवेति। एवञ्च=एकदेशयुत्वेनोक्तार्थसाधकोक्तभाष्येणेत्यर्थः।

ननु 'अङ्गस्य' इत्याधिकारादेकाचोऽङ्गादित्यर्थेन प्रागुक्तरीत्योत्तरखण्डे तस्य तत्त्वेन 'विभित्सति' इत्यादावेव दोषेण भाष्यासङ्गतिरेवेत्याह—अङ्गत्वन्त्विति।

नन्वेवं धातुत्वमपि समुदाय एवेत्येत्र कुतो न समाहितम् इत्याह—धातुत्वं त्विति। अत्र भाष्यमेव प्रमाणमिति भावः। अत एवेति। धातुत्वस्योत्तर-खण्डीयत्वादेवेत्यर्थः।

गर्धप्सिद्धिरिति। गर्दभमाचष्टे गर्दभयति, णिजन्तात् क्विप् णिलोपः।

यङ्लोपेत्यादिभाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्।

किञ्च, तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपाया-प्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्, इड्विषये यङ्लको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। अन्यथा 'एकाज्ग्रहणं किमिर्थम्' इति प्रश्नस्य 'उत्तरत्र जागर्त्यर्थमिह वध्यर्थम्' इत्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः।

न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्। एवं च 'बिभित्सति' इत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येव, उत्तरखण्डेऽस्तित्ववत्। एतच्च 'दयतेः' इति सूत्रे भाष्ये स्पष्टम्। एवं च प्रकृतभाष्यसङ्गतिरिति वाच्यम्, आक्षेपे आक्षिप्तस्यान्वये च मानाभावात्।

अङ्गत्वं तु विशिष्ट एवेति 'एकाचो द्वे' इति सूत्रे भाष्ये स्पष्टम्।

निरूपितं च तनादिशेषे शब्देन्दुशेखरे। धातुत्वं तूत्तरखण्ड एव। अत एव 'एकाचो बशो भष्' इति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये, न तु प्रसिद्धम् 'अजर्घाः' इति।

'अजर्घा बेभिदीति' इत्यादौ श्नम्श्यनादयस्तुः 'चर्करीतं च' इत्यस्या-दादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति।

---

अत्र 'सनाद्यन्ताः' इति विशिष्टस्यैव धातुत्वेन 'एकाचो धातोः' इति सामानाधिकरण्येनान्वये भष्भावो न स्यादिति भावः।

**अजर्घा** इति। यदि विशिष्टस्यैव धातुत्वम्, तर्हीदमेवोदाह्रियेत इति भावः।

ननु परिभाषानङ्गीकारे 'अजर्घाः' इत्यादौ श्यन्नादयः कुतो नेत्यत आह—**अजर्घाः, बेभिदीतीति**। **न भवन्तीति**। वस्तुतस्त्वदादौ पाठेऽपि 'अदिप्रभृतिभ्यः' इति शप एव लुग्विधानाच्छपोऽभावे गणान्तरप्रयुक्तविकरणस्याप्राप्तौ मानाभावाच्चिन्त्यमेवैतत्। 'चर्करीतम्' इत्यत्र चर्क इतम् = प्राप्तं येनेति व्युत्पत्त्या चर्क इति निर्देशादेव गणान्तरप्रयुक्तविकरणस्याप्राप्तिरेव। अन्यथा चर्क इत्यस्य कृञ्धातोर्यङ्लुगन्तात् सिपि 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावे च निष्पन्नत्वेन तत्र "तनादिकृञ्भ्य उः' इति उप्रत्ययस्याकरणेन निर्देशासङ्गतिः स्पष्टैव। तस्माद् यङ्लुगन्तात् श्यन्नादयो न भवन्त्येवेति केचित्।

नन्वेवमप्यत्र दोषः स्यादेवेत्यत आह—**छान्दसत्वादिति**। छन्दसि दृष्टप्रयोगेष्वदृष्टानां कार्यान्तराणां छान्दसत्वादभावो बोध्य इत्यन्वयः।

नन्वेवमपि भाषायां स्युः, अत आह—**भाषायां त्विति**। **तादृशानामिति**। परिभाषाविषयाणामित्यर्थः।

नन्वेवं श्तिपानिर्देशानर्थक्यम्, अत आह—**श्तिप्शबानिर्देशा** इति।

छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टाना-मभावो बोध्यः।

भाषायां तु तादृशानामभाव एव। श्तिप्‌शबादिनिर्देशास्तु 'भवतेरः' इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः ॥ १३१ ॥

ननु 'जभोचि रधेश्च, नेटचलिटि' इत्येव सूत्र्यताम्, किं द्वीरधिग्रहणे-नेत्यत आह—

**पदगौरवाद् योगविभागो गरीयान् ॥ १३२ ॥**

---

इत्यादिसूत्रस्थेति। यङ्लुग्व्यावृत्त्यर्थं तु न, तत्राम्प्रवृत्त्या लिटोऽभावात्। विस्तर इति विस्तरार्थस्तु 'अजर्घाः बेभिदीति' इत्यादौ तद्गुणप्रयुक्तविकरणाभावायेय-मावश्यकी।

न च 'भाष्यानुक्तत्वात्' इति मूलोक्तं युक्तमिति वाच्यम्, परिभाषायाः कण्ठतः पठितत्वाभावेऽपि 'यङ्लोपे' इत्यादिभाष्येणैतस्या ध्वनितत्वस्य मूले एवोक्तत्वात्।

न च 'चेच्छिदीति, बेभिदीति' इतीड्रहितस्य भाष्ये उदाहरणदानेनेड्-विषयरूपस्य लोकेऽनभिधानमिति वाच्यम्, 'न चोदाहरणमादरणीयम्' इत्याद्य-भियुक्तवचनेनेड्विषयप्रयोगस्य लोके स्वीकारे बाधकाभावात्।

न च एकाज्ग्रहणं किमर्थम्? इति प्रश्नस्योत्तरत्र 'जागर्त्यर्थम्, इह वध्यर्थम्' इत्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तिरिति वाच्यम्, 'एकाच उपदेशे' इत्यत्रानुदात्ताद् विहितस्यार्द्धधातुकस्य नेडित्यर्थेन यङोऽपि 'बेभिदिता' इत्यादाविव यङ्लुकि 'बिभेदिता' इत्यादावपि आर्द्धधातुकस्य यङन्ताद्विहितत्वा-दनुदात्ताद् विहितत्वाभावेन परिभाषां विनापि निषेधाप्रवृत्त्या 'एकाज्ग्रहणं किमर्थम्?' इति प्रश्नाशयात्।

एवं चैकाज्ग्रहणस्यात्र सूत्रे फलाभावेनोत्तरत्रेत्याद्युत्तरं सम्यगेवेति बोध्यम्। 'दाधर्ति' इति सूत्रे 'तेतिक्ते' इति नियमार्थम्—अत्रैवानुदात्तत्व-लक्षणमात्मनेपदम्, नान्यत्र। 'यङ्लुकि' इति भाष्यं च नासङ्गतम्, 'इदितो नुम्' 'उदितः क्त्व इड् वा' 'ओदितश्च' इत्यादाविव 'अनुदात्तङितः' इति सूत्रे स्वरूपेणानुबन्धस्यानिर्देशेन यङ्लुकि प्रवृत्तेः।

न च 'इह वध्यर्थम्' इत्युक्त्या वधिव्यावृत्त्यर्थमेकाज्ग्रहणस्यावश्यकत्वेन परिभाषाज्ञापकत्वं न स्यादिति वाच्यम्, 'अचः' इत्येकत्वविवक्षासामर्थ्यादुप-देशत्वावच्छेदेनैकाच् यो धातुरित्यर्थेनैव वधिव्यावृत्तौ एकग्रहणस्य परिभाषा-ज्ञापकत्वात्। परिभाषायां 'यत्रैकाज्ग्रहणम्' इत्यस्यैकपदघटिताज्ग्रहणमित्यर्थः। कौमुद्यां ज्ञापकत्ववर्णने 'एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते' इत्यत्रापि एकाचपद-घटकैकग्रहणेनेत्यलम् ॥ १३१ ॥

**प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव। परन्तु भाष्यासम्मतेयम्। 'टाङसि०' इति सूत्रस्थभाष्यविरुद्धा च। तत्र च इनादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः॥ १३२॥**

## **अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः॥ १३३॥**

**'ए ओङ्, ऐ औच्' सूत्रयोर्ध्वनितैषा भाष्ये।**

**तत्रानेकपदघटितसूत्रे प्रायः पदलाघवविचार एव, न तु मात्रालाघवविचार इति 'ऊकालोऽच्, अपृक्त एकाल्' इत्यादिसूत्रेषु भाष्ये ध्वनितम्।**

**तत्र हि सूत्रे अल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञायां हल्ग्रहणम् 'ण्यक्षत्रिय०' इति सूत्रे अणिञोरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे, तदेकं स्वादिलोपे हल्ग्रहणम् 'ण्य' इति सूत्रे अणिञोरिति न वाच्यम्, अपृक्तस्येति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम्।**

---

**सूत्र्यताम् इति।** अत्र रघेरित्यनुवृत्त्यैवेष्टसिद्धिरिति भावः।

**भाष्यासम्मतेति।** भाष्येऽनुक्तत्वादिति भावः।

**योगविभागेनेति।** 'आङि चापः' इत्यत्रेति भावः। **कृतमिति।**

एवं हि तत्र भाष्यम्—'टाङसिङसाम्' किमर्थमिनादेश उच्यते, नादेश एवोच्येत, का रूपसिद्धिः? वृक्षेण, प्लक्षेण। एत्वे योगविभागः करिष्यते। कथम्? इदमस्ति 'बहुवचने झल्येत्' 'ओसि च' 'आङि च' ओसि चेतीति॥ १३२॥

वैयाकरणा अर्द्धमात्रालाघवेनापि पुत्रोत्सवमिव मन्यन्ते, किमुताधिकलाघवेनेत्यर्थः।

**'ए ओङ्' 'ऐ औच्' सूत्रयोरिति।** तत्र हि 'एच इग्०' इत्यस्य प्रत्याख्यानायार्धैकाराधौंकारौ चोपदिश्येते, तर्हि तावेव लाघवादयमुपदिशेदित्युक्तम्। ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि प्रदेशेषु ग्रहण सिद्ध्यति।

नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यात्, परत्वादिति चेत्, न; तत्र दीर्घयोरेव 'ए औ' इति स्वरूपेण निर्देशेऽनण्त्वेन सवर्णग्रहणोपपत्तेरिति कैयटः। एवमपि तत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवतीति तदाकूतम्।

तथाहि यथाश्रुते वर्णोपदेशे दीर्घयोः 'ए ओ' इत्यनयोर्मात्राचतुष्टयम्, गुणसंज्ञायां तु एङिति सार्धद्वयम्, सङ्कलनया सार्धषण्मात्राः। अत्र न्यासे वर्णोपदेशे मात्राद्वयम्, गुणसंज्ञायां तु चतस्र इति मिलित्वा षडेव मात्रा इति।

मात्रापदलाघवयोर्व्यवस्थामाह—**तत्रेति।** तयोर्मध्ये इत्यर्थः। **'अपृक्त एकाल्' इत्यादिसूत्रेष्विति।** आदिना 'प्रत्ययस्य लुक्श्लुलुपः' 'ऐ औच्' इत्यादिसूत्रपरिग्रहः।

तत्रान्त्यमुदाहरति—**तत्र हीति।** 'अपृक्त एकाल्' इति सूत्रे हीत्यर्थः।

'अचि श्नु' इति सूत्रे इण इत्येव सिद्धे य्वोरिति संमृद्य ग्रहणान्न पूर्वेणेण्-ग्रहणम्। तत्र विभक्तिनिर्देशे संमृद्य ग्रहणे च सार्धास्तिस्रो मात्रा इण्ग्रहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेः, तथा 'ओतश्श्यनि' इति सूत्रे शितीति वक्तव्यम्।

तत्रायमर्थ.—'ष्ठिवुक्लमु' इति सूत्रे 'शितीति न कर्तव्यं भवति' इति भाष्ये न केवलं मात्रालाघवं यावदमयप्यर्थं इति कैयटोक्तेः प्रायेणेति शिवम्॥ १३३।

॥ इति शास्त्रशेष नामकं तृतीय प्रकरणम्॥

इति श्रीमन्महामहोपाध्यायशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतः

परिभाषेन्दुशेखरः समाप्तः॥

॥ ग्रन्थश्च समाप्तः॥

---

उक्तमित्यत्रान्वयः। त्रीणि पदानीति। 'आणिञो' इत्यत्र समासत्वेनैकपदत्वेऽप्य-वान्तरपदत्वाभिप्रायेणेदमिति बोध्यम्। अल्ग्रहणमित्यस्य संज्ञायामित्यादिः। तदेकम्=ल्ग्रहणमेकम्। त्रीण्येवेति। अपृक्तशब्दस्य संज्ञाशब्दत्वादखण्डत्वमेव। तदिति। अवान्तरभेदस्तत्रेति भावः।

अल्ग्रहणे सार्धैकादशमात्रा हल्ग्रहणापेक्षया सार्धद्विमात्राधिक्यप्रयुक्तं गौरवं स्पष्टमेव।

एकपदघटितसूत्रे मात्रालाघवविचारोऽस्त्येव। यथा 'नामि' इत्यत्र। एतेन षट्संज्ञायां रेफं पठित्वा 'षड्भ्यो लुक्' इत्यत्र चतुर इति पठित्वा 'षट्चतुर्भ्यश्च' 'षट्त्रिचतुर्भ्यो हलादिः' इत्यत्र चतुर्ग्रहणं न कर्तव्यमित्यपास्तम्, पदगौरवात्।

प्रायेणेत्यस्य व्यावर्त्यमाह—'अचि श्नु' इति। समृद्ध ग्रहणादिति। गुरु-निर्देशादित्यर्थः। तत्र 'अचि श्नु' इति सूत्रे इत्यर्थः। अयमपीति। पदलाघव-विशेषोऽपीत्यर्थः।

अर्थ इति। प्रयोजनं यावदिति योजना। प्रायेणेति। उक्त इति शेषः। इति शिवमिति। ग्रन्थान्ते मङ्गलार्थः॥ १३३॥

यागेश्वरेण विदुषा कृता हैमवती सती।
अर्पिता शम्भुचरणे प्रीत्यै भूयाद् विपश्चिताम्॥

इति श्रीमन्महामहोपाध्यायपदवाक्यप्रमाणपारावारीण-
श्रीमद्यागेश्वरशर्मविरचितायां परिभाषेन्दुशेखर-
व्याख्यायां हैमवत्याख्यायां शास्त्रशेषनामकं
तृतीयं प्रकरणं समाप्तम्।
ग्रन्थश्च समाप्तः।

## अकारादिक्रमेण परिभाषानुक्रमणी


अ

अकृतव्यूहाः० २०४
अङ्गवृत्ते पुनर्वृत्ता० २८२
अनन्तरस्य विधिर्वा० २३२
अनन्त्यविकारेऽन्त्य० २६०
अनिनस्मन्० ७३
अनिर्दिष्टार्थाः प्रत्ययाः० ३४०
अनुदात्तेत्त्वलक्षण० २८५
अनेकान्ता० २०
अन्तरङ्गादप्यपवादो० २१४
अन्तरङ्गानपि विधीन्० १८२
अन्तरङ्गानपि विधीन्० १६१
अपवादो यद्यन्यत्र० २३६
अभेदका गुणाः २३३
अभ्यासविकारेषु० २४०
अर्थवद्ग्रहणे० ६५
अर्धमात्रालाघवेन० ३५३
अवयवप्रसिद्धेः समुदाय० २६६
असिद्धं बहिरङ्ग० १४३

आ

आगमशास्त्रमनित्यम् २८४
आतिदेशिकमनित्यम् २८६

उ

उणादयोऽ० ८७
उत्तरपदाधिकारे० ६६
उपपदविभक्तेः कारक० २६०
उपसञ्जनिष्यमाण० २३६
उभयगतिरिह० ३१
उभयनिर्देशे पञ्चमी० २४६

ए

एकदेशविकृत० १२३
एकयोगनिर्दिष्टानां० ७६
एकस्या आकृतेश्चरितः० ३४४
एकान्ताः २३

औ

औपदेशिकप्रायोगिकयो० ३४५

क

कार्यकालं० ७
कर्यमनुभवन् हि० ३३
कृद्ग्रहणे० १०३
क्तल्युट्तुमुन्खलर्थेषु २४४
क्वचित् कृताकृत० १४०
क्वचित् समुदायेऽपि ३३२
क्वचित् स्वार्थिकाः० २६६
क्वचिदपवादविषये० २२७
क्वचिद्विकृतिः० ३४५
क्वचिदेकदेशोऽ० ७८

ग

गणकार्यमनित्यम् २८५
गतिकारकोपपदानां० २५६
गामादाग्रहणेष्वपि० ३३१
गामादग्रहणेष्ववि० ३३१
गौणमुख्ययोर्मुख्ये० ६६
ग्रहणवता० ११४

च

चानुकृष्टं नोत्तरत्र २६१

ज

ज्ञापकसिद्धं न सर्वत्र ३४१

त

तदनुबन्धकग्रहणे० २६७
तन्मध्यपतितस्तद्० २७९
ताच्छीलिके णेऽण्० २७७
ताच्छीलिकेषु० २४३

ध

धातोः कार्यमुच्यमानं० २७८

न

नञिव युक्तमन्यसदृशा० २५४
नञ्घटितमनित्यम् २८५
नाजानन्तर्ये १७५
नानर्थकेऽलोन्त्यविधि० २९४
नानुबन्धकृतम० २५
नानुबन्धकृतम० २८
नानुबन्धकृतम० २९
निरनुबन्धकग्रहणे न० २६६
निर्दिश्यमानस्या० ५०
निषेधाश्च बलीयांसः ३१३

प

पदगौरवाद् योगविभागो० ३२४
पदाङ्गाधिकारे० १०७
परान्नित्यं० १३७
पर्जन्यवल्लक्षणप्रवृत्तिः ३११
पर्यायशब्दानां लाघव० ३४१
पुनः प्रसङ्गविज्ञानात्० १२८
पुरस्तादपवादा अनन्तरान्० २३१
पूर्वं ह्यपवादा० २३४
पूर्वत्रासिद्धीयमद्वित्वे ३४३
पूर्वपरनित्यान्तर० १२८
पूर्वोत्तरपद० १९१
प्रकल्प्य चापवाद० २३५
प्रकृतिग्रहणे ण्यधिक० २८१
प्रकृतिग्रहणे यङ्लुगन्त० २८७
प्रकृतिवदनुकरणं० १२२
प्रत्ययग्रहणे० ८९
प्रत्ययग्रहणे० ९३
प्रत्ययाप्रत्यययोः प्रत्यय० २९८
प्रत्येकं वाक्यपरिसमाप्तिः ३०६
प्रधानाप्रधानयोः प्रधाने० २९५
प्रातिपदिकग्रहणे० २४८

ब

बहुव्रीहौ तद्गुण० २६०
बाधकान्येव निपात० ३१०

भ

भाव्यमानेन० ८०
भाव्यमानोऽ० ८१

म

मध्येऽपवादाः पूर्वान्० २३२

य

यत्रानेकविधमान्तर्यं० ६१
यदागमास्तद्० ३८
यथोद्देशं० ६
यस्मिन्विधिस्त० ११८
यस्य च लक्षणान्तरेण० १४१
यस्य च लक्षणा० १५१
येन नाप्राप्ते यो० २१५
योगविभागादिष्टसिद्धिः ३१४

ल

लक्षणप्रतिपादोक्तयोः० ३०४
लक्षणान्तरेण० १४०
लादेशेषु २४५
लुग्विकरणालुग्० २७९

व

वार्णादाङ्गं बलीयो० १९२
वर्णाश्रये ८४
विकरणेभ्यो १३४
विधिनियमसम्भवे २९७
विधौ परिभाषोपतिष्ठते २८८
विभक्तौ लिङ्गविशिष्टा० २९२

व्यपदेशिवदे० १०९
व्यपदेशिवद्भावोऽ० ११६
व्यवस्थितविभाषयापि० २९७
व्याख्यानतो विशेष० ०५

श

शब्दान्तरस्य० १३६
शब्दान्तरात् १३९
श्तिपा शपानुबन्धेन० ३४९
श्रुतानुमितयोः श्रुत० ३०२

स

संज्ञापूर्वकविधे० २८४
संज्ञाविधौ० १०१
संनिपातलक्षणो विधि० २७०
सांप्रतिकाभावे भूतपूर्वगतिः २५९
सकृद्गतौ० १२९
सन्नियोगशिष्टानाम० २७५
समासान्तविधि० २६९
सम्प्रसारणं तदाश्रयं० ३४४
सर्वविधिभ्यो लोपविधि० ३१०
सर्वे विधयश्छन्दसि० १२२
सर्वो द्वन्द्वो० १२०
सहचरितासहचरितयोः० ३००
सामान्यातिदेशे विशेष० २९७
सूत्रे लिङ्गवचन० २५३
स्त्रीप्रत्यये० ९८
स्वरभिन्नस्य० १४२
स्वरविधौ व्यञ्जन० २६३

ह

हल्स्वरप्राप्तौ० २६५




## नागेश-व्याडि-पुरुषोत्तमदेव-सीरदेव-शेषाद्रि-नीलकण्ठ-प्रणीतासु परिभाषाव्याख्यासु समुपन्यस्तः सङ्ख्याक्रमः

| परिभाषानामानि | नागेश-परिभाषा सं० | व्याडि प० सं० | पुरुषोत्तम-देव प० सं० | सीरदेव प० सं० | श्रीमच्छे-षाद्रि प० सं० | नील-कण्ठ प० सं० |
|---|---|---|---|---|---|---|
| **अ** | | | | | | |
| अकृतव्यूहाः पाणिनीया | ५६ | ६५ | १०४ | ४९ | ४८ | ६१ |
| अङ्गवृत्ते पुनर्वृत्तावविधिः | ९३ | ३४ | ७१ | ९१ | ८० | ८६ |
| अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति | ६२ | १६ | १७ | ... | ५२ | ५१ |
| अनन्त्यविकारेऽन्त्यसदेशस्य | १०४ | ५२ | ५२ | ११२ | ८९ | ९४ |
| अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति | १६ | ... | ७७ | ६५ | १६ | १५ |
| अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे | १२२ | ... | .... | १२५ | १०५ | ११४ |
| अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् | ९७ | ... | .... | .... | ८४ | ... |
| अनेकान्ता अनुबन्धाः | ४ | ... | ... | ... | ४ | ... |
| अन्तरङ्गादप्यपवादो बलीयान् | ५७ | ... | ... | ... | ... | ... |
| अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते | ५२ | ... | ६८ | ८५ | ४४ | ६३ |
| अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते | ५४ | ... | ५४ | ३४ | ४६ | ६२ |
| अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते | ६६ | ... | ... | ... | ५५ | ... |
| अभेदका गुणाः | ११८ | ... | ५७ | ८० | १०१ | १०७ |
| अभ्यासविकारेषु बाध्यबाधकभावो नास्ति | ६७ | २० | २० | ९६ | ५६ | ५२ |
| अर्थवद्ग्रहणे नानर्थकस्य | १४ | १ | १ | ९ | १४ | ११ |
| अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः | १३३ | ... | ... | ... | ... | ... |
| अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी | १०७ | ... | १०१ | १०४ | ९२ | ९१ |
| असिद्धं बहिरङ्गमन्तरङ्गे | ५० | ७९ | ४१ | ६९ | ४२ | ५८ |
| **आ** | | | | | | |
| आगमशास्त्रमनित्यम् | ९५ | ७६ | ८४ | ९८ | ... | ८६ |

| परिभाषानामानि | ना० प०सं० | व्या० प०सं० | पु० प०सं० | सी० प०सं० | श्रीम० प०सं० | नी० प०सं० |
|---|---|---|---|---|---|---|
| आतिदेशिकमनित्यम् | ९९ | — | ... | ... | ... | ... |
| **उ** | | | | | | |
| उणादयोऽव्युत्पन्नानि प्रातिपदिकानि | २२ | ... | ७० | १५ | २२ | २० |
| उत्तरपदाधिकारे प्रत्ययग्रहणेन तदन्तग्रहणम् | २५ | ... | ... | ... | २५ | ... |
| उपपदविभक्तेः कारकविभक्तिर्बलीयसी | १०३ | ... | ४८ | १०३ | ८८ | ९० |
| उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधत इति | ६५ | ... | ... | ... | ... | ... |
| उभयगनिरिह भवति | ६ | ७ | ... | ... | ... | ... |
| उभयनिर्देशे पञ्चमीमिर्देशो बलीयान् | ७१ | ... | ६३ | ... | ६० | ३७ |
| **ए** | | | | | | |
| एकदेशविकृतमनन्यवत् | ३७ | ... | १४ | ४० | ३७ | १२५ |
| एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः | १७ | ... | ... | १४ | १७ | १९ |
| एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति | १२७ | ... | ... | ... | १०७ | ... |
| एकान्ताः | ५ | ... | ... | ... | ५ | ... |
| **औ** | | | | | | |
| औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् | १३० | ५ | ४ | ८१ | ... | १३५ |
| **क** | | | | | | |
| कार्यकालं संज्ञापरिभाषाम् | ३ | ५० | १०६ | ११७ | ३ | ११८ |
| कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते | १० | १९ | ९५ | २ | ... | ... |
| कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् | २८ | ९३ | ४६ | ६२ | २८ | ३५ |
| क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति | ६९ | ... | ७६ | ३६ | ५८ | ५४ |
| क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता | ४६ | ... | ... | ... | ... | ... |
| क्वचित्समुदायेऽपि | ११७ | २९ | ३० | ७९ | ... | १०५ |
| क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते | ८४ | ... | ५८ | ५८ | ७१ | ७३ |
| क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति | ५९ | ८३ | ११५ | ३३ | ... | ४४ |
| क्वचिदेकदेशोऽप्यनुवर्तते | १८ | २३ | २५ | ८ | ... | १० |
| क्वचिद् विकृतिः प्रकृतिं गृह्णाति | १२९ | ... | ... | ४१ | ... | १३२ |

| परिभाषानामानि | ना० प०सं० | व्या० प०सं० | पु० प०सं० | सी० प०सं० | श्रीम० प०सं० | नी० प०सं० |
|---|---|---|---|---|---|---|
| **ग** | | | | | | |
| गणकार्यमनित्यम् | ९६ | ... | १०९ | ११८ | ८३ | ९२ |
| गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः | ७६ | ... | ४७ | ३२ | ६४ | ४२ |
| गामादाग्रहणेष्वविशेषः | ११५ | ... | ६९ | १०५ | ९८ | १०३ |
| गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः | १५ | ४ | ५ | १०० | १५ | १४ |
| ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति | ३१ | ६९ | ७८ | ५५ | ३१ | ७१ |
| **च** | | | | | | |
| चानुकृष्टं नोत्तरत्र | ७९ | ५९ | ८७ | ४६ | ६७ | ५७ |
| **ज** | | | | | | |
| ज्ञापकसिद्धं न सर्वत्र | १२९ | ... | ११८ | १२६ | ... | ११९ |
| **त** | | | | | | |
| तदनुबन्धकग्रहणेनातदनुबन्धकस्य | ८३ | ... | ३८ | ५२ | ७० | ७० |
| तन्मध्यपतितस्तद्ग्रहणेन गृह्यते | ९० | १८ | १९ | ७५ | ७७ | ८१ |
| ताच्छीलिके णेऽण्कृतानि भवन्ति | ८८ | २७ | २८ | ४३ | ... | ५३ |
| ताच्छीलिकेषु वासरूपविधिर्नास्ति | ६८ | २७ | २८ | ४३ | ... | ५३ |
| **ध** | | | | | | |
| धातोः कार्यमुच्यमानं तत्प्रत्यये भवति | ८९ | ... | ५५ | ७४ | ७६ | ... |
| **न** | | | | | | |
| नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः | ७५ | ५४ | ९७ | ३१ | ६३ | ४१ |
| नञ्घटितमनित्यम् | ९८ | ... | ... | ... | ८५ | ... |
| नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः | ५१ | ८० | ४२ | ७० | ४३ | ५९ |
| नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे | १०५ | ... | ९३ | ११३ | ९० | ९५ |
| नानुबन्धकृतमनेकाल्त्वम् | ६ | १२ | ११ | ६ | ७ | ६ |
| नानुबन्धकृतमनेजन्तत्वम् | ७ | ... | १३ | ४५ | ८ | ७ |
| नानुबन्धकृतमसारूप्यम् | ८ | १३ | १२ | ३८ | ६ | ८ |
| निरनुबन्धकग्रहणे न सानुबन्धकस्य | ८२ | ४७ | ३६ | ५० | ६९ | ६९ |
| निर्दिश्यमानस्यादेशा भवन्ति | १२ | ... | ३५ | ५ | १२ | ५ |
| निषेधाश्च बलीयांसः | १२१ | ... | ... | ... | १०४ | ११३ |

| परिभाषानामानि | ना० प०सं० | व्या० प०सं० | पू० प०सं० | सी० प०सं० | श्रीम० प०सं० | नी० प०सं० |
|---|---|---|---|---|---|---|
| **प** | | | | | | |
| पदगौरवाद्योगविभागो गरीयान् | १३२ | ७४ | ९८ | ११० | ... | ... |
| पदाङ्गाधिकारे तस्य च तदन्तस्य च | २९ | ... | ... | ... | ... | ... |
| परान्नित्यं बलवत् | ४२ | ... | ... | ... | ... | ... |
| पर्जन्यवल्लक्षणप्रवृत्तिः | १२० | ६४ | ८६ | ८७ | ... | ... |
| पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते | १२४ | ... | ... | १२२ | १०३ | १११ |
| पुनः प्रसङ्गविज्ञानात्सिद्धम् | ३९ | ८२ | ४० | २१ | ४० | २६ |
| पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् | ६० | ९ | ८ | ४४ | ५० | ४९ |
| पूर्वं ह्यपवादा अभिनिविशन्ते | ६३ | ... | ... | ... | ... | ... |
| पूर्वत्रासिद्धीयमद्वित्वे | १२६ | ... | ११० | ... | ... | ... |
| पूर्वपरनित्यान्तरङ्गापवादानामुत्तरं बलीयः | ३८ | ... | ... | ... | ... | ... |
| पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न | ५३ | ... | ... | ... | ... | ... |
| प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते | ६४ | ... | ... | ९४ | ५४ | ... |
| प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् | ९२ | ७० | ७३ | ९० | ७९ | ८५ |
| प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् | १०१ | ६० | ७२ | ६८ | ८६ | ७५ |
| प्रकृतिवदनुकरणं भवति | ३६ | ८६ | ११४ | १८ | ... | ... |
| प्रत्ययग्रहणे चापञ्चम्याः | २४ | ... | ... | ... | २३ | ३१ |
| प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम् | २३ | ... | ४४ | २५ | ... | ... |
| प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् | १११ | ... | ९२ | ११४ | ... | ... |
| प्रत्येकं वाक्यपरिसमाप्तिः | ११६ | २८ | २९ | ७८ | ... | ... |
| प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः | १०६ | ६७ | ... | १०२ | ... | ... |
| प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहरणम् | ७२ | २५ | २६ | २८ | ... | ... |
| **ब** | | | | | | |
| बहुव्रीहौ तद्गुणसंविज्ञानप्रि | ७८ | ८ | ६ | ४२ | ... | ... |
| बाधकान्येव निपातनापि | ११९ | ... | ... | ... | १०२ | १०९ |

| परिभाषानामानि | ना० प०सं० | व्या० प०सं० | पु० प०सं० | सी० प०सं० | श्रीम० प०सं० | नी० प०सं० |
|---|---|---|---|---|---|---|
| **भ** | | | | | | |
| भाव्यमानेन सवर्णानां ग्रहणं न | १९ | ३० | ३१ | ११ | १९ | ··· |
| भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति | २० | ३१ | ··· | ··· | ··· | ··· |
| **म** | | | | | | |
| मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् | ६१ | ··· | ९ | ४७ | ५१ | ५० |
| **य** | | | | | | |
| यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः | १३ | ··· | ··· | ··· | १३ | ··· |
| यथोद्देशं संज्ञापरिभाषम् | २ | ··· | १०५ | ११६ | २ | ११७ |
| यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते | ११ | १७ | १८ | ४ | ··· | ४ |
| यस्मिन्विधिस्तदादावल्ग्रहणे | ३३ | ··· | ७५ | १२ | ३३ | ३७ |
| यस्य च लक्षणान्तरेण निमित्तं विहन्यन्ते तदप्यनित्यम् | ४८ | ··· | ··· | ··· | ··· | ··· |
| यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् | ४७ | ··· | ··· | ··· | ··· | ··· |
| येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति | ५८ | ··· | ··· | ··· | ··· | ··· |
| योगविभागादिष्टसिद्धिः | १२३ | ६८ | १०० | १२१ | ··· | ··· |
| **ल** | | | | | | |
| लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् | ११४ | ३ | ३ | ३९ | ··· | ··· |
| लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः | ४५ | ७८ | ··· | ··· | ··· | ··· |
| लादेशेषु वासरूपविधिर्नास्ति | ७० | ··· | ··· | ··· | ··· | ··· |
| लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य | ९१ | ४३ | ६७ | ८३ | ··· | ४० |
| **व** | | | | | | |
| वर्णाश्रये नास्ति प्रत्ययलक्षणम् | २१ | ··· | ५२ | ··· | ··· | ··· |
| वार्णादाङ्गं बलीयो भवति | ५५ | ··· | ७४ | ६६ | ४७ | ६० |
| विकरणेभ्यो नियमो बलीयान् | ४१ | ··· | ५१ | १९ | ४१ | २४ |
| विधिनियमसम्भवे विधिरेव ज्यायान् | १०९ | ··· | ··· | १०९ | ··· | ६९ |
| विधौ परिभाषोपतिष्ठते नानुवादे | १०२ | ··· | ··· | ··· | ८७ | ४८ |
| विभक्तौ लिङ्गविशिष्टाग्रहणम् | ७३ | ··· | २७ | २९ | ··· | ३९ |
| व्यपदेशिवदेकस्मिन् | ३० | ··· | ··· | ··· | ३० | ··· |
| व्यपदेशिवद्भावोऽप्रातिपदिकेन | ३२ | ६१ | ७९ | ५६ | ३२ | ७२ |
| व्यवस्थितविभाषयापि कार्याणि क्रियन्ते | १०८ | ३२ | ६२ | १२४ | ··· | ९३ |
| व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् | १ | ५८ | १२० | १ | १ | १ |

| परिभाषानामानि | ना० प०सं० | व्या० प०सं० | पु० प०सं० | सी० प०सं० | श्रीम० प०सं० | नी० प०सं० |
|---|---|---|---|---|---|---|
| **श** | | | | | | |
| शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति | ४३ | ७७ | ... | ... | ... | ... |
| शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् | ४४ | ... | ... | ... | ... | ... |
| शितपा शपानुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाज्ग्रहणञ्चैव पञ्चैतानि न यङ् लुकि ॥ | १३१ | ... | ... | ... | १०९ | १०० |
| श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् | ११३ | ... ... | १०२ | १०७ | ९६ | १०१ |
| **स** | | | | | | |
| संज्ञापूर्वकविधेरनित्यम् | ९४ | ७३ | ८३ | ७१ | ८१ | ७८ |
| संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति | २७ | ७१ | ८१ | २७ | २७ | ३४ |
| संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य | ८५ | १० | १० | ६४ | ... | ... |
| संनियोगशिष्टानामन्यतरायापाय उभयोरप्यपायः | ८७ | ४१ | ६५ | ७२ | ... | ... |
| संप्रसारणं तदाश्रयं च कार्यं बलवत् | १२८ | ... | १०३ | ५९ | ७४ | ७७ |
| सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव | ४० | ३५, ८१ | २९ | २० | ... | ... |
| समासान्तविधिरनित्यः | ८५ | ७५ | ८२ | ६३ | ... | ... |
| सर्वविधिभ्यो लोपविधिरिड्विधिश्चबलवान् | १०० | ... | ... | ... | ... | ... |
| सर्वे विधयश्छन्दसि विकल्पन्ते | ३५ | ... | ५६ | २४ | ... | ... |
| सर्वो द्वन्द्वो विभाषैकवद्भवति | ३५ | ७३ | ५० | १६ | ३४ | २२ |
| सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् | ११२ | ... | ९२ | ११४ | ९५ | ९९ |
| साम्प्रतिकाभावे भूतपूर्वगतिः | ७७ | १४ | ११५ | ३७ | ६५ | ५५ |
| सामान्यातिदेशे विशेषानतिदेशः | ११० | ९१ | ६४ | १०६ | ९३ | ९७ |
| सूत्रे लिङ्गवचनमतन्त्रम् | ७४ | ... | ११७ | ३० | ६२ | ... |
| स्त्रीप्रत्यये चानुपसर्जने न | २६ | ... | ४५ | २६ | ... | ३३ |
| स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यः | ४९ | ... | ... | ... | ... | ... |
| स्वरविधौ व्यञ्जनमविद्यमानवत् | ८० | ३३ | ३२ | ५३ | ... | ६७ |
| **ह** | | | | | | |
| हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् | ८१ | ... | ... | ... | ६८ | ६८ |

| परिभाषानामानि | ना० प०सं० | व्या० प०सं० | पु० प०सं० | सी० प०सं० | श्रीम० प०सं० | नी० प०सं० |
|---|---|---|---|---|---|---|
| **श** | | | | | | |
| शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति | ४३ | ७७ | ... | ... | ... | ... |
| शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् | ४४ | ... | ... | ... | ... | ... |
| श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाज्ग्रहणञ्चैव पञ्चैतानि न यङ् लुकि ॥ | १३१ | ... | ... | ... | १०९ | १०० |
| श्रुतानुमितयोः श्रुतसम्बन्धो वलवान् | ११३ | ... | ... | १०२ | १०७ ९६ | १०१ |
| **स** | | | | | | |
| संज्ञापूर्वकविधेरनित्यम् | ९४ | ७३ | ८३ | ७१ | ८१ | ७८ |
| संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति | २७ | ७१ | ८१ | २७ | २७ | ३४ |
| संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य | ८५ | १० | १० | ६४ | ... | ... |
| संनियोगशिष्टानामन्यतरायापाय उभयोरप्यपायः | ८७ | ४१ | ६५ | ७२ | ... | ... |
| संप्रसारणं तदाश्रयं च कार्यं बलवत् | १२८ | ... | १०३ | ५९ | ७४ | ७७ |
| सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव | ४० | ३५, ८१ | २९ | २० | ... | ... |
| समासान्तविधिरनित्यः | ८५ | ७५ | ८२ | ६३ | ... | ... |
| सर्वविधिभ्यो लोपविधिरिड्विधिश्चबलवान् | १०० | ... | ... | ... | ... | ... |
| सर्वे विधयश्छन्दसि विकल्पन्ते | ३५ | ... | ५६ | २४ | ... | ... |
| सर्वो द्वन्द्वो विभाषैकवद्भवति | ३५ | ७३ | ५० | १६ | ३४ | २२ |
| सहचारितासहचारितयोः सहचरितस्यैव ग्रहणम् | ११२ | ... | ९२ | ११४ | ९५ | ९९ |
| साम्पतिकाभावे भूतपूर्वगतिः | ७७ | १४ | ११५ | ३७ | ६५ | ५५ |
| सामान्यातिदेशे विशेषानतिदेशः | ११० | ९१ | ६४ | १०६ | ९३ | ९७ |
| सूत्रे लिङ्गवचनमतन्त्रम् | ७४ | ... | ११७ | ३० | ६२ | ... |
| स्त्रीप्रत्यये चानुपसर्जने न | २६ | ... | ४५ | २६ | ... | ३३ |
| स्वरभिन्नस्य प्राप्नुवन्धिरनित्यः | ४९ | ... | ... | ... | ... | ... |
| स्वरविधौ व्यञ्जनमविद्यमानवत् | ८० | ३३ | ३२ | ५३ | ... | ६७ |
| **ह** | | | | | | |
| हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् | ८१ | ... | ... | ... | ६८ | ६८ |

